# श्रीमद्भगवद्गीता



आनन्दगिरिकृतटीकासहितशाङ्करभाष्यसंवलिता
दैवज्ञसूर्यपण्डितविरचितपरमार्थप्रपया च
समुद्भासिता.



सा च

पुण्य पत्तने

गोन्धळेकरोपाह्वश्रीधरात्मजरावजीशर्मणा

विद्वद्भिः संशोध्य

स्वीये

जगद्धितेच्छुनाम्नि

मुद्रणालये

मुद्रिता.



शकाब्दाः १८०८.

अश्विन बहुल पञ्चमी

खिस्ताब्दाः १८८६.



# विज्ञापनम् ।



पुरा किलैतद्गीताशास्त्रं कालिकाताख्यराजधान्यामानन्दगिरिकृतविवेचनसंवलितभाष्येण श्रीधरस्वामिकृतसुबोधिन्या च सनाथीकृत्य द्विवारमङ्कितमभूत् । परं तत्र तत्राबद्धबहुलतया लिपिवैषम्याच्च तद्वाचकानां पर्यालोचने क्लेशाकरमुपलभ्यास्माभिस्त्रिचतुराणि पुरातनपुस्तकानि मुद्रितपुस्तकद्वयं च महता प्रयत्नेनार्जयित्वा तत्परिशोधनं च कारयित्वैतन्मुद्रितम् ।

दक्षिणाङ्ग्लमहाविद्यालयस्थप्रधानसंस्कृताध्यापका भरद्वाजकुलोत्पन्ना विद्वद्वर्यगोविन्दशास्त्रिणश्चास्मदभ्यर्थनामङ्गीकृत्वैतं ग्रन्थं विषमस्थलबोधकटिप्पणीदानपुरःसरं परिशोधयांचक्रुः, तथैव वैराजक्षेत्रवासिनः कानडोपाभिधदामोदरशास्त्रिणश्चैतत्परिशोधनमङ्गीचक्रुस्तेन महान्तं मोदभरं वहामः ।

पूर्वमस्माभिरेतद्ग्रन्थाङ्कनस्य प्रसिद्धिपत्रके श्रीधरस्वामिकृतसुबोधिनीसहितमेतत्पुस्तकं भविष्यतीति प्रसिद्धीकृतम् । परं सुबोधिन्या बहुशोऽङ्कितत्वात् तत्पुस्तकस्य चाल्पमूल्यत्वात्सौलभ्यं पण्डितसूर्यविरचितपरमार्थप्रपाख्यगीताटीकाया दौर्लभ्यमुपयुक्ततरत्वं च पर्यालोच्य सैवास्मिन्पुस्तके निवेशिता । सेयं परमार्थप्रपाभिधा टीकास्माभिर्वेदशास्त्रसंपन्नभाटवडेकरोपाभिधकृष्णशास्त्रिभ्यः समासादिता । अस्यां प्रकृतार्थदार्ढ्याय यानि श्रुतिवाक्यान्युदाहृतानि तानि रावणकृतभाष्ययुतानि सन्ति, तेन श्रुत्यर्थपरिज्ञानमनायासेन भवति । एतद्रावणकृतभाष्यं प्रायशो दुर्लभमेव ।

इयं परमार्थप्रपा बहुस्थलेषु ज्ञानेश्वरकृतभावार्थदीपिकासादृश्यमावहति, तेनेयं सुबोधिनीतोऽतीवोपकारिणीति स्फुटतरमालक्ष्यते ।

सर्वथार्यजनानां ग्रन्थपर्यालोचने सौलभ्यमिच्छतामस्माकं कृत्यमेतत्कियतोंशेन फलितं तत्सुधीभिरेवेक्षणीयम् । पुस्तकं च सुवाच्यायसाक्षरैर्दृढपत्रेषु मुद्रितमस्ति दृष्टिजनितप्रमादाः सुधीभिः क्षन्तव्याः । आवेदिताश्चे[illegible]त्त्यङ्गसम[illegible]आलोचयिष्यामः इति शम् ।

गोन्धळेकरोपाव्हयः श्रीधरात्मजो रावजीशर्मा.

॥ श्रीगणेशाय नमः ॥

# नमः श्रीभगवते वासुदेवाय ।

## श्रीमद्भगवद्गीताशांकरभाष्यस्थोपक्रमणिका ।

ॐ नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम् ॥
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥ १ ॥

---

### आनन्दगिरिकृता व्याख्या ।

दृष्टिं मयि विशिष्टार्थां * कृपापीयूषवर्षिणीम् ॥
हेरम्ब देहि प्रत्यूहक्ष्वेडव्यूहनिवारिणीम् × ॥ १ ॥
यद्वक्त्रपङ्केरुहसंप्रसूतं निष्ठामृतं विश्वविभागनिष्ठम् ॥
साध्येतराभ्यां परिनिष्ठितान्तं तं वासुदेवं सततं नतोऽस्मि ॥ २ ॥
प्रत्यञ्चमच्युतं नत्वा गुरूनपि गरीयसः ॥
क्रियते शिष्यशिक्षार्थै गीताभाष्यविवेचनम् ॥ ३ ॥

कर्मनिष्ठाज्ञाननिष्ठेत्युपायोपेयभूतनिष्ठाद्वयमधिकृत्य प्रवृत्तं गीताशास्त्रं व्याचिख्यासुर्भगवान् भाष्यकारो विघ्नोपप्लवोपशमनादिप्रयोजनप्रसिद्धये प्रामाणिकव्यवहारप्रमाणकमिष्टदेवतातत्त्वानुस्मरणं मङ्गलाचरणं संपादयन् अवशेषेणेतिहासपुराणयोर्व्याचिख्यासितगीताशास्त्रेणैकवाक्यतामभिप्रेत्य पौराणिकश्लोकमेकमेवान्तर्यामिविषयमुदाहरति **नारायण** इति । 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः' इति स्मृतिसिद्धः स्थूलदृशां नारायणशब्दार्थः । सूक्ष्मदर्शिनः पुनराचक्षते नरशब्देन चराचरात्मकं शरीरजातमुच्यते तत्र नित्यसंनिहिताश्चिदाभासा जीवा नारा इति निरुच्यते तेषामयनमाश्रयो नियामकोऽन्तर्यामी नारायण इति । यमधिकृत्यान्तर्यामिब्राह्मणं श्रीनारायणाख्यमन्त्राम्नायं ÷ चाधीयते, तदनेन शास्त्रप्रतिपाद्यं विशिष्टं तत्त्वमादिष्टं भवति । ननु परस्यात्मनो मायासंबन्धादन्तर्यामित्वं शास्त्रप्रतिपाद्यत्वं च वक्तव्यमन्यथा कूटस्थासंगाविषयाद्वितीयस्य तदयोगात्, तथा च शुद्धतासिद्धौ कथं यथोक्तपरदेवता शास्त्रादावनुस्मर्यते । शुद्धस्य हि तत्त्वस्यानुस्मरणमभीष्टफलवदभीष्टं तत्राह **परोऽव्यक्तादिति** । अव्यक्तमव्याकृतं मायेत्यनर्थान्तरं तस्मात् परो व्यतिरिक्तस्तेनासंस्पृष्टोऽयमपरः "अक्षरात् परतः परः" इति श्रुतेः गृहीतस्तत्त्वतो मायासंबन्धाभावेऽपि कल्पनया तदीयसंगतिमङ्गीकृत्यान्तर्यामित्वादिकमुन्नेयम् । यस्मादीश्वरस्य व्यतिरेको विवक्षितस्तस्मिन्नव्यक्ते साक्षिसिद्धेऽपि कार्यलिङ्गकमनुमानमुपन्यस्यति **अण्डमिति** । अपञ्चीकृतपञ्चमहाभूतात्मकं हैरण्यगर्भं तत्त्वमण्डमित्यभिलप्यते तदव्यक्तात् पूर्वोक्तादुत्पद्यते, प्रसिद्धा हि श्रुतिस्मृतिवादेषु हिरण्यगर्भस्य मूलकारणादुत्पत्तिस्तथा च कार्यलिङ्गादव्यक्ताभिव्यक्तिरित्यर्थः। हिरण्यगर्भे श्रुतिस्मृतिसमधिगतेऽपि कार्यलिङ्गकमनुमान + मस्तीति मन्वानो विराडुत्पत्तिमुपदर्शयति **अण्डस्येति** । उक्तस्याण्डस्य हिरण्यगर्भाभिधानीयस्यान्तरिमे भूरादयो लोका विराडात्मका वर्त्तन्ते कार्य्यं हि कारणस्यान्तर्भवति तेन हिरण्यगर्भान्तर्भूता भूरादयो लोका

---

* विशिष्टः सर्वात्पोऽर्थो मोक्षरूपः प्रयोजनं यस्यास्ताम् × प्रत्यूहरूपो यः क्ष्वेडव्यूहो विषसमुदायस्तन्निवर्तिकाम् ।

÷ मन्त्राम्नायं–पा॰ मु॰ पुस्तके + क्षित्यङ्कुरादिकार्यं कर्तृजन्यं कार्यत्वादित्याकारकम्।

स भगवान् सृष्ट्वेदं जगत् तस्य च स्थितिं चिकीर्षुर्मरीच्यादीनग्रे सृष्ट्वा प्रजापतीन् प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तम् । ततोऽन्यांश्च सनकसनन्दनादीनुत्पाद्य निवृत्तिधर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास ।

द्विविधो हि वेदोक्तो धर्मः, प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च । तत्रैको जगतः

---

विराडात्मानस्तेन सृष्टा इति तल्लिङ्गाद्धिरण्यगर्भसिद्धिरित्यर्थः लोकानेव पञ्चीकृतपञ्चमहाभूतात्मकविराडात्मत्वेन व्युत्पादयति **सप्तद्वीपेति** । "सा पृथिवी अभवद्" इति श्रुतौ विराजो जन्म संकीर्त्तितमित्यङ्गीकारादशेषद्वीपोपेता पृथिवीत्यनेन सर्वलोकात्मको विराडेवोच्यते चशब्देन विराजो हि हिरण्यगर्भे पूर्वोक्ताण्डात्मन्यन्तर्भावस्ततः संभवोऽनुकृष्यते, परमात्मा हि स्वाज्ञानद्वारा जगदशेषमुत्पाद्य स्वात्मन्येवान्तर्भाव्याखण्डैकरससच्चिदानन्दात्मना स्वे महिम्नि तिष्ठतीत्यर्थः। अत्र च नारायणशब्देनाभिधेयमुक्तं नरा एव नारा जीवास्त्वंपदवाच्यास्तेषामयनमधिष्ठानं तत्पदवाच्यं परं ब्रह्म । तथा च कल्पितस्याधिष्ठानातिरिक्तस्वरूपाभावाद्वाच्यस्य कल्पितत्वेऽपि लक्ष्यस्य ब्रह्ममात्रत्वाद् ब्रह्मात्मैक्यं विषयोऽत्र सूच्यते । तेनार्थाद्विषयविषयिभावः संबन्धोऽपि ध्वनितः ।परोऽव्यक्तादित्यनेन मायासंस्पर्शाभावोक्त्या सर्वानर्थनिवृत्त्या परमानन्दाविर्भावलक्षणो मोक्षोऽपि विवक्षितस्तेन च तत्कामस्याधिकारो द्योतितः । परिशिष्टेन तुशब्देन वस्तुनो वास्तवमद्वितीयत्वमावेदितं, तेन च वस्तुद्वारा परमविषयत्वं तज्ज्ञाननिष्ठायास्तदुपायभूतकर्मनिष्ठायाश्चावान्तरविषयत्वमित्यर्थादुक्तमित्यवधेयम् ॥१॥

ननु नैवं साध्यसाधनभूतं निष्ठाद्वयमत्र भगवता प्रतिपाद्यते ब्रह्मणाभ्यर्थितस्य भगवतो भूमिभारापहारार्थं वसुदेवेन देवक्यामाविर्भूतस्य तादर्थ्येन मध्यमं पृथासुतं प्रथितमहिमानं प्रेरयितुं धर्मयोरिहानुद्यमानत्वादतो नास्य शास्त्रस्य निष्ठाद्वयं परापरविषयभावमनुभवितुमलमिति। तन्न, भगवतो धर्मसंस्थापनस्वाभाव्यश्रौव्याद्धर्म्मद्वयस्थापनार्थमेव प्रादुर्भावाभ्युपगमाद्भूभारपरिहारस्य चार्थिकत्वादर्जुनं निमित्तीकृत्याधिकारिणं स्वधर्मप्रवर्त्तनद्वारा ज्ञाननिष्ठायामवतारयितुं गीताशास्त्रस्य प्रणीतत्वादुचितमस्य निष्ठाद्वयविषयत्वमिति परिहरति **स भगवान्** इत्यादिना **धर्मद्वयमर्जुनायोपदिदेश**ेत्यन्तेन भाष्येण ।

तत्र नेदं गीताशास्त्रं व्याख्यातुमुचितमाप्तप्रणीतत्वानिर्द्धारणात्तथाविधशास्त्रान्तरवदित्याशङ्क्य मङ्गलाचरणस्योद्देश्यं दर्शयन्नादौ शास्त्रप्रणेतुराप्तत्वनिर्द्धारणार्थं सर्वज्ञत्वादिप्रतिज्ञापूर्वकं सर्वजगज्जनयितृत्वमाह **स भगवानिति** । प्रकृतो नारायणाख्यो देवः सर्वज्ञः सर्वेश्वरः समस्तमपि प्रपञ्चमुत्पाद्य व्यवस्थितो, न च तस्यानाप्तत्वमीश्वरानुगृहीतानामाप्तत्वसिद्ध्या तस्य परमाप्तत्वसिद्धेरित्यर्थः । ननु भगवता सृष्टमपि चातुर्वर्ण्यादिविशिष्टं हिरण्यगर्भादिलक्षणं जगन्न व्यवस्थितिमास्थातुं शक्यते व्यवस्थापकाभावान्न च परस्यैवेश्वरस्य व्यवस्थापकत्वं वैषम्यादिप्रसङ्गात्तत्राह **तस्य चेति** । सृष्टस्य जगतो मर्य्यादाविरहितत्वे शङ्किते तदीयां व्यवस्थां कर्त्तुमिच्छन् व्यवस्थापकमालोच्य क्षत्रस्यापि क्षत्रत्वेन प्रसिद्धं धर्मं तथाविधधर्ममधिगम्य सृष्टवानित्यर्थः । सृष्टस्य धर्मस्य साध्यत्वभावतया साधयितारमन्तरेणासंभवात्तस्यैव तदनुष्ठातृत्वानभ्युपगमात् प्राणिप्रभेदानामधर्मप्रायाणां तदयोगात् कुतस्तदीया सृष्टिरित्याशङ्क्याह **मरीच्यादीनिति** । तेषां भगवता सृष्टानां प्रजासृष्टिहेतूनां यागदानादिप्रवृत्तिसाध्यं धर्ममनुष्ठातुमधिकृतानां स्वकीयत्वेन तदुपादानमपपन्नमित्यर्थः । चैत्यवन्दनादिभ्यो विशेषार्थं धर्मं विशिनष्टि **वेदोक्तमिति** । ननु नैतावता जगदशेषमपि व्यवस्थापयितुं शक्यते प्रवृत्तिमार्गस्य पूर्वोक्तधर्मं प्रति नियतत्वेऽपि निवृत्तिमार्गस्य तेन व्यवस्थापनायोग्यत्वात्तत्राह **ततोऽन्यांश्चेति** । निवृत्तिरूपस्य धर्मस्य शमदमाद्यात्मनो गमकमाह **ज्ञानेति** । विवेकवैराग्यातिशये शमाद्यतिशयो गम्यते ततो विवेकादि तस्य गमकमित्यर्थः । धर्मे बहु-

स्थितिकारणं, प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुर्यः स धर्मः ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिश्च श्रेयोऽर्थिभिरनुष्ठीयमानो दीर्घेण कालेनानुष्ठातॄणां कामोद्भवाद्धीयमानविवेकविज्ञानहेतुकेनाधर्मेणाभिभूयमाने धर्मे प्रवर्द्धमाने चाधर्मे जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुर्भौमस्य ब्रह्मणो ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन कृष्णः किल संबभूव। ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मस्तदधीनत्वाद्वर्णाश्रमभेदानाम्।

स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा संपन्नस्त्रिगुणात्मि-

विदां विवाददर्शनाज्जगतः *स्थेम्ने कारणीभूतधर्मान्तरमपि स्रष्टव्यमस्तीत्याशङ्क्याह **द्विविधो हीति**। अतिप्रसङ्गाप्रसङ्गव्यावृत्तये प्रकृतं धर्मं लक्षयति **प्राणिनामिति**। प्रवृत्तिलक्षणो धर्मोऽभ्युदयार्थिनां साक्षादभ्युदयहेतुः निःश्रेयसार्थिनां परम्परया निःश्रेयसहेतुः, निवृत्तिलक्षणस्तु धर्मः साक्षादेव निःश्रेयसहेतुरिति विभागः। ज्ञानस्यैव निःश्रेयसहेतुत्वेऽपि शमादीनां ज्ञानद्वारा मोक्षहेतुत्वं, ज्ञानातिरिक्तव्यवधानाभावाच्च साक्षादित्युक्तम्। यद्येवं धर्मो लक्ष्यते तर्हि वर्णित्वमाश्रमित्वं चोपेक्ष्य सर्वैरेव पुरुषार्थार्थिभिर्द्वावपि धर्मौ यथायोग्यमनुष्ठेयावित्यनुष्ठातृनियमासिद्धिरित्याशङ्क्याह **ब्राह्मणाद्यैरिति**। अर्थित्वाविशेषेऽपि श्रुतिस्मृतिपर्य्यालोचनयानुष्ठानात् नियमसिद्धिरित्यर्थः।..नित्यनैमित्तिकेषु यावज्जीवमनुष्ठानं काम्येषु करणांशे रागाधीना प्रवृत्तिरितिकर्त्तव्यतांशे वैधीति विभागेऽपि कदाचिदेवानुष्ठानमिति विभागमभिप्रेत्याह **दीर्घेणेति**। अथ यथोक्तधर्मवशादेव जगतो विवक्षितस्थितिसिद्धेर्भगवतो नारायणस्यादिकर्तुरनेकानर्थकलुषितशरीरपरिग्रहासंभवादन्यस्यैव कस्यचिदनाप्तस्य वैषम्यनैर्घृण्यवतो निग्रहपरिग्रहद्वारेण गीताशास्त्रप्रणयनमिति कुतोऽस्याप्तप्रणीतत्वं तत्राह **अनुष्ठातॄणामिति**। अथवा यथोक्तशङ्कायां दीर्घेणेत्यारभ्योत्तरम्। महता कालेन कृतत्रेतात्यये द्वापरावसाने साधकानां कामक्रोधादिपूर्वकादविवेकादधर्मबाहुल्याद्धर्माभिभवादधर्माभिवृद्धेश्च जगतो मर्यादाभेदे तदीयां मर्यादामात्मनिर्मितां पालयितुमिच्छन् प्रकृतो भगवानेतदर्थेन चातुर्वर्ण्यादिसंरक्षणार्थं लीलामयं मायाशक्तिप्रयुक्तं स्वेच्छाविग्रहं जग्राहेत्यर्थः। 'भौमस्य ब्रह्मणो गुप्त्यै वसुदेवादजीनत्' इति स्मृतिमनुसृत्य पदद्वयमनूद्य व्याचष्टे **भौमस्येति, अंशेनेति**। स्वेच्छानिर्मितेन मायामयेन स्वरूपेणेत्यर्थः। किलेत्यस्मिन्नर्थे पौराणिकी प्रसिद्धिरनूद्यते न हि भगवतो व्यतिरिक्तस्येदं जन्मेति युज्यते बहुविधागमविरोधादिति भावः। ननु वैदिकधर्मसंरक्षणार्थं भगवतो जन्म, यदा यदा हि धर्मस्येत्यादिदर्शनात् किमिदं ब्राह्मणत्वस्य रक्षणार्थमिति तत्राह **ब्राह्मणत्वस्य हीति**। अथापि वर्णाश्रमभेदव्यवस्थापनं विना कथं यथोक्तधर्मरक्षणमित्याशङ्क्याह **तदधीनत्वादिति**। ब्राह्मणं हि पुरोधाय क्षत्रादिः प्रतिष्ठां प्रतिपद्यते याजनाध्यापनयोस्तद्धर्मत्वात्तद्द्वारा च वर्णाश्रमभेदव्यवस्थापनादतो ब्राह्मण्ये रक्षिते सर्वमपि सुरक्षितं भवतीत्यर्थः।

नन्वेवमपि भगवतो नारायणस्य शरीरादिमत्त्वे सत्यस्मदादिभिरविशेषादनीश्वरत्वप्रसक्तिरित्याशङ्क्य ज्ञानादिकृतं विशेषमाह **स चेति**। ज्ञानं ज्ञप्तिरर्थपरिच्छित्तिः, ऐश्वर्य्यमीश्वरत्वं स्वातन्त्र्यं, शक्तिस्तदर्थानिर्वर्त्तनसामर्थ्यं, बलं सहायसंपत्तिः, वीर्य्यं पराक्रमवत्त्वं, तेजस्तु प्रागल्भ्यमधृष्यत्वम्, एते च षड्गुणाः सर्वविषयाः सर्वदा भगवति वर्त्तन्ते तथा च तस्य शरीरादिमत्त्वेऽपि नास्मदादिसाम्यमित्यर्थः। अथैवमपि कथमीश्वरस्यानादिनिधनस्य नित्यशुद्धबुद्धमुक्तस्वभावस्य स्वभावविपरीतं जन्मादि संभवति, नहि भूतानामीशिता स्वतन्त्रः स्वात्मनोऽनर्थं स्वयमेव संपादयितुमर्हति न चास्य देहादि-

* स्थेम्ने स्थत्यै ।

**कां वैष्णवीं स्वां मायां मूलप्रकृतिं वशीकृत्याजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन् स्वमायया देहवान् इव जात इव लोकानुग्रहं कुर्वन् लक्ष्यते, स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया वैदिकं हि धर्मद्वयमर्जुनाय शोकमोहमहोदधौ निमग्नायोपदिदेश गुणाधिकैर्हि गृहीतोऽनुष्ठीयमानश्च धर्मः प्रचयं गमिष्यतीति । तं धर्मं भगवता यथोपदिष्टं वेदव्यासः सर्वज्ञो भगवान् गीताख्यैः सप्तभिः श्लोकशतैरुपनिबबन्ध ।**

**तदिदं गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूतं दुर्विज्ञेयार्थं तदर्थाविष्करणाया-**

---

ग्रहे किमपि फलमुपलभ्यते तत्राह **त्रिगुणात्मिकामिति** । सिसृक्षितदेहादिगतवैरूप्यसिद्ध्यर्थमिदं विशेषणं तस्याव्यापकत्वं वक्तुं **वैष्णवीमि**त्युक्तम् । ईश्वरपारवश्यं तस्या दर्शयति **स्वामिति** । तस्याश्च प्रतिभासमात्रशरीरत्वमेव न तु वस्तुत्वमित्याह **मायामिति** । तस्या नानाविधकार्य्याकारेण परिणामित्वं सूचयति **मूलप्रकृतिमिति** । ईश्वरस्य प्रकृत्यधीनत्वं वारयति **वशीकृत्येति** । नित्यत्वं कार्य्याकारविरहितत्वं, शुद्धत्वमकारणत्वं, बुद्धत्वमजडत्वं, मुक्तत्वम् अविद्याकामकर्मपारतन्त्र्यराहित्यम् । नच नित्यत्वादयः संसारावस्थायामसन्तो मोक्षावस्थायां संभवन्तीति युक्तमित्याह **स्वभावइति** । देहग्रहे प्राधान्यं मायाया दर्शयितुं पुनः स्वमाययेत्युक्तम् । “स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः” इति श्रुतिमाश्रित्याह **देहवानिति** । इवकाराभ्यां देहादेरवस्तुत्वेन कल्पितत्वं द्योत्यते धर्मद्वयोपदेशद्वारा प्राणिवर्गस्याभ्युदयनिःश्रेयसतत्परत्वापादनं लोकानुग्रहः, यद्यपि कूटस्थः स्वतन्त्रो नित्यत्वादिलक्षणश्चायमीश्वरः स्वतो दृश्यते तथापि यथोक्तमायाशक्त्या देहादि गृहीत्वा प्राणिनामनुग्रहमादधानो न स्वभावविपर्ययं पर्य्येतीत्यर्थः । ननु ‘प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते’ इति न्यायादीश्वरस्याप्तकामतया कृतकृत्यस्य प्रयोजनाभावादनुग्राह्याणां चाद्वैतवादे व्यतिरिक्तानामसत्त्वान्न धर्मद्वयमुपदेष्टुमुचितमिति तत्राह **स्वप्रयोजनेति** । कल्पितभेदभाञ्जि भूतान्युपादाय तदनुग्रहेच्छया चैत्यवन्दनादिविलक्षणं धर्मद्वयमर्जुनं निमित्तीकृत्याप्तकामोऽपि भगवानुपदिष्टवानित्यर्थः । अर्जुनस्योपदेशापेक्षास्तीति दर्शयितुं विशिनष्टि **शोकेति** । ननु भूतानुग्रहे कर्त्तव्ये किमित्यर्जुनाय धर्मद्वयं भगवतोपादिश्यते तत्राह **गुणाधिकैरिति** । प्रचयं गमिष्यतीति मत्वा धर्मद्वयमर्जुनायोपदिदेशेति संबन्धः । अथ तथापि सुगतोपदिष्टधर्मवद्यमपि भगवदुपदिष्टो धर्मो न प्रामाणिकोपादेयतामुपगच्छेदित्याशङ्क्य वेदोक्तत्वान्नास्य तत्तुल्यत्वमित्युक्तमित्यभिप्रेत्य शिष्टपरिगृहीतत्वाच्च मैवमित्याह **तं धर्ममिति** । अधर्मे धर्मबुद्धिर्वेदव्यासस्य जातेत्याशङ्क्याह **सर्वज्ञ इति** । ‘कृष्णद्वैपायनं विद्धि व्यासं नारायणं प्रभुम्’ इति स्मृतेः सज्जनोपकारकभगवदवतारत्वाच्च व्यासस्य नान्यथाबुद्धिरित्याह **भगवानिति** ।

गीताशास्त्रस्यानाप्तप्रणीतत्वमपाकृत्य व्याख्येयत्वमुपपादितमुपसंहरति **तदिदमिति** । पौरुषेयस्य वचसो मूलप्रमाणाभावेनाप्रामाण्यमिति मत्वा विशिनष्टि **समस्तेति** । शास्त्राक्षरैरेव तदर्थप्रतिपत्तिसंभवे किमिति व्याख्यानमित्याशङ्क्याह **दुर्विज्ञेयार्थमिति** । ‘पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम् ॥’* इत्यादिक्रमेणास्य शास्त्रस्य पूर्वाचार्य्यैर्व्याख्यातत्वात् किमर्थमिदमारभ्यते गतार्थत्वात्तत्राह **तदर्थेति** । गीताशास्त्रार्थस्य प्रकटीक-

---

* आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं स्मृतम् । एवमपि क्वचित्पठ्यते ।

नेकैर्विवृतपदार्थवाक्यार्थन्यायमप्यत्यन्तविरुद्धानेकार्थत्वेन लौकिकैर्गृह्यमाणमुपलभ्याहं विवेकतोऽर्थनिर्द्धारणार्थं संक्षेपतो विवरणं करिष्यामि ।

तस्यास्य गीताशास्त्रस्य संक्षेपतः प्रयोजनं परं निःश्रेयसं सहेतुकस्य संसारस्यात्यन्तोपरमलक्षणं तच्च *सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठारूपाद्धर्माद्भवति । तथेममेव गीतार्थधर्ममुद्दिश्य भगवतैवोक्तम्—'स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने' इत्यनुगीतासु । किञ्चान्यदपि तत्रैवोक्तम्—'नैव धर्म्मी न चाधर्मी न चैव हि शुभाशुभी ॥ यः स्यादेकासने लीनस्तूष्णीं किं चिदचि-

रणार्थं पदविभागस्तदर्थोक्तिः समासद्वारा वाक्यार्थनिर्देशस्तत्रापेक्षितो न्यायश्चाक्षेपसमाधानलक्षणो वृत्तिकारैर्दर्शितस्तथापि तथाविधमेव शास्त्रं शास्त्रपरिचयशून्यैः समुच्चयवादिभिर्विरुद्धार्थत्वेनानेकार्थत्वेन च गृहीतमालक्ष्य तद्बुद्धिमनुरोद्धुमिदमारब्धव्यमित्यर्थः । येषां प्राचीने व्याख्याने बुद्धिरप्रविष्टा तेषां संप्रतितन एतस्मिन्नसौ प्रवेक्ष्यतीति कुतो नियमस्तत्राह **विवेक इति** । पूर्वव्याख्याने तत्तदर्थनिर्द्धारणार्थोपन्यासः संकीर्णवद्भातीति न तत्र केषां चिन्मनीषा समुन्मिषति प्रकृते त्वसंप्रकीर्णतया तत्तत्पदार्थनिर्णयोपयोगिन्यायो विक्रियते तेनात्र मन्दमध्यमयोरपि बुद्धिरवतरतीत्यर्थः । किंचानपेक्षिताधिकग्रन्थसद्भावान्न प्राचीने व्याख्याने श्रोतॄणां प्रवृत्तिरत्र त्वपेक्षिताल्पग्रन्थे विवरणे प्रायशः सर्वेषां प्रवृत्तिः स्यादिति मत्वाह **संक्षेपत इति** ।

नन्वनाप्तप्रणीतत्वाद्यभावेऽपि नेदं शास्त्रं व्याख्येयं विषयाद्य×नुबन्धस्यानभिहितत्वेन शास्त्रत्वाभावादित्याशङ्क्य सर्वव्यापाराणां प्रयोजनार्थत्वादादौ प्रयोजनमाह **तस्येति** । प्रसाधितप्रामाण्यस्य व्याख्येयत्वेन मनसि संनिहितस्य गीताशास्त्रस्य संक्षेपतः संग्रहः संपिण्डितत्वमेकवाक्यत्वं तेनेदं परमं फलं यन्निश्चितं श्रेयो निःश्रेयसं कैवल्यम्, अवान्तरफलं तु तत्रतत्रावान्तरवाक्यभेदेन मनोनिग्रहादि विवक्ष्यते निःश्रेयसं च द्विविधं निरतिशयसुखाविर्भावो निःशेषानर्थोच्छित्तिश्च । तत्राद्यमुदाहरति **परमिति** । द्वितीयं दर्शयति **सहेतुकस्येति** । संसारोपरमस्यात्यन्तिकत्वं प्रतियोगिनः संसारस्य पुनरुत्पत्त्ययोग्यत्वं तच्च स्वापमूर्च्छादिव्यवच्छेदार्थं विशेषणं तदेव साधयितुं सहेतुकस्येत्युक्तम् । उक्तं फलं समुच्चितादेकाकिनो वा कर्मणः स्यादिति तस्यैव शास्त्रप्रतिपाद्यतेत्याशङ्क्याभिधेयमभिधित्समानः समाधत्ते **तच्चेति** । आत्मज्ञाननिष्ठाशेषत्वेन कर्मनिष्ठात्रोच्यते प्राधान्येन त्वात्मज्ञाननिष्ठैवात्र प्रतिपाद्यत इत्यर्थः । ननु शेषिणी निष्ठा कुतो न भवति संन्यासात् कर्मनिष्ठायाः शेषत्वात्तत्राह सर्वेति । संन्यासद्वारेणासकृदनुष्ठितश्रवणादेः शेषिणी निष्ठा सिद्ध्यति शेषत्वं च कर्मणस्तत्र परंपराश्रयत्वमित्यर्थः । ननु 'यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तद्' इति वाक्यशेषात् समुच्चितमात्मज्ञानमत्र प्रतिपाद्यते नेत्याह **तथेति** । सर्वकर्मसंन्यासपूर्वकमात्मज्ञाननिष्ठारूपं धर्मं निःश्रेयससाधनं प्रयोजनं प्रागुक्तं परामृशति **इममेवेति** । वक्तृभेदादभिप्रायभेदाशङ्कां वारयति **भगवतैवेति** । उक्तमनुगीतास्विति संबन्धः, ब्रह्मणः पदं पूर्वोक्तं निःश्रेयसं तस्य वेदनं लाभस्तत्र विशिष्टो ज्ञाननिष्ठारूपो धर्मः समर्थो भवतीत्यर्थः । यज्ञदानादिवाक्यस्य तु तद्व्याख्यानावसरे तात्पर्य्यं वक्ष्यते । कर्मत्यागस्य भगवतोऽभिप्रेतत्वे वाक्यान्तरमनुगीतागतमेवोदाहरति **तत्रैवेति** । धर्म्माधर्म्मापूर्वासंसर्गित्वे हेतुमाह **नैवेति** । क्रियाद्वयसंबन्धाभावात्तन्निवृत्त्या+ पूर्वाभ्याससंबन्धे प्राप्तमर्थमाह **यः स्यादिति** । वागादिबाह्यकरणव्यापारविरहितत्वं तूष्णीमित्युच्यते, किं चिदचिन्तय-

* यच्च इति पाठान्तरम् ।

× आदिपदेन प्रयोजनाधिकारिसंबन्धा गृह्यन्ते । + तन्निवृत्त्या—मु० पु० पाठः ।

न्तयन्' 'ज्ञानं संन्यासलक्षणम्' इति च । इहापि चान्ते उक्तमर्जुनाय--'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' इति । अभ्युदयार्थोऽपि यः प्रवृत्तिलक्षणो धर्मो वर्णाश्रमांश्चोद्दिश्य विहितः स च देवादिस्थानप्राप्तिहेतुरपि सन् ईश्वरार्पणबुद्ध्यानुष्ठीयमानः सत्त्वशुद्धये भवति फलाभिसन्धिवर्जितः, शुद्धसत्त्वस्य च ज्ञाननिष्ठायोग्यताप्राप्तिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुत्वमपि प्रतिपद्यते । तथा चेममर्थमभिसन्धाय वक्ष्यति--'ब्रह्मण्याधाय कर्माणि यतचित्ता जितेन्द्रियाः । योगिनः कर्म कुर्वन्ति संगं त्यक्त्वात्मशुद्धये ॥' इमं द्विप्रकारं धर्मं निःश्रेयसप्रयोजनं परमार्थतत्त्वं च वासुदेवाख्यं परब्रह्माभिधेयभूतं विशेषतोऽभिव्यञ्जयद् विशिष्टप्रयोजनसंबन्धाभिधेयवद्गीताशास्त्रं यतस्तदर्थविज्ञानेन समस्तपुरुषार्थसिद्धि^ तस्तद्विवरणे यत्नः क्रियते मया ।

---

न्नित्यन्तःकरणव्यापाराभावोऽभिप्रेतः, द्विविधकरणव्यापारविरहितः सन् प्रागुक्तो योऽधिकारी केवलमेकस्मिन्नद्वितीये ब्रह्मण्यासनमवस्थानं तत्र लीनस्तस्मिन्नेव समाप्तिभागी स्यात्तस्यासंप्रज्ञातसमाधिनिष्ठस्य सर्वकर्म्मत्यागहेतुकं ज्ञानं मुक्तिहेतुर्भवतीत्यर्थः । न केवलमनुगीतास्वेव यथोक्तं ज्ञानमुक्तं किं तु प्रकृतेऽपि शास्त्रे समाप्त्यवसरे दर्शितमित्याह **इहापीति** । नन्वत्र निवृत्तिलक्षणधर्म्मात्मकं ससंन्यासमात्मज्ञानमेव न प्रतिपाद्यते 'कुरु कर्मैव तस्मात्त्वम्' इत्यादौ प्रवृत्तिलक्षणस्यापि धर्मस्य वक्ष्यमाणत्वाद्धर्मयोश्च प्रकृतत्वाविशेषात्तत्राह **अभ्युदयार्थोऽपीति** । ननु वर्णिभिराश्रमिभिश्चानुष्ठेयत्वेनान्यत्र विहितस्यापि तस्य न युक्तं मोक्षसाधनत्वाधिकारे विधानं देवादिस्थानप्राप्तिहेतुत्वेन मोक्षं प्रति प्रतिपक्षत्वात्, सत्यं, तथापि फलाभिलाषमन्तरेणेश्वरार्पणधिया कृतस्य बुद्धिशुद्धिहेतुत्वात्तस्येह वचन*मित्याह **स च देवादीति** । फलाभिसन्धिद्वारा कृतः सन्निति शेषः । प्रवृत्तिलक्षणधर्मस्योक्तरीत्या चित्तशुद्धिहेतुत्वेऽपि मोक्षहेतुत्वेन कुतो मोक्षाधिकारे निर्देशः स्यादित्याशङ्क्याह **शुद्धेति** । प्रतिपाद्यते प्रागुक्तो धर्म इति शेषः । यदुक्तं फलाभिसन्धिवर्जितमीश्वरार्पणबुद्ध्यानुष्ठितं कर्म बुद्धिशुद्धये भवतीति तत्र वाक्यशेषमनुकूलयति **तथा चेति** । शास्त्रस्य प्रयोजनं ससाधनमुक्तमनूद्य विषयं दर्शयति **इममिति** । दर्शितेन फलेन शास्त्रस्य निष्ठाद्वयद्वारा साध्यसाधनभावः संबन्धो विषयेण विषयविषयित्वमिति विवक्षित्वाह **विशेषत इति** । एवमनुबन्धत्रयविशिष्टं शास्त्रं व्याख्यानार्हमित्युपसंहरति **विशिष्टेति** । सिद्धे व्याख्यानयोग्यत्वे व्याख्येयत्वं फलितमाह **यत इति** ।

---

*कथनम्--इति क्वचित् ।

श्रीविश्वनाथो जयति ।

संविदानन्दसंदोहसान्द्रमिन्दीवरेक्षणम् ॥
इन्दिरामन्दिरं देवं वन्दे तं नन्दनन्दनम् ॥ १ ॥
अज्ञः सुज्ञत्वसीमामनुभवति भवान्नेति रङ्कोऽपि शङ्कां
स्यान्मूको वावदूको व्रजति शिखरिणां पङ्गुरुल्लङ्घ्य सङ्घम् ॥
दुःखाब्धेर्नोपलब्धिः स खलु विजयते यत्कृपापाङ्गसङ्गा-
दन्तर्यामी समीपे मम परमगुरुः श्रीयशोदाकिशोरः ॥ २ ॥
अम्भोधिं कुम्भडिम्भश्चुलुकितमकरोन्मूर्ध्नि धत्तेऽतिगुर्वी-
मुर्वीं दर्वीकरोऽपि प्रदहति दहनो वर्षति प्रावृषेण्यः ॥
मेघौघो वाति वातः प्रतपति तपनो रत्नसूर्भूमिरेभि-
र्लोकातीतोऽभिनीतो यदुकुलतिलकानुग्रहो निग्रहो वा ॥ ३ ॥
वार्ष्णेयब्रह्मशैलाद्दनुशतप्रथगा ज्ञानविज्ञानकूला
पार्थस्य प्रार्थनातश्चिरममृतवहा प्रत्यगानन्दसिन्धुम् ॥
संप्राप्तार्थप्रवाहप्रपतितविततानश्वत्थमुन्मूलयन्ती
गीता स्फीता निमङ्क्तुः सकलकलिमलं स्वर्धुनीयं धुनीते ॥ ४ ॥
निश्वासो वैश्वरूपो निगम इति जने दुर्गमो भुक्ततोऽसा-
वाविर्भूता विभूतिर्जगदुपकृतये भारती भारताग्रे ॥
सेयं गीताभिनीता स्वयमुपनिषदामर्थमोदाय हार्दे
सौहार्दे केवलं नः प्रियविषयमदः किं तु विष्वग्जनस्य ॥ ५ ॥
आचार्याः सन्ति कुत्राप्यतिविमलधियो वेदशास्त्रागमानां
दुष्प्रापस्तावदास्ते त्रिजगति नितरामात्मतत्त्वोपदेष्टा ॥
एवं सत्यर्जुनस्याद्भुतविकलवतो वर्ण्यते किन्तु भाग्यं
यस्याचार्यस्य हेतोः स्वयमुपनिषदामर्थ आविर्बभूव ॥ ६ ॥
चतुर्वेदाचार्याधिगतभगवद्भावभवनं निदानं विश्रान्तेर्यदनुमतमृक्सामयजुषाम् ॥
अहं गीताभाष्यं तदिह रचये सूर्यविधिविद्यतोऽल्पज्ञप्रज्ञानुभवरसिकानन्दजननम् ॥ ७ ॥
साक्षाद्वैकुण्ठवाचो निजभजनवतां मुक्तिहेतोः प्रवृत्ताः
सर्वाम्नायाश्च गीताः सततमथ मिथो या वियुक्ता बभूवुः ॥
ता एकत्रानुयोक्तुं सुरसरित इवान्तार्नियुक्तो विनेत्रा
देवेनान्तः प्रवृत्तोस्म्यहमिह भविता तावताहं कृतार्थः ॥ ८ ॥
एतस्मिन् भगवच्छास्त्रे न यौक्तिकमताग्रहः ॥
सर्वोपनिषदध्यात्ममेतदात्मानुभूतिकृत् ॥ ९ ॥

इह खलु सदनुग्रहखलनिग्रहगृहीतविग्रहः परमकारुणिकः परमात्मा दावदहनदन्दशूक-शिलावर्षणवस्त्रहरणलाक्षागृहगरदानाद्यनर्थेभ्यः स्वचरणशरणानुद्दधार । ततो दनुजकुलभराकुलमवनीतलमाकलय्य प्रथमतः पूतनादीनसुरान्निरवधीनवधीत् । अनन्तरं कंसचाणूरकालयवनजरासन्धादींश्च । संप्रत्यर्जुनं निमित्तमात्रं कृत्वा कुरुक्षेत्रे क्रूरतमं कौरवकुलं संजिहीर्षुरास्ते । तत्र श्रुतयः- " जज्ञान एव व्यबाधत स्पृधः प्रापश्यद्वीरो अभिपौंस्यं रणम् ॥ अवृश्चिदद्रिमव सस्यदः सृजदस्तभ्नान्नाकं स्वपस्यया पृथुम् ॥ अत्र चतुर्वेदस्वामिकृतभाष्यम्— यः परमेश्वरो जज्ञानः प्रादुर्भूतमात्रो मायया बालदशां स्वीकुर्वाणोपि सन् स्पृधः स्पर्धां कृतवतः शत्रून् पूतनादीन् कंसान्तान् व्यबाधत बाधि-

तवान् । न केवलं दैत्यानपि तु शक्रादीनां गर्वमपीत्याह । योऽद्रिं पर्वतं गोवर्धनमवृष्टिदुद्धार । किमुद्दिश्य । सस्यदो धान्यदातॄन्मेघाननवरतं वर्षमाणानवसृजत् विसर्जितवान् । तेन पृथुं सामर्थ्यवन्तं नाकमिन्द्रलोकं स्वपस्यया मायया अस्तभ्नात् स्तम्भितवान् स्तम्भितशक्तिमकरोत् । अथ यौवनदशायामप्यभिपौंस्यं सर्वपुरुषार्थसाधकं रणं कुरुपाण्डवसंग्रामं वीरोऽपि सन्नपश्यत् ताटस्थ्येन दृष्टवान्न तु स्वयं युयुधे । अत्र वीरपदेन भीष्मपराभूतस्वभक्तपक्षपातादशस्त्रोऽपि * शस्त्रमग्रहीदिति सूचितम् । अथ कंसादिवधार्थं गोकुलान्मथुरामागच्छतोः कृष्णरामयोश्चरितशंसनी श्रुतिस्तैत्तिरीयकब्राह्मणे । ऋग्द्वयम्—"द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुपधापयेते ॥ हरिरन्यस्यां भवति स्वधावाञ्छुक्रो अन्यस्यां ददृशे सुवर्चाः ॥ १ ॥ पूर्वापरं चरतो माययैतौ शिशू क्रीळन्तौ परियातो अध्वरम् ॥ विश्वान्यन्यो भुवनानि चष्ट ऋतूंन्यन्यो विदधज्जायते पुनः ॥ २ ॥" भाष्यम्— धनुर्यागोत्सवव्याजेन कृष्णरामयोरानयनार्थं कंसेन प्रेषितः सुष्ठु वर्चो यस्यासौ सुवर्चा अक्रूरश्चरतो विचरतो द्वे विसदृशे रूपे विरूपे ददृशे दृष्टवान् । किंभूते स्वर्थे सुष्ठु अर्थः प्रयोजनं ययोस्ते । न हि नृसिंहवदेकस्यां मूर्तौ किं तु अन्या अन्या पृथगवस्थिते । पुनः किंभूते वत्सम् उपधापयेते वत्समिति जात्यभिप्रायेणैकवचनं तेन गोसंदोहनावसरे स्वसमीपे वर्तमानैर्गोपैः कृत्वा वत्सान् धापयेते पाययेते । अथ विसदृशरूपत्वमेवाह हरिरिति । अन्यस्यामन्यतमस्यां मूर्तौ हरिद्वर्णत्वाद्धरिः मेघश्यामः कृष्णोऽस्ति तथा अन्यस्यां शुक्रो गौरवर्णो बलदेवोऽस्ति । किंभूतो हरिः स्वभावान् स्वस्य भा स्वभा तद्वान् अलुप्तनिजैश्वर्यवानित्यर्थः । किंभूते रूपे पूर्वापरं चरतः प्रागपरं परिसरणं कुरुतः । परं तु न प्राकृतावित्याह । एतौ कृष्णरामौ मायया कृत्वा शिशू बाल्यदशां प्राप्तौ परमार्थतो विचार्यमाणे वयोऽवस्थारहितौ एवं माययैव रजकवधादिभिः क्रीडन्तौ सन्तौ अध्वरं धनुर्यागस्थानं प्रति परिपततः समन्ततः कुवलयापीडकंसचाणूरादिस्थानानि यातः जग्मतुः । अथ पूर्वं विरूप इत्यनेनाकारतो विसदृशत्वं द्योतितमिदानीं सामर्थ्यतोऽप्याह अन्य इति । अन्यः कृष्णः विश्वानि सर्वाणि भुवनानि भूर्भुवःस्वरादीनि विचष्टे संकल्पेनैव ज्ञातवान् तथान्यो बलदेवः ऋतून् गर्भान्मत्स्याद्यवतारान् विदधद्गृह्णन् सन् पुनः पुनर्जायते आविर्भवतीति । एवमुभयसेनासंनाहसंनिवेशे आचार्यगोत्रिसुहृद्वधाशङ्कया 'कुलक्षयकृतं दोषम्' तथा 'आचार्यान्मातुलान् भ्रातॄन्' इत्यादिवाक्यैर्निर्विण्णं तथा नित्यानित्यवस्तुविवेकेनैव स्वचरणशरणं तथा 'अपि त्रैलोक्यराज्यस्य' इत्यादिनेहामुत्रार्थफलभोगविरागवन्तं तथा 'शिष्यस्तेऽहं शाधिमाम्' इति गुरुदैवतवाक्यविश्वासेनैव मुमुक्षामुपमर्जुनं प्रति वर्णधर्मोचितकर्मोपदेशावसरे 'न काङ्क्षे विजयं कृष्ण' इति तथा 'एतान्न हन्तुमिच्छामि घ्नतोपि' इति 'श्रेयो भोक्तुं भैक्ष्यमपि' इत्यादिपार्थवाक्यश्रवणात्तमुत्पन्नवैराग्यतया ज्ञानाधिकारिणमवेक्ष्य स्वरूपमप्युपादिष्टवान् तत्र द्व्याहप्राजापत्यादिबृहदारण्यकोपक्रान्तदैवासुरप्रज्ञानानुसारं व्यासदेवोपि धृतराष्ट्रसंजययोः प्रश्नोत्तरपूर्वकं गीताशास्त्रोपक्रममप्यकार्षीत् । धर्मक्षेत्र इत्यादितः॥ अत्र पूर्वप्रसंगस्तु युद्धोपक्रमे कृष्णार्जुनसंवादावसरे व्यासानुग्रहलब्धदिव्यश्रवणप्रज्ञोत्कर्षः संजयः साक्षात्कृष्णमुखोद्गतानि पद्यानि+ शृण्वन् हृदि संगृहीतसकलवाक्यसंदर्भः केन चित्कार्येण हास्तिनपुरं प्रत्यागतस्तं धृतराष्ट्रः पृच्छति स्म । तदुक्तं भीष्मपर्वणि—'अथ गावलगणिर्धीमान् संगरादेत्य संजयः ॥ प्रत्यक्षदर्शी सर्वस्य भूतभव्यभविष्यतः॥ध्यायते धृतराष्ट्राय समुपेत्यैवमब्रवीद्' इति ।

---

* शस्त्राग्रहणप्रतिज्ञोपि, स्वभक्तपक्षपातेन शस्त्रं गृहीतवानित्याशयः ।

+ गीतायां न सर्वाणि पद्यानि कृष्णोक्तानीति दुराशयानां खण्डनायाह साक्षात्कृष्णमुखोद्गतानीति ।

# अथ प्रथमोऽध्यायः ।

## धृतराष्ट्र उवाच ।

**धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ॥**
**मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥ १ ॥**

**शांकर भाष्यम् । अत्र च धृतराष्ट्र उवाच धर्मक्षेत्र इत्यादि ।**

### आनन्दगिरिकृतटीका ।

एवं गीताशास्त्रस्य साध्यसाधनभूतनिष्ठाद्वयविषयस्य परापराभिधेयप्रयोजनवतो व्याख्येयत्वं प्रतिपाद्य व्याख्यातुकामः शास्त्रं तदेकदेशस्य प्रथमाध्यायस्य द्वितीयाध्यायैकदेशसहितस्य ×तात्पर्यमाह **अत्रचेति** गीताशास्त्रे प्रथमाध्याये प्रथमश्लोके कथासंबन्धप्रदर्शनपरे स्थिते सतीति यावत्। तत्रैवमक्षरयोजना । **धृतराष्ट्र उवाचेति** । धृतराष्ट्रो हि प्रज्ञाचक्षुर्बाह्यचक्षुरभावाद्बाह्यमर्थं प्रत्यक्षयितुमनीशः सन्नभ्याशवर्तिन सञ्जयमात्मनो हितोपदेष्टारं पृच्छति **धर्मक्षेत्रइति** । धर्मस्य तद्वृद्धेश्च क्षेत्रमभिवृद्धिकारणं यदुच्यते कुरुक्षेत्रमिति तत्र समवेताः संगता युयुत्सवो योद्धुकामास्ते च केचिन्मदीया दुर्योधनप्रभृतयः पाण्डवाश्चापरे युधिष्ठिरादयस्ते च सर्वे युद्धभूमौ संगता भूत्वा किमकुर्वत कृतवन्तः ॥ १ ॥

### परमार्थप्रपाख्या टीका ।

धर्मक्षेत्रे तत्र त्यक्तजीवितानां सद्गतिप्रदे कुरुक्षेत्रे युयुत्सवो योद्धुमिच्छन्तः समवेता मिलिता मामका मत्पुत्राः पाण्डवाश्च किमकुर्वत किं कृतवन्तस्तदाचक्ष्वेति पृष्टः ॥ १ ॥

## सञ्जय उवाच ।

**दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ॥**
**आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥**

**आ० टी०** । किमस्मदीयं प्रबलं बलं प्रतिलभ्य धीरपुरुषैर्भीमादिभिराधिष्ठितं परेषां भयमाविरभूत्, यद्वा॰पक्षद्वयहिंसानिमित्ताधर्मभयमासीद् येन एते युद्धादुपरमेरन्नित्येवं पुत्रपरवशस्य पुत्रस्नेहाभिनिविष्टस्य धृतराष्ट्रस्य प्रश्ने सञ्जयस्य प्रतिवचनं **दृष्ट्वेत्यादि** । पाण्डवानां भयप्रसंगो नास्तीत्येतत्तुशब्देन द्योत्यते प्रत्युत दुर्योधनस्यैव राज्ञो भयं प्रभूतं प्रादुर्बभूव । पाण्डवानां पाण्डुसुतानां युधिष्ठिरादीनामनीकं सैन्यं धृष्टद्युम्नादिभिरतिधृष्टैर्व्यूहाधिष्ठितं दृष्ट्वा प्रत्यक्षेण प्रतीत्य त्रस्तहृदयो दुर्योधनो राजा तदा तस्यां संग्रामोद्योगावस्थायामाचार्यं द्रोणनामानमात्मनः शिक्षितारं रक्षितारं च श्लाघयन्नुपसंगम्य तदीयं समीपं विनयेन प्राप्य भयोद्विग्नहृदयत्वेऽपि तेजस्वित्वादेव वचनमर्थसहितं वाक्यमुक्तवानित्यर्थः ॥ २ ॥

**प० टी०** । राजा दुर्योधनः पाण्डवानीकं तत्सैन्यं व्यूढं व्यूहरचनया स्थितं दृष्ट्वाचार्यं द्रोणमुपसंगम्य वचनमब्रवीत् ॥ २ ॥

---

× अशोच्यानन्वशोचस्त्वमिति द्वितीयाध्यायस्य ११ श्लोकपर्यन्तस्यैत्यर्थः ।

**पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ॥**
**व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥**

**आ० टी०।** तदेव वचनमुदाहरति **पश्येति**। एतामस्मदभ्याशे महापुरुषानपि भवत्प्रमुखान्-परिगणय्य भयलेशशून्यामवस्थितां चमूमिमां सेनां पाण्डुपुत्रैर्युधिष्ठिरादिभिरानीतां महतीमनेकाक्षौहिणीसहितामक्षोभ्यां पश्येत्याचार्य्यं दुर्योधनो नियुङ्क्ते, नियोगद्वारा च तस्मिन् परेषामवज्ञां विज्ञापयन् क्रोधातिरेकमुत्पादयितुमुत्सहते। परकीयसेनाया वैशिष्ट्याभिधानद्वारा परापरपक्षेऽपि त्वदीयमेव बलमिति सूचयन्नाचार्यस्य तन्निरसनं सुकरमिति मन्वानः सन्नाह व्यूढामिति। राज्ञो द्रुपदस्य पुत्रस्तव शिष्यो धृष्टद्युम्नो लोके ख्यातिमुपगतः स्वयं च शस्त्रास्त्रविद्यासंपन्नो महामहिमा तेन व्यूहमापाद्याधिष्ठितामिमां चमूं किमिति न प्रतिपद्यसे किमिति वा मृष्यसीत्यर्थः ॥ ३ ॥

**प० टी०।** आचार्य महतीं पर्याप्तबलां पाण्डुपुत्राणां चमूं सेनां पश्य न केवलं सैन्यबाहुल्यमुपयुज्यतइत्याह व्यूढामिति। द्रुपदपुत्रेण धृष्टद्युम्नेन धीमता संनिवेशचतुरेण तत्रापि तव शिष्येण व्यूहरचनया संनिविष्टाम् ॥ ३ ॥

**अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ॥**
**युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥**

**आ० टी०।** अन्येऽपि प्रतिपक्षे पराक्रमभाजो बहवः सन्तीत्यनुपेक्षणीयत्वं परपक्षस्य विवक्षयन्नाह **अत्रेति**। अस्यां हि प्रतिपक्षभूतायां सेनायां शूराः स्वयमभीरवः शस्त्रास्त्रकुशलाः भीमार्जुनाभ्यां सर्वसंप्रतिपन्नवीर्याभ्यां तुल्या युद्धभूमावुपलभ्यन्ते। तेषां युद्धशौण्डीर्यं विशदीकर्तुं विशिनष्टि महेष्वासा इति। इषुरस्यतेऽस्मिन्निति व्युत्पत्त्या धनुस्तदुच्यते तच्च महदन्यैरप्रधृष्यं तदेषां ते राजानस्तथा विवक्षन्ते। तानेव परसेनामध्यमध्यासीनान् परपक्षानुरागिणो राज्ञो विज्ञापयति **युयुधान** इत्यादिना **सौभद्रो द्रौपदेयाश्चे**त्यन्तेन ॥ ४ ॥

**प० टी०।** अत्रास्यां चम्वां शूराः पराक्रमवन्तः महेष्वासाः महान्त इषवो बाणा अस्यन्ते क्षिप्यन्ते येस्ते तथाविधाः सन्तो युधि संग्रामे भीमार्जुनसमास्तत्सदृशबलाः सन्ति। अथ तानेवाह **युयुधान** इति। युयुधानः सात्यकिः विराटस्तथा द्रुपदो द्रौपदीपिता ॥ ४ ॥

**धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ॥**
**पुरुजित् कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥ ५ ॥**

**आ० टी०।** किं च **धृष्टकेतु**रिति। स्पष्टम् ॥ ५ ॥

**प० टी०।** चेकितानो राजा कश्चित् स नरपुङ्गवो नरश्रेष्ठः ॥ ५ ॥

**युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ॥**
**सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥**

**आ० टी०।** तेषां सर्वेषामपि महाबलपराक्रमभाक्त्वादनुपेक्ष्यत्वं पुनर्विवक्षति **सर्व एवेति**॥६॥

**प० टी०।** विक्रान्तः पराक्रमी युधामन्युनामकः चपरमुत्तमौजा वीर्यवानेतावर्जुनस्य चक्ररक्षकौ। उक्तं च भीष्मपर्वणि—'पृष्ठगो योऽर्जुनस्यापि युयुधानो महारथः॥चक्ररक्षौ च पाञ्चाल्यौ युधाम-

न्यूत्तमौजसौ ॥' सौभद्रोऽभिमन्युः द्रौपदेयाः द्रौपद्यां पञ्चभिर्जाताः पञ्च पुत्राः प्रतिविन्ध्यादयः एवमुक्ताः सर्वे महारथाः । उक्तं च–' एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् ॥ शस्त्रशास्त्रप्रवीणश्च स महारथ उच्यते ॥ अमितान्योधयेद्यस्तु स प्रोक्तोऽतिरथाभिधः ॥ एकस्त्वेकेन यो योद्धा स चार्धरथ उच्यते ॥' इति ॥ ६ ॥

**अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ॥**
**नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते ॥ ७ ॥**

**आ० टी०** । यद्येवं परकीयं बलमतिप्रभूतं प्रतीत्यातिभीतवदभिदधासि हन्त सन्धिरेव परैरिष्यतामलं विग्रहाग्रहेणेत्याचार्याभिप्रायमाशङ्क्य ब्रवीति **अस्माकमिति** । तुशब्देनान्तरुत्पन्नमपि स्वकीयं भयं तिरोदधानो धृष्टतामात्मनो द्योतयति । ये खल्वस्मत्पक्षे व्यवस्थिताः सर्वेभ्यः सुमुत्कर्षजुषस्तान्मयोच्यमानान्निबोध निश्चयेन मद्वचनादवधारयेत्यर्थः । यद्यपि त्वमेव त्रैवर्णिकेषु वैविद्यवृद्धेषु प्रधानत्वात् प्रतिपत्तुं प्रभवसि तथापि मदीयसैन्यस्य ये मुख्यास्तानहं ते तुभ्यं संज्ञार्थमसंख्येषु तेषु मध्ये कति चिन्नामभिर्गृहीत्वा परिशिष्टानुपलक्षयितुं विज्ञापनं करोमि न त्वज्ञातं किं चित्तव ज्ञापयामीति मत्वाह **द्विजोत्तमेति** ॥ ७ ॥

**प० टी०** । अथ स्वकीयां सेनामाह **अस्माकमिति** । अस्माकं सैन्ये ये **विशिष्टा** विवक्षिताः सन्ति तान्निबोध बुध्यस्व । मम सैन्यस्य नायका नियन्तारः ॥ ७ ॥

**भवान् भीष्मश्च कर्णश्च कृपश्च समितिंजयः ॥**
**अश्वत्थामा विकर्णश्च *सौमदत्तिस्तथैव च ॥ ८ ॥**

**आ० टी०** । तानेव स्वसेनानिविष्टान् पुरुषधौरेयानात्मीयभयपरिहारार्थं परिगणयति **भवादित्यादिना** ॥ ८ ॥

**प० टी०** । तानाह **भवानिति** । भवान्द्रोणो भीष्मः कृपः कृपाचार्यः समितिं संग्रामं जयतीति तथा सौमदत्तिः सोमदत्तस्य पुत्रो भूरिश्रवाः ॥ ८ ॥

**अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ॥**
**नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥**

**आ० टी०** । द्रोणादिपरिगणनस्य परिशिष्टपरिसंख्यार्थत्वं व्यावर्त्तयति **अन्ये चेति** । सर्वेऽपि भवन्तमारभ्य मदीयपृतनायां प्रविष्टाः स्वजीवितादपि मह्यं स्पृहयन्तीत्याह **मदर्थइति** । यत्तु तेषां शूरत्वमुक्तं तदिदानीं विशदयति **नानेति** । नानाविधान्यनेकप्रकाराणि **शस्त्राण्यायुधानि** प्रहरणानि प्रहरणसाधनानि येषां ते तथा । बहुविधायुधसंपत्तावपि तत्प्रयोगे नैपुण्याभावे तद्वैफल्यमिति चेन्नेत्याह **सर्वइति** ॥ ९ ॥

**प० टी०** । **अन्ये** एतदतिरिक्ता बहवः शूराः सन्ति मदर्थे मत्प्रयोजनाय त्यक्तजीविताः संकल्पितप्राणाः नानाशस्त्रैः प्रहरन्ति युद्ध्यन्ति ते तथा अत एव विशारदाः ॥ ९ ॥

**अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ॥**
**पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥**

---

* सौमदत्तिर्जयद्रथः—सिन्धुराजो जयद्रथः—इति वा कुत्रचित्पाठः ।

**आ० टी०** । राजा पुनरपि स्वकीयभयाभावे हेत्वन्तरमाचार्यं प्रत्यावेदयति **अपर्याप्तमिति** । अस्माकं खल्विदमेकादशसंख्याकाक्षौहिणीपरिगणितमपरिमितं बलं भीष्मेण च प्रथितमहामहिम्ना सूक्ष्मबुद्धिना सर्वतो रक्षितं पर्याप्तं परेषां परिभवे समर्थम् । एतेषां पुनस्तदल्पं सप्तसंख्यकाक्षौहिणीपरिमितं बलं भीमेन च चपलबुद्धिना कुशलताविकलेन परिपालितमपर्याप्तमस्मानभिभवितुमसमर्थमित्यर्थः । अथवा तदिदमस्माकं बलं भीष्माधिष्ठितमपर्याप्तमपरिमितमधृष्यमक्षोभ्यमेतेषां पाण्डवानां बलं भीमेनाभिरक्षितं पर्याप्तं परिमितं सोढुं शक्यमित्यर्थः । अथवा तत् पाण्डवानां बलमपर्याप्तं नालमस्माकमस्मभ्यं भीष्माभिरक्षितं भीष्मोऽभिरक्षितोऽस्मै परबलनिवृत्त्यर्थमिति तदेव तथोच्यते, इदं पुनरस्मदीयं बलमेतेषां पाण्डवानां पर्याप्तं परिभवे समर्थं भीमाभिरक्षितं भीमो दुर्बलहृदयो यस्मादस्मै परबलनिवृत्त्यर्थमभिरक्षितस्तस्मादस्माकं न किंचिदपि भयकारणमस्तीत्यर्थः ॥ १० ॥

**प० टी०** । अथ सैन्यद्वयोपन्यासकरणमाह **अपर्याप्तमिति** । तदुद्दिष्टमस्माकं बलं सैन्यं भीष्माभिरक्षितमपि अपर्याप्तमसंपूर्णं तैः सह योद्धुमसमर्थम् तथैतेषां पाण्डवानां बलं भीमाभिरक्षितं सत् पर्याप्तं संपूर्णं योद्धुं समर्थम् ॥ १० ॥

## अयनेषु च सर्वेषु यथाभागमवस्थिताः ॥
## भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥

**आ० टी०** । स्वकीयबलस्य भीष्माधिष्ठितत्वेन बलिष्ठत्वमुक्त्वा भीष्मशेषत्वेन तदनुगुणत्वं द्रोणादीनां प्रार्थयते **अयनेष्विति** । कर्तव्यविशेषद्योती चशब्दः, समरसमारम्भसमये योधानां यथाप्रधानं युद्धभूमौ पूर्वापरादिदिग्विभागेनावस्थितिस्थानानि नियम्यन्ते तान्यत्रायनान्युच्यन्ते सेनापतिश्च सर्वसैन्यमधिष्ठाय मध्ये तिष्ठति तेषु सर्वेषु प्रक्लृप्तं प्रविभागमप्रत्याख्याय भवानश्वत्थामा कर्णश्चेत्येवमादयो भवन्तः सर्वे ऽवस्थिताः सन्तो भीष्ममेव सेनापतिं सर्वतो रक्षन्तु तस्य हि रक्षणे सर्वमस्मदीयं बलं रक्षितं स्यात् परबलनिवृत्त्यर्थत्वेन तस्यास्माभीरक्षितत्वादित्यर्थः ॥ ११ ॥

**प० टी०** । तस्माद्भवद्भिरेवं कर्तव्यमित्याह **अयनेष्विति** । अयनेषु व्यूहप्रवेशमार्गेषु यथाभागं रणभूमिं विभज्य स्थिताः सन्तः सर्वेऽपि भवन्तो भीष्ममेवाभितः समन्ततो रक्षन्तु तस्य व्यूहं प्रविष्टस्य पृष्टिं रक्षन्तु ॥ ११ ॥

## तस्य संजनयन् हर्षं कुरुवृद्धः पितामहः ॥
## सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥

**आ० टी०** । तमेवमाचार्यं प्रति संवादं कुर्वन्तं भयाविष्टं राजानं दृष्ट्वा तदभ्याशवर्ती पितामहस्तद्बुद्ध्यनुरोधार्थमित्थं कृतवानित्याह **तस्येति** । राज्ञो दुर्योधनस्य हर्षं बुद्धिगतमुल्लासविशेषं परपरिभवद्वारा स्वकीयविजयद्वारकं सम्यगुत्पादयन् भयं तदीयमपनिनीपुरुच्चैः सिंहनादं कृत्वा शङ्खमापूरितवान्, किमिति दुर्योधनस्य हर्षमुत्पादयितुं पितामहो यतते कुरुवृद्धत्वात्तस्य कुरुराजत्वात् पितामहत्वाच्चास्य दुर्योधनभयापनयनार्था प्रवृत्तिरुचिता तदुपजीवितया तद्वशत्वाच्च तस्य सिंहनादे शङ्खशब्दे च परेषां हृदयव्यथा संभाव्यते दूरादेवारिनिवहंप्रति भयजननलक्षणप्रतापत्वादित्यर्थः ॥ १२ ॥

**प० टी०** । **तस्येति** । एवमित्यादिभिरुत्तेजनवाक्यैः स्ववीरांस्तीक्ष्णीकृतवतो दुर्योधनस्य हर्षमुत्साहं जनयन् कुरुषु कौरवसैन्येषु वृद्धः पितामहो भीष्मः प्रतापवान् स्वयमुत्साहवान् सिंहवदट्टहासं कृत्वा शङ्खं दध्मौ वादितवान् ॥ १२ ॥

ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ॥
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ॥
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥
पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ॥
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५ ॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ॥
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥
काश्यश्च परमेष्वासः शिखण्डी च महारथः ॥
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ॥
सौभद्रश्च महाबाहुः शङ्खान् दध्मुः पृथक् पृथक् ॥१८॥

आ० टी० । राजाभिप्रायं प्रतीत्य भीष्मप्रवृत्त्यनन्तरं तत्पक्षैस्तैराजाभिः शङ्खादयो वाद्यविशेषा झटिति शब्दवन्तः संपादिताः । स च शङ्खादिप्रयुक्तशब्दस्तुमुलो बहुलं भयं परेषां परिद्योतयन्नासीदित्याह **तत इति** ॥ १३ ॥

आ० टी० । एवं दुर्योधनपक्षे प्रवृत्तिमालक्ष्य परिसरवर्तिनौ केशवार्जुनौ श्वेतैर्हयैरतिबलपराक्रमैर्युक्ते महत्यप्रधृष्ये रथे व्यवस्थितावप्राकृतौ शङ्खौ पूरितवन्तावित्याह **ततः श्वेतैर्हयैरिति**॥ १४॥

आ० टी० । तयोः शङ्खयोर्दिव्यत्वमेवापादयति **पाञ्चजन्यमिति** । केशवार्जुनयोर्युद्धाभिमुख्यं दृष्ट्वा संहृष्टः सारस्येन समररसिको भीमसेनोऽपि युद्धाभिमुखोऽभूदित्याह **पौण्ड्रमिति**॥ १५॥

आ० टी० । एतेषामीदृशीं प्रवृत्तिं प्रतीत्य परिपालनावकाशमासाद्य राज्ञो युधिष्ठिरस्यापि प्रवृत्तिं दर्शयति **अनन्तेति** । ज्यायसां भ्रातृणामनुसरणमावश्यकमिति मत्वा तयोर्यवीयसोर्भ्रात्रोरपि प्रवृत्तिमाह **नकुल इति** ॥ १६ ॥

आ० टी० । अन्येषामपि तत्पक्षीयाणां राज्ञामैकमत्यं विज्ञापयन् धृतराष्ट्रस्य दुराशां सञ्जयो व्युदस्यति **काश्यश्चेत्यादिना** ॥ १७ ॥

आ० टी० । **द्रुपद इति** । परमेष्वासादिविशेषलक्षणचतुष्टयं प्रत्येकं **संबध्यते** ॥ १८ ॥

प० टी० । तत इत्यादितः श्लोकषट्कं सुगमम् ॥१३॥१४॥१५॥१६॥१७॥१८॥

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ॥
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥

आ० टी० । तैस्तैराजभिः शङ्खानापूरयद्भिरापादितो महान् घोषस्तुमुलोऽतिभैरवो नभश्चान्तरिक्षं पृथिवीं च भुवनं लोकत्रयं सर्वमेव विशेषणानुक्रमेण नादयन् नादयुक्तं कुर्वन् धार्तराष्ट्राणां दुर्योधना-

दीनां हृदयान्यन्तःकरणानि व्यदारयत् विदारितवान् । युज्यते हि तत्प्रेरितशङ्खघोषश्रवणात् त्रैलोक्याक्रोशे तमुपशृण्वतां तेषां हृदयेषु दोधूयमानत्वं तदाह **सघोष** इति ॥ १९ ॥

**प० टी०** । **सघोषइति** । स पाण्डवसैन्यसंभूतो घोषो धार्तराष्ट्राणां त्वदीयानां हृदयानि व्यदारयत् व्याकुलीकृतवान् । किंभूतस्तुमुलो भयानकः । किं कुर्वन् नभश्च पृथिवीं च व्यनुनादयन् प्रतिशब्देनापूरयन् ॥ १९ ॥

**अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ॥**
**प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥**
**हृषीकेशं तदा वाक्यमिदमाह महीपते ॥**
**सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥**
**यावदेतान् निरीक्षेऽहं योद्धुकामानवस्थितान् ॥**
**कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥ २२ ॥**

**आ० टी०** दुर्योधनादीनां धार्तराष्ट्राणामेवं भयप्राप्तिं प्रदर्श्य पार्थादीनां पाण्डवानां तद्वैपरीत्यमिदानीमुदाहरति **अथेत्यादिना** । भीतिप्रत्युपस्थितेरनन्तरं पलायने प्राप्तेऽपि धैर्यमुत्पाद्य व्यवस्थितान् प्रचलितानेव परान् प्रत्यक्षेणोपलभ्य हनुमन्तं वानरवरं ध्वजलक्षणत्वेनादायावस्थितोऽर्जुनो भगवन्तमाहेति संबन्धः । किमाहेत्यपेक्षायामिदं वक्ष्यमाणं हेतुमद्वचनमित्याह **वाक्यमिति** । कस्यामवस्थायामिदमुक्तवानिति तत्राह **प्रवृत्तइति** । शस्त्राणामिषुप्रासप्रभृतीनां संपातः समुदायस्तस्मिन् प्रवृत्ते प्रयोगाभिमुखे सतीति यावत् । किं कृत्वा भगवन्तं प्रत्युक्तवानिति तदाह **धनुरिति** । महीपतिशब्देन राजा प्रज्ञाचक्षुः सञ्जयेन संबोध्यते ॥ २० ॥

**आ० टी०** । तदेव गाण्डीवधन्विनो वाक्यमनुक्रामति **सेनयोरिति** । उभयोरपि सेनयोः संनिहितयोर्मध्ये मदीयं रथं स्थापयेत्यर्जुनेन सारथ्ये सर्वेश्वरो नियुज्यते किं हि भक्तानामशक्यं यद्भगवानपि तन्नियोगमनुतिष्ठति । युक्तं हि भगवतो भक्तपारवश्यम् । अच्युतेतिसंबोधनतया भगवतः स्वरूपं न कदाचिदपि प्रच्युतिं प्राप्नोतीत्युच्यते ॥ २१ ॥

**आ० टी०** । मध्ये रथं स्थापयेत्युक्तं तदेव रथस्थापनस्थानं निर्धारयति **यावदिति** । एतान् प्रतिपक्षत्वेन प्रतिष्ठितान् भीष्मद्रोणादीनस्माभिः सार्धं योद्धुमपेक्षावतो यावद् गत्वा निरीक्षितुमहं क्षमः स्यां तावति प्रदेशे रथस्य स्थापनं कर्तव्यमित्यर्थः । किंच प्रवृत्ते युद्धप्रारम्भे बहवो राजानोऽमुष्यां युद्धभुमावुपलभ्यन्ते तेषां मध्ये कैः सह मया योद्धव्यं न हि क्वचिदपि मम गतिप्रतिहतिरस्तीत्याह **कैर्मयेति** ॥ २२

**प० टी०** । ततः किंवृत्तमित्याह **अथेति** । कपिध्वजोऽर्जुनश्चतुर्भिः श्लोकैः कृष्णं विज्ञापयति ॥ २० ॥ २१ ॥ २२ ॥

**योत्स्यमानानवेक्षेऽहं य एते ऽत्र समागताः ॥**
**धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥**

**आ० टी०** । प्रतियोगिनामभावे कथं तव युद्धौत्सुक्यं फलवद्भवेदिति तत्राह **योत्स्यमानानिति** । ये केचिदेते राजानो नानादेशेभ्योऽत्र कुरुक्षेत्रे समवेतास्तानहं योत्स्यमानान् परिगृ-

हीतप्रहरणोपायानतितरां संग्राममुत्सुकाननुलभे तेन प्रतियोगिनां बाहुल्यमित्यर्थः । तेषामस्माभिः सह पूर्ववैराभावे कथं प्रतियोगित्वं प्रकल्प्यते तत्राह धार्तराष्ट्रस्येति । धृतराष्ट्रपुत्रस्य दुर्योधनस्य दुर्बुद्धेः स्वरक्षणोपायमप्रतिपाद्यमानस्य युद्धाय संरम्भं कुर्वतो युद्धे युद्धभूमौ स्थित्वा प्रियं कर्तुमिच्छवो राजानः समागता दृश्यन्ते तेन तेषामौपाधिकमस्मत्प्रतियोगित्वमुपपन्नमित्यर्थः ॥ २३ ॥

प० टी० । धार्तराष्ट्रस्य दुर्बुद्धेः कूटकारिणो युद्धे प्रियं कर्तुमिच्छन्तो य एतेऽत्र समागताः सन्ति तान्यावन्निरीक्षे तावदुभयोः सेनयोर्मध्ये रथं स्थापयेति ॥ २३ ॥

**सञ्जय उवाच । एवमुक्तो हृषीकेशो गुडाकेशेन भारत ॥**
**सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥**
**भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ॥**
**उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥ २५ ॥**

आ० टी० । एवमर्जुनेन प्रेरितो भगवानहिंसारूपं धर्ममाश्रित्य प्रायशो युद्धात्तं निवर्त्तयिष्यतीति धृतराष्ट्रस्य मनीषां दुदूषयिषुः सञ्जयो राजानं प्रत्युक्तवानित्याह **सञ्जय इति** । भगवता हि भूभारापहारार्थं प्रवृत्तस्यार्जुनाभिप्रायप्रतिपत्तिद्वारेण स्वाभिमर्मन्धि प्रतिलभमानस्य परोक्तिमनुसृत्य स्वाभिप्रायानुकूलमनुष्ठानमादर्शयति **एवमिति** ॥ २४ ॥

आ० टी० । भीष्मद्रोणादीनामन्येषां च राज्ञामन्तिके रथं स्थापयित्वा भगवान् किं कृतवानिति तदाह **उवाचेति** । एतानभ्यासे वर्तमानान् कुरून् कुरुवंशप्रसूतान् भवद्भिः सार्धं युद्धार्थं संगतान् पश्य दृष्ट्वा च यैः सहात्र युयुत्सा तवोपावर्तते तैः साकं युद्धं कुरु नो खल्वेतेषां शस्त्रास्त्रशिक्षावतां महीक्षितामुपेक्षोपपद्यते, सारथ्ये तु न मनः खेदनीयमित्यर्थः ॥ २५ ॥

प० टी० । अथ श्रीकृष्णोऽपि सेनयोर्मध्ये भीष्मद्रोणप्रमुखानां सर्वेषां महीक्षितां राज्ञां च संमुखं रथं नीत्वा उवाच । किमुवाचेत्याह **उवाचेति** । भो पार्थ एतान् समवेतान् कुरून् पश्येति ॥२४॥२५॥

**तत्रापश्यत् स्थितान् पार्थः पितॄनथ पितामहान् ॥**
**आचार्यान्मातुलान् भ्रातॄन् पुत्रान् पौत्रान् सखींस्तथा ॥**
**श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ॥ २६ ॥**
**तान् समीक्ष्य स कौन्तेयः सर्वान् बन्धूनवस्थितान् ॥**
**कृपया परयाविष्टो विषीदन्निदमब्रवीत् ॥ २७ ॥**

आ० टी० । एवं स्थिते महानधर्मो हिंसेति विपरीतबुद्ध्या युद्धादुपरिरंसा पार्थस्य संप्रवृत्तेति कथयति **तत्रेत्यादिना** । सप्तम्या भगवदभ्यनुज्ञाने समरसमारम्भाय संप्रवृत्ते सतीत्येतदुच्यते सेनयोरुभयोरपि स्थितान् पार्थोऽपश्यदिति संबन्धः । अथशब्दस्तथाशब्दपर्यायः श्वशुरा भार्याणां जनयितारः सुहृदो मित्राणि कृतवर्मप्रभृतयः ॥ २६ ॥

आ० टी० । सेनाद्वये व्यवस्थितान् यथोक्तान् पितृपितामहादीनालोक्य परमकृपापरवशः सन्नर्जुनो भगवन्तमुक्तवानित्याह **तानिति** । विषीदन् यथोक्तानां पित्रादीनां हिंसासंरम्भनिबन्धनं विषादमुपतापं कुर्वन्नित्यर्थः ॥ २७ ॥

प० टी० । ततः किं वृत्तमित्याह **तत्रापश्यदिति** । पितॄन्पितृव्यान् पितामहान् वृद्धानाचार्या-

स्तथा मातृवत्पूज्यान्मातुलानिति पूज्यत्वकोटिः।अथ प्रेमास्पदमाह । भ्रातॄनिति । भ्रातॄन् दुर्योधनादीन् एकोत्तरशतमितान् । अथ कृपापात्राण्याह पुत्रान् पौत्रानिति । दुर्योधनादीनां पुत्रान् पौत्रांश्चेत्यर्थः । अथापयशोहेतूनाह सखीनित्यादि ॥ २६ ॥ २७ ॥

## अर्जुन उवाच ।

***दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समवस्थितम् ॥**
**सीदन्ति मम गात्राणि मुखं च परिशुष्यति ॥ २८ ॥**

**आ० टी०** । तदेवेदंशब्दवाच्यं वचनमुदाहरति **दृष्ट्वेति** । आत्मीयं बन्धुवर्गं युद्धेच्छया युद्धभूमावुपस्थितमुपलभ्य शोकप्रवृत्तिं दर्शयति सीदन्तीति । देवांशस्यैवार्जुनस्यात्मविदः स्वपरदेहेष्वात्मानात्मीयाभिमानवतस्तत्प्रियस्य युद्धारम्भे तन्मृत्युप्रसंगदर्शिनः शोको महानासीदित्यर्थः ॥ २८ ॥

**प० टी०** । अथार्जुनः स्वनिर्वेदं कथयति **दृष्ट्वेममित्यादि** । गात्राण्यङ्गानि करचरणादीनि सीदन्ति शिथिलानि भवन्ति । मुखं च शुष्यति शुष्कं भवति ॥ २८ ॥

**वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥**
**गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते ॥ २९ ॥**

**आ० टी०** । अङ्गेषु व्यथा मुखे परिशोषश्चेत्युभयं शोकलिङ्गमुक्तं संप्रति वेपथुप्रभृतीनि भीतिलिङ्गान्युपन्यस्यति **वेपथुश्चेति** । रोमहर्षो रोम्णां गात्रेषु पुलकितत्वम् ॥ २९ ॥

**प० टी०** । अथ करुणारसाविर्भावसात्विकानाह । सर्वशरीरे वेपथुः कम्पो भवति रोमहर्षो रोमाञ्चः । अथाङ्गवैकल्यं दर्शयति **गाण्डीवं** धनुः हस्तात्स्रंसते निपतति । त्वक्परिदह्यते संतप्यते ॥ २९ ॥

**न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥**
**निमित्तानि च पश्यामि विपरीतानि केशव ॥ ३० ॥**

**आ० टी०** । किं चाधैर्यमपि संवृत्तमित्याह **नचेति** । मोहोऽपि महान् भवतीत्याह भ्रमतीवेति । विपरीतनिमित्तप्रतीतिरपि मोहो भवतीत्याह निमित्तानीति । तानि विपरीतानि निमित्तानि यानि वामनेत्रस्फुरणादीनि ॥ ३० ॥

**प० टी०** । इतः परं कथं योद्धव्यमित्याह **नचेति** । न केवलमवस्थातुं न शक्नोमि किं पुनर्योद्धुम् । मनसि धैर्यमवलम्ब्य योद्धव्यमिति चेत्तदपि नेत्याह भ्रमतीति । मनः कांदिशीकतया प्रकृतिस्थं न भवति । किंच भो केशव मानसानि निमित्तानि भाव्यर्थसूचकानीहलोकसाधनानि विपरीतान्यनिष्टहेतून् पश्यामि ॥ ३० ॥

---

* दृष्ट्वेमान् स्वजनान् कृष्ण युयुत्सून् समुपस्थितान्—इति पाठान्तरम् ।

न च श्रेयोनु पश्यामि हत्वा स्वजनमाहवे ॥
न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च*॥३१॥

आ० टी० । युद्धे स्वजनहिंसया फलानुपलम्भादपि तस्माद्‌परिरंसा जायत इत्याह न चेति । प्राप्तानां युयुत्सूनां हिंसया विजयो राज्यं सुखानि च लब्धुं शक्यानीति कुतो युद्धादुपरतिरित्याशङ्क्याह न काङ्क्षइति ॥ ३१ ॥

प० टी० । किंच श्रेयः परलोकसाधनं न पश्यामि ॥ ३१ ॥

किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥
येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ॥३२॥

आ० टी० । किमिति राज्यादिकं सर्वाकाङ्क्षितत्वान्न काङ्क्ष्यसे तेन हि पुत्रभ्रात्रादीनां स्वास्थ्यमाधातुं शक्यमित्याशङ्क्याह किमिति । राज्यादीनामाक्षेपे हेतुमाह येषामिति ॥ ३२ ॥

प० टी० । किंच यदर्थमेतावान् युद्धप्रसंगस्तदपि न रोचत इत्याह किंन इति । सुगमम् । अत्र युक्तिमाह येषामिति । येषामर्थे यन्निमित्तं यत्पोषणाय राज्यं काङ्क्षितमभीप्सितं, च परं भोगाः सुखानि काङ्क्षितानि ॥ ३२ ॥

त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥
आचार्याः पितरः पुत्रास्तथैव च पितामहाः ॥ ३३ ॥

आ० टी० । तानेव विशिनष्टि आचार्या इति ॥ ३३ ॥

प० टी० । त इमेऽत्र युद्धे धनानि विषयभोगोपकरणानि स्त्रीपुत्रादीनि प्राणांश्च त्यक्त्वावस्थिताः सन्ति तेषु हतेषु राज्यं केन भोक्तव्यं केवलं स्वपिण्डपोषणैकफलमित्यर्थः ॥ ३३ ॥

मातुलाः श्वशुराः पौत्राः श्यालाः संबन्धिनस्तथा ॥
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ॥ ३४ ॥

आ० टी० । मातुला इति । श्याला भार्याणां भ्रातरो धृष्टद्युम्नप्रभृतयः । वध्येष्वपि स्वराज्यपरिपन्थिष्वाततायिषु कृपाबुद्ध्या स्वधर्माद्युद्धात् पूर्वोक्तमोहादिवशात् प्रच्युतिं प्रदर्शयति एतानिति। जिघांसन्तं जिघांसीयादिति न्यायादेतेषां हिंसा न दोषायेत्याशङ्क्याह घ्नतोऽपीति॥३४॥

प० टी० । ननु गोत्रवात्सल्येन यद्यपि युद्धादुपरतस्तथापि तेऽस्मान् हनिष्यन्त्येवेत्याशङ्क्याह• एतानिति ॥ ३४ ॥

अपि त्रैलोक्यराज्यस्य हेतोः किंनु महीकृते ॥
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ॥ ३५ ॥

आ० टी० । पृथिवीप्राप्त्यर्थं हि हननमेतेषामिष्यते न च तत्प्राप्तिः समीहितेति कैमुतिकन्यायेन दर्शयति अपीति । न हि महदपि त्रैलोक्यलक्षणं राज्यं लब्धुं स्वजनहिंसायै मनो मदीयं स्पृहयति पृथिवीप्राप्त्यर्थं पुनर्बन्धुवधं न श्रद्दधामीति किं वक्तव्यमित्यर्थः । दुर्योधनादीनां शत्रूणां निग्रहे प्रीतिप्राप्तिसंभवाद्युद्धं कर्तव्यमित्याशङ्क्याह निहत्येति ॥ ३५ ॥

* न राज्यं न सुखानि च—इति पाठः क्वचित् ।

प० टी० । अपीति । त्रैलोक्यराज्यस्यापि हेतोरेतान् हन्तुं नेच्छामि किं पुनर्महीकृते । किंभूतानेतान् घ्नतोपि मारयतोऽपि । स्वात्मानं हन्तुं प्रवृत्ता अपि ते न हन्तव्या इत्यर्थः । यथा दैववशात्प्राणदातायोपस्थितस्य तिर्यग्भावं प्राप्तस्य गर्भकस्य हनने माता न यतते, तद्वदस्मद्दैवेन-नोदितास्ते यत्किंचित्कुर्वन्तु, तथापि वयं तान् हन्तुं नार्हाः । तदुक्तम्—'उत्क्षेपणं गर्भगतस्य पादयोः किं कल्पते मातुरधोक्षजागमे' इति ॥ ३५ ॥

**पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ॥**

**तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् सबान्धवान् ॥**

**स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३६ ॥**

आ० टी० । यदि पुनरमी दुर्योधनादयो न निगृह्येरन्, भवन्तस्तर्हि तैर्निगृहीता दुःखिताः स्युरित्याशङ्क्याह पापमेवेति । यदीमे दुर्योधनादयो निर्दोषानेवास्मान् युद्धभूमौ हन्युः, तदैतान् अग्निदा-गरदश्चेत्यादिलक्षणोपेतानाततायिनो निर्दोषस्वजनहिंसाप्रयुक्तं पापं पूर्वमेव पापिनः समाश्रयेदित्यर्थः । अथवा यद्यप्येते भवन्त्वाततायिनस्तथाप्येतानतिशोच्यान् दुर्योधनादीन् हिंसित्वा तत्कृतं पापमस्मानेवाश्रयेदतो नास्माभिरेते हन्तव्या इत्यर्थः । अथ वा गुरुभ्रातृसुहृत्प्रभृतीनेतान् हत्वा वयमाततायिनः स्याम ततश्चैतान् हत्वा तत्कृतं पापमाततायिनोऽस्मानेव समाश्रयेदिति युद्धादुपरमणमस्माकं श्रेयस्करमित्यर्थः । फलाभावादनर्थसंभवाच्च परहिंसा न कर्तव्येत्युपसंहरति तस्मादिति । किंच राज्यसुखमुद्दिश्य युद्धमुपक्रम्य तेन च स्वजनपरिक्षये न सुखमुपपद्यते तेन न कर्तव्यं युद्धमित्याह स्वजनं हीति ॥ ३६ ॥

प० टी० । अस्मासु तत्कृपया त्यक्तयुद्धेषु सत्सु ते कथं हनिष्यन्तीत्याह आततायिन इति । अपराधराहित्येऽपि परहन्तॄन् । अत्र स्मृतिः—'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः, क्षेत्र-दारहरश्चैव षडेते ह्याततायिनः' इति । अथ 'आततायिनमायान्तं हन्यादेवाविचारयन्' इत्याद्यपि स्मृत्युक्तमस्ति, इति चेन्न । इदं चौरादिषु दण्ड्येषु राजनीतौ प्रोक्तं न पुत्रपौत्रादिषु ॥ ३६ ॥

**यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ॥**

**कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३७ ॥**

आ० टी० । कथं तर्हि परेषां कुलक्षये स्वजनहिंसायां च प्रवृत्तिस्तत्राह यद्यपीति । लोभोपहतबुद्धित्वात्तेषां कुलक्षयादिप्रयुक्तदोषप्रतीत्यभावात् प्रवृत्तिविस्रम्भः संभवतीत्यर्थः ॥ ३७ ॥

प० टी० । अथ तेऽपि कथं पुत्रपौत्रोचितं व्यवहारं न रक्षन्तीत्याह लोभोपहतचेतस इति । राज्यभोगेच्छयोपहतं त्यक्तस्मृति चेतो येषां ते तथा 'पुत्रादपि धनभाजां भीतिः' इत्युक्तत्वात् ॥ ३७ ॥

**कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ॥**

**कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३८ ॥**

आ० टी० । परेषामिवास्माकमपि प्रवृत्तिविस्रम्भः संभवेदिति चेन्नेत्याह कथमिति । कुलक्षयेति । कुलक्षये मित्रद्रोहे च दोषं प्रपश्यद्भिरस्माभिस्तद्दोषपशब्दितं पापं कथं न ज्ञातव्यं तदज्ञाने तत्परिहारासंभवादतोऽस्मात्पापान्निवृत्त्यर्थं तज्ज्ञानमपेक्षितमिति पापपरिहारार्थिनामस्माकं न युक्ता युद्धे प्रवृत्तिरित्यर्थः ॥ ३८ ॥

प० टी० । अस्माभिः स्मरणवद्भिरस्मात्पापान्निवर्तितुं कथं न ज्ञेयम् । किं तत्पापमित्याह कुलेति । किंभूतैरस्माभिः कुलक्षयकृतं दोषं प्रपश्यद्भिः । भो जनार्दन संजिहीर्षो वदेति शेषः ॥ ३८ ॥

प० टी० । अथ देहात्मनोः साहचर्यदर्शनाद्देहेन सहजन्ममरणमङ्गीकृत्यापि शोको न कार्य इत्याह **अथचैनमिति** । अथ यद्यपि नित्यं सर्वदैनमात्मानं तत्तद्देहेन सह जातं मृतं वा मन्यसे यतः पुण्यपापयोस्तत्फलभूतयोर्जन्ममरणयोरात्मगामित्वात्तथापि न त्वं शोचितुमर्हसि ॥ २६ ॥

**जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ॥**
**तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥**

तथा च सति जातस्येति । जातस्य हि लब्धजन्मनो ध्रुवोऽव्यभिचारी मृत्युर्मरणं ध्रुवं जन्म मृतस्य च तस्मादपरिहार्योऽयं जन्ममरणलक्षणोऽर्थस्तस्मिन्नपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥

आ० टी० । तयोरवश्यंभावित्वे सत्यनुशोकस्याकर्तव्यत्वे हेत्वन्तरमाह **तथाचेति** ॥२७॥

प० टी० । कुत इत्याह **जातस्येति**। हि यस्माज्जातस्य स्वारम्भककर्मक्षये मृत्युर्ध्रुवो निश्चितो मृतस्य च तद्देहकृतेन कर्मणा जन्मापि ध्रुवमेव, तस्मादेवमपरिहार्येऽर्थेऽवश्यंभाविनि जन्ममरणलक्षणेऽर्थे त्वं शोचितुं नार्हसि ॥ २७ ॥

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ॥**
**अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥**

कार्यकारणसंघातात्मकान्यपि भूतान्युद्दिश्य शोको न युक्तः कर्तुं यतः अव्यक्तादीनीति । अव्यक्तादीन्यव्यक्तमदर्शनमनुपलब्धिरादिर्येषां पुत्रमित्रादिकार्यकारणसंघातात्मकानां तान्यव्यक्तादीनि भूतानि प्रागुत्पत्तेः, उत्पन्नानि च प्राङ् मरणाद् व्यक्तमध्यान्यव्यक्तनिधनान्येव पुनरव्यक्तमदर्शनं निधनं मरणं येषां तान्यव्यक्तनिधनानि मरणादूर्द्ध्वमव्यक्ततामेव प्रतिपद्यन्त इत्यर्थः । तथा चोक्तम्—'अदर्शनादापतितः पुनश्चादर्शनं गतः । नासौ तव न तस्य त्वं वृथा का परिदेवना' इति। तत्र का परिदेवना को वा प्रलापोऽदृष्टदृष्टप्रनष्टभ्रान्तिभूतेष्वित्यर्थः ॥ २८ ॥

आ० टी० । आत्मानमुद्दिश्यानुशोकस्य कर्तुमयोग्यत्वेऽपि भूतसंघातात्मकानि भूतान्युद्दिश्य तस्य कर्तव्यत्वमाशङ्क्याह **कार्येति** । समनन्तरश्लोकस्तत्र हेतुरित्याह **यत इति** । चाक्षुषदर्शनमात्रवृत्तिं व्यावर्त्तयति **अनुपलब्धिरिति** । न हि यथोक्तसंघातरूपाणि भूतानि पूर्वमुत्पत्तेरुपलभ्यन्ते तेन तानि तथा व्यपदेशभाञ्जि भवन्तीत्यर्थः । किं तन्मध्यं यदेषां व्यक्तमिष्यते तदाह **उत्पन्नानीति** । उत्पत्तेरूर्ध्वं मरणाच्च पूर्वं व्यावहारिकं सत्त्वं मध्यमेषां व्यक्तमिति तथोच्यते जन्मानुसारित्वं विलयस्य युक्तमिति मत्वा तात्पर्यार्थमाह **मरणादिति** । उक्तेऽर्थे पौराणिकसंमतिमाह **तथाचेति** । तत्रेत्यस्यार्थमाह **अदृष्टेति** । पूर्वमदृष्टानि सन्ति पुनर्दृष्टानि तान्येव पुनर्नष्टानि तदेवं भ्रान्तिविषयतया घटिकायन्त्रवच्चक्रीभूतेषु भूतेषु शोकनिमित्तस्य प्रलापस्य नावकाशोऽस्तीत्यर्थः ॥ २८ ॥

प० टी० । अथ देहस्य गतिरज्ञानमूलिकेति पर्यालोच्य तदुपाधिकः शोकोऽप्यज्ञानकृत इत्याह **अव्यक्तादीनीति** । अव्यक्तं प्रधानं तदेवादिरुत्पत्तेः पूर्वरूपं येषां तान्यव्यक्तादीनि भूतानि शरीराणि कारणरूपस्थितानामेवोत्पत्तेः । तथा व्यक्तमभिव्यक्तं मध्यं जन्ममरणान्तरालस्थितिरूपं येषाम् अव्यक्ते निधनं लयो येषामेवंविधानामज्ञानरूपादिमध्यावसानानां नाशे का परिदेवना किं दुःखम् स्वप्ने विनष्टभ्रातृवदित्यर्थः । एवं स्वाप्नशोकापगमे जाग्रत्येव प्रतीकारः । तद्वत्स्वाज्ञानोत्पन्ने शोके तावदात्मज्ञानमेव प्रतीकारः॥ २८ ॥

**आश्चर्यवत् पश्यति कश्चिदेन-**
**माश्चर्यवद्वदति तथैव चान्यः ॥**
**आश्चर्यवच्चैनमन्यः शृणोति**
**श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ २९ ॥**

दुर्विज्ञेयोऽयं प्रकृत आत्मा किं त्वामेवैकमुपालभे साधारणे भ्रान्तिनिमित्ते, कथं दुर्विज्ञेयोऽयमात्मेत्यत आह आश्चर्यवदिति । आश्चर्यवदाश्चर्यमदृष्टपूर्वमद्भुतमकस्माद् दृश्यमानं तेन तुल्यमाश्चर्यवदाश्चर्यमिवैनमात्मानं पश्यति कश्चिदाश्चर्यवदेनं वदति तथैव चान्य आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वा दृष्ट्वोक्त्वाप्यात्मानं १ वेद नचैव कश्चिदथ वा योऽयमात्मानं पश्यति स आश्चर्यतुल्यो यो वदति यश्च शृणोति सोऽनेकसहस्रेषु कश्चिदेव भवत्यतो दुर्बोध आत्मेत्यभिप्रायः ॥ २९ ॥

आ० टी० । अर्जुनं प्रत्युपालम्भं दर्शयित्वा प्रकृतस्यात्मनो दुर्विज्ञेयत्वात्तं प्रत्युपालम्भो न संभवतीति मन्वानः सन्नाह **दुर्विज्ञेय इति** । तथा चात्माज्ञाननिमित्तविप्रलम्भस्य साधारणत्वाद साधारणोपालम्भस्य निरवकाशतेत्याह **किं त्वामेवेति** । अहंप्रत्ययवेद्यत्वादात्मनो दुर्विज्ञेयत्वमसिद्धमिति शङ्कते **कथमिति** । विशिष्टस्यात्मनोऽहंप्रत्ययस्य दृष्टत्वेऽपि केवलस्य तदभावादस्ति दुर्विज्ञेयतेति श्लोकमवतारयति **आहेति** । आश्चर्यवदित्याद्येन पादेनात्मविषयदर्शनस्य दुर्लभत्वं दर्शयता द्रष्टुर्दौर्लभ्यमुच्यते, द्वितीयेन च तद्विषयवदनस्य दुर्लभत्वोक्तिरतदुपदेष्टुस्तथात्वं कथ्यते, तृतीयेन तदीयश्रवणस्य दुर्लभत्वद्वारा श्रोतुर्विरलता विवक्षिता, श्रवणदर्शनोक्तीनां भावेऽपि तद्विषयसाक्षात्कारस्यात्यन्तायासलभ्यत्वं चतुर्थेनाभिप्रेतमिति विभागः । आत्मगोचरदर्शनादिदुर्लभत्वद्वारा दुर्बोधत्वमात्मनः साधयति **आश्चर्यवदिति** । संप्रत्यात्मनि द्रष्टुर्वक्तुः श्रोतुः साक्षात्कर्तुश्च दुर्लभत्वाभिधानेन तदीयं दुर्बोधत्वं कथयति **अथवेति** । व्याख्यानद्वयेऽपि फलितमाह **अतइति** ॥ २९ ॥

प० टी० । तच्चातिदुर्गममित्याह **आश्चर्यवदिति** । अनादिजन्मकोटिषु दृश्यजातदर्शनसंनिविष्टदृष्टिः पुमान् कश्चिच्छास्त्राचार्योपदेशान्निराकाराद्वैतचिदेकरसमात्मानमाश्चर्यवत्पश्यति यतः प्रागननुभूतवस्तुदर्शनं श्रवणं वाश्चर्यजनकं भवति । दृष्टान्ताभावान्मुह्यमान इत्यर्थः । तथान्यो यः कश्चिदनभिज्ञातात्मतत्त्वः शास्त्रश्रुतेन शब्दमात्रेण वदति सोऽप्याश्चर्यवन्मत्वा दृश्यद्रष्टृभिनिवेशेन

---

१ प्येनं वेद--इति पा० लि० १।२ पु० ।

यत्किंचिद्वदसि तस्मादस्मिन्निरूपणे सावधानतया भवितव्यमित्यर्थः । अथैतदर्थेऽथर्वशाखीया श्रुतिरपि- " श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः ॥ आचार्यो वक्तव्यकुशलोऽस्य लब्धा वाश्चर्यो ज्ञाता कुशलानुशिष्टः " इति । भाष्यम्—यः परमात्मा सदाचार्यादपि श्रवणाय श्रवणार्थं बहुभिर्न लभ्यः बहूनां सुलभो न भवति किंतु दैववशात् कस्यापीत्यर्थः । तथा यं परमात्मानं शृण्वन्तोऽपि बहवो न विद्युर्नाविन्दन् किंतु कश्चिदेव । तथास्यात्मनो लब्धावकुशलाचार्ये आश्चर्यो भवति मुह्यति । तथाकुशलानुशिष्ट उपदिष्टो ज्ञाता शिष्योऽप्याश्चर्यो भवति ॥ २९ ॥

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ॥
तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥

अथेदानीं प्रकरणार्थमुपसंहरन् ब्रूते देहीति * । देही शरीरी नित्यं सर्वावस्थास्ववध्यो निरवयवत्वान्नित्यत्वाच्च तत्रावध्योऽयं देही शरीरे सर्वस्य सर्वगतत्वात् स्थावरादिषु स्थितोऽपि सर्वस्य प्राणिजातस्य देहे वध्यमानेऽप्ययं देही न वध्यो यस्मात्तस्माद्भीष्मादीनि सर्वाणि भूतान्युद्दिश्य न त्वं शोचितुमर्हसि ॥ ३० ॥

आ० टी० । श्लोकान्तरमुत्थापयति अथेति । आत्मनो दुर्ज्ञानत्वप्रदर्शनानन्तरमिति यावत् । वस्तुवृत्तापेक्षया शोकमोहयोरकर्तव्यत्वं प्रकरणार्थः । देहे वध्यमानेऽपि देहिनो वध्यत्वाभावे फलितमाह यस्मादिति । हेतुभागं विभजते सर्वस्येति । फलितप्रदर्शनपरं श्लोकार्धं व्याचष्टे तस्माद्भिष्मादीनीति ॥ ३० ॥

प० टी० । अथ प्रकृतमनुसरति देहीनित्यमिति । देही शरीरचालक आत्मा नित्य निरन्तरमवध्यो वधार्हो न भवतीति नित्यत्वं प्रोक्तम् । एक एव सर्वस्य भूतजातस्य देहे वर्तत इति । व्यापकत्वं प्रोक्तम् । तस्मात्कारणात्सर्वाणि भूतानि भ्रातृसुहृदादीनि शोचितुं नार्हसि । तन्निमित्तशोको व्यर्थः । अथ देहनिमित्तं चेत्तर्हि तस्मादधिकरणभूतात्सत्यादात्मनः सकाशात्सर्वाणि भूतान्याविर्भवन्तीति देहानामध्यासरूपत्वं निरूपितम् । एतदेव बृहदारण्यकेऽप्याम्नातम्—" स यथोर्णनाभिस्तन्तनोच्चरेद्यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एतदात्मनो व्युच्चरन्ति । तस्योपनिषत्सत्यस्य सत्यमिति ।प्राणा वै सत्य तेषामेष सत्यम् " इति। भाष्यम्—पूर्वम् " अथ यदा सुषुप्तो भवति न कस्य चन वेद " इत्यादिश्रुत्या सुषुप्तौ मनसि परमात्मनि लीने सति तत्कल्पितः स्थूलसूक्ष्मः प्रपञ्चोऽपि लीनो भवेदिति प्रतिपादितम् । अथ पुनर्जागरावस्थायां मनसि बहिर्मुखे जाते सति प्राक्संस्कारैर्यथा पूर्वं मनःप्रपञ्च आविर्भवति " धाता यथापूर्वमकल्पयत् " इति श्रुतेः । एवं सुषुप्तौ प्रपञ्चलये जागरे पुनराविर्भावे च दृष्टान्तमाह । स यथेति ऊर्णा सूत्रविशेषो नाभौ यस्याः सा ऊर्णनाभिः कीटविशेषः स यथा पूर्वं स्वोत्पादितेन पुनर्ग्रस्यमानेन तन्तुना उच्चरेदूर्ध्वं चरेत् । यावत्सर्वतन्तुग्रासो भवति । तद्वन्मनः सर्वसंस्काररूपं तन्तुं ग्रसित्वा स्वयमपि लीनं भवति । अथ पुनः प्रपञ्चोदये दृष्टान्तमाह यथेति । यथा हन्यमानादुल्मुकाग्नेः सकाशाद्युगपदेव क्षुद्रा लघीयांसः सहस्रशो विस्फुलिङ्गा अग्निकणा व्युच्चरन्त्युच्छान्त्येवमेवास्मात्प्रशुद्धादात्मनो मनसः सकाशात्सर्वे सूक्ष्मप्रपञ्चरूपाः प्राणास्तथा स्थूलप्रपञ्चरूपाः सर्वे भूर्भवःस्वराद्या लोकाः सर्वे देवा इन्द्रादयः सर्वाणि भूतानि स्थावरजङ्गमा-

* प्रकरणार्थं उपसंन्हीयते देहीति–पा. लि. १ पु०।

त्मकानि सर्वे एत आत्मानो देहा व्युच्चरन्ति निर्गच्छन्ति । तस्य परमात्मन उपनिषद्गानसत्यस्य सत्यमिति वदन्ति । एतदेव प्रकटीकरोति वैइति । ज्ञानव्यवहारे प्राणमुख्यप्राणादयो हिरण्यगर्भाद्याः सत्यं तेषामप्येष आत्मा सत्यं सैव सत्यत्वमर्यादेत्यर्थः । एवमुभयथापि शोकानुदय इत्यर्थः । तदुक्तमध्यात्ममीमांसायाम्--" इन्द्रेन्द्राणीरतान्ते प्रविशति मनसा रेतसा साकमेतद्व्रध्यन्तर्विश्वजातं ससकलकरणं तेन गर्भ दधाना ॥ साऽव्यक्ते लीयमाना पुनरुदयमिता जागरादौ प्रसूते कीटे चोर्णामिवासावुत हुतवहतो निस्सरन्ति स्फुलिङ्गाः " इति ॥ ३० ॥

**स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ॥**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥ ३१ ॥**

इह परमार्थतत्त्वापेक्षायां शोको वा मोहो वा न संभवतीत्युक्तं, न केवलं परमार्थतत्त्वापेक्षायामेव किं तु स्वधर्ममिति । स्वधर्ममपि स्वो धर्मः क्षत्रियस्य धर्मो युद्धं, तमप्यवेक्ष्य त्वं न विकम्पितुं प्रचलितुमर्हसि धर्म्यात्क्षत्रियस्य स्वाभाविकाद्धर्मादात्मस्वाभाव्यादित्यभिप्रायः, तच्च युद्धं पृथिवीजयद्वारेण धर्मार्थं प्रजारक्षणार्थं चेति परं धर्म्यं धर्मादनपेतं तस्माद्धर्म्याद् युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते हि यस्मात् ॥ ३१ ॥

आ० टी० । श्लोकान्तरमवतारयन् वृत्तं कीर्तयति इहेति । पूर्वश्लोकः सप्तम्यर्थः, यत्पारमार्थिकं तत्त्वं तदपेक्षायामेव केवलं शोकमोहयोरसंभवो न भवति किं तु स्वधर्ममपि चावेक्ष्येति संबन्धः, स्वकीयं क्षात्रधर्ममनुसन्धाय ततश्चलनं परिहर्तव्यमित्यर्थः । यद्धि क्षात्रियस्य धर्मादनपेतं श्रेयःसाधनं तदेव मयानुवर्तितव्यमित्याशङ्क्याह धर्मादिति । जातिप्रयुक्तं स्वाभाविकं स्वधर्ममेव विशिनष्टि क्षत्रियस्येति । पुनर्नकारोपादानमन्वयार्थम् । प्रचलितुमयोग्यत्वे प्रतियोगिनं दर्शयति स्वाभाविकादिति । स्वाभाविकत्वमशास्त्रीयत्वमिति शङ्कां वारयितुं तात्पर्यमाह आत्मेति । आत्मनः स्वस्यार्जुनस्य स्वाभाव्यं क्षत्रियस्वभावप्रयुक्तं वर्णाश्रमोचितं कर्म तस्मादित्यर्थः । धर्मार्थं प्रजापरिपालनार्थं च प्रयतमानस्य युद्धादुपरिरंसा श्रद्धातव्येत्याशङ्क्याह तच्चेति । ततोऽपि श्रेयस्करं किंचिदनुष्ठातुं युद्धादुपरतिरुचितेत्याशङ्क्याह तस्मादिति । तस्माद् युद्धात् प्रचलनमनुचितमिति शेषः॥३१॥

प० टी० । अथास्तां तव सत्यत्वाभिमता दृश्यदृष्टिस्तथापि शोको न युज्यत इत्याह स्वधर्ममपीति । स्वधर्मं श्रुतिस्मृतिसिद्धं क्षत्रधर्ममवेक्ष्य सम्यग्विचार्य विकम्पितुं नार्हसि । अथ त्वमेव धर्मं कथयेत्याह धर्म्यादिति । क्षत्रियस्य श्रीः धर्म्यान्न्यायागताद्युद्धादन्यदहिंसाद्यनुष्ठानं श्रेयः श्रेयोजनकं न विद्यते । अथ प्रागर्जुनोक्तान्तश्रुतेस्तात्पर्यप्रतिपादिका श्रुतिः--"तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान् बलीयांसमाशंसते धर्मेण यथा राज्ञैवं यो वै स्वधर्मः सत्यं वैतत्तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तं सत्यं वदतीतीत्येतद्ध्येवैतदुभयं भवति " इति । भाष्यम्--तत्तस्मादनन्तरं श्रेयोरूपं धर्ममत्यसृजतातिसृष्टिस्थानीयमसृजत् । तदेतद्वक्ष्यमाणम् । तत्किम्, क्षत्रस्य क्षत्रियजातेः क्षत्रं क्षात्रलक्षणो धर्मस्तस्माद्धर्मात्परमुत्कृष्टं नास्ति । यतो धर्मेण कृत्वाबलीयान् दुर्बलोपि बलीयांसं समर्थमपि समाशंसते सम्यक्प्रकारेणाक्षिपति । यथा राज्ञा स्ववशेन कृत्वा दुर्बलोपि समर्थमाक्षिपति तथेत्यर्थः । एवं वै इति निश्चयेन पूर्वोक्तो यो धर्मः स सत्यं सत्यस्य प्रापकस्तत्तस्मात्कारणात्सत्यं वदन्तं पुरुषं धर्मं वदती-

स्याहुः । वा इत्यथवा धर्मं वदन्तं पुरुषं सत्यं वदतीत्याहुरेवं सत्यधर्मयोरेकार्थवाचकत्वमस्तीत्युक्तं हीति निश्चयेन एतद्धर्मसत्याभिधानमुभयं तद्भवति ब्रह्मरूपं भवति तत्त्वमसि तत्सद् ब्रह्मेति श्रुतेः॥३१॥

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ॥
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२ ॥

कुतश्च तद्युद्धं कर्तव्यमित्युच्यते यदृच्छयेति । यदृच्छया चाप्रार्थितमागतमुपपन्नं स्वर्गद्वारमपावृतमुद्घाटितं य एतदीदृशं युद्धं लभन्ते क्षत्रियाः हे पार्थ किं न सुखिनस्ते ॥ ३२ ॥

आ०टी०। युद्धस्य गुर्वाद्यनेकप्राणिहिंसात्मकत्वाद्धिंसाशास्त्रविरोधान्नास्ति कर्तव्यतेति शङ्कते कुतश्चेति। अग्नीषोमीयहिंसादिवद् युद्धमपि क्षत्रियस्य विहितत्वादनुष्ठेयं सामान्यशास्त्रतो विशेषशास्त्रस्य बलीयस्त्वादित्याह उच्यत इति । तथापि युद्धे प्रवृत्तानामैहिकामुष्मिकस्यापि सुखाभावादुपरतिरेव ततो युक्ता प्रतिभातीत्याशङ्क्याह यदृच्छयेति । चिरेण चिरतरेण कालेन च यागाद्यनुष्ठायिनः स्वर्गादिभाजो भवन्ति युद्धचमानास्तु क्षत्रिया बहिर्मुखताविहीनाः सहसैव स्वर्गादिसुखभोक्तारस्तेन तव कर्तव्यमेव युद्धमिति व्याख्यानेन स्फुटयति यदृच्छयेत्यादिना । इहामुत्र च भाविसुखवतामिव क्षत्रियाणां स्वधर्मभूतयुद्धसिद्धेस्तादर्थ्येनोत्थानं शोकमोहौ हित्वा कर्तव्यमित्यर्थः ॥ ३२ ॥

प० टी० । अथ श्रुत्यर्थमेवदृढीकुर्वन्नाह यदृच्छयेति । भो पार्थ ईदृशं जयाजयाद्यभिनिवेशरहितं युद्धं सुखिनः सुकृतिनः क्षत्रिया लभन्ते । अथास्य दुर्लभत्वमाह स्वर्गेति । पुनः कीदृशं स्वर्गद्वारम् अपावृतं निरावरणं यदृच्छयाप्रार्थनयोपपन्नं सिद्धं भवति ॥ ३२ ॥

अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ॥
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥

अथेति । एवं कर्तव्यताप्राप्तमपि अथ त्वमिमं धर्म्यं धर्मादनपेतं विहितं संग्रामं युद्धं न करिष्यसि चेत् ततस्तदकरणात् स्वधर्मं कीर्तिं च महादेवादिसमागमनिमित्तां हित्वा केवलं पापमवाप्स्यसि ॥ ३३ ॥

आ० टी० । स्वधर्मस्य युद्धस्य श्रद्धया करणे स्वर्गादिमहाफलप्राप्तिं प्रदर्श्य तदकरणे प्रत्यवायप्राप्तिं प्रदर्शयन्नुत्तरश्लोकगताथशब्दार्थं कथयति एवमिति । विहितत्वं फलवत्त्वमित्यनेन प्रकारेणेत्यर्थः, अन्वयार्थः पुनश्चेदित्यनूद्यते, महादेवादीत्यादिशब्देन महेन्द्रादयो गृह्यन्ते ॥ ३३ ॥

प० टी० । अथ विपक्षे दोषमाह अथचेदित्यादितः श्लोकचतुष्टयेन । अथेत्यनन्तरं मदुक्तमनाकर्ण्य धर्म्यं धर्मसाधकं संग्रामं चेन्नकरिष्यसि तर्हि स्वधर्मं हित्वा स्वधर्मबहिर्मुखो भूत्वा तथेह लोके श्लाघनीयां कीर्तिं च हित्वा पापं परलोकप्रतिबन्धकमवाप्स्यसि । अनेन पापमेवाश्रयेदस्मानित्युक्तस्य परिहारः सूचितः ॥ ३३ ॥

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ॥
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥

अकीर्तिमिति न केवलं स्वधर्मकीर्तिपरित्यागोऽकीर्तिं चापियुद्धे

भूतानि कथयिष्यन्ति ते तवाव्ययां दीर्घकालां । धर्मात्मा शूर इत्येवमादिभिर्गुणैः संभावितस्य चाकीर्तिर्मरणादतिरिच्यते संभावितस्य चाकीर्तेर्वरं मरणमित्यर्थः ॥ ३४ ॥

आ० टी० । युद्धाकरणे क्षत्रियस्य प्रत्यवायमामुष्मिकमापाद्य शिष्टगर्हालक्षणं दीर्घकालभाविनमैहिकमपि प्रत्यवायं प्रतिलम्भयति न केवलमिति । युद्धे स्वमरणसन्देहात्तत्परिहारार्थमकीर्तिरपि सोढव्या स्वात्मसंरक्षणस्य श्रेयस्करत्वादित्याशङ्क्याह धर्मात्मेति । मान्यानामकीर्तिर्भवति मरणादपि दुःखहेतो तात्पर्यार्थमाह संभावितस्येति ॥ ३४ ॥

प० टी० । किं च अकीर्तिमिति । भूतानि लोकास्तेऽव्ययामाकल्पस्थायिनीमकीर्तिमपयशः कथयिष्यन्ति । यतो यादृशतादृशस्याकीर्तेर्भयं नास्ति । संभावितस्य पुरुषस्याकीर्तिर्मरणादप्यतिरिच्यतेऽतिशयं प्राप्नोति । जीवतो मरणसमय एव दुःखं भवत्यकीर्तिस्तु मरणानन्तरमपि भवतीत्यर्थः ॥ ३४ ॥

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ॥
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५ ॥

किंच भयादिति । भयाद् कर्णादिभ्यो रणाद्युद्धादुपरतं निवृत्तं मंस्यन्ते चिन्तयिष्यन्ति न कृपयेति त्वां महारथा दुर्योधनप्रभृतयः । येषां च त्वं दुर्योधनादीनां बहुमतो बहुभिर्गुणैर्युक्त इत्येवं बहुमतो भूत्वा पुनस्त्वं यास्यसि लाघवं लघुभावम् ॥ ३५ ॥

आ० टी० । इतश्च त्वया युद्धं कर्तव्यमित्याह किंचेति । प्राणिषु कृपयाहं युद्धं करिष्यामीत्याशङ्क्याह भयादिति । महारथानेव विशिनष्टि येषांचेति । दुर्योधनादिभिस्तवोपहास्यतां न मनाथ संग्रामे प्रवृत्तिरवश्यंभाविनीत्यर्थः ॥ ३५ ॥

प० टी० । अथ संभावितत्वमेवाह भयादिति । ते महारथास्त्वां भयान्निमित्तभूताद्रणात्संग्रामादुपरतं परावृत्तं मंस्यन्ते मन्येरन् न त्वस्मत्कृपयेति । ते के येषां वीराणां त्वं बहु यथा भवति तथा मतः संमतो भूत्वा लाघवं लघुत्वं यास्यसि प्राप्स्यसि ॥ ३५ ॥

अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः ॥
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥

किंच अवाच्यवादानिति । अवाच्यवादान् अवक्तव्यवादांश्च बहूननेकप्रकारान् वदिष्यन्ति तवाहिताः शत्रवो निन्दन्तः कुत्सयन्तस्तव त्वदीयं सामर्थ्यं*तस्मात्ततो निन्दाप्राप्तेर्दुःखाद् दुःखतरं नु किं ततः कष्टतरदुःखं नास्तीत्यर्थः ॥ ३६ ॥

आ० टी० । इतश्च त्वं युद्धादुपरमं माकार्षीरित्याह किंचेति । ननु भीष्मद्रोणादिवधप्रयुक्तं कष्टतरं दुःखमसहमानो युद्धान्निवृत्तः स्वसामर्थ्यनिन्दादिशत्रुकृतं सोढुं शक्ष्यामीत्याशङ्क्याह तत इति ॥ ३६ ॥

* नितवाकवचादियुद्धनिमित्तमित्यधिकं मु० पुस्तके ।

प० टी० । अवाच्यवादानिति । तवाहिताः सिद्धवैरिणो दायादा अवाच्यान् वचनानर्हा-नपवादान् वदिष्यन्ति । किं भूतास्तव सामर्थ्यं निन्दन्तस्ततोऽपि दुःखतरं किं नु ॥ ३६ ॥

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ॥**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥**

हतो वेति । युद्धे पुनः क्रियमाणे कर्णादिभिर्हतो वा प्राप्स्यसि स्वर्गं हतः सन् स्वर्गं प्राप्स्यसि जित्वा कर्णादीन् शूरान् भोक्ष्यसे महीमु-भयथापि तव लाभ एवेत्यभिप्रायः । यत एवं तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयो जेष्यामि शत्रून् मरिष्यामि वेति निश्चयं कृत्वेत्यर्थः ॥ ३७ ॥

आ० टी० । तर्हि युद्धे गुर्वादिवधवशान्मध्यस्थनिन्दा ततो निवृत्तौ शत्रुनिन्देत्युभयतःपाश-रज्जुरित्याशङ्क्याह युद्धे पुनरिति । जये पराजये च लाभध्रौव्याद् युद्धार्थादुत्थानमावश्यकमि-त्याह तस्मादिति । न हि परिशुद्धकुलस्य क्षत्रियस्य युद्धायोद्युक्तस्य तस्मादुपरमः साधीयानि-त्याह कौन्तेयेति ।जये पराजये चेत्येतदुभयथेत्युच्यते जयादिनियमाभावेऽपि लाभनियमे फलितमाह यत इति । कृतनिश्चयत्वमेव विशदयति जेष्यामीति ॥ ३७ ॥

प० टी० । ननु मरणवत एव स्वर्गप्राप्तिश्रवणान्न तु जयवतो जीवत इत्याह हतइति । रणे मृतस्य स्वाराज्यं जीवतः साम्राज्यमित्यर्थः ॥ ३७ ॥

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ॥**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥**

तत्र युद्धं स्वधर्म इत्येवं युध्यमानस्योपदेशमिमं शृणु सुखदुःखे इति । सुखदुःखे समे तुल्ये कृत्वा रागद्वेषावप्यकृत्वेत्येतत् तथा लाभालाभौ ज-याजयौ च समौ कृत्वा ततो युद्धाय युज्यस्व घटस्व, नैवं युद्धं कुर्वन् पापफल-मवाप्स्यसीत्येष उपदेशः प्रासंगिकः ॥ ३८ ॥

आ० टी० । पापभीरुतया युद्धाय निश्चयं कृत्वा नोत्थातुं शक्नोमीत्याशङ्क्याह तत्रेति । युद्धस्य स्वधर्मतया कर्तव्यत्वे सतीति यावत् । सुहृज्जीवनमरणादिनिमित्तयोः सुखदुःखयोः समताकर-णं कथमिति तत्राह रागद्वेषाविति । लाभः शत्रुकोषादिप्राप्तिर्लाभस्तद्विपर्ययः, न्याय्येन युद्धे-नापरिभूतेन परस्य परिभवो जयस्तद्विपर्ययस्त्वजयस्तयोर्लाभालाभयोर्जयाजययोश्च समताकरणं समानमेव, रागद्वेषावकृत्वेत्येतद्दर्शयितुं तथेत्युक्तम्, यथोक्तोपदेशवशात् परमार्थदर्शनप्रकरणे युद्ध-कर्तव्यतोक्तेः समुच्चयपरत्वं शास्त्रस्य प्राप्तमित्याशङ्क्याह एष इति । क्षत्रियस्य तव धर्मभूतयुद्ध-कर्तव्यतानुवादप्रसंगागतत्वादस्योपदेशस्य नानेन मिषेण समुच्चयः सिद्ध्यतीत्यर्थः ॥ ३८ ॥

प० टी० । अथ धर्म्ययुद्धस्वरूपमाह सुखदुःखे इति । सुखदुःखे समे कृत्वा तथा तयोः कारणीभूतौ लाभालाभौ जयाजयौ समौ कृत्वा हर्षविषादरहितो भूत्वा युध्यस्वेत्यर्थः ।एवममुना प्रका-रेण युद्धं कृत्वा पापं न प्राप्स्यसि ॥ ३८ ॥

**एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ॥**
**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९ ॥**

शोकमोहापनयनाय लौकिको न्यायः स्वधर्ममपि चावेक्ष्येत्याद्यैः श्लोकैरुक्तो न तु तात्पर्येण, परमार्थदर्शनं त्विह प्रकृतं तच्चोक्तमुपसंह्रियते एषा तेऽभिहितेति शास्त्रविषयविभागप्रदर्शनाय। इह हि दर्शिते पुनः शास्त्रविषयविभागे उपरिष्टाज् ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनामिति निष्ठाद्वयविषयं शास्त्रं सुखं प्रवर्तिष्यते श्रोतारश्च विषयविभागेन सुखं ग्रहिष्यन्तीत्यत आह एषा ते इति। एषा ते तुभ्यमभिहितोक्ता सांख्ये परमार्थवस्तुविवेकविषये बुद्धिर्ज्ञानं साक्षाच्छोकमोहादिसंसारहेतुदोषनिवृत्तिकारणं, योगे तु तत्प्राप्त्युपाये निःसंगतयाह द्वन्द्वप्रहाणपूर्वकमीश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने समाधियोगे च इमामनन्तरमेवोच्यमानां बुद्धिं शृणु, तांच बुद्धिं स्तौति प्ररोचनार्थं बुद्ध्या यया योगविषयया युक्तो हे पार्थ कर्मबन्धं कर्मैव धर्माधर्माख्यो बन्धः कर्मबन्धस्तं प्रहास्यसीश्वरप्रसादनिमित्तज्ञानप्राप्तेरित्यभिप्रायः ॥ ३९ ॥

आ० टी०। ननु स्वधर्ममपि चावेक्ष्येत्यादिश्लोकैर्न्यायावष्टम्भेन शोकमोहापनयनस्य तात्पर्येणोक्तत्वात्तस्मिन्नुपसंहर्तव्ये किमिति परमार्थदर्शनमुपसंह्रियते तत्राह **शोकेति**। स्वधर्ममपीत्यादिभिरष्टभिः श्लोकैः शोकमोहयोः स्वजनमरणगुर्वादिवधशङ्कानिमित्तयोः सम्यग्ज्ञानप्रतिबन्धकयोरपनयार्थं वर्णाश्रमकृतं धर्ममनुतिष्ठतः स्वर्गादि सिध्यति नान्यथेत्यन्वयव्यतिरेकात्मको लोकप्रसिद्धो न्यायो यद्यपि दर्शितस्तथापि नासौ तात्पर्येणोक्त इत्यर्थः। किं तर्हि तात्पर्येणोक्तं तदाह **परमार्थेति**। "न त्वेवाहं जातु नासमित्यादि सप्तम्या परामृश्यते, उक्तम् 'न जायते म्रियते वा कदाचिन्न' इत्यादिनोपपादितमित्यर्थः। उपसंहारप्रयोजनमाह **शास्त्रेति**। तस्य वस्तुद्वारा विषयो निष्ठाद्वयं तस्य विभक्तस्य तेनैव विभागेन प्रदर्शनार्थं परमार्थदर्शनोपसंहार इत्यर्थः। ननु किमित्यत्र शास्त्रस्य विषयविभागः प्रदर्श्यते उत्तरत्रैव तद्विभागप्रवृत्तिप्रतिपत्त्योः संभवादिति तत्राह **इहहीति**। शास्त्रप्रवृत्तेः श्रोतृप्रतिपत्तेश्च सौकर्यार्थमादौ विषयविभागसूचनमित्यर्थः। उपसंहारस्य फलवत्त्वमेवमुक्त्वा तमेवोपसंहारमवतारयति **अत आहेति**। परमार्थात्मतत्त्वविषयां ज्ञाननिष्ठामुक्तामुपसंहृत्य वक्ष्यमाणां संगृह्णाति **योगेत्विति**। तामेव बुद्धिं विशिष्टफलवत्त्वेनाभिष्टौति **बुद्ध्येति**। तत्रोपसंहारभागं विभजते **एषेत्यादिना**। बुद्धिशब्दस्यान्तःकरणविषयत्वं व्यावर्तयति **ज्ञानमिति**। तस्य सहकारिनिरपेक्षस्य विशिष्टफलवत्त्वमाचष्टे **साक्षादिति**। शोकमोहौ रागद्वेषौ कर्तृत्वं भोक्तृत्वमित्यादिरनर्थः संसारस्तस्य हेतुर्दोषः स्वाज्ञानं तस्य निवृत्तौ निरपेक्षं कारणं ज्ञानमज्ञाननिवृत्तौ ज्ञानस्यान्वयव्यतिरेकसमधिगतसाधनत्वादित्यर्थः। योगे त्विमामित्यादि व्याकुर्वन् योगशब्दस्य प्रकृते चित्तवृत्तिनिरोधविषयत्वं व्यवच्छिनत्ति **तत्प्राप्तीति**। प्रकृतमुक्त्युपयुक्तं ज्ञानं तत्पदेन परामृश्यते ज्ञानोदयोपायमेव प्रकटयति **निःसंगतयेति**। फलाभिसन्धिवैधुर्यं निःसंगत्वम्। बुद्धिस्तुतिप्रयोजनमाह **प्ररोचनार्थमिति**। अभिष्टुता हि बुद्धिः श्रद्धातव्या सत्यनुष्ठातारमधिकरोति तेन स्तुतिरर्थवतीत्यर्थः। कर्मानुष्ठानविषयबुद्ध्या कर्मबन्धस्य कुतो निवृत्तिर्न हि तत्त्वज्ञानमन्तरेण समूलं कर्म हातुं शक्यमित्याशङ्क्याह **ईश्वर इति**॥३९॥

प० टी०। अथोपदिष्टं ज्ञानयोगमुपसंहरन् स्वधर्ममपीत्युक्तत्वात्कर्मयोगं प्रशंसन्नाह **एषेति**। सम्यक् ख्यायते प्रकाश्यत आत्मतत्त्वमनयेति संख्या सम्यग्ज्ञानं तस्मिन् प्रकाश्यमानमा-

स्मतत्त्वं साङ्ख्यं तत्र साधनीभूता या बुद्धिरेषा तद्गति तुभ्यमभिहिता कथिता । एवं कथितायामपि साङ्ख्यबुद्धौ तव चेदात्मतत्त्वमपरोक्षं न भवति तर्ह्यन्तःकरणशुद्धिद्वारात्मतत्त्वमपरोक्षं कर्तुं कर्मयोगे त्विमां वक्ष्यमाणां बुद्धिं शृणु । यया बुद्ध्या कर्मात्मकं बन्धं प्रकर्षेण हास्यसि त्यक्ष्यसि ॥ ३९ ॥

**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ॥**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥**

किंचान्यत् नेहाभीति । नेह मोक्षमार्गे कर्मयोगे अभिक्रमनाशोऽभिक्रमणमभिक्रमः प्रारम्भस्तस्य नाशो नास्ति यथा कृष्यादेर्योगविषये प्रारम्भस्य नानैकान्तिकफलत्वमित्यर्थः । किंच नापि चिकित्सावत् प्रत्यवायो विद्यते किं तु भवति स्वल्पमप्यस्य योगधर्मस्यानुष्ठितं त्रायते रक्षति महतः संसारभयाज्जन्ममरणादिलक्षणात् ॥ ४० ॥

आ० टी० । ननु कर्मानुष्ठानस्यानैकान्तिकफलत्वेनाकिंचित्करत्वादनेकानर्थकलुषितत्वेन दोषवत्त्वाच्च योगबुद्धिरपि न श्रद्धेयेति तत्राह **किंचेति** । अन्यच्च किंचिदुच्यते कर्मानुष्ठानस्यावश्यकत्वे तत्कारणमिति यावत् । कर्मणा सह समाधेरनुष्ठातुमशक्यत्वादनेकान्तरायसंभवात्तत्फलस्य च साक्षात्कारस्य दीर्घकालाभ्याससाध्यस्यैकस्मिन् जन्मन्यसंभवादर्धाद्योगी भ्रश्येतानर्थे च निपतेदित्याशङ्क्याह **नेहेति** । प्रतीकत्वेनोपात्तस्य नकारस्य पुनरन्वयानुगुणत्वेन नास्तीत्यनुवादः । यत्तु कर्मानुष्ठानस्यानैकान्तिकफलत्वेनाकिंचित्करत्वमुक्तं तद् दूषयति **यथेति** । कृषिवाणिज्यादेरारम्भस्यानियतफलं संभावनामात्रोपनीतत्वान्न तथा कर्मणि वैदिके प्रारम्भस्य फलमनियतं युज्यते शास्त्रविरोधादित्यर्थः । यत्तूक्तमनेकानर्थकलुषितत्वेन दोषवदनुष्ठानमिति तत्राह **किंचेति** । इतोऽपि कर्मानुष्ठानमावश्यकमिति प्रतिज्ञाय हेत्वन्तरमेव स्फुटयति **नापीति** । चिकित्सायां हि क्रियमाणायां व्याध्यतिरेको वा मरणं वा प्रत्यवायोऽपि संभाव्यते कर्मपरिपाकस्य दुर्विवेकत्वान्न तथा कर्मानुष्ठाने दोषोऽस्ति विहितत्वादित्यर्थः । संप्रति कर्मानुष्ठानस्य फलं पृच्छति **किं त्विति** । उत्तरार्धं व्याकुर्वन्विवक्षितं फलं कथयति **स्वल्पमपीति** । सम्यग्ज्ञानोत्पादनद्वारेण रक्षणं विवक्षितं 'सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम् ॥ भूयस्तपस्वी भवति पङ्क्तिपावनः' इति स्मृतेरित्यर्थः ॥ ४० ॥

प० टी० । अथ परमेश्वरार्पणतया कर्मणि क्रियमाण इन्द्रादिभ्यो विघ्नं नास्तीत्याह **नेहाभिक्रमेति** । इह निष्कामकर्मण्यभिक्रमस्य कर्मारम्भस्य विघ्नादिभिर्नाशो नास्ति । यतस्तत्रेश्वर एव विघ्नहर्ता । तदुक्तं भागवते—'त्वां सेवतां सुरकृता बहवोन्तरायाः स्वौको विलङ्घ्य व्रजतां परमं पदं ते ॥ नान्यस्य बर्हिषि बलिं ददतः स्वधर्मं धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि' इति । अथ हिंसाप्रधाने कर्मणि कथमीश्वरादर इत्याह प्रत्यवाय इति । प्रत्यवायः पापं नास्ति—"अग्नीषोमीयं पशुमालभेत" इत्यादिवाक्यैर्वेदबोधितत्वात् । किं चास्य परमेश्वरार्पणतया कृतस्य धर्मस्य स्वल्पमप्युपक्रममात्रमपि कृतं महतो भयात्संसारात्त्रायते रक्षति न तु काम्यकर्मादि यतः पुण्यक्षये पुनः संसारश्रवणात् ॥ ४० ॥

**व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ॥**
**बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥**

एवं सांख्ये बुद्धिरुक्ता योगे च वक्ष्यमाणलक्षणा सा व्यवसायेति । व्यवसायात्मिका निश्चयस्वभावैकैव बुद्धिरितरविपरीतबुद्धिशाखाभेदस्य बाधिका सम्यक् प्रमाणजनितत्वादिह श्रेयोमार्गे हे कुरुनन्दन याः पुनरितरा बुद्धयो यासां शाखाभेदप्रचारवशादनन्तोऽपरोऽनुपरतः संसारोऽपि नित्यप्रततो विस्तीर्णो भवति प्रमाणजनितविवेकबुद्धिनिमित्तवशाच्चोपरतास्वनन्तभेदबुद्धिषु संसारोऽप्युपरमते । ता बुद्धयो बहुशाखा बह्व्यः शाखा यासां ता बहुशाखा बहुभेदा इत्येतत् प्रतिशाखाभेदेन ह्यनन्ताश्च बुद्धयः केषामव्यवसायिनां प्रमाणजनितविवेकबुद्धिरहितानामित्यर्थः ॥ ४१ ॥

आ० टी० । ननु बुद्धिद्वयातिरिक्तानि बुद्ध्यन्तराण्यपि काणादादिशास्त्रप्रसिद्धानि विद्यन्ते तथा च कथं बुद्धिद्वयमेव भगवतोपदिष्टमिति तत्राह **येयमिति** । सैवैकाप्रमाणभूता बुद्धिरित्याह **व्यवसायात्मिकेति** । बुद्ध्यन्तराण्यविवेकमूलान्यप्रमाणानीत्याह **बहुशाखा हीति** । व्यवसायात्मिकाया बुद्धेः श्रेयोमार्गे प्रवृत्ताया विवक्षितं फलमाह **इतरेति** । प्रकृतबुद्धिद्वयापेक्षयेतरा विपरीताश्चाप्रमाणजनिताः स्वकपोलकल्पिता या बुद्धयस्तासां शाखाभेदो यः संसारहेतुस्तस्य बाधिकेति यावत् । तत्र हेतुः **सम्यगिति** । निर्दोषवेदवाक्योत्थत्वादुक्तमुपायोपेयभूतं बुद्धिद्वयं साक्षात्पारंपर्याभ्यां संसारहेतुबाधकमित्यर्थः । उत्तरार्धं व्याचष्टे **याः पुनरिति** प्रकृतबुद्धिद्वयापेक्षयार्थान्तरत्वमितरत्वम् । तासामनर्थहेतुत्वं दर्शयति **यासामिति** । अप्रामाणिकबुद्धीनां प्रसक्तानुप्रसक्त्या जायमानानामतीव बुद्धिपरिणामविशेषः शाखाभेदास्तेषां प्रचारः प्रवृत्तिस्तद्वशादित्येतत्, अनन्तत्वं सम्यग्ज्ञानमन्तरेण निवृत्तिविरहितत्वम्, अपरत्वं कार्यस्यैव सतो वस्तुभूतकारणविरहितत्वम् । अनुपरतत्वं स्फोरयति **नित्येति** । कथं तर्हि तन्निवृत्त्या पुरुषार्थपरिसमाप्तिस्तत्राह **प्रमाणेति** । अन्वयव्यतिरेकाख्येनानुमानेनागमेन च पदार्थपरिशोधनपरेण परिनिष्पन्ना विवेकात्मिका या बुद्धिस्तां निमित्तीकृत्य समुत्पन्नसम्यग्बोधानुरोधात् प्रकृता विपरीतबुद्धयो व्यावर्तन्ते तास्वसंख्यातासु व्यावृत्तासु सतीषु निरालम्बनतया संसारोऽपि स्थातुमशक्नुवन्नुपरतो भवतीत्यर्थः । याः पुनरित्युपक्रान्ता तत्त्वज्ञानापनोद्या संसारास्पदीभूता विपरीतबुद्धिरनुक्रमति **ता बुद्धय इति** । बुद्धीनां वृक्षस्येव कुतो बहुशाखित्वं तत्राह **बहुभेदा इत्येतदिति** । एकैकां बुद्धिं प्रति शाखाभेदोऽवान्तरविशेषस्तेन बुद्धीनामसंख्यत्वं प्रख्यातमित्याह **प्रतिशाखेति** । बुद्धीनामानन्त्यप्रसिद्धिप्रद्योतनार्थो हिशब्दः । सम्यग्ज्ञानवतां यथोक्तबुद्धिभेदभाक्त्वमप्रसिद्धमित्याशङ्क्य प्रत्याह **केषामित्यादिना** ॥ ४१ ॥

प० टी० । अथ तदेव प्रकटयति **व्यवसायेति** । इह परमेश्वराराधनरूपे कर्मयोगे व्यवसायात्मिका परमेश्वरभजनानुवृत्त्यैव ध्रुवं तरिष्यामीति निश्चयात्मिका बुद्धिः सा तावदेकैव एकनिष्ठैव भवति । अथाव्यवसायिनां कामात्मनां या बुद्धयस्ता बहुशाखाः कामात्कामान्तरजनका भवन्ति कामानामनन्तत्वात् "जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यात्" इति श्रुतेश्च ॥ ४१ ॥

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ॥**
**वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥**

येषां व्यवसायात्मिका बुद्धिर्नास्ति तेषां यामिमां वक्ष्यमाणां पुष्पितां पुष्पित इव वृक्षः शोभमानां श्रूयमाणरमणीयां वाचं वाक्यलक्षणां प्रवदन्ति ।

केऽविपश्चितोऽल्पमेधसोऽविवेकिन इत्यर्थः । वेदवादरता इति । वेदवादरता बह्वर्थवादफलसाधनप्रकाशकेषु वेदवाक्येषु रता हे पार्थ नान्यत् स्वर्गपश्वादिफलसाधनेभ्यः कर्मभ्योऽस्तीत्येवंवादिनो वदनशीलाः ॥४२॥

आ० टी० । यदि सांख्ययोगरूपैकैव प्रमाणभूता बुद्धिस्तर्हि सैव सर्वेषां चित्ते किमिति स्थिरा न भवति तत्राह येषामिति । तेषामिमां पुष्पितां वाचं प्रवदन्ति तयापहृतचेतसां कामिनाम् । कामवशान्निश्चयात्मिका बुद्धिर्न प्रायः स्थिरा भवतीत्याह यामिति । इमामित्यध्ययनविध्युपात्तत्वेन प्रसिद्धत्वं कर्मकाण्डरूपाया वाचो विवक्ष्यते, वक्ष्यमाणत्वं क्रियाविशेषबहुलामित्यादौ द्रष्टव्यम् । किंशुको हि पुष्पशाली शोभमानोऽनुभूयते न पुनरुपभोग्यफलभागी लक्ष्यते तथेयमपि कर्मकाण्डात्मिका श्रूयमाणदशायां रमणीया वागुपलभ्यते साध्यसाधनसंबन्धप्रतिभानान्न त्वेषा निरतिशयफलभागिनी भवति कर्मानुष्ठानफलस्य नित्यत्वादिति मत्वाह पुष्पितामिति । वाक्यत्वेन लक्ष्यतेऽर्थवत्त्वप्रतिभानाद्वस्तुतस्तु न वाक्यमर्थाभासत्वादित्याह वाक्यलक्षणामिति । प्रवक्तॄणां वेदवाक्यतात्पर्यपरिज्ञानाभावं सूचयति अविपश्चित इति । वेदवादा वेदवाक्यानि तानि च बहूनामर्थवादानां फलानां साधनानां च विशेषाणां प्रकाशकानि तेषु रतिरासक्तिस्तान्निष्ठत्वं तद्वत्त्वमपि तेषां विशेषणमित्याह वेदवादेति । कर्मकाण्डनिष्ठत्वं फलं कथयति नान्यदिति । ईश्वरो वा मोक्षो वा नास्तीत्येवं वदन्तो नास्तिकाः सम्यग्ज्ञानवन्तो न भवन्तीत्यर्थः ॥ ४२ ॥

प० टी० । अथ कामिनोऽप्येतां व्यवसायबुद्धिं कथं नानुतिष्ठन्त्यतआह यामिति । यथा लोके पुष्पं हि फलोद्गमं सूचयत्येवं पुष्पितां फलाभिसन्धिं सूचयन्त्यविपश्चितस्तात्पर्यमजानन्तो वदन्ति समर्थयन्ति । कथम्, नान्यदस्तीतिवादिनः, एतद्व्यतिरेकेणान्यच्छ्रुतितात्पर्यं नास्तीत्यभिनिवेशवन्तोऽत एते वादेऽर्थवादे रतास्तत्रैव तात्पर्यमवधारयन्तः । यद्वा " अधेन्वाचरति माययैष वाचं सुश्रुवामफलामपुष्पाम् " इतिश्रुतौ पुष्पफले हि देवताध्यात्मे इति निरुक्तेः पुष्पस्थानीयदेवतोपासनाविषयां वाचं वेदवाणीं प्रवदन्तीति ॥ ४२ ॥

**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ॥**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥**

कामात्मान इति । ते च कामात्मानः कामस्वभावाः कामपरा* इत्यर्थः । स्वर्गपराः स्वर्गः परः पुरुषार्थो येषां ते स्वर्गपराः स्वर्गप्रधाना जन्मकर्मफलप्रदां कर्मणः फलं कर्मफलं जन्मैव कर्मफलं जन्मकर्मफलं तत् प्रददातीति जन्मकर्मफलप्रदा तां वाचं प्रवदन्तीत्यनुषज्यते । क्रियाविशेषबहुलां क्रियाणां विशेषाः क्रियाविशेषास्ते बहुला यस्यां वाचि तां स्वर्गपशुपुत्राद्यर्था यया वाचा बाहुल्येन प्रकाश्यन्ते, भोगैश्वर्यगतिं प्रति भोगश्चैश्वर्यं च भोगैश्वर्ये तयोर्गतिः प्राप्तिर्भोगैश्वर्यगतिस्तां प्रति साधनभूतास्ते क्रियाविशेषास्तद्बहुलां तां वाचं प्रवदन्तो मूढाः संसारे परिवर्तन्त इत्यभिप्रायः ॥ ४३ ॥

* कर्मपरा-पा० लि० पुस्तके.

आ० टी० । प्रकृतान् प्रवक्तॄनविवेकिनो व्यवसायात्मकबुद्धिभाक्त्वासंभवासिद्ध्यर्थं विधान्तरेण विशिनष्टि ते चेति । तेषां संसारपरिवर्तमानपरिदर्शनार्थं प्रस्ततां वाचमेव विशिनष्टि जन्मेति । ननु पुंसां कामस्वभावत्वमयुक्तं चेतनस्येच्छावतस्तदात्मत्वानुपपत्तेरिति तत्राह कामपरा इति । तत्परत्वं तत्तत्फलार्थित्वेन तत्तदुपायेषु कर्मस्वेव प्रवृत्ततया कर्मसंन्यासपूर्वकाज् ज्ञानाद्बहिर्मुखत्वम् । ननु कर्मनिष्ठानामपि परमपुरुषार्थापेक्षया मोक्षोपाये ज्ञाने भक्त्याभिमुख्यमिति नेत्याह स्वर्गेति । तत्परत्वं तस्मिन्नेवासक्ततया तदतिरिक्तपुरुषार्थराहित्यनिश्चयवत्त्वम् । उच्चावचमध्यमदेहप्रभेदग्रहणं जन्मवाचो यथोक्तफलप्रदत्वमप्रामाणिकमित्याशङ्‌क्यानुष्ठानद्वारा तदुपपत्तिरित्याह क्रियेति । क्रियाणामनुष्ठानानां यागदानादीनां विशेषा देशकालाधिकारिप्रयुक्ताः सप्ताहानेकाहलक्षणास्ते खल्वस्यां वाचि प्राचुर्येण प्रतिभान्तीत्यर्थः । कथं यथोक्तायां वाचि क्रियाविशेषाणां बाहुल्येनावस्थानमित्याशङ्‌क्य प्रकाश्यत्वेनैतद्विशदयति स्वर्गेति । तथापि तेषां मोक्षोपायत्वोपपत्तेस्तन्निष्ठानां मोक्षाभिमुख्यं भविष्यति नेत्याह भोगेति । यथोक्तां वाचमभिवदतां पर्यवसानं दर्शयति तद्बहुलामिति ॥ ४३ ॥

प० टी० । अथ तदेव प्रकटयन्नाह कामात्मान इति । कामात्मानोऽभिलाषाकुलचित्ता अत एव स्वर्गपराः स्वर्ग एव परमुत्कृष्टं येषां ते ते जन्मकर्मफलप्रदां जन्म च तत्र कर्म च फलं च प्रददाति तां भोगैश्वर्यगतिं प्रवदन्ति, भोगो रम्भादिः, ऐश्वर्यं देवाधिपत्यं, तयोर्गतिः प्राप्तिस्ताम् । किंभूतां क्रियाविशेषबहुलां भोगैश्वर्यप्राप्तिं प्रति साधनभूता ये क्रियाविशेषास्तैर्बहुलां गुर्वीमतिप्रयाससाध्याम् ॥ ४३ ॥

**भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ॥**
**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥**

भोगेति । तेषां च भोगैश्वर्यप्रसक्तानां भोगः कर्तव्यमैश्वर्यं चेति भोगैश्वर्ययोरेव प्रणयवतां तदात्मभूतानां तया क्रियाविशेषबहुलया वाचापहृतचेतसामाच्छादितविवेकप्रज्ञानां व्यवसायात्मिका सांख्ये योगे वा या बुद्धिः समाधौ समाधीयतेऽस्मिन् पुरुषोपभोगाय सर्वमिति समाधिरन्तःकरणं बुद्धिस्तस्मिन् समाधौ न विधीयते न भवतीत्यर्थः ॥ ४४ ॥

आ० टी० । ननु कर्मकाण्डनिष्ठानां कर्मानुष्ठायिनामपि बुद्धिशुद्धिद्वारेणान्तःकरणे साध्यसाधनभूतबुद्धिद्वयसमुदायसंभवादक्षतो मोक्षो भविष्यति, नेत्याह तेषां चेति । तदात्मभूतानां तयोरेव भोगैश्वर्ययोरात्मकर्तव्यत्वेनारोपितयोरभिनिविष्टे चेतसि तादात्म्याध्यासवतां बहिर्मुखानामित्यर्थः । तथापि शास्त्रानुसारिण्या विवेकप्रज्ञया व्यवसायात्मिका बुद्धिस्तेषामुदेष्यतीत्याशङ्‌क्याह तयेति । ननु समाधिः संप्रज्ञातासंप्रज्ञातभेदेन द्विधोच्यते तत्र बुद्धिद्वयविधिरप्रसक्तः सन् कथं निषिध्यते तत्राह समाधीयत इति ॥ ४४ ॥

प० टी० । भोगैश्वर्यप्रसक्तानामिति । भोगैश्वर्ययोः प्रसक्तानां तया पुष्पितवेदवाण्यापहृतं चेतो येषां तेषां पुरुषाणां तथैव वाण्या समाधौ परमेश्वराराधनैकाग्र्ये व्यवसायात्मिका बुद्धिर्न विधीयते नोत्पद्यते । तदुक्तम्—'सोऽहं चिन्मात्रमेवेति चिन्तनं ध्यानमुच्यते ॥ ध्यानस्याविस्मृतिः सम्यक्समाधिरभिधीयते ' इति ॥ ४४ ॥

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ॥**
**निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥**

य एवं विवेकबुद्धिरहितास्तेषां कामात्मनां यत्फलं तदाह त्रैगुण्येति । त्रैगुण्यविषयास्त्रैगुण्यं संसारो विषयः प्रकाशयितव्यो येषां ते वेदास्त्रैगुण्यविषयास्त्वं तु निस्त्रैगुण्यो भवार्जुन निष्कामो भवेत्यर्थः । निर्द्वन्द्वः सुखदुःखहेतू सप्रतिपक्षौ पदार्थौ द्वन्द्वशब्दवाच्यौ ततो निर्गतो निर्द्वन्द्वो भव, त्वं नित्यसत्त्वस्थः सदासत्त्वस्थः सत्त्वगुणाश्रितो भव तथा निर्योगक्षेमो ऽनुपात्तस्योपार्जनं योगः, उपात्तस्य रक्षणं क्षेमः, योगक्षेमप्रधानस्य श्रेयसि प्रवृत्तिर्दुष्करेत्यतो निर्योगक्षेमो भव, आत्मवानप्रमत्तश्च भव, एष तवोपदेशः ॥ ४५ ॥

आ० टी० । अविवेकिनामपि वेदाभ्यासवतां विवेकबुद्धिरुदेष्यतीत्याशङ्क्याह **यएवमिति** । तर्हि वेदार्थतया कामात्मता प्रशस्तेत्याशङ्क्याह **निस्त्रैगुण्य इति** । भवेति पदं निर्द्वन्द्वादिविशेषणेष्वपि प्रत्येकं संबध्यते, त्रयाणां सत्त्वादीनां गुणानां पुण्यपापव्यामिश्रकर्मतत्फलसंबन्धलक्षणः समाहारस्त्रैगुण्यमित्यङ्गीकृत्य व्याचष्टे **संसार इति** । वेदशब्देनात्र कर्मकाण्डमेव गृह्यते तदभ्यासवतां तदर्थानुष्ठानद्वारा संसारध्रौव्यान्न विवेकावसरोऽस्तीत्यर्थः । तर्हि संसारपरिवर्जनार्थं विवेकासिद्धये किं कर्तव्यमित्याशङ्क्याह **त्वं त्विति** । कथं निस्त्रैगुण्यो भवेति गुणत्रयस्य राहित्यं विधीयते नित्यसत्त्वस्थो भवेति वाक्यशेषविरोधादित्याशङ्क्याह **निष्काम इति** । सप्रतिपक्षत्वं परस्परविरोधित्वं, पदार्थौ शीतोष्णादिलक्षणौ । निष्कामत्वे द्वन्द्वान्निर्गतत्वं शीतोष्णादिसहिष्णुत्वं हेतुमुक्त्वा तत्रापि हेत्वपेक्षायां सदा सद्गुणाश्रितत्वं हेतुमाह **नित्येति** । योगक्षेमव्यावृत्तचेतसो रजस्तमोभ्यामसंस्पृष्टे सत्त्वमात्रे समाश्रितत्वमशक्यमित्याशङ्क्याह **तथेति** । योगक्षेमयोर्जीवनहेतुतया पुरुषार्थसाधनत्वान्निर्योगक्षेमो भवेति कुतो विधिरित्याशङ्क्याह **योगेति** । योगक्षेमप्रधानत्वं सर्वस्य स्वारसिकमिति ततो निर्गमनमशक्यमित्याशङ्क्याह **आत्मवानिति** । अप्रमादो मनसो विषयपारवश्यशून्यत्वम् । अथ यथोक्तोपदेशस्य मुमुक्षुविषयत्वादर्जुनस्य मुमुक्षुत्वमिह विवक्षितमिति नेत्याह **एष इति** ॥ ४५ ॥

प० टी० । ननु स्वर्गादिकं फलं न स्यात्तर्हि वेदैस्तत्साधनभूतानि कर्माणि कथं विधीयन्त इत्याशङ्क्य तद्विधायकश्रुतिवाक्यानामन्यादृक् तात्पर्यमस्तीत्याह **त्रैगुण्येति** । अत्र केवलं वेदानां त्रैगुण्यविषयत्वे सिद्धे प्रस्तुतं भगवदुपदिश्यमानस्य निस्त्रैगुण्यस्य वेदामूलकत्वेनोपदेशानर्हत्वात्, 'तस्माच्छास्त्रं प्रमाणं ते' 'तथा वेदैश्च सर्वैरहमेव वेद्यः' इत्यग्रतो भगवतैव प्रतिपादनादतोऽन्यथा व्याख्यायते । यथाधिकारं सत्त्वादित्रिगुणसंबन्धि यत्फलं तत्त्रैगुण्यं तदेव विषयो निरूपणीयत्वेन प्राप्तं येषु तथाविधा वेदाः सन्ति त्वं तु सात्त्विकफले नित्यसत्त्वस्थः सन् निस्त्रैगुण्यो भव । नित्यं शुद्धं च तत्सत्त्वं च तत्रस्थस्तन्निष्ठः सन् तेन तत्त्वज्ञानोत्पत्तौ गुणत्रयातीतो भव । अत्र सामान्यतः सत्त्वस्वरूपं तु—'उपासनायां यदवञ्चकत्वं वाक्कायचित्तेषु तदेव सत्त्वम्' इत्युक्तत्वाद्भेदेनोपासनायां शबलशुद्धत्वभेदेन द्विधा सत्त्वं निरुक्तमस्ति, तत्रैकं स्वर्गसुखप्रापकमन्यत्तत्त्वज्ञानोत्पादकम् । एतदेव भगवताप्यग्रे निरूपयिष्यते । तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् । सुखसंगेन बध्नाति ज्ञानसंगेन चानघ' इति । श्रुतिरप्याश्वलोपनिषत्सु—"वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" इति । ब्रह्मैव लोको ब्रह्मलोकः । शेषं स्पष्टम् । तथा च शुद्धसत्त्वेन रजस्तमसी अभिभूय तथा तत्त्वज्ञानोत्पत्तौ पुण्यफल-

न्यायेन सत्त्वोपरमोपि । ततो निस्त्रैगुण्यत्वमेव पर्यवसन्नमित्यर्थः । यद्वा त्रैगुण्यमेव विषं त्रैगुण्यविषं तद्यापयन्ति तिरस्कुर्वन्ति ते त्रैगुण्यविषया एवंविधा वेदाः प्रथमं निरूपितमपि त्रिगुणसंबन्धि स्वर्गादिफलं त्रैगुण्यं तद्विषं घातकं जन्ममरणपर्यवसायित्वेन बन्धहेतुत्वात् पुनरुपनिषद्विभागैस्तद्यापयन्ति दूषयन्ति ते तथा । श्रुतिरपि शातपथी—" पुत्रैषणायाश्च वित्तैषणायाश्च वाञ्छायार्थं भिक्षाचर्यं चरन्ति " इति । नन्वेवं ज्ञात्वापि कथं तेषां विधानमिति चेन्न गुडजिह्विकान्यायेन कर्मप्रवृत्तौ प्रलोभनमात्रत्वात् । अयमर्थः । शरीरायासद्रव्यव्ययैरतिक्लेशसाधनेषु कर्मसु सहसा प्रवृत्तिर्न भवत्यतो रोचनार्थं फलश्रुतिरुक्ता । यथा रोगार्तः शिशुर्मुखे कटुभेषजं न गृह्णाति, तत्र शर्करा निक्षिप्तास्तीति माता प्रलोभयति, स तु शर्करामाधुर्येच्छया गृह्णाति, मातुस्तात्पर्यमारोग्ये तद्वत् । अतस्त्वं निस्त्रैगुण्यो भव । त्रैगुण्यतिरस्कारकवेदार्थं भज । अथ व्यतिरेकमुखेन त्रैगुण्यस्य विषयरूपत्वमाह **निर्द्वन्द्वइत्यादि** । द्वन्द्वानि शीतोष्णादीनि तदसहिष्णुत्वम् । तथाप्राप्तस्य प्राप्तियोगः प्राप्तस्य संरक्षणं क्षेमं तथासावधानत्वमेतानि दुःखहेतवो त्रैगुण्यविषये संभवन्तीति विषरूपत्वं निस्त्रैगुण्ये तु तदभाव इति नित्यसत्त्वस्थो धैर्यवानात्मवान् सावधानः ॥ ४५ ॥

**यावानर्थ उदपाने सर्वतः संप्लुतोदके ॥**
**तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥**

स्वधर्ममनुतिष्ठतः[1] सर्वेषु वेदोक्तेषु कर्मसु यान्यनन्तानि[2] फलानि तानि नापेक्ष्यन्ते चेत् किमर्थं तानीश्वरायेत्यनुष्ठीयन्त इति, उच्यते शृणु, यावानिति । यथा लोके कूपतडागाद्यनेकस्मिन्नुदपाने परिच्छिन्नोदके यावान् यावत्परिमाणः स्नानपानादिरर्थः फलं प्रयोजनं स सर्वोऽर्थः सर्वतःसंप्लुतोदकेऽपि योऽर्थस्तावानेव संपद्यते तत्रान्तर्भवतीत्यर्थः । एवं तावांस्तावत्परिमाण एव संपद्यते सर्वेषु वेदेषु वेदोक्तेषु कर्मसु योऽर्थो ब्राह्मणस्य संन्यासिनः परमार्थतत्त्वं विजानतो योऽर्थो यद्विज्ञानफलं सर्वतःसंप्लुतोदकस्थानीयं तस्मिंस्तावानेव संपद्यते तत्रैवान्तर्भवतीत्यर्थः । " यथा कृताय विजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत् किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत् स वेद " इति श्रुतेः। 'सर्वं कर्माखिलम्' इति च वक्ष्यति। तस्मात् प्राग् ज्ञाननिष्ठाधिकारप्राप्तेः कर्मण्यधिकृतेन कूपतडागाद्यर्थस्थानीयमपि कर्म कर्तव्यम् ॥ ४६ ॥

आ० टी० । ईश्वरार्पणधिया स्वधर्मानुष्ठानेऽपि फलकामनाभावाद्वैफल्यं योगमार्गस्येति मन्वानः शङ्कते **स्वधर्ममिति**। कर्ममार्गस्य फलवत्त्वं प्रतिजानीते **उच्यत इति**। किं तत्फलमित्युक्ते तद्विषयश्लोकमवतारयति **शृण्विति** । यथोदपाने कूपादौ परिच्छिन्नोदके स्नानाचमनादिर्योऽर्थो यावानुत्पद्यते स तावानपरिच्छिन्ने सर्वतः संप्लुतोदके समुद्रेऽन्तर्भवति, परिच्छिन्नोदकानामपरिच्छिन्नोदकांशत्वात् । तथा सर्वेषु वेदोक्तेषु कर्मसु यावानर्थो विषयविशेषोपरक्तः सुखविशेषो जायते स तावानात्मविदः स्वरूपभूते सुखेऽन्तर्भवति परिच्छिन्नानन्दानामपरिच्छिन्नानन्दान्तर्भावाभ्युपगमाद् " एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति " इति श्रुतेः । तथा चापरिच्छिन्नात्मानन्दप्राप्तिपर्यवसायिनो योगमार्गस्य

---

1 स्वधर्ममनुतिष्ठत इति मु० पुस्तके पूर्वश्लोकसंबन्ध्येव दृश्यते ।
2 यान्युक्तान्यनन्तानि -पा० मु० पु०

नास्ति वैफल्यमित्याह **यावानिति** । उक्तमर्थमक्षरयोजनया प्रकटयति **यथेति** । उदकं पीयतेऽस्मिन्निति व्युत्पत्त्या कूपादिपरिच्छिन्नोदकाविषयत्वमुदपानशब्दस्य दर्शयति **कूपेति** । कूपादिगतस्याभिधेयस्य समुद्रेऽन्तर्भावासंभवात् कथमिदमित्याशङ्क्यार्थशब्दस्य प्रयोजनविषयत्वं व्युत्पादयति **फलमिति** । यत् फलत्वेन लीयते तत् फलमित्युच्यते तत् कथं तडागादिकृतं स्नानपानादि तथेत्याशङ्क्य तस्याल्पीयसो नाशोपपत्तेरित्याह **प्रयोजनमिति** । तडागादिप्रयुक्तप्रयोजनस्य समुद्रनिमित्तप्रयोजनमात्रत्वप्रयुक्तान्यस्यान्यात्मत्वानुपपत्तेरित्याशङ्क्याह **तत्रेति** । घटाकाशादेरिव महाकाशे परिच्छिन्नोदककार्यस्यापरिच्छिन्नोदककार्यान्तर्भावः संभवति तत्प्राप्तावितरापेक्षाभावादित्यर्थः । पूर्वार्धं दृष्टान्तभूतमेवं व्याख्याय दार्ष्टान्तिकमुत्तरार्धं व्याकरोति **एवमित्यादिना** । कर्मसु योऽर्थ इत्युक्तं व्यनक्ति **यत् कर्मफलमिति** । सोऽर्थो विजानतो ब्राह्मणस्य योऽर्थस्तावानेव संपद्यत इति संबन्धः । तदेव स्पष्टयति **विज्ञानेति** । तस्मिन्नन्तर्भवतीति शेषः । कथं कर्मफलं ज्ञानफलेऽन्तर्भवतीत्यत्र प्रमाणमाह **सर्वमिति** । यत् किमपि प्रजाः साधु कर्म कुर्वन्ति तत् सर्वं स पुरुषोऽभिसमेति प्राप्नोति यः पुरुषस्तद्वेद विजानाति यद्वस्तु सर्वैक्यो वेद तद्वेद्यमिति श्रुतेरर्थः । कर्मफलस्य सगुणज्ञानफलेऽन्तर्भावः संवर्गविद्यायां श्रूयते कथमेतावता निर्गुणज्ञानफले कर्मफलान्तर्भावः संभवतीत्याशङ्क्याह **सर्वमिति** । तर्हि ज्ञाननिष्ठैव कर्तव्या तावतैव कर्मफलस्य लब्धतया कर्मानुष्ठानानपेक्षणादित्याशङ्क्याह **तस्मादिति** । योगमार्गस्य निष्फलत्वाभावस्तच्छब्दार्थः ॥ ४६ ॥

प० टी० । अत एव ज्ञातवेदतात्पर्यं पुरुषं स्तौति **यावानिति** । उदमुदकं पीयते यस्मिन्नित्युदपानं तस्मिन् पानपर्याप्तोदके निर्झरपल्वलादौ भ्रमणं कृतवतः पुरुषस्य यावानर्थः सिद्ध्यति तावान् सर्वतः सर्वोऽप्यर्थ एकत्र संप्लुतोदके महाह्रदे सिद्ध्यति । एवं यावान् सर्वेषु पूर्वोत्तरमीमांसादिदर्शनेषु कर्मनैष्कर्म्याद्यर्थो निरूपितोऽस्ति तावान् विजानतो विशेषेण वेदतात्पर्यं जानतो ब्राह्मणस्य ब्रह्मज्ञस्य पुरुषस्य संप्लुतोदकस्थानीयेषु वेदेषु सिद्ध्यति ॥ ४६ ॥

**कर्मण्येवाधिकारस्ते मा फलेषु कदा चन ॥**
**मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि ॥ ४७ ॥**

कर्मणीति । तव च कर्मण्येवाधिकारो न ज्ञाननिष्ठायां ते तव तत्र च कर्मकुर्वतो मा फलेष्वधिकारोऽस्तु कर्मफलतृष्णा मा भूत् कदाचन कस्यांचिदप्यवस्थायामित्यर्थः । यदा कर्मफले तृष्णा ते स्यात् तदा कर्मफलप्राप्तेर्हेतुः स्याः, एवं मा कर्मफलहेतुर्भूः यदा हि कर्मफलतृष्णाप्रयुक्तः कर्मणि प्रवर्तते तदा कर्मफलस्यैव जन्मनो हेतुर्भवेद् यदि कर्मफलं नेष्यते किं कर्मणा दुःखरूपेणेति । मा ते तव संगोऽस्त्वकर्मण्यकरणे प्रीतिर्मा भूत् ॥ ४७ ॥

आ० टी० । तर्हि परम्परया पुरुषार्थसाधनं योगमार्गं परित्यज्य साक्षादेव पुरुषार्थकारणमात्मज्ञानं तदर्थमुपदेष्टव्यं तस्मै हि स्पृहयति मनो मदीयमित्याशङ्क्याह **तव चेति** । तर्हि तत्फलाभिलाषोऽपि स्यादिति नेत्याह **मा फलेष्विति** । पूर्वोक्तमेवार्थं प्रपञ्चयति **मा कर्मेति** । फलाभिसन्ध्यसंभवे कर्माकरणमेव श्रद्दधामीत्याशङ्क्याह **मा त इति** । ज्ञानानधिकारिणोऽपि कर्मत्यागप्रसक्तिं निवारयति **कर्मण्येवेति** । कर्मण्येवेत्येवकारार्थमाह **न ज्ञानेति** । न हि तत्राब्राह्मणस्यापरिपक्वकषायस्य मुख्योऽधिकारः सिद्ध्यतीत्यर्थः । फलैस्तर्हि संबन्धो दुर्वारः स्यादित्याह **तत्रेति** । कर्मण्येवाधिकारे सतीति सप्तम्यर्थः । फलेष्वधिकाराभावं स्फोरयति **कर्मेति** । कर्मानुष्ठानात् प्रागूर्ध्वं तत्काले

चेत्येतत् कदाचनेति विवक्षितमित्याह **कस्यांचिदिति** । फलाभिसन्धाने दोषमाह **यदेति** । एवं कर्मफलतृष्णाद्वारेणेत्यर्थः । कर्मफलहेतुत्वं विवृणोति **यदा हीति** । तर्हि विफलं क्लेशात्मकं कर्म न कर्तव्यमिति शङ्कामनुभाष्य दूषयति **यदीत्यादिना** । अकर्मणि ते संगो मा भूदित्युक्तमेव स्पष्टयति **अकरणइति** ॥ ४७ ॥

**प० टी०** । अथोक्तप्रमेयपर्यवसितमर्थमाह । **कर्मण्येवेति** । तत्त्वज्ञानार्थिनस्ते तवेश्वरकृपया कर्मण्येवाधिकारोऽस्तु परं फलेष्वधिकारो मास्तु । स्वर्गादिफलभोगाधिकारो मास्त्वित्याशीः । तथा त्वमपि कर्मफले हेतुर्मा भूः कर्मफलभोगे हेतुर्निमित्तं मा भव । तव चित्तं कर्मफलसंकल्पोऽपि न स्पृशतु । अथ साक्षात्कर्मणः फलावश्यंभावनियम इति प्रसिद्धे फलं भविष्यत्येव तस्मात्कर्मैव कार्यमित्याशङ्क्याह **मेति** । तेऽकर्मणि कर्माकरणे संगो निष्ठा मास्तु । स्वतृप्तिमनुद्दिश्येश्वरार्पणत्वेन भोजनसामग्रीसंपादनवत्कर्म कार्यमित्यर्थः ॥ ४७ ॥

**योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनंजय ॥**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥४८॥**

यदि फलप्रयुक्तेन * न कर्तव्यं कर्म कथं तर्हि कर्तव्यमित्युच्यते योगस्थ इति । योगस्थः सन् कुरु कर्माणि केवलमीश्वरार्थं तत्रापीश्वरो मे तुष्यत्विति संगं त्यक्त्वा धनंजय फलतृष्णाशून्येन क्रियमाणे कर्मणि सत्त्वशुद्धिजा ज्ञानप्राप्तिलक्षणा सिद्धिस्तद्विपर्ययजासिद्धिस्तयोः सिद्ध्यसिद्ध्योरपि समस्तुल्यो भूत्वा कुरु कर्माणि कोऽसौ योगो यत्रस्थः कुर्वित्युक्तमिदमेव तत् सिद्ध्यसिद्ध्योः समत्वं योग उच्यते ॥ ४८ ॥

**आ० टी०** आसक्तिरकरणेन युक्ता चेत्तर्हि क्लेशात्मकं कर्म किमुद्दिश्य कर्तव्यमित्याशङ्कामनूद्य श्लोकान्तरमवतारयति **यदीत्यादिना** । वक्ष्यमाणयोगमुद्दिश्य तन्निष्ठो भूत्वा कर्माणि क्लेशात्मकान्यपि विहितत्वादनुष्ठेयानीत्याह **योगस्थः सन्निति** । कर्मानुष्ठानस्योद्देश्यं दर्शयति **केवलमिति** । फलान्तरापेक्षामन्तरेणेश्वरार्थं तत्प्रसादनार्थमनुष्ठानमित्यर्थः । तर्हीश्वरसन्तोषोऽभिलाषगोचरीभूतो भविष्यति नेत्याह **तत्रापीति** । ईश्वरप्रसादनार्थे कर्मानुष्ठाने स्थितेऽपीत्यर्थः । संगं त्यक्त्वा कुर्विति पूर्वेण संबन्धः । आकाङ्क्षितं पूरयित्वा सिद्धिशब्दार्थमाह **फलेति** । तद्विपर्ययजा सत्त्वाशुद्धिजन्या ज्ञानाप्राप्तिलक्षणेति यावत् । कर्माननुतिष्ठतो योगमुद्दिश्य शेषतया प्रकृतमाकाङ्क्षापूर्वकं प्रकटयति **कोऽसावित्यादिना** ॥ ४८ ॥

**प० टी०** । तर्हि कथमित्याह **योगस्थइति** । योगः परमेश्वरसांनिध्यं तत्र कृतानिश्चयो योगस्थ एवंविधो भूत्वा कर्माणि कुरु, अतएव धनंजय धनं स्वर्गादिसुखं जयति तुच्छत्वेन त्यजति तथाविधस्त्वमसीत्यर्थः । किं कृत्वा संगं त्यक्त्वा कर्तृत्वाभिनिवेशं परित्यज्य । पुनः किं कृत्वा सिद्ध्यसिद्ध्योः समो भूत्वा सिद्धावसिद्धौ वा हर्षविषादरहितो भूत्वा । यतः समत्वं निर्विकारत्वमेव योग इत्युच्यते ॥ ४८ ॥

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ॥**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥**

* कर्मफलप्रयुक्तेन --पा० मु० पु० ।

दूरेणेति । यत् पुनः समत्वबुद्धियुक्तमीश्वराराधनार्थं कर्मैतस्मात् *कर्मणो दूरेणातिविप्रकर्षेण ह्यवरं निकृष्टं कर्म फलार्थिना क्रियमाणं बुद्धियोगात् समत्वबुद्धियुक्तात् कर्मणो जन्ममरणादिहेतुत्वाद् धनंजय यत एवं योगविषयायां बुद्धौ तत्परिपाकजायां वा सांख्यबुद्धौ शरणमाश्रयमभयप्राप्तिकारणमन्विच्छ प्रार्थयस्व परमार्थज्ञानशरणो भवेत्यर्थः । यतोऽवरं कर्म कुर्वाणाः कृपणा दीनाः फलहेतवः फलतृष्णाप्रयुक्ताः सन्तः " यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात् प्रैति स कृपणः" इति श्रुतेः ॥ ४९ ॥

आ० टी० । किमिति योगस्थेन तत्त्वज्ञानमुद्दिश्य कर्म कर्तव्यं फलाभिलाषेऽपि तदनुष्ठानस्य सुलभत्वादित्याशङ्क्य यथोक्तयोगयुक्तं कर्म स्तुवन्ननन्तरश्लोकमुत्थापयति यत् पुनरिति । अवरं कर्म बुद्धिसंबन्धविरुद्धमिति शेषः । बुद्धियुक्तस्य बुद्धियोगाधीनं प्रकर्षं सूचयति बुद्धीति । बुद्धिसंबन्धासंबन्धाभ्यां कर्मणि प्रकर्षनिकर्षयोर्भावे करणीयं नियच्छति बुद्धाविति । यत्तु फलेच्छयापि कर्मानुष्ठानं सुकरमिति तत्राह कृपणेति । निकृष्टं कर्मैव विशिनष्टि फलार्थिनेति । कस्मात् प्रतियोगिनः सकाशादिदं निकृष्टमित्याशङ्क्य प्रतीकमुपादाय व्याचष्टे बुद्धीत्यादिना । फलाभिलाषेण क्रिययाणस्य कर्मणो निकृष्टत्वे हेतुमाह जन्मेति । समत्वबुद्धियुक्तात् कर्मणस्तद्धीनस्य कर्मणो जन्मादिहेतुत्वेन निकृष्टत्वे फलितमाह यत इति । योगविषया बुद्धिः समत्वबुद्धिः । बुद्धिशब्दस्यार्थान्तरमाह तत्परिपाकेति । तच्छब्देन समत्वबुद्धिसमन्वितं कर्म गृह्यते तस्य परिपाकस्तत्फलभूता बुद्धिशुद्धिः । शरणशब्दस्य पर्यायं गृहीत्वा विवक्षितमर्थमाह अभयेति । सप्तमीमविवक्षित्वा द्वितीयं पक्षं गृहीत्वा वाक्यार्थमाह परमार्थेति । तथाविधज्ञानशरणत्वे हेतुमाह यत इति । फलहेतुत्वं विवृणोति फलेति । तेन परमार्थज्ञानशरणतैव युक्तेति शेषः । परमार्थज्ञानबहिर्मुखानां कृपणत्वे श्रुतिं प्रमाणयति यो वा इति । अस्थूलादिविशेषणमेतदित्युच्यते ॥ ४९ ॥

प० टी० । अत एव ज्ञानयोगं प्रशंसन्नाह दूरेणेति । भो धनंजय बुद्धियोगात्सकाशात्फलोद्देशेन कृतं कर्म दूरेणात्यन्तमवरमपकृष्टं तथा च चित्तशुद्धिद्वारा ज्ञानयोगमुद्दिश्यैव कर्म कर्तव्यम्।तस्मात्त्वं बुद्धौ ज्ञाने शरणं कर्मयोगमन्विच्छाश्रयेत्यर्थः । हि यस्मात्कारणात्फलहेतवः कर्मकरणे फलमेव हेतुः कारणमिति मन्वानाः पुरुषाः कृपणा विषयसुखलम्पटाः । यद्वा फलव्यतिरेकेण निरर्थकं कर्मार्थं धनव्ययः कथं कर्तव्य इति तेषां कार्पण्यम् । श्रुतिरपि-"यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वा प्रैति स ब्राह्मणः" इति । भाष्यम्—"भो गार्गि वाचक्नवि यः पुरुष एतदक्षरं परं ब्रह्माविदित्वाज्ञात्वा फलोद्देशेन कर्म कृत्वास्मान्मनुष्यलोकाल्लोकान्तरं प्रैति मृत्वा गच्छति स कृपणः स्वविषयभोगेच्छुः । तथैतदक्षरं विदित्वा प्रैति स ब्राह्मणो ब्रह्मरूपो भवति ॥ ४९ ॥

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ॥
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५० ॥

समत्वबुद्धियुक्तः सन् स्वधर्ममनुतिष्ठन् यत् फलं प्राप्नोति तच्छृणु बुद्धीति । बुद्धियुक्तः समत्वकर्मविषयया बुद्ध्या युक्तो बुद्धियुक्तः, स जहाति

* कर्मोक्तमेतस्मात्—पा० मु० पु० ।

परित्यजतीहास्मिँल्लोके उभे सुकृतदुष्कृते पुण्यपापे सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण यतस्तस्मात् समत्वबुद्धियोगाय युज्यस्व घटस्व योगो हि कर्मसु कौशलं स्वधर्माख्येषु कर्मसु वर्तमानस्य या सिद्ध्यसिद्ध्योः समत्वबुद्धिरीश्वरार्पितचेतस्तया तत् कौशलं कुशलभावस्तद्धि कौशलं यद्बन्धनस्वभावान्यपि कर्माणि समत्वबुद्ध्या स्वभावान्निवर्तन्ते तस्मात्समत्वबुद्धियुक्तो भव त्वम् ॥ ५० ॥

आ० टी० । पूर्वोक्तसमत्वबुद्धियुक्तस्य स्वधर्मानुष्ठाने प्रवृत्तस्य किं स्यादित्याशङ्क्याह **समत्वेति**। बुद्धियुक्तः स्वधर्माख्यं कर्मानुतिष्ठन्निति शेषः । बुद्धियोगस्य फलवत्त्वे फलितमाह **तस्मादिति** । पूर्वार्धं व्याचष्टे **बुद्धीत्यादिना** । ननु समत्वबुद्धिमात्रान्न पुण्यपापनिवृत्तिर्युक्ता परमार्थदर्शनवतस्तन्निवृत्तिप्रसिद्धेरिति तत्राह **सत्त्वेति** । उत्तरार्धं व्याचष्टे **तस्मादिति** । स्वधर्ममनुतिष्ठतो यथोक्तयोगार्थं किमर्थं मनो योजनीयमित्याशङ्क्याह **योगो हीति** । तर्हि यथोक्तयोगसामर्थ्यादेव दर्शितफलसिद्धेरनास्था स्वधर्मानुष्ठाने प्राप्तेत्याशङ्क्याह **स्वधर्माख्येष्विति** । ईश्वरार्पितचेतसस्तेषु कर्मसु वर्तमानस्यानुष्ठाननिष्ठस्य या यथोक्ता बुद्धिस्तत्तेषु कौशलमिति योजना । कर्मणां बद्धस्वभावत्वात् तदनुष्ठाने बन्धाबद्धः स्यादित्याशङ्क्य कौशलमेव विशदयति **तद्धीति** । समत्वबुद्धेरेवं फलत्वे स्थिते फलितमुपसंहरति **तस्मादिति** ॥ ५० ॥

प० टी० । अथ ज्ञानं प्रशंसन्नाह **बुद्धियुक्तइति** । बुद्धिर्विज्ञानं तद्युक्तो ज्ञानी पुरुषः स्वर्गप्रापकं तथा दुष्कृतमधमयोनिप्रापकं ते उभे जहाति त्यजति। श्रुतिरपि-" पापमकरवमित्यतः कल्याणमकरवमित्युभे उभे एष एते तरत्यमृतः साध्वसाधुनी नैनं कृताकृते तपतः" इति । भाष्यम्-अतो ज्ञानोत्पत्त्यनन्तरमहं पापमकरवमकार्षमिति तथा कल्याणं सुकृतमकरवमित्येते उभे साध्वसाधुनी सुकृतदुष्कृते अमृतो मुक्तः संस्तरति उल्लङ्घयति तथैवं तत्त्वज्ञानिनं पुरुषं कृताकृते कृते वा साध्वसाधुनी न तपतः नाक्रामतः न स्वाधीनं कुरुतोऽनुष्ठितेऽननुष्ठिते फलदानाय समर्थे न भवत इत्यर्थः । तस्मात्त्वं योगाय परमेश्वरप्राप्तये युज्यस्व घटस्व । अथ योगस्य स्वरूपमाह **योगः कर्मसु कौशलं** बन्धजनकेषु कर्मस्वबन्धजनकत्वसंपादकत्वं कौशलम् ॥ ५० ॥

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ॥**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥**

यस्मात् कर्मजमिति । कर्मजं फलं त्यक्त्वेति व्यवहितेन संबन्धः। इष्टानिष्टदेहप्राप्तिः कर्मजं फलं कर्मभ्यो जातम्। बुद्धियुक्ताः समत्वबुद्धियुक्ताः सन्तो हि तस्मात् फलं त्यक्त्वा परित्यज्य मनीषिणो ज्ञानिनो भूत्वा जन्मबन्धविनिर्मुक्ता जन्मैव बन्धो जन्मबन्धस्तेन विनिर्मुक्ता जीवन्त एव जन्मबन्धविनिर्मुक्ताः सन्तः **पदं** परमं विष्णोर्मोक्षाख्यं गच्छन्त्यनामयं सर्वोपद्रवरहितमित्यर्थः । अथ वा बुद्धियोगाद्धनंजयेत्यारभ्य परमार्थदर्शनलक्षणैव सर्वतः संप्लुतोदकस्थानीया कर्मयोगजसत्त्वशुद्धिजनितबुद्धिर्दर्शिता साक्षात्सुकृतदुष्कृतप्रहाणादिहेतुत्वश्रवणात् ॥ ५१ ॥

स्यैव स्यात्पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेन" इति । भाष्यम्—तत्तद्बृहदारण्यकं निरूपणीयार्थेऋक्शाखीयां श्रुतिं संमतित्वेन दर्शयति तदेतादिति । तदेतत्प्रमेयमृचा ऋग्वेदेनाभ्युक्तमप्यभितो निरूपितमस्ति । तत्किम्, ब्राह्मणस्य ब्रह्मज्ञस्य पुरुषस्य एष नित्यो महिमा शाश्वतं सामर्थ्यम् । तत्किम्, कृतेन कर्मणा न वर्धते उत्कृष्टत्वं न प्राप्नोति नाप्यकृतेन कनीयान् कनिष्ठो भवत्येवंविधो यस्तस्यैव पदवित् पदमात्मरूपं तस्य विद् ध्यानं भवत्येवं तं परमात्मानं विदित्वा सत्कर्मणा पापकेन वा न लिप्यते। अथोपक्रान्तऋक्शाखायामपि—"हृदा तष्टेषु मनसो जवेषु यद् ब्राह्मणाः संजयते सखायः। अत्राह त्वं विजहुर्वेद्याभिरोहब्राह्मणा विचरन्त्युत्वे इमे। ये नार्वाङ् न परश्चरन्ति न ब्राह्मणासो न सुतेकरासः । त एते वाचमभिपद्य पापयासिरीस्तन्त्रं तन्वते अप्रजज्ञयति" ऋग्द्वयम्। रावणभाष्यम्—हृदा बुद्धिरूपेण मनसा तष्टेषु निराकृतेषु मनसो जवेषु वृत्तिरूपेषु मनोजवेषु वेगेषु सत्सु यद्यस्मात्कारणाद् ब्रह्मज्ञाः ब्राह्मणाः सखायः सर्वभूतसुहृत्तमाः सन्तः सम्यक् प्रकारेण यजन्तेऽन्तर्यागं कुर्वते । तत्रान्तर्यागे क्रियमाणे किं भवतीत्याह अत्रेति अत्राहं त्वामिति पदविभागे अहेत्यत्रानुस्वारलोपश्छान्दसः। अहं त्वं विजहुरन्तर्यागेन भेदभावनां त्यक्तवन्तः। किं भूता वेद्याभिर्विद्याभिज्ञानवृत्तिभिरभित ऊह्यं ब्रह्म यैस्ते पदार्थप्रतीतिरूपेण ज्ञातब्रह्माणः सन्तः उ इति निर्धारणे विचरन्ति अखण्डैकरसत्वेन व्यवहरन्ति। तदुक्तमागमेऽपि—स्वाधिष्ठानगते कुण्डे चिद्रूपं वह्निमुज्ज्वलेत्। जुहुयात्प्रणवेनात्र त्वमहंतां निवेदयेत्। आत्मनात्मानमद्वैते भूत्वा सच्चित्सुखात्मकः। स्थीयते यत्क्रियत्कालं सोन्तर्यागः स्मृतो बुधैः" इति। इमे ये इति। इमे ये उक्तलक्षणाः पुरुषास्ते अर्वाङ् मनुष्यलोके न चरन्ति न संभवन्ति । न परः पर इति सकारान्तमव्ययम्। परस्मिन् देवलोकेऽपि नोत्पद्यन्ते कृताकृतैः कर्मभिरुत्तमाधमलोकं न गच्छन्ति । किं त्वत्रैव ब्रह्मीभूतास्तिष्ठन्तीत्यर्थः। "न तस्य प्राणा उत्क्रामन्त्यत्रैव समलीयन्त" इति श्रुतेः । परं तु ब्राह्मणा जातिमात्रविप्रास्तथा सुतं सोममभिमृतं कुर्वन्तीति सुतेकरास्त एव सुतेकरासो याज्ञिकास्तथा भवन्ति । किं तु ते उत्तममध्यमाधमगतिं प्राभुवन्त्येवेत्यर्थः। अत्र हेतुमाह त एत इति । त एते निरूपितप्रकारा ब्राह्मणाः सुतेकराश्च वाचं खलप्रतिपादकां वेदवाणीमभिपद्य ज्ञात्वा सिरीः सीरिणः कृषिकर्तार इव भूत्वा पापफलाशयातन्त्रं यज्ञादिकं तन्वते विस्तारयन्ति । अत एव अप्रजज्ञयो न प्रकृष्टा जज्ञिर्जन्म येषां तेऽपकृष्टजन्मान इत्यर्थः । अथ प्रकृतमनुसरामः । तथास्य पुरुषस्य सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु कश्चिदर्थव्यपाश्रयोऽर्थः प्रयोजनं तस्य व्यपाश्रय आश्रयः कश्चिदपि न मृग्यते परमार्थसाधने भगवत्कृपापात्रस्य तस्य विघ्नोपशान्त्यर्थं कोऽप्याश्रयणीयो नास्तीत्यर्थः । श्रुतिरपि—"तस्य ह न देवा नाभूत्या ईशते आत्मा ह्येषां संभवति" इति । तस्य पुरुषस्याभूत्या अनैश्वर्यायापकर्षणाय देवा इन्द्राद्या नेशते समर्था न भवन्ति । हि यस्मात्कारणात्स पुरुष एषां देवानामात्मान्तर्यामी प्रयोजको भवति । न हि प्रजोजकमन्तरा विघ्नकरणार्थं प्रवृत्तिरित्यर्थः ॥ १८ ॥

**तस्मादसक्तः सततं कार्यं कर्म समाचर ॥**
**असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥ १९ ॥**

यत एवं तस्मादिति । तस्मादसक्तः संसर्गवर्जितः सततं सर्वदा कार्यं कर्तव्यं नित्यं कर्म समाचर निर्वर्तय । असक्तो हि यस्मात् समाचरन्नीश्वरार्थं कर्म कुर्वन् परमाप्नोति पूरुषो मोक्षमाप्नोति पुरुषः सत्त्वशुद्धिद्वारेणेत्यर्थः ॥ १९ ॥

आ० टी० । सम्यग्ज्ञाननिष्ठत्वाभावे कर्मानुष्ठानमावश्यकमित्याह यत इति । तस्मा-

ज्ञाननिष्ठाराहित्यादिति यावत् । मोक्षमेवापेक्षमाणस्य कथं कर्मणि फलान्तरवति नियोगः स्यादित्याशङ्क्याह **असक्तो हीति** ॥ १९ ॥

**प० टी०** । यस्मादेवंभूतस्योत्पन्नज्ञानस्य कर्मोपरमो नान्यस्य तस्मात्त्वं कर्म कुर्वित्याह **तस्मादिति** । असक्तः फलसङ्गरहितः सन् कार्यं कर्म नित्यं नैमित्तिकं सततं निरन्तरं समाचर । हि यस्मादसक्तः सन् पुरुषः परं ब्रह्माप्नोति ॥ १९ ॥

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः ॥**
**लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि ॥ २० ॥**

यस्माच्च कर्मणैवेति । कर्मणैव हि स्मात् पूर्वे क्षत्रिया विद्वांसः संसिद्धिं मोक्षं गन्तुमास्थिताः प्रवृत्ता जनकादयो जनकाश्वपतिप्रभृतयो यदि ते प्राप्तसम्यग्दर्शनास्ततो लोकसंग्रहार्थं प्रारब्धकर्मत्वात् कर्मणा सहैवासंन्यस्यैव कर्म संसिद्धिमास्थिता इत्यर्थः । अथाप्राप्तसम्यग्दर्शना जनकादयस्तदा कर्मणा सत्त्वशुद्धिसाधनभूतेन क्रमेण संसिद्धिमास्थिता इति व्याख्येयः श्लोकः। अथ मन्यसे पूर्वैरपि जनकादिभिरप्यजानद्भिरेव कर्तव्यं कृतं कर्म तावता नावश्यमन्येन कर्तव्यं सम्यग्दर्शनवता कृतार्थेनेति तथापि प्रारब्धकर्मायत्तस्त्वं लोकसंग्रहमेवापि लोकस्योन्मार्गप्रवृत्तिनिवारणं लोकसंग्रहस्तमेवापि प्रयोजनं संपश्यन् कर्तुमर्हसि ॥ २० ॥

**आ० टी** । यद्यपि जितेन्द्रियोऽपि विवेकी श्रवणादिभिरजस्रं ब्रह्मणि निष्ठातुं शक्नोति तथापि क्षत्रियेण त्वया विहितं कर्म न त्याज्यमित्याह **यस्माच्चेति** । तस्मात्त्वमपि कर्म कर्तुमर्हसीति संबन्धः । इतोऽपि त्वया विहितं कर्म कर्तव्यमित्याह लोकेति । पूर्वार्धं विभजते **कर्मणैवेति** । कथं जनकादीनां कर्मणा संसिद्धिप्राप्तिरुच्यते कर्मत्यजां हि सम्यग्दर्शनवतां प्रसिद्धा संसिद्धिरिति। तत् किं जनकादयोऽपि प्राप्तसम्यग्दर्शनाः स्युरुताप्राप्तसम्यग्दर्शना भवेयुरिति विकल्प्य प्रथमं प्रत्याह **यदीति** । लोकसंग्रहार्थं कर्मणा सहैव संसिद्धिमास्थिता इति संबन्धः । कर्मणा सहैवेत्येतद् व्याकरोति **असंन्यस्यैव कर्मेति** । तत्र हेतुमाह **प्रारब्धेति** । जनकादीनां सत्यपि ज्ञानित्वे प्रारब्धकर्मवशात् कर्मापरित्यज्यैव लोकसंग्रहार्थं प्रवर्तमानानां ज्ञानमाहात्म्यादुपपन्ना संसिद्धिरित्यर्थः । द्वितीयमनूद्य पूर्वार्धेनोत्तरमाह **अथेत्यादिना** । द्वितीयार्धव्यावर्त्यामाशङ्कामुत्थापयति **अथेति** । अज्ञेनाकृतार्थेन कृतं कर्मेत्येतावता ज्ञानवता कृतकृत्येन न तत् कर्तव्यमित्युक्तमङ्गीकरोति **तथापीति** । तर्हि मयापि ज्ञानवता कृतार्थेन कर्म न कर्तव्यमित्याशङ्क्यार्जुनस्य कर्तव्यमेव कर्मेत्युत्तरार्धव्याख्यानेन कथयति **प्रारब्धेति** ॥ २० ॥

**प० टी०** अत्रार्थे सदाचरं प्रमाणयति **कर्मणैवेति** । जनकादयो राजानोऽपि वर्णाश्रमोचितेन कर्मणैव कृत्वा सिद्धिं तत्त्वज्ञानरूपिणीं प्राप्ताः। अथ तत्त्वज्ञानोत्पत्तावपि कर्म न त्याज्यमित्याह **लोकसंग्रहमिति** । लोकसंग्रहमपि पश्यन् कर्तुमर्हसि केऽप्यल्पज्ञा वयमपि तत्त्वज्ञानिन इति मत्वा कर्म त्यक्ष्यन्ति । तदर्थमपि कर्माचर। तदुक्तम्--'सर्पिरस्ति पयसीक्षुगोरसस्तैलमस्ति तिलमध्य एव तत् । लभ्यते मथनयन्त्रकर्मणा कर्मणा हृदि गता तथैव चित्' इति ॥ २० ॥

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ॥**
**स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥**

लोकसंग्रहः किमर्थं कर्तव्य इत्युच्यते यद्यदिति । यद्यत् कर्माचरति श्रेष्ठः प्रधानभूतस्तत्तदेव कर्माचरतीतरो जनस्तदनुगतः । किं च स श्रेष्ठो यत् प्रमाणं कुरुते लौकिकं वैदिकं च लोकस्तदनुवर्तते तदेव प्रमाणीकरोतीत्यर्थः ॥ २१ ॥

आ० टी० । ज्ञानवता कृतार्थेन लोकसंग्रहार्थमपि न प्रवर्तितव्यमित्याशङ्कामुत्थाप्य परिहरति लोकेत्यादिना । श्रुताध्ययनसंपन्नत्वेनाभिमतो यद्यद्विहितं प्रतिषिद्धं वा कर्मानुतिष्ठति तत्तदेव प्राकृतो जनोऽनुवर्तते तेन विद्यावतापि लोकमर्यादास्थापनार्थं विहितं कर्तव्यमित्यर्थः । श्रेष्ठानुसारित्वमितरेषामाचारे दर्शयित्वा प्रतिपत्तावपि दर्शयति किंचेति ॥ २१ ॥

प० टी० । अथ तदेव प्रकटयन्नाह यद्यदिति । श्रेष्ठः संभावितो जनो यद्यदाचरतीतरः प्राकृतोऽपि जनस्तदेवाचरति तथा स श्रेष्ठो जनो यद्वेदशास्त्रादिकं प्रमाणत्वेन मनुते लोकोऽपि तदनुलक्षीकृत्य वर्तते ॥ २१ ॥

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ॥**
**नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥**

यद्यत्र लोकसंग्रहकर्तव्यतायां विप्रतिपत्तिस्तर्हि मां किं न पश्यसि न मे इति । न मे मम पार्थ नास्ति न विद्यते कर्तव्यं त्रिष्वपि लोकेषु किंचन किंचिदपि कस्मान्नानवाप्तमप्राप्तमवाप्तव्यं प्रापणीयं तथापि वर्त एव च कर्मण्यहम् ॥ २२ ॥

आ० टी० । कृतार्थस्यापि लोकसंग्रहार्थं विहितं कर्म कर्तव्यमित्युक्त्वा तत्रैव भागवतमतमुदाहरणत्वेनोपन्यस्यति यदीत्यादिना । अप्राप्तस्य प्राप्तये तवापि कर्तृत्वसंभवाद् न किंचिदपि विद्यते कर्तव्यमिति कथमुक्तमित्याशङ्क्याह नानवाप्तमिति । प्रतीकमुपादाय व्याख्यानद्वारा विद्यावतोऽपि कर्मप्रवृत्तिं संभावयति नेत्यादिना । अनयार्थं पुनर्नञोऽनुवादः । भगवतो मे नास्ति कर्तव्यमित्येतदाकाङ्क्षाद्वारा स्फोरयति कस्मादित्यादिना । प्रयोजनाभावे त्वयापि नानुष्ठेयं कर्मेत्याशङ्क्य लोकसंग्रहार्थं ममापि कर्मानुष्ठानमिति मत्वाह तथापीति ॥ २२ ॥

प० टी० । एतन्न केवलं तुभ्यमुपदिशाम्यहमपि तथैवाचरामीत्याह नमेइति । भोः पार्थ त्रिष्वपि लोकेषु भूर्भुवःप्रमुखेषु, अथवा देवपितृमनुष्यलोकेषु मम कर्तव्यं किमपि नास्ति । किमुद्दिश्य कर्तव्यमित्याह नानवाप्तमिति । अप्राप्तस्य प्राप्त्यर्थे प्रयत्नः कर्तव्यश्चेत्तर्हि ममानवाप्तं किमपि नास्त्यवाप्तसकलकामत्वात् । अथ कामनातीतं परं ब्रह्म प्राप्तव्यमिति मनोरथस्तर्हि किमवाप्तव्यं तत्स्वरूपेणाहमेवास्मि । एवं विधोऽप्यहं कर्मणि वर्त एवातः परिशेषाल्लोकसंग्रहार्थमेवेत्यर्थः ॥ २२ ॥

**यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ॥**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३ ॥**

यदि हि पुनरहं न वर्तेयं जातु कदा चित् कर्मण्यतन्द्रितोऽनलसः सन् मम श्रेष्ठस्य सतो वर्त्म मार्गमनुवर्तन्ते मनुष्या हे पार्थ सर्वशः सर्वप्रकारैः ॥ २३ ॥

**आ० टी०** । लोकसंग्रहोऽपि न ते कर्तव्यो विफलत्वादित्याशङ्क्याह **यदि हीति** ॥ २३ ॥

**प० टी०** । अथ व्यतिरेकेऽनिष्टमाह यदिति । यद्यहं जातु कदाचिदप्यतन्द्रितोऽनलसः सन् कर्मणि न वर्तेयं कर्म नानुतिष्ठेयं तर्हि ममैव वर्त्म मार्गः सर्वशः सर्वे मनुष्या अनुवर्तन्तेऽनुवर्तेरन् ॥ २३ ॥

**उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ॥**
**संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥**

तथा च दोष इत्याह उदिति । उत्सीदेयुर्विनश्येयुरिमे सर्वे लोका लोकस्थितिनिमित्तस्य कर्मणोऽभावात् न कुर्यां कर्म चेदहम्, किंच संकरस्य च कर्ता स्यां तेन कारणेनोपहन्यामिमाः प्रजाः प्रजानामनुग्रहाय प्रवृत्तस्तदुपहतिमुपहननं कुर्यामित्यर्थः । ममेश्वरस्याननुरूपमापद्येत यदि पुनरहमिव त्वं कृतार्थबुद्धिरात्मविदन्यो वा तस्याप्यात्मनः कर्तव्याभावेऽपि परानुग्रह एव कर्तव्य इति ॥ २४ ॥

**आ० टी०** । श्रेष्ठस्य तव मार्गानुवर्तित्वं मनुष्याणामुचितमेवेत्याशङ्क्य दूषयति **तथाचेत्यादिना** । ईश्वरस्य कर्मण्यप्रवृत्तौ तदनुवर्तिनामपि कर्मानुपपत्तेरिति हेतुमाह **लोकस्थितीति** । इतश्चेश्वरेण कर्म कर्तव्यमित्याह **किंचेति** । यदि कर्म न कुर्यामिति शेषः । संकरकरणस्य कार्यं कथयति **तेनेति** । प्रजोपहतिरपि प्राप्यते चेत् किं तया तव स्यादिति तत्राह **प्रजानामिति** । त्वामनाचरन्तमनुवर्ततां सर्वेषां को दोषः स्यादित्यपेक्षायामीश्वरस्य कृतार्थतया कर्मानुष्ठानाभावे तदनुवर्तिनामपि तदभावादेव स्थितिहेत्वभावात् पृथिव्यादिभूतानां विनाशप्रसङ्गाद्वर्णाश्रमधर्मव्यवस्थानुपपत्तेश्चाधिकृतानां प्राणभृतां पापोपहतत्वप्रसंगात् परानुग्रहार्थं प्रवृत्तिरीश्वरस्येत्युक्तं संप्रति लोकसंग्रहाय कर्म कुर्वाणस्य कर्तृत्वाभिमानेन ज्ञानाभिभवे प्राप्ते प्रत्याह **यदि पुनरिति** । कृतार्थबुद्धित्वे हेतुमाह **आत्मविदिति** । यथावदात्मानमवगच्छन् कर्तृत्वाद्यभिमानाभावात् कृतार्थो भवत्येवेत्यर्थः । अर्जुनादन्यत्रापि ज्ञानवति कृतार्थबुद्धित्वं कर्तव्यत्वाद्यभिमानहीने तुल्यमित्याह **अन्यो वेति** । तस्य तर्हि कर्मानुष्ठानमफलत्वादनवकाशमित्याशङ्क्याह **तस्यापीति** । कर्तव्य इत्यात्मविदापि परानुग्रहाय कर्तव्यमेव कर्मेत्याहेति शेषः ॥ २४ ॥

**प० टी०** । नन्वसङ्गोदासीनस्य तव लोके किं प्रयोजनमित्याशङ्क्य वर्णाश्रमधर्मप्रवर्तकः सन् परमकारुणिकोऽस्मीत्याह **उत्सीदेयुरिति** । अहं चेत्कर्म न कुर्यां तर्हीमे लोका उत्सीदेयुः स्वकर्मलोपेन भ्रंशेयुः । ततश्च यो वर्णसंकरो भविष्यति तस्य कर्ताहमेव स्यां तेन मत्कृपापात्रत्वेन स्थिताः प्रजा उपहन्यां मालिन्योपहताः कुर्याम् । यथा मार्गभ्रष्टानां रङ्कानां व्याघ्रचोरादिभीतिर्मा भूदिति कृपया कोऽपि मार्गद्रष्टा भवति प्रकृतेऽपि तथैव ॥ २४ ॥

**सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ॥**
**कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥**

सक्ता इति। सक्ताः कर्मण्यस्य कर्मणः फलं मम भविष्यतीति केचिदविद्वांसो यथा कुर्वन्ति भारत, कुर्याद्विद्वानात्मवित्तथासक्तः सन्। तद्वत् किमर्थं करोति तच्छृणु चिकीर्षुर्यथा कर्तुमिच्छुर्लोकसंग्रहम् ॥ २५ ॥

आ० टी० । दृष्टान्तदार्ष्टान्तिकरूपं श्लोकं व्याकरोति **सक्ता इत्यादिना** । असक्तः सन् कर्तृत्वाभिमानं फलाभिसन्धिं वाकुर्वन्निति यावत् ॥ २५ ॥

प० टी० । एवमस्मद्दृष्टान्तेन सद्भिरपि कथं न वर्तितव्यमित्याह **सक्ता इति** । अविद्वांसः परमार्थानभिज्ञाः कर्मजडाः कर्माणि सक्ताः साक्षात्कर्मणः फलावश्यंभावनियम इति निश्चित्य फलाशया प्रवृत्ताः सन्तो यथा कुर्वन्त्येवमसक्तोऽपि विद्वांस्तथाविधमार्गमनुल्लङ्घ्य कुर्यात् । किं भूतो लोकसंग्रहं चिकीर्षुरिति पूर्ववत् ॥ २५ ॥

**न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम् ॥**
**जोषयेत्[1] सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥ २६ ॥**

एवं लोकसंग्रहं चिकीर्षोर्ममात्मविदः कर्तव्यमस्त्वन्यस्य वा लोकसंग्रहमुक्त्वा ततस्तस्यात्मविद इदमुपदिश्यते नेति । बुद्धेर्भेदो बुद्धिभेदो मयेदं कर्तव्यं भोक्तव्यं चास्य कर्मणः फलमिति निश्चयरूपाया बुद्धेर्भेदनं चालनं बुद्धिभेदस्तं न जनयेन्नोत्पादयेदज्ञानामविवेकिनां कर्मसंगिनां कर्मण्यासक्तानामासङ्गवतां, किं नु कुर्याज्जोषयेत् कारयेत् सर्वकर्माणि विद्वान् स्वयं तदेवाविदुषां कर्म युक्तोऽभियुक्तः समाचरन् ॥ २६ ॥

आ० टी० । वृत्तमनूद्योत्तरश्लोकमवतारयति **एवमिति** । कर्तव्यं कर्मेति शेषः । पूर्वार्धमेवं व्याख्यायोत्तरार्धं प्रश्नपूर्वकमवतार्य व्याचष्टे **किंनु कुर्यादिति** । सर्वकर्माणि कारयेत्तेषु प्रीतिं कुर्वन्निति शेषः । कथं कारयेदित्याकाङ्क्षायामाह **तदेवेति** ॥ २६ ॥

प० टी० ।अथ कृपालुना लोकानां तत्त्वज्ञानमेव कथं नोपदिश्यत इत्याशङ्क्य न ह्यज्ञानां तत्त्वोपदेशाधिकार इत्याह **नबुद्धिभेदमिति** । कर्मसंगिनां कर्ममार्गप्रवृत्तानामात्मोपदेशेन बुद्धिभेदं न जनयेद्यतस्तथा कृते सत्युभयभ्रष्टता स्यात् । तर्हि किं कुर्यादित्याह **योजयेदिति** । युक्तः कर्मकौशलवान् विद्वानपि समाचरन् सम्यगाचरन् सन् सर्वकर्माणि योजयेत्कारयेज्जोपयेत्सेवेत वा ॥ २६ ॥

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ॥**
**अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ २७ ॥**

---

१ योजयेत्—मु० पु० पा०

अविद्वानज्ञः कथं कर्मसु सज्जत इत्याह प्रकृतेरिति । प्रकृतेः प्रकृतिः प्रधानं सत्त्वरजस्तमसां गुणानां साम्यावस्था तस्याः प्रकृतेर्गुणैर्विकारैः कार्यकरणरूपैः क्रियमाणानि कर्माणि लौकिकानि शास्त्रीयाणि च सर्वशः सर्वप्रकारैरहंकारविमूढात्मा कार्यकरणसंघात आत्मप्रत्ययोऽहंकारस्तेन विविधं मूढ आत्मान्तःकरणं यस्य सोऽयं कार्यकरणधर्मा कार्यकरणाभिमान्यविद्यया कर्माण्यात्मनि मन्यमानस्तत्तत्कर्मणामहं कर्तेति मन्यते ॥ २७ ॥

आ० टी० । अज्ञानां कर्मसंगिनामित्युक्तं तेनोत्तरश्लोकस्य संगतिमाह अविद्वानिति । कर्तृत्वमात्मनो वास्तवमित्यभ्युपगमाद्विद्वान् कथं कुर्वन्नेव तस्याभावं पश्यतीत्याशङ्क्याह प्रकृतेरिति । कर्मस्वविदुषः सक्तिप्रकारं प्रकटयन् व्याकरोति प्रकृतेरित्यादिना । प्रधानशब्देन मायाशक्तिरुच्यते, अविद्ययेत्युभयतः संबध्यते ॥ २७ ॥

प० टी० । अथ कर्मकरणे सर्वेषां विधिस्तुल्य एव तथा च विद्वदविदुषां को भेद इत्याह प्रकृतेरिति द्वाभ्याम् । प्रकृतेर्गुणैः प्रकृतिकार्यैरिन्द्रियैः क्रियमाणानि सर्वाणि तान्यहमेव करोमीत्यहंकारेणेन्द्रियादिष्वात्माध्यासेन विमूढ आत्मा बुद्धिर्यस्य सोऽहं कर्तेति मन्यते कर्तृत्वाभिनिविष्टो भवति तेन बध्यते ॥ २७ ॥

**तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ॥**
**गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥ २८ ॥**

यः पुनर्मन्यते तत्त्वविदिति । तत्त्ववित्तु महाबाहो कस्य तत्त्वविद् गुणकर्मविभागयोर्गुणविभागस्य कर्मविभागस्य च तत्त्वविदित्यर्थः । गुणाः करणात्मका गुणेषु विषयात्मकेषु वर्तन्ते नात्मेति मत्वा न सज्जते सक्तिं न करोति ॥ २८ ॥

आ० टी० । अज्ञस्य कर्मसु शक्तिमुक्त्वा विदुषस्तदभावमभिदधाति यः पुनरिति । तत्त्वं याथार्थ्यं वेत्तीति व्युत्पत्त्या तत्त्वविदिति तुशब्देनाज्ञाद्विशिष्टो निर्दिष्टः । प्रश्नपूर्वकं द्वितीयपादमवतार्य व्याचष्टे कस्येत्यादिना । गुणानामेव गुणेषु वर्तमानत्वमयुक्तं निर्गुणत्वात्तेषामित्याशङ्क्य विभजते गुणा इति । कार्यकरणानामेव विषयेषु प्रवृत्तिरात्मनस्तु कूटस्थत्वान्नैवमिति ज्ञात्वा तत्त्ववित् कर्मसु दृढतरं कर्तव्याभिमानं न करोतीत्यर्थः ॥ २८ ॥

प० टी० । अथ ज्ञानिनो विशेषं दर्शयति तत्त्वविदिति । गुणकर्मविभागयोस्तत्त्वविन्नाहं गुणात्मक इति गुणेभ्य आत्मनो विभागो विभक्तत्वम्, न मे कर्माणीति कर्मभ्योऽप्यात्मनो विभागस्तयोस्तत्त्वं वेत्तीति तत्त्ववित् । गुणा इन्द्रियाणि गुणेषु विषयेषु वर्तन्ते स्वभावतः प्रवृत्तानीति मत्वा न सज्जते कर्तृत्वाभिनिवेशं न करोति । तदुक्तम्–'धूलिधूमाम्बुदैर्यद्वन्मलिनं क्रियते नभः । परामृष्टस्तथैवात्मा विशुद्धः प्राकृतैर्गुणैः' इति ॥ २८ ॥

**प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ॥**
**तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥ २९ ॥**

ये पुनः प्रकृतेरिति । प्रकृतेर्गुणैः सम्यङ् मूढाः संमोहिताः सन्तः सज्जन्ते गुणानां कर्मसु गुणकर्मसु वयं कर्म कुर्मः फलायेति, तान् कर्मसंगिनोऽकृत्स्नविदः कर्मफलमात्रदर्शिनो मन्दान् मन्दप्रज्ञान् कृत्स्नविदात्मवित् स्वयं न विचालयेद् बुद्धिभेदकरणमेव चालनं तन्न कुर्यादित्यर्थः ॥ २९ ॥

आ० टी० । विद्वानविद्वानित्युभावपि प्रकृत्य विद्वानविदुषो बुद्धिभेदं न कुर्यादित्युपसंहरति **ये पुनरिति** । प्रकृतेरुक्ताया गुणैर्देहादिभिर्विकारैः संमूढास्तानेवात्मत्वेन मन्यमाना ये ते गुणानां तेषामेव देहादीनां कर्मसु व्यापारेषु सज्जन्ते सक्तिं दृढतरामात्मीयबुद्धिं कुर्वन्तीत्याह **प्रकृतेरित्यादिना** । तेषामनात्मविदां स्वयमात्मविद् बुद्धिभेदं नापादयेदित्याह **तानित्यादिना** ॥ २९ ॥

प० टी० । अथ 'न बुद्धिभेदं जनयेद्' इत्युपसंहरति **प्रकृतेरिति** । प्रकृतेर्गुणैः सत्त्वादिभिः संमूढा मोहं प्राप्ताः सन्तो गुणकर्मसु गुणेष्विन्द्रियेषु तत्कर्मसु द्रष्टव्यश्रोतव्यादिषु च ये सज्जन्ते तानकृत्स्नविद एकैकेन्द्रियोपासकान् कृत्स्नं वेत्तीति कृत्स्नवित्कृत्स्नं सर्वेन्द्रियचालकमात्मानं वेत्ति न स विचालयेत् कर्माणि करचरणव्यापारं कुर्वतः पुरुषानपि भ्रंशं न प्रापयेत् । श्रुतिरपि शातपथी—"स योत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोत एकैकेन भवत्यात्मेत्येवोपासीतात्र ह्येते सर्वे एक भवति तदेतत्पदनीयमस्य सर्वस्य यदयमात्मानेन ह्येतत्सर्वं वेद यथा ह वै पदेनानुविन्देदेवं कीर्तिं श्लोकं विन्दते य एवं वेद"इति । भाष्यम्—पूर्वश्रुतौ प्राणन्नेव प्राणो नाम भवतीत्यादिना सर्वेन्द्रियाण्यात्मन एष कर्मनामानि भवन्तीत्युक्तं तत्र य एकैकमुपास्ते आत्मानभिज्ञः सन् एकैकेन्द्रियोपासनां करोति न स वेद न जानाति । एष एकैकेन्द्रियगुणाकृत्स्नो भवति । अथ कृत्स्नः केन प्रकारेण भवतीत्याह **आत्मेति** । सर्वेन्द्रियेषु स्वस्वविषयं गृह्णत्सु सत्सु पदार्थभासकोऽयमेवेत्येवोपासीत । यतोत्रात्मनि सर्वे विषयाः प्रतीतिरूपेणैकीभवन्ति । तदेतस्यात्मनः पदनीयं ज्ञातव्यं स्थानं यद्यस्मात् कारणाद् अस्य सर्वस्य जगतोऽयमात्मा । अनेनात्मना सर्वं वेद जानाति । अतो रूपरसादिसर्वपदार्थग्रहणे प्रतीतिरूपेणात्मैव ज्ञातो भवति । तत्र दृष्टान्तमाह यथेति । यथा पदेन गोपदानुसारं गच्छतो गोज्ञानमेवं यो वेद स कीर्तिं श्लोकं यशश्च विन्दते प्राप्नोति । तदुक्तं तैत्तिरीयकेऽपि । "अन्तः प्रविष्टः शास्ता जनानामेकः सन् बहुधा विचारः । शतं शुक्राणि यत्रैकं भवति । सर्वे वेदा यत्रैकं भवन्ति । अतो बहुप्रकारमिन्द्रियमार्गैर्विचरन्ति" इति । शुक्राणि इन्द्रियवृत्तयः । शेषं स्पष्टम् ॥ २९ ॥

**मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ॥**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥**

कथं पुनः कर्मण्यधिकृतेनाज्ञेन मुमुक्षुणा कर्म कर्तव्यमित्युच्यते मयीति। मयि वासुदेवे परमेश्वरे सर्वज्ञे सर्वात्मनि सर्वाणि कर्माणि संन्यस्य निक्षिप्याध्यात्मचेतसा विवेकबुद्ध्याहं कर्तेश्वराय भृत्यवत् करोमीत्यनया बुद्ध्या । किं च निराशीस्त्यक्ताशीर्निर्ममो ममभावश्च निर्गतो यस्य तव स त्वं निर्ममो भूत्वा युध्यस्व विगतज्वरो विगतसंतापो विगतशोकः सन्नित्यर्थः ॥ ३० ॥

आ० टी० । यद्यपि कर्मण्यज्ञोऽधिक्रियते तथापि मोक्ष्यमाणेन तेन कर्म त्यक्तव्यं मोक्षस्य कर्मासाध्यत्वान्न तु तेन कर्म कर्तुं शक्यं कर्मणः सापेक्षितविरोधित्वादिति शङ्कते कथमिति ।

श्लोकेनोत्तरमाह **उच्यत** इति । यथोक्ते परस्मिन्नात्मनि सर्वकर्मणां समर्पणे कारणमाह **अध्यात्मेति** । विवेकबुद्धिमेव व्याकरोति **अहमिति** । दर्शितरीत्या कर्मसु प्रवृत्तस्य कर्तव्यान्तरमाह **किं चेति** । त्यक्ताशीः फलप्रार्थनाहीनः सन्नित्यर्थः, निर्ममो भूत्वा पुत्रभ्रात्रादिष्विति शेषः । ननु युद्धे नियोगो नोपपद्यते पुत्रभ्रात्रादिहिंसात्मनस्तस्य संतापहेतोर्नियोगविषयत्वायोगादिति तत्राह **विगतेति** ॥३०॥

प० टी० । अथ प्रकृतमनुसरति **मयीति** । सर्वाणि कर्माणि मयि संन्यस्य समर्प्याध्यात्मचेतसान्तर्याम्यधीनोऽहं करोमीति दृष्ट्या निराशीरमुकं मे भूयादिति कामरहितस्तथा यन्निमित्तं तव ज्वरः समुदितोऽभूत्तद्विषये निर्ममो ममताशून्यो भूत्वा ततो विगतज्वरः सन् युध्यस्व ॥ ३० ॥

**ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ॥**
**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ३१ ॥**

यदेतन्मम मतं कर्म कर्तव्यमिति सप्रमाणमुक्तं तत्तथा ये म इति । ये मदीयमिदं मतमनुतिष्ठन्त्यनुवर्तन्ते मानवा मनुष्याः श्रद्धावन्तः श्रद्दधाना अनसूयन्तोऽसूयां च मयि परमगुरौ वासुदेवेऽकुर्वन्तो मुच्यन्ते तेऽप्येवंभूताः कर्मभिर्धर्माधर्माख्यैः ॥ ३१ ॥

आ० टी० । प्रकृतं भगवतो मतमुक्तप्रकारमनुसृत्यैवानुतिष्ठतां क्रममुक्तिफलं कथयति **यदेतदिति** । शास्त्राचार्योपदिष्टेऽदृष्टार्थे विश्वासवत्त्वं श्रद्दधानत्वं, गुणेषु दोषाविष्करणमसूया, अपिर्यथोक्ताया मुक्तेरमुख्यत्वद्योतनार्थः ॥ ३१ ॥

प० टी० । एवमनुष्ठाने गुणमाह **ये मइति** । इदं मे मतं ये मद्वाक्यं श्रद्धावन्तोऽनसूयन्तो दुःखास्पदे कर्माणि प्रवर्तयन्तीति दोषदृष्टिरहिताः सन्तोऽनुतिष्ठन्ति तेऽपिशनैर्ज्ञानिवत्कर्मभिर्मुच्यन्ते ॥ ३१ ॥

**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ॥**
**सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥ ३२ ॥**

ये त्विति । ये तु तद्विपरीता एतन्मे मम मतमभ्यसूयन्तो निन्दन्तो नानुतिष्ठन्ति नानुवर्तन्ते सर्वेषु ज्ञानेषु विविधं मूढास्ते सर्वज्ञानविमूढास्तान् विनष्टान् नाशं गतानचेतसोऽविवेकिनः ॥ ३२ ॥

आ० टी० । भगवन्मताननुवर्तिनां प्रत्यवायित्वं प्रत्याययति **ये त्विति** । तद्विपरीतत्वं भगवन्मतानुवर्तिभ्यो वैपरीत्यं, तदेव दर्शयति **एतदित्यादिना** । अभ्यसूयन्तस्तत्रासन्तमपि दोषमुद्भावयन्त इत्यर्थः, सर्वज्ञानानि सगुणनिर्गुणविषयाणि, प्रमाणप्रमेयप्रयोजनविभागतो विविधत्वम् ॥ ३२ ॥

प० टी० । विपक्षे दोषमाह **ये त्वेतदिति** । ये तु प्राङ्निरूपितप्रकाररहिताः सन्तो मे मतं नानुतिष्ठन्ति तानचेतसो भ्रान्तांस्तथा सर्वज्ञानरहितान्नष्टान् विद्धि ॥ ३२ ॥

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ॥**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥**

कस्मात् पुनः कारणात्त्वदीयं मतं नानुतिष्ठन्तः परधर्माननुतिष्ठन्ति, स्वधर्मं च नानुवर्तन्ते, तत्प्रतिकूलाः कथं न बिभ्यति तच्छासनातिक्रमदोषात्, तत्राह सदृशमिति । सदृशमनुरूपं चेष्टते चेष्टां करोति कस्याः स्वस्याः स्वकीयायाः प्रकृतेः प्रकृतिर्नाम पूर्वकृतधर्माधर्मादिसंस्कारो वर्तमानजन्मादावभिव्यक्तः सा प्रकृतिस्तस्याः सदृशमेव सर्वो जन्तुर्ज्ञानवानपि चेष्टते किं पुनर्मूर्खस्तस्मात् प्रकृतिं यान्त्यनुगच्छन्ति भूतानि प्राणिनो निग्रहो निषेधरूपः किं करिष्यति मम चान्यस्य वा ॥ ३३ ॥

आ० टी० । भगवन्मतानुवर्तनमन्तरेण परधर्मानुष्ठाने स्वधर्माननुष्ठाने च कारणं पृच्छति कस्मादिति । भगवत्प्रतिकूलत्वमेव तत्र कारणमित्याशङ्क्याह तत्प्रातिकूला इति । राजानुशासनातिक्रमे दोषदर्शनाद्भगवदनुशासनातिक्रमेऽपि दोषसंभवात् तत्प्रतिकूलत्वं भयकारणमित्यर्थः । उत्तरत्वेन श्लोकमवतारयति सदृशमिति । सर्वस्य प्राणिवर्गस्य प्रकृतिवशवर्तित्वे कैमुतिकन्यायं सूचयति ज्ञानवानपीति । सर्वाण्यपि भूतान्यनिच्छन्त्यपि प्रकृतिसदृशीं चेष्टां गच्छन्तीति निगमयति प्रकृतिमिति । भूतानां प्रकृतेरधीनत्वेऽपि प्रकृतिर्भगवता निग्राह्येत्याशङ्क्याह निग्रह इति । का पुनरियं प्रकृतिर्यदनुसारिणी भूतानां चेष्टेति पृच्छति प्रकृतिर्नामेति । भगवदभिप्रेतां प्रकृतिं प्रकटयति पूर्वेति । आदिशब्देन ज्ञानेच्छादि संगृह्यते । यथोक्तः संस्कारः स्वशक्त्या प्रवर्तकश्चेत् प्रलयेऽपि प्रवृत्तिः स्यादित्याशङ्क्य विशिनष्टि वर्तमानेति । सर्वो जन्तुरित्युक्तं विवेकिप्रवृत्तेरतथात्वादिभिश्चाविशेषादिति न्यायमनुस्मरन्नाह ज्ञानवानिति । ज्ञानवतामज्ञानवतां च प्रकृत्यधीनत्वाविशेषे फलितमाह तस्मादिति। प्रकृतिं यान्ति प्रकृतिसदृशीं चेष्टां गच्छन्त्यनिच्छन्त्यपि सर्वाणि भूतानीत्यर्थः । प्रकृतेर्भगवता तत्तुल्येन वा केन चिद् निग्रहमाशङ्क्यावतारितचतुर्थपादस्यार्थापेक्षितं पूरयति मम चेति ॥ ३३ ॥

प० टी० । ननु सर्वे ज्ञातारोऽपि भगवद्वाक्यविश्वासादिन्द्रियाणि निगृह्य कथं स्वधर्माचरणं न कुर्वन्तीत्याह सदृशमिति । ज्ञानवानपि प्रकृतेः सदृशं चेष्टते प्राचीनकर्मसंस्काराधीनस्वभावः प्रकृतिस्तत्सदृशं तदनुरूपं यथा भवति तथा गुणदोषज्ञानवानपि चेष्टते किं पुनरज्ञश्चेष्टते इति । यतः सर्वाणि भूतानि प्रकृतिं यान्त्यनुवर्तन्ते। एवं सतीन्द्रियनिग्रहः किं करिष्यति प्रकृतेर्बलिष्ठत्वात्॥३३॥

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ॥**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥**

यदि सर्वो जन्तुरात्मनः प्रकृतिसदृशमेव चेष्टते न च प्रकृतिशून्यः कश्चिदस्ति ततः पुरुषकारस्य विषयानुपपत्तेः शास्त्रानर्थक्यप्राप्ताविदमुच्यते इन्द्रियस्येति । इन्द्रियस्येन्द्रियस्यार्थे[1] सर्वेन्द्रियाणामर्थे शब्दादिविषये इष्टे रागोऽनिष्टे द्वेष इत्येवं प्रतीन्द्रियार्थं रागद्वेषाववश्यंभाविनौ तत्रायं पुरुषकारस्य शास्त्रार्थस्य विषय उच्यते शास्त्रार्थे प्रवृत्तः पूर्वमेव रागद्वेषयोर्वशं नागच्छेद्, या

१ इन्द्रियस्येन्द्रियस्येति–पा० लि० पु०

हि पुरुषस्य प्रकृतिः सा रागद्वेषपुरःसरैव स्वकार्ये पुरुषं प्रवर्तयति तदा स्वधर्मपरित्यागः परधर्मानुष्ठानं च भवति, यदा पुना रागद्वेषौ तत्प्रतिपक्षेण नियमयति तदा शास्त्रदृष्टिरेव पुरुषो भवति न प्रकृतिवशस्तस्मात्तयो रागद्वेषयोर्वशं न गच्छेद् यतस्तौ ह्यस्य पुरुषस्य परिपन्थिनौ श्रेयोमार्गस्य विघ्नकर्तारौ तस्करावित्यर्थः ॥ ३४ ॥

आ॰ टी॰ । सर्वस्य भूतवर्गस्य प्रकृतिवशवर्तित्वे लौकिकवैदिकपुरुषकारविषयाभावाद्विधिनिषेधानर्थक्यमिति शङ्कते यदीति । ननु यस्य न प्रकृतिरस्ति तस्य पुरुषकारसंभवादर्थवत्त्वं तद्विषये विधिनिषेधयोर्भविष्यति नेत्याह न चेति । शङ्कितदोषं श्लोकेन परिहरति इदमित्यादिना । वीप्सायाः सर्वकरणागोचरत्वं दर्शयति सर्वेति । प्रत्यर्थं रागद्वेषयोरव्यवस्थायाः प्राप्तौ प्रत्यादिशति इष्ट इति । प्रतिविषयं विभागेन तयोरन्यतरस्यावश्यकत्वेऽपि पुरुषकारविषयाभावप्रयुक्त्या प्रागुक्तं दूषणं कथं समाधेयमित्याशङ्क्याह तत्रेति । तयोरित्याद्यवतारितं भागं विभजते शास्त्रार्थस्येति। प्रकृतिवशत्वाज्जन्तोर्नैव नियोज्यत्वमित्याशङ्क्याह याहीति । रागद्वेषद्वारा प्रकृतिवशवर्तित्वे स्वधर्मत्यागादि दुर्वारमित्युक्तमिदानीं विवेकविज्ञानेन रागादिनिवारणे शास्त्रीयदृष्ट्या प्रकृतिपारवश्यं परिहर्तुं शक्यमित्याह यदेति । मिथ्याज्ञाननिबन्धनौ हि रागद्वेषौ तत्प्रतिपक्षत्वं विवेकविज्ञानस्य मिथ्याज्ञानविरोधित्वादवधेयम् । रागद्वेषयोर्मूलनिवृत्त्या निवृत्तौ प्रतिबन्धध्वंसे कार्यसिद्धिमभिसन्धायोक्तं तदेति । एवकारस्यान्ययोगव्यवच्छेदकत्वं दर्शयति नेति । पूर्वोक्तं नियोगमुपसंहरति तस्मादिति । तत्र हेतुमाह यत इति । हिशब्दोपात्तो हेतुर्यत इति प्रकटितः स च पूर्वेण तच्छब्देन संबन्धनीयः । पुरुषपरिपन्थित्वमेव तयोः सोदाहरणं स्फोरयति श्रेयोमार्गस्येति ॥ ३४ ॥

प॰ टी॰ । नन्वेवं प्राचीनस्वभावाधीना चेत्पुरुषस्य प्रकृतिस्तर्हि विधिनिषेधवैयर्थ्यं स्यादित्याह इन्द्रियस्येति । मुख्येन्द्रियस्य मनस इन्द्रियस्यार्थरूपरसादिविषये रागद्वेषौ व्यवस्थिताववश्यं भाविनौ स्याताम् । स्वानुकूलेऽर्थे विषये रागः प्रीतिः प्रतिकूले च द्वेषस्तथापि तयोर्वशं नागच्छेत् तद्वशवर्ती न भवेत् । हि यस्मात् कारणात् तौ रागद्वेषावस्य मुमुक्षोर्मनसः परिपन्थिनौ क्षोभकत्वेन शत्रुवदुपस्थितौ । न हि कश्चिल्लोकेऽपि वैरिवशवर्ती भवति दुःखहेतोः प्रवृत्त्यभावात् अथ तौ प्रकृतिबलेन वशं नयतस्तथापि मदाश्रयबलेन शास्त्राचार्यबलेन च वशं न गच्छेदित्यर्थः । ननु तत्रापि प्राक्संस्कार एव शरणमिति चेन्न । "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः" इत्यादिवाक्यैरुपास्यः श्रुतिबोधितत्वात् ॥ ३४ ॥

**श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ॥**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥**

तत्र रागद्वेषप्रयुक्तो मन्यते शास्त्रार्थमप्यन्यथा परधर्मोऽपि धर्मत्वादनुष्ठेय एवेति तदसत् श्रेयानिति । श्रेयान् प्रशस्यतरः स्वधर्मः स्वकीयधर्मो विगुणोऽपि विगतगुणोऽप्यनुष्ठीयमानः परधर्मात् स्वनुष्ठितात् साद्गुण्येन संपादितादपि, स्वधर्मे स्थितस्य निधनं मरणमपि श्रेयः परधर्मे स्थितस्य जीवितात्, क-

---

१ शास्त्रार्थ–पा० कस्मिंश्चित्पुस्तके २ विव पथः–पा० लि० पु० ।

स्मात् परधर्मो भयावहः नरकादिलक्षणं भयमावहति यतः ॥ ३५ ॥

आ० टी० । रागद्वेषयोः श्रेयोमार्गप्रतिपक्षत्वं प्रकटयितुं परमतोपन्यासद्वारा समनन्तरश्लोकमवतारयति **तत्रेत्यादिना** । व्यवहारभूमिः सप्तम्यर्थः । शास्त्रार्थस्यान्यथा प्रतिपत्तिमेव प्रत्याययति **परधर्मोऽपीति** । स्वधर्मवदित्यपेरर्थः । अनुमानं दूषयन्नुत्तरत्वेन श्लोकमुत्थापयति **तदसदिति** । क्षत्रधर्माद् युद्धाद् दुरनुष्ठानां परिव्राड्धर्मस्य भिक्षाशनादिलक्षणस्य स्वानुष्ठेयतया मयापि कर्तव्यत्वं प्राप्तमित्याशङ्क्य व्याचष्टे **श्रेयानिति** । उक्तेऽर्थे प्रश्नपूर्वकं हेतुमाह **कस्मादित्यादिना** । स्वधर्ममवधूय परधर्ममनुतिष्ठतः स्वधर्मातिक्रमकृतदोषस्य दुष्परिहरत्वान्न तत्त्यागः साधीयानित्यर्थः ॥३५॥

प० टी० । ननु धर्माविशेषाच्छमदमादिसम्पदुपेतं ब्रह्मकर्मैवानुष्ठेयम्, स्वपरहिंसाप्रधानत्वेन दुःखनिदानं क्षत्रधर्मं कथं प्रवार्तितव्यामित्याशङ्क्याह **श्रेयानिति** । सुष्ठु यथा भवति तथानुष्ठितात्परधर्माच्छमदमादिसंपदुपेताद् ब्राह्मणधर्मात्सकाशादुक्तप्रकारेण विगुणोऽपि स्वधर्मः श्रेयान् प्रशस्यतरः प्रोक्तः। यथा सौभाग्यादिगुणोपेतायाः परमातुः सकाशात्कुरूपापि स्वमाता हितावहा भवति । अतः स्वधर्मे मरणं श्रेयः श्रुतिबोधितस्वमार्गादिसाधनत्वात् । परधर्मस्तु भयावहः निषिद्धत्वेन निरयप्रापकत्वात् । अन्यथा वेदेन चातुर्वर्ण्यं कथं कल्प्येत ॥ ३५ ॥

## अर्जुन उवाच ।

## अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ॥
## अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥

यद्यप्यनर्थमूलं ध्यायतो विषयान् रागद्वेषौ ह्यस्य परिपन्थिनाविति चोक्तं विक्षिप्तमनवधारितं च यदुक्तं तत् संक्षिप्तं निश्चितं चेदमेवेति ज्ञातुमिच्छन्नर्जुन उवाच । ज्ञाते हि तस्मिन् तदुच्छेदाय यत्नं कुर्यादिति अथेति । अथ केन हेतुभूतेन प्रयुक्तः सन् राज्ञेव भृत्योऽयं पापं कर्म चरत्याचरति पूरुषः स्वयमनिच्छन्नपि हे वार्ष्णेय वृष्णिकुलप्रसूत बलादिव नियोजितो राज्ञेवेत्युक्तो दृष्टान्तः ॥ ३६ ॥

आ० टी० । प्रागेवानर्थमूलस्योक्तत्वात् पुनस्तज्जिज्ञासया प्रश्नानुपपत्तिरित्याशङ्क्याह **यद्यपीति** । विक्षिप्तं विविधेषु प्रदेशेषु क्षिप्तं दर्शितमिति यावत्, अनवधारितमनेकत्रोक्तत्वादनेकधा वा विवेककामादिभिर्विकल्पितत्वादित्यर्थः । नन्वनर्थमूलं परिहर्तव्यं तत् किमिति ज्ञातुमिष्यते तत्राह **ज्ञाते हीति** । कुर्यामिति तज्ज्ञानमर्थवदिति शेषः । वाक्यारम्भार्थत्वमथशब्दस्य गृहीत्वा प्रश्नवाक्यं व्याकरोति **अथेत्यादिना** । अनिच्छतोऽपि बलादेव दुश्चरिते प्रेरितत्वे दृष्टान्तमाचष्टे **राज्ञेवेति** । विनियोज्यत्वस्येच्छासापेक्षत्वात्तदभावे तदसिद्धिमाशङ्क्य प्रागुक्तं स्मारयति **राज्ञेवेत्युक्त** इति ॥३६॥

प० टी० ।अथ तयोर्न वशमागच्छेदिति यदुक्तं तदशक्यं मन्यमानोऽर्जुनः पृच्छति। **अथेति** । भो वार्ष्णेय वृष्णिकुलोद्भव कृष्ण पापं कर्तुमिच्छन्निव पुरुषः केन प्रयुक्तः सन् पापं चरति । किंवत् **बलादिव** बलात्कारेण नियोजित इवाज्ञप्त इव यथा त्वयाहमिति सूचयन् वार्ष्णेयेति संबुद्धिः ॥ ३६ ॥

---

१ यद्वा स्व आत्मा तस्य धर्मोऽध्यात्मावगतिरूपो विगुणः सत्त्वादिप्राकृतगुणवियुक्तो मुक्तिहेतुत्वात् । इन्द्रियाणि पराणि तेषां धर्मः प्राकृतिकस्ततस्मात्स्वनुष्ठितादपि स्वधर्मे निधनं श्रेयोऽपुनर्भवत्वात्परधर्मो भयावहोऽविद्यारूपतया संसारहेतुत्वात्—इत्यधिकं लि० पु० ।

श्रीभगवानुवाच ।

**काम एष क्रोध एष रजोगुणसमुद्भवः ॥**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥**

शृणु त्वं तं वैरिणं सर्वानर्थकरं यं त्वं पृच्छसि भगवानुवाच । 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्यस्याथ मोक्षस्य षण्णां भग इतीङ्गना' । ऐश्वर्यादि षट्कं यस्मिन् वासुदेवे नित्यमप्रतिबन्धत्वेन सामस्त्येन च वर्तते 'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यांच स वाच्यो भगवानिति' । उत्पत्त्यादिविषयं च विज्ञानं यस्य स वासुदेवो वाच्यो भगवानिति । काम इति । काम एष सर्वलोकवशं कुर्वन् शत्रुर्यन्निमित्ता सर्वानर्थप्राप्तिः प्राणिनां स एष कामः प्रतिहतः केन चित् क्रोधत्वेन परिणमतेऽतः क्रोधोऽप्येष एव रजोगुणसमुद्भवो रजश्च तद् गुणश्च रजोगुणः समुद्भवो यस्य स कामो रजोगुणसमुद्भवो रजोगुणस्य वा समुद्भवः कामो ह्युद्भूतो रजः प्रवर्तयन् पुरुषं प्रवर्तयति तृष्णया ह्यहंकारित इति दुःखिनां रजःकार्ये सेवादौ प्रवृत्तानां प्रलापः श्रूयते । महाशनो महदशनमस्येति महाशनोऽत एव महापाप्मा कामेन प्रेरितो जन्तुः पापं करोत्यतो विद्ध्येनं काममिह संसारे वैरिणम् ॥३७॥

**आ० टी०** । संप्रति प्रतिवचनं प्रस्तौति **शृण्विति** । तस्य वैरित्वं स्फोरयति **सर्वेति** । अप्रस्तुतं किमिति प्रस्तूयते तत्राह **यं त्वमिति** । भगवच्छब्दार्थं निर्धारयितुं पौराणिकं वचनमुदाहरति **ऐश्वर्यस्येति** । समग्रस्येत्येतत् प्रत्येकं विशेषणैः संबध्यते, अथशब्देन तदुपायो ज्ञानं विवक्ष्यते । उदाहृतवचसस्तात्पर्यमाह **ऐश्वर्यादीति** । स वाच्यो भगवानिति संबन्धः । तत्रैव पौराणिकं वाक्यान्तरं पठति **उत्पत्तिमिति** । भूतानामिति प्रत्येकमुत्पत्त्यादिभिः संबध्यते कारणार्थौ चोत्पत्तिप्रलयशब्दौ क्रियामात्रस्य पुरुषान्तरगोचरत्वसंभवादागतिर्गतिश्चेत्यागामिन्यौ संपदापदौ सूच्येते । वाक्यान्तरस्यापि तात्पर्यमाह **उत्पत्त्यादीति** । वेत्तीत्युक्तः साक्षात्कारो विज्ञानमित्युच्यते, समग्रैश्वर्यादिसंपत्तिसमुच्चयार्थश्चकारः । उक्तलक्षणो भगवान् किमुक्तवानिति तदाह **काम इति** । कामस्य सर्वलोकशत्रुत्वं विशदयति **यन्निमित्तेति** । तथापि कथं तस्यैव क्रोधत्वं तदाह **स एष इति** । कामक्रोधयोरेव हेयत्वद्योतनार्थं कारणं कथयति **रजोगुण इति** । कारणद्वारा कामादेरेव हेयत्वमुक्त्वा कार्यद्वारापि तस्य हेयत्वं सूचयति **रजोगुणस्येति** । कामस्य पुरुषप्रवर्तकत्वमेव न रजोगुणजनकत्वमित्याशङ्क्याह **कामो हीति** । तत्रैवानुभवानुसारिणीं लोकप्रसिद्धिं प्रमाणयति **तृष्णया हीति** । तस्य योग्यायोग्यविभागमन्तरेण बहुविषयत्वं दर्शयति **महाशन इति** । बहुविषयत्वप्रयुक्तं कर्म निर्दिशति **अत इति** । सर्वविषयत्वेऽपि कुतोऽस्य पापत्वमित्याशङ्क्याह **कामेनेति** । कामस्योक्तविशेषणवत्त्वे फलितमाह **अत इति** ॥ ३७ ॥

**प० टी०** । अत्रोत्तरं भगवानाह **कामएष इति** । यदा विवेकिनोऽपि पुरुषस्य सत्त्वगुणः प्रच्छन्नो भवति तदा रजोगुणः प्रादुर्भवति । तस्मात्कामक्रोधावुत्पद्येते तयोः क्रमेण स्वरूपमाह

महाशन इति । तत्र कामो महाशनो दुष्पूरत्वात् क्रोधस्तु महापाप्मातिक्रूरत्वादनयोरुभयोर्दुर्जयत्वं व्यञ्जितम् । एवमेनं कामं क्रोधं वा वैरिणं विद्धि । तथा च शत्रुरेव पापे प्रवर्तयति न तु मित्रम् । तथा त्वं बन्धुसुहृद्विषयकामेन स्वधर्मत्यागरूपेण पातके प्रवर्तस इत्यर्थः ॥ ३७ ॥

**धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ॥**
**यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥**

कथं वैरीति दृष्टान्तैः प्रत्याययति धूमेनेति । धूमेन सहजेनाव्रियते वह्निः प्रकाशात्मकोऽप्रकाशात्मकेन यथा वादर्शो मलेन च यथोल्बेन गर्भवेष्टनेन जरायुणावृत आच्छादितो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥

आ० टी० । उत्तरश्लोकमवतारयति **कथमिति** । अनेकदृष्टान्तोपादानं प्रतिपत्तिसौकर्यार्थम् । सहजस्य धूमस्य प्रकाशात्मकवह्निं प्रत्यावरकत्वसिद्ध्यर्थं विशिनष्टि **अप्रकाशात्मकेनेति** ॥ ३८ ॥

प० टी० । अथ सत्त्वप्रच्छादने दृष्टान्तत्रयमाह **धूमेनेति** । यथार्द्रेन्धनोपाधिप्रसृतेन धूमेनाग्निराव्रियते यथा वा प्रतिबिम्बदर्शक आदर्शो मलेनाच्छिद्यते । यथोल्बेन गर्भावरणीभूतेन चर्मणा गर्भ आव्रियते तथा तेन कामेन क्रोधेन चेदं सत्त्वोत्पन्नं ज्ञानमाव्रियते ॥ ३८ ॥

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ॥**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥**

किं पुनस्तदिदंशब्दवाच्यं यत् कामेनावृतमित्युच्यते आवृतमिति । आवृतमेतेन ज्ञानं ज्ञानिनो नित्यवैरिणा ज्ञानी हि जानात्यनेनाहमनर्थे प्रयुक्तः पूर्वमेवातो दुःखी च भवति नित्यमेव, अतोऽसौ ज्ञानिनो नित्यवैरी न तु मूर्खस्य स हि कामं तृष्णाकाले मित्रमिव पश्यंस्तत्कार्ये दुःखे प्राप्ते जानाति तृष्णयाहं दुःखित्वमापादित इति न पूर्वमेवातो ज्ञानिन एव नित्यवैरी । किंरूपेण कामरूपेण काम इच्छैव रूपमस्येति कामरूपस्तेन दुष्पूरेण दुःखेन पूरणमस्येति दुष्पूरोऽतस्तेनानलेन नास्यालं पर्याप्तिर्विद्यत इत्यनलस्तेन ॥ ३९ ॥

आ० टी० । सामान्यतो निर्दिष्टं विशेषतो निर्देष्टुमाकाङ्क्षापूर्वकमनन्तरश्लोकमवतारयति **किं पुनरिति** । कामस्य ज्ञानं प्रत्यावरणसिद्ध्यर्थं ज्ञानिनो नित्यवैरिणेत्यादिविशेषणम् । प्रतीकमादाय व्याचष्टे **आवृतमित्यादिना** । ज्ञानिनां प्रति वैरित्वेऽपि नित्यवैरित्वं कामस्य कथमित्याह **ज्ञानी हीति** । अनर्थप्राप्तिमन्तरेण कामस्य प्रसंगावस्था पूर्वमेवेत्युच्यते, अतःशब्देन कामप्रसक्तिरेव परामृश्यते, नित्यमेवेत्युत्पत्त्यवस्था कार्यावस्था च कामस्य कथ्यते । ननु सर्वस्यापि कामात्मता न प्रशस्तेति कामो नित्यवैरी भवति ततः कुतो ज्ञानिविशेषणमित्याशङ्क्याह **न त्विति** । अज्ञस्य नासौ नित्यवैरीत्येतदुपपादयति **स हीति** । कार्यप्राप्तिप्रागवस्था पूर्वमित्युक्ता, अज्ञं प्रति वैरित्वे सत्यपि कामस्य नित्यवैरित्वाभावे फलितमाह **अत इति** । स्वरूपतो नित्यवैरित्वाविशेषेऽपि ज्ञानाज्ञानाभ्यामवान्तरभेदसिद्धिरित्यर्थः । आकाङ्क्षाद्वारा प्रकृतं वैरिणमेव स्फोरयति **किं रूपेणेत्यादिना** ॥ ३९ ॥

प० टी० । अथ तदेव विविच्याह आवृतमिति । पूर्वं कामक्रोधौ पृथङ्निरूपितावथैकत्वेनाह । यतः काम एव केनाप्याक्षिप्तः सन् क्रोधत्वेन परिणमति । एवमेकेन कामरूपेण ज्ञानमावृतम् । किंभूतेन ज्ञानिनः पुरुषस्य नित्यवैरिणा । अज्ञस्य भोगावसरे कामः सुखहेतुर्दुःखहेतुर्भवति परिणामे दुःखरूपः । ज्ञानिनस्त्वनर्थानुसन्धानेन नित्यं दुःखहेतुत्वान्नित्यवैरिणेत्युक्तम् । किंभूतेन दुष्पूरेणानलेन च दुष्पूरेण दुर्भरेण विषयाप्राप्तावनलेनाग्निरूपेण अथ कामस्य स्वरूपं दुष्पूरत्वं च निरूपयितुं शातपथी श्रुतिरपि—"एतावान्वै कामो नेत्संश्च नातो भूयो विन्देत्तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथवित्तं मे स्यादथ कर्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्योकृत्स्नतः" इति । भाष्यम्—पूर्वश्रुत्या निरूपितः काम एतावानेतादृशः। अत्र नेदिति निपातो निषेधार्थे। स कामः सन्न भवति तथाप्यतः कामात्सकाशाद्भूयो महत्तरं न विन्दते न जानाति यत एवं तस्मात्कामात्प्रथममेकाकी मातृगर्भादेक एवोत्पन्नोऽनतरं जाया मे स्यादिति कामयते अथानन्तरं प्रजायेय प्रजात्वेन भूयासम् "आत्मावै पुत्रनामासि" इति श्रुतेः । तत्पोषणार्थं वित्तं मे स्यात्तदर्थं सेवा कृष्यादिकर्म कर्तव्यमित्येतावान् काम इति पूर्वेणान्वयः । अथ कामस्य दुष्पूरत्वमाह स यावदिति । स कामयानः पुरुष एतेषां पूर्वोक्तानां कामानां मध्ये यावदेकैकं कामं न प्राप्नोति तावदह अकृत्स्न एव अकृतार्थ इति मन्यते इयमेव तस्याकृत्स्नता ॥ ३९ ॥

## इन्द्रियाणि मनोबुद्धिरस्याधिष्ठानमुच्यते ॥
## एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥

किमधिष्ठानः पुनः कामो ज्ञानस्यावरणत्वेन वैरी सर्वस्येत्यपेक्षायामाह ज्ञाते हि शत्रोरधिष्ठाने सुखेन शत्रुनिबर्हणं कर्तुं शक्यत इति इन्द्रियाणीति । इन्द्रियाणि मनो बुद्धिश्चास्य कामास्याधिष्ठानमुच्यते, एतैरिन्द्रियादिभिराश्रयैर्विमोहयति विविधं मोहयत्येष कामो ज्ञानमावृत्याच्छाद्य देहिनं शरीरिणम् ॥४०॥

आ० टी० । कामस्य निराश्रयस्य कार्यकरत्वाभावं मत्वा प्रश्नपूर्वकमाश्रयं दर्शयति किमधिष्ठान इति । कामस्य नित्यवैरित्वेन परिजिहीर्षितस्य किमित्यधिष्ठानं ज्ञाप्यते तत्राह ज्ञाते हीति। इन्द्रियादीनां कामाधिष्ठानत्वं प्रकटयति एतैरिति । नन्वेताभिरिति वक्तव्ये कथमेतैरित्युच्यते तत्राह इन्द्रियादिभिरिति ॥ ४० ॥

प० टी० । अथ कामोन्मूलनप्रकारं निरुरूपपिषुस्तदधिष्ठानमाह इन्द्रियाणीति।अस्य कामस्याधिष्ठानमाश्रयीभूतास्त्रयो भवन्ति । दर्शनादाविन्द्रियाणि, संकल्पे मनः, प्रादुर्भावे बुद्धिः, एतैस्त्रिभिरधिष्ठानभूतैः कृत्वा ज्ञानमावृत्य देहिनं जीवं विमोहयन्ति ॥ ४० ॥

## तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ॥
## पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥

यत एवं तस्मादिति । तस्मात्त्वमिन्द्रियाण्यादौ पूर्वं नियम्य वशीकृत्य भरतर्षभ । पाप्मानं पापाचारं कामं प्रजहि परित्यज हि यस्माद् एनं प्रकृतं वैरिणं ज्ञानविज्ञाननाशनं ज्ञानं शास्त्रत आचार्यतश्चात्मादीनामवरोधः विज्ञा-

नं विशेषतस्तदनुभवस्तयोर्ज्ञानविज्ञानयोः श्रेयःप्राप्तिहेत्वोर्नाशनं नाशस्तन्नाशं प्रजहि ह्यात्मनः परित्यजेत्यर्थः ॥ ४१ ॥

आ० टी० । तेषां कामाश्रयत्वे सिद्धे साश्रयस्य तस्य परिहर्तव्यत्वमाह यत इति । तस्मादिन्द्रियादीनामाश्रयत्वादिति यावत्, पूर्वं कामनिरोधात् प्रागवस्थायामित्यर्थः । तेषु नियमितेषु मनोबुद्ध्योर्नियमः सिध्यति तत् प्रवृत्तेरितरप्रवृत्तिव्यतिरेकेणाफलत्वादिति भावः, पापमूलतया कामस्य तच्छब्दवाच्यत्वमुन्नेयम् । कामस्य परित्यज्यत्वे वैरित्वं हेतुस्तमेव हेतुं साधयति ज्ञानेति । ज्ञानविज्ञानशब्दयोरर्थभेदमावेदयति ज्ञानमित्यादिना ॥ ४१ ॥

प०टी०। अथ क्रमेणास्योपरमप्रकारमाह तस्मादिति । यस्मादयं बुद्धिपर्यन्तगतिस्तस्मात्कारणादादौ प्रथमत इन्द्रियाणि चक्षुरादीनि नियम्य विषयपराङ्मुखानि कृत्वैनं पाप्मानमत्युग्रं कामं प्रजहि घातय । किंभूतं ज्ञानविज्ञाननाशनं ज्ञानं शास्त्रोत्थं विज्ञानमनुभवस्तयोः प्रतिबन्धकीभूतम् ॥ ४१॥

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः॥**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४२ ॥**

इन्द्रियाण्यादौ नियम्य कामं शत्रुं जहीत्युक्तं तत्र किमाश्रयः कामं जह्यादित्युच्यते इन्द्रियाणीति । इन्द्रियाणि श्रोत्रादीनि पञ्च देहं स्थूलं बाह्यं परिच्छिन्नं चापेक्ष्य सौक्ष्म्यान्तरस्थत्वव्यापित्वाद्यपेक्ष्य पराणि प्रकृष्टान्याहुः पण्डितास्तथेन्द्रियेभ्यः परं मनः संकल्पविकल्पात्मकं, तथा मनसस्तु परा बुद्धिर्निश्चयात्मिका, तथा यः सर्वदृश्येभ्यो बुद्ध्यन्तेभ्योऽन्तरोयं देहिनमिन्द्रियादिभिराश्रयैर्युक्तः कामो ज्ञानावरणद्वारेण मोहयतीत्युक्तं बुद्धेः परतस्तु सः स बुद्धेर्द्रष्टा परमात्मा ॥ ४२ ॥

आ० टी० । पूर्वोक्तमनूद्य कामत्यागस्य दुष्करत्वं मन्वानो रसोऽप्यस्येत्यत्रोक्तमेव स्पष्टीकर्तुं प्रश्नपूर्वकं श्लोकान्तरमवतारयति इन्द्रियाणीत्यादिना । पञ्चेति ज्ञानेन्द्रियवत् कर्मेन्द्रियाण्यपि वागादीनि गृह्यन्ते । किमपेक्षया तेषां परत्वं तत्राह देहमिति । तथापि केन प्रकारेण परत्वं तदाह सौक्ष्म्येति । आदिशब्देन कारणत्वादि गृह्यते । इन्द्रियापेक्षया सूक्ष्मत्वादिना मनसः स्वरूपोक्तिपूर्वकं परत्वं कथयति तथेति । मनसि दर्शितं न्यायं बुद्धावतिदिशति तथा मनसस्त्विति। यो बुद्धेरित्यादि व्याचष्टे तथेत्यादिना। आत्मनो यथोक्तविशेषणस्याप्रकृतत्वमाशङ्क्याह यं देहिनमिति ॥४२॥

प० टी० । अथेन्द्रियाद्यधिष्ठानत्रयगतः कामो जेतुं न शक्यतेऽतस्तेभ्योऽपि विविक्तमात्मानं दर्शयति इन्द्रियाणीति । इन्द्रियाणि देहादिभ्यो ग्राह्येभ्यः पराण्युत्कृष्टान्याहुः सूक्ष्मत्वादर्थप्रकाशकत्वाच्च । तत एवार्थादतिरिक्तत्वमुक्तं भवति इन्द्रियेभ्यश्च संकल्पात्मकं मनः परमुत्कृष्टं तत्प्रवर्तकत्वात् । मनसस्तु बुद्धिर्निश्चयात्मिका परा निश्चयपूर्वकत्वात् संकल्पस्य । यस्तु बुद्धेः परतस्तत्साक्षित्वेनावस्थितः सर्वान्तरः स आत्मा । अत्रार्थे कठशाखीया श्रुतिः—"इन्द्रियेभ्यः परा ह्यर्था ह्यर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः । एवं सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति ॥ ४२ ॥

---

१ नाशकरमात्मनः इति लि० पु० । नाशस्तन्नाशनं मु० द्वितीयपु० । २ बुद्धेर्यः इति मु० पु० ।

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ॥**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३ ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुन-संवादे कर्मयोगो नाम तृतीयोऽध्यायः ॥ ३ ॥

ततः किम् एवमिति । एवं बुद्धेः परमात्मानं बुध्वा ज्ञात्वा संस्तभ्य सम्यक् स्तम्भनं कृत्वा स्वेनैवात्मना संस्कृतेन मनसा सम्यक् समाधायेत्यर्थः । जह्येनं शत्रुं महाबाहो कामरूपं दुरासदं दुःखेनासद आसादनं प्राप्तिर्यस्य तं दुरासदं दुर्विज्ञेयानेकविशेषमिति ॥ ४३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यपूज्यपादश्रीशंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये कर्मप्रशंसायोगोनाम तृतीयोऽध्यायः ॥ ३ ॥

**आ० टी०** । इन्द्रियादिसमाधानपूर्वकमात्मज्ञानात् कामजयो भवतीत्युपसंहरति **एवमित्यादि**-ना । संस्कृत मना मनःसमाधान हेतुरिति सूचयति **संस्तभ्येति** । प्रकृत शत्रुमेव विशिनष्टि **काम-रूपमिति** । तस्य दुरासदत्वे हेतुमाह **दुर्विज्ञेयेति** । अनेको विशेषस्तादृशो महाशनत्वादिस्तदनेनो-पायभूता कर्मनिष्ठा प्राधान्येनोक्ता उपेया तु ज्ञाननिष्ठा गुणत्वेनेति विवक्तव्यम् ॥ ४३ ॥ ॐतत्सत्

इत्यानन्दगिरिकृतटीकायां तृतीयाध्यायः ॥ ३ ॥

**प० टी०** । अथोक्तार्थमुपसंहरति **एवमिति** । भो महाबाहो पुरुषार्थिन् एवममुना प्रकारेण **बुद्धेः** परं बुद्ध्यातिरिक्तं तत्साक्षिणं परमात्मानं बुध्वात्मनैवंभूतनिश्चयात्मिकया बुद्ध्यात्मानं मनः संस्तभ्य निश्चलं कृत्वा कामरूपं दुरासदं दुर्जयं शत्रुं जहि मारय । अथ तदेव बृहदारण्यके प्रथमतो देवासुरसंग्रामव्याजेन द्व्याहप्राजापत्यादिदशभिः कण्डिकाभिः प्रतिपादितं तत्रोपसंहा-रश्रुतिस्तु " अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्ते विदुरनेनवै-नउद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्त्स यथाश्मानमृत्वा लोष्टो विध्वंसेतैवं हैव विध्वंसमाना विष्व-ञ्चो विनेशुस्ततो देवा अभवन् परासुरा भवत्यात्मना परास्य द्विषन् भ्रातृव्यो भवति य एवं वेद" इत्या-दिः। भाष्यम्—अथानन्तरं हशब्दो वृत्तान्तद्योतनार्थः । मौनप्रयत्नास्ते देवा इममासन्यं समीपे च वर्तमानं सर्वेन्द्रियचालकं मुख्यप्राणं वक्ष्यमाणेन्द्रशब्दव्यपदेश्यं प्रत्यूचुस्त्वं न उद्गायेति । त्वं नोऽ-स्मदर्थमुद्गानं कुरु । तस्योद्गानमवाग्जप्रणवरूपं तेन सोऽपि पूर्ववदुदगायत् । तदुक्तं छान्दोग्ये "अथा-ध्यात्मम् । एव मुख्यप्राणस्तमुद्गीथमुपासीतेति" इति । अथ त प्राणमुद्गातारं ज्ञात्वा कामक्रोधाद्यसुरा-स्तमभिद्रुत्याविध्यन् वधितवन्तो विध्वंसमाना विशीर्यमाणाश्च विष्वञ्चोऽपि विश्वस्मिन्नञ्चन्ति ते विश्वञ्चो नानागतयो विनेशुर्विनाशं प्राप्ताः । अत्र दृष्टान्तमाह । यथाश्मानं पाषाणमृत्वा प्राप्य लोष्टः पांसुपिण्डोः विध्वंसते तथैव मुख्यप्राणाभिहतास्ते दैत्या नाशं प्राप्ता इत्यर्थः। अत्रैतदुक्तं भवति। प्राण-नं जीवनं करोतीति प्राणो वागाद्यधिदैवतानां शक्त्युत्पादको हिरण्यगर्भः । तथा कामादीनां प्रसरस्तु बुद्धिपर्यन्तमेव । तदग्रे कामादीनामभाव एवं संभवतीत्यर्थः । ततो दैत्यनाशानन्तरं देवाः परासुरा अभवन्। अत्र मध्यमपदलोपी समासः । पराभूता असुरा यैस्ते परासुरा विजयवन्त इत्यर्थः । एवमुक्त-

प्रकारं दैवासुरसंग्रामं वेद स आत्मना भवति कामादीन् परास्य पराभूय स्वेनात्मना कृत्वा संपद्यते न कामाद्यैः । एवमात्मज्ञानसंपत्तौ जातायां तस्य द्विषन् द्वेष्टापि भ्रातृव्यो भवतीति । अयमेवार्थः सामवेदे कल्मापसाम्नोपपादितः—"हाउ ३ सेतूँस्तर ३ दुस्तरान् ३दानेनादानं ३हाउ३ अहमस्मि प्रथमाजा ऋतस्या हाउ ३ सेतूँस्तर ३ दुस्तरान् ३ अक्रोधेन क्रोधम्" इत्यादिः । भाष्यम्—यथा जलप्रवाहप्रातिबन्धकाः सेतवो भवन्ति तद्वदखण्डैकरसानुभवे चत्वारः सेतवः सन्ति । ते तु अदानक्रोधश्रद्धानृतानि । तांश्चतुरः सेतूंस्तर उल्लङ्घ्य । तत्र प्रथमसेतोरुल्लङ्घने उपायमाह दानेनेति । यद्ब्रह्मार्पणत्वेन दीयते तद्दानशब्दव्यपदेश्यम् ततोऽन्यज्जायापुत्रार्थं यद्व्ययीक्रियते तददानमेवं दानेन कृत्वा अदानं तर । अदानमपि ब्रह्मार्पणत्वेन गणयेदित्यर्थः । यतोहमृतस्य सत्यस्य ब्रह्मणः प्रथमजा प्रथमं शबलत्वेनोपस्थितो हिरण्यगर्भोऽस्मि । यत्किंचिद्दीयते तत्सर्वं मदर्पणमेव भवतीत्यर्थः । तथैव क्रोधलक्षणं द्वितीयसेतुमक्रोधेन क्षमया कृत्वा तरेति । अत्र पूर्वदेवेभ्योऽमृतस्य नाभा इत्यादिश्रुतयोऽस्माभिः शतश्लोकभाष्ये सम्यग्व्याख्याताः सन्ति । तदुक्तम्—'क्षमो न वाचां शिरसो न शूलं न चित्ततापो न तनोर्विमर्दः । न चापि हिंसादिरनर्थयोगः श्लाघ्या परं क्रोधजयेऽहमेका' इति। अथाध्यायतात्पर्यम । यज्ञाद्यं वर्णधर्मोचितमपि नियतं कर्म शर्मप्रदं स्यान्न त्याज्यं कार्यमेतद्द्विगुणमपि यतोऽकर्मणः कर्मशस्तम् । जीवन्मर्त्यः कदाचित्करचरणयुतो नैव तिष्ठत्यकर्मा तस्माच्छ्रेयान् स्वधर्मो यदुपतिगदितश्चित्तशुद्ध्यै तृतीये ॥३॥ इति दैवज्ञपण्डितविरचितायां परमार्थप्रपायां तृतीयाध्यायः ॥३॥

इति तृतीयाध्यायः ॥३॥

---

## अथ चतुर्थोऽध्यायः ।

### श्रीभगवानुवाच ।

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥
एवं परंपराप्राप्तमिमं राजर्षयो विदुः ॥
स कालेनेह महता योगो नष्टः परंतप ॥ २ ॥
स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ॥
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

योऽयं योगोऽध्यायद्वयेनोक्तो ज्ञाननिष्ठालक्षणः ससंन्यासः स कर्मयोगोपायो यस्मिन् वेदार्थः परिसमाप्तः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च, गीतासु च सर्वास्वयमेव योगो विवक्षितो भगवतोऽतः परिसमाप्तं वेदार्थं मन्वानस्तं वंशकथनेन स्तौति श्रीभगवान् । इममध्यायद्वयेनोक्तं योगं विवस्वत आदित्याय सर्गादौ प्रोक्तवानहं जगत्परिपालयितॄणां क्षत्रियाणां बलाधानाय तेन योगबलेन युक्तास्ते समर्था भवन्ति ब्रह्म परिरक्षितुं ब्रह्मक्षत्रे परिपालिते जगत्परिपालयितुमलमव्ययमव्ययफलत्वान्न ह्यस्यसम्यग्दर्शननिष्ठालक्षणस्य मोक्षाख्यं

फलं व्येति स च विवस्वान् मनवे प्राह मनुरिक्ष्वाकवे स्वपुत्रायादिराजायाब्रवीत् ॥ १ ॥

एवमिति । एवं क्षत्रियपरंपराप्राप्तमिमं राजर्षयो राजानश्च ते ऋषयश्च राजर्षयो विदुरिमं योगं, स योगः कालेनेह महता दीर्घेण नष्टो विच्छिन्नसंप्रदायः संवृत्तो हे परंतप आत्मनो विपक्षभूताः परे उच्यन्ते तान् शौर्यतेजोगभस्तिभिर्भानुरिव तापयतीति परंतपः शत्रुतापन इत्यर्थः ॥ २ ॥

दुर्बलानजितेन्द्रियान् प्राप्य नष्टं योगमिममुपलभ्य लोकं च पुरुषार्थसंबन्धिनं स एवायमिति । स एवायं मया ते तुभ्यमद्येदानीं योगः प्रोक्तः पुरातनः, भक्तोऽसि मे सखा चासीति रहस्यं हि यस्मादेतदुत्तमं योगं ज्ञानमित्यर्थः ॥ ३ ॥

आ० टी० पूर्वाभ्यामध्यायाभ्यां निष्ठाद्वयात्मनो योगस्य गीतत्वाद् वेदार्थस्य च समाप्तत्वाद् वक्तव्यशेषाभावाद् उक्तयोगस्य कृत्रिमत्वशङ्कानिवृत्तये वंशकथनपूर्विकां स्तुतिं भगवानुक्तवानित्याह **श्रीभगवानिति** । तदेतद्भगवद्वचनं वृत्तानुवादद्वारेण प्रस्तौति **योऽयमिति** । उक्तमेव योगं विभज्यानुवदति **ज्ञानेति** । संन्यासेनेतिकर्तव्यतया सहितस्य ज्ञानात्मनो योगस्य कर्माख्यो योगो हेतुरतश्चोपायोपेयभूतं निष्ठाद्वयं प्रतिष्ठापितमित्यर्थः । उक्ते योगद्वये प्रमाणमुपन्यस्यति **यस्मिन्निति** । अथवा ज्ञानयोगस्य कर्मयोगोपायत्वमेव स्फुटयति **यस्मिन्निति** । प्रवृत्त्या लक्ष्यते ज्ञायते कर्मयोगो निवृत्त्या च लक्ष्यते ज्ञानयोग इति विभागः । यद्यपि पूर्वस्मिन्नध्यायद्वये यथोक्तनिष्ठाद्वयं व्याख्यातं तथापि वक्ष्यमाणाध्यायेषु वक्तव्यान्तरमस्तीत्याशङ्क्याह **गीतासु चेति** । कथं तर्हि समनन्तराध्यायस्य प्रवृत्तिरत आह **अत इति** । वंशकथनं संप्रदायोपन्यासः संप्रदायो देशश्च, अकृत्रिमत्वशङ्कानिवृत्त्या योगः स्तुतौ पर्यवस्यति । गुरुशिष्यपरंपरोपन्यासमेवानुक्रामति **इममिति** । इममित्यस्य संनिहितं विषयं दर्शयति **अध्यायेति** । योगं ज्ञाननिष्ठालक्षणं कर्मयोगोपायलभ्यमित्यर्थः । स्वयमकृतार्थानां प्रयोजनव्यग्राणां परार्थप्रवृत्त्यसंभवाद्भगवतस्तथाविधप्रवृत्तिदर्शनात् कृतार्थता कल्पनीयेत्याह **विवस्वत इति** । अव्ययवेदमूलत्वादव्ययत्वं योगस्य गमयितव्यं किमिति भगवता कृतार्थेनापि योगप्रवचनं कृतमिति तदाह **जगदिति** । कथं यथोक्तेन योगेन क्षत्रियाणां बलाधानं तदाह **तेनेति** । युक्ताः क्षत्रिया इति शेषः, ब्रह्मशब्देन ब्राह्मणत्वजातिरुच्यते । यद्यपि योगप्रवचनेन क्षत्रं रक्षितं तेन च ब्राह्मणत्वं तथापि कथं रक्षणीयं जगदशेषं रक्षितमित्याशङ्क्याह **ब्रह्मेति** । ताभ्यां हि कर्मफलभूतं जगदनुष्ठानद्वारा रक्षितुं शक्यमित्यर्थः । योगस्याव्ययत्वे हेत्वन्तरमाह **अव्ययफलत्वादिति** । ननु कर्मफलवदुक्तयोगफलस्यापि साध्यत्वेन क्षयिष्णुत्वमनुमीयते नेत्याह **न हीति** । अपुनरावृत्तिश्रुतिप्रतिहतमनुमानं न प्रमाणीभवतीति भावः । भगवता विवस्वते प्रोक्तो योगस्तत्रैव पर्यवस्यतीत्याशङ्क्याह **स चेति** । स्वपुत्रायेत्युभयत्र संबध्यते, आदिराजायेक्ष्वाकोः सूर्यवंशप्रवर्तकत्वेन वैशिष्ट्यमुच्यते ॥ १ ॥

**आ० टी०** । यथोक्ते योगे परंपरागते विशिष्टजनसंमतिमुदाहरति **एवमिति** । तस्य कथं

१ परंपरया प्राप्त—पा० लि० पुस्तके ।

२ क्वचित्तु संबन्धिनमित्यन्तः पाठो २ श्लोक संबद्धएव दृश्यते ।

संप्रति वक्तव्यत्वं तदाह **स कालेनेति**। पूर्वार्धं व्याकरोति **एवमित्यादिना**। ऐश्वर्यसंपत्तिमत्त्वं राजत्वं तेषामेव सूक्ष्मार्थनिरीक्षणक्षमत्वमृषित्वमिहेति भगवतोऽर्जुनेन सह संव्यवहारकालो गृह्यते । परंतपेति संबोधनं विभजते **आत्मन** इति ॥ २ ॥

**आ० टी०** । किमिति वर्तमाने काले प्रकृतो योगः संप्रदायरहितोऽभूदित्याशङ्क्याधिकार्यभावादित्याह **दुर्बलानिति** । तदेव दौर्बल्यं प्रकृतोपयोगित्वेन व्याकरोति **अजितेन्द्रियानिति** । यद्यपि कामक्रोधादिप्रधानान् पुरुषान् प्रतिलभ्य कामक्रोधादिभिरभिभूयमानो योगो नष्टो विच्छिन्नसंप्रदायः संजातस्तथापि योगादृते पुरुषार्थो लोकस्य लभ्यते चेत् किमनेन योगोपदेशेनेत्याशङ्क्य यथोक्तयोगाभावे परमपुरुषार्थाप्राप्तेर्मैवमित्याह **लोकं चेति** । पूर्वो योगो विच्छिन्नसंप्रदायोऽधुना त्वन्ययोगो मदर्थमुच्यते भगवतेत्याशङ्क्याह **स एवेति** । कस्मादन्यस्मै कस्मै चित् पुरातनो योगो नोक्तो भगवतेत्याशङ्क्याह **भक्तोऽसीति** । उक्तमधिकारिणं प्रति योगस्य वक्तव्यत्वे हेतुमाह **रहस्यं हीति** । अनादिवेदमूलत्वाद् योगस्य पुरातनत्वं भक्तिः शरणबुद्ध्या प्रीतिस्तया युक्तो निजरूपमवेक्ष्य भक्तो विवक्षितः समानवयाः स्निग्धः सहायः सखेत्युच्यते । एतदिति कथं योगो विशेष्यते तत्राह **ज्ञानमिति** ॥ ३ ॥

**प० टी०** । द्वितीयतृतीयाध्यायाभ्यां ज्ञानकर्मयोगौ निरूप्येदानीं ब्रह्मार्पणत्वेनैव कर्म मोक्षप्रापकं भवतीति निरूपणार्थं चतुर्थाध्यायस्य प्रवृत्तिस्तत्र वक्ष्यमाणमप्रमेयं यदुपदेशात्परंपरया बहुभिरनुष्ठितमित्याह **इममिति** त्रिभिः । इमं वक्ष्यमाणं योगमव्ययमनुपक्षीणं पूर्वं विवस्वते प्रोक्तवान् । ततस्तमेव योगं विवस्वान् सूर्यो मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् । एवमिक्ष्वाकोः सूर्यवंशप्रधानीभूताद्राज्ञः सकाशात्परंपरया प्राप्तं राजर्षयो राजान ऋषयश्च विदुर्ज्ञातवन्तः । श्रुतिरपि—"तद्धैतत्पश्यन्नृषिर्वामः प्रतिपेदेऽहं मनुरभवङ् सूर्यश्च" इति। स एवायं पुरातनयोगो महता कालेन नष्ट उज्झितोऽभूत्सोऽयं योग इति कारणान्मया तेऽद्य प्रोक्तो वक्तुमुपक्रान्तः । इतीति किं यतस्त्वं मद्भक्तः सन् सखा भवसि सखित्वलक्षणा भक्तिस्त्वयि वर्तत इत्यर्थः । अथान्यत्रास्यानिर्वाच्यत्वमाह । किं भूतो योगः, उत्तमं रहस्यमेकान्तवेद्यमित्यर्थः ॥ १ ॥ २ ॥ ३ ॥

## अर्जुन उवाच ।

## अपरं भवतो जन्म परं जन्म विवस्वतः ॥
## कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥

भगवता विप्रतिषिद्धमुक्तमिति मा भूत् कस्यचिद्बुद्धिरिति परिहारार्थं चोद्यमिव कुर्वन्नर्जुन उवाच अपरमिति । अपरमर्वाग् वसुदेवगृहे भवतो जन्म परं पूर्वं सर्गादौ जन्मोत्पत्तिर्विवस्वत आदित्यस्य तत् कथमेतद्विजानीयामविरुद्धार्थतया यस्त्वमेवादौ प्रोक्तवानिमं योगं स एव त्वमिदानीं मह्यं प्रोक्तवानसीति ॥ ४ ॥

**आ० टी०** । भगवति लोकस्यानीश्वरत्वशङ्कां निवर्तयितुं चोद्यमुद्भावयति **भगवतेति** । परिहारार्थं भगवतो मनुष्यवदवस्थितस्यानीश्वरत्वमुपेत्य तद्वचने शङ्कितविप्रतिषेधस्येतिशेषः, भगवतो निजरूपमुपेत्यनेदं चोद्यं किंतु लीलाविग्रहं गृहीत्वेति वक्तुं चोद्यमिवेत्युक्तम् । एतच्छब्दार्थमेव स्फुटयति **यस्त्वमिति** ॥ ४ ॥

नस्तु शत्रुत्वे शत्रुभावे वर्तेतात्मैव शत्रुवद् यथा नात्मा शत्रुरात्मनोऽपकारी तथा-त्मात्मनोऽपकारे वर्तेतेत्यर्थः ॥ ६ ॥

आ० टी० । उक्तमनूद्य प्रश्नपूर्वकं श्लोकान्तरमवतारयति आत्मैवेत्यादिना । एकस्यैवा-त्मनो मिथो विरुद्धं बन्धुत्वं रिपुत्वं च लक्षणभेदमन्तरेणायुक्तमिति चोदिते वशीकृतसंघातस्यात्मानं प्रति बन्धुत्वमितरस्य शत्रुत्वमित्यविरोधं दर्शयति बन्धुरित्यादिना । वशीकृतसंघातस्य विक्षेपाभा-वादात्मनि समाधानसंभवादुपपन्नमात्मानं प्रति बन्धुत्वमिति साधयति तस्येति । अवशीकृतसंघा-तस्य पुनर्विक्षेपोपपत्तेरात्मनि समाधानायोगादात्मानं प्रति शत्रुभावे प्रसिद्धशत्रुवदात्मैव शत्रुत्वेन वर्तेतेत्युत्तरार्धं व्याकरोति अनात्मन इति । दृष्टान्तं व्याचष्टे यथेति । उक्तदृष्टान्तवशादवशी-कृतसंघातः स्वस्य हितानाचरणादात्मानं प्रति शत्रुरेवेति दार्ष्टान्तिकमाह तथेति ॥ ६ ॥

प० टी० । अथात्मनो बन्धुत्वं रिपुत्वं च प्रकटयन्नाह बन्धुरिति । तस्य पुरुषस्यात्मा मन आत्मनो जीवस्य बन्धुः सुहृदुक्तः । तस्य कस्य, येन पुरुषेणात्मनैव स्वेनैवात्मा कार्यकरणसंघातरूपो जीवो जितो वशीकृतोऽथानात्मनोऽजितात्मनः पुरुषस्य शत्रुत्व आत्मैव स्वयमेव वर्तेत नान्यः ॥६ ॥

**जितात्मनः प्रशान्तस्य परमात्मा समाहितः ॥**
**शीतोष्णसुखदुःखेषु तथा मानावमानयोः ॥ ७ ॥**

जितात्मन इति । जितात्मनः कार्यकरणादिसंघात आत्मा जितो येन स जितात्मा तस्य जितात्मनः प्रशान्तस्य परमात्मा समाहितः साक्षादात्मभा-वेन वर्तत इत्यर्थः । किं च शीतोष्णसुखदुःखेषु तथा मानेऽवमाने च मानावमा-नयोः पूजापरिभवयोः समः स्यादित्यध्याहारः ॥ ७ ॥

आ० टी० । कथं संयतकार्यकरणस्य बन्धुरात्मेति तत्राह जितात्मन इति । जितकार्यकर-णसंघातस्य प्रकर्षेणोपरतबाह्याभ्यन्तरकरणस्य परमात्मा विक्षेपेण पुनः पुनरनभिभूयमानो निरन्तरं चित्ते प्रथत इत्यर्थः । जितात्मानं संन्यस्तसमस्तकर्माणमधिकारिणं प्रदर्श्य योगाङ्गानि दर्शयति शीतेति । समः स्यादित्यध्याहारः । पूर्वार्धं व्याचष्टे जितेत्यादिना । न केवलं तस्य परमात्मा साक्षादात्मभावेन वर्तते किं तु शीतोष्णादिभिरपि नासौ चाल्यते तत्त्वज्ञानादित्युत्तरार्धं विभजते किं चेति । तेषु समः स्यादिति संबन्धः ॥ ७ ॥

प० टी० । अथ जितात्मनस्तस्मिन्बन्धुत्वं प्रकटयति जितात्मन इति । जित आत्मा मनो येन तस्य प्रशान्तस्य रागादिरहितस्य परं केवलमात्मा शीतोष्णादिषु सत्स्वपि तथा मानावमानयो-रुपस्थितयोः सतोरपि समाहितः स्वात्मनिष्ठो भवति नान्यस्य ॥ ७ ॥

**ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ॥**
**युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥**

ज्ञानेति । ज्ञानविज्ञानतृप्तात्मा ज्ञानं शास्त्रोक्तपदार्थानां परिज्ञानं, वि-ज्ञानं तु शास्त्रतो ज्ञातानां तथैव स्वानुभवकरणं ताभ्यां ज्ञानविज्ञानाभ्यां तृप्तः

संजातालंप्रत्यय आत्मान्तःकरणं यस्य स ज्ञानविज्ञानतृप्तात्मा कूटस्थोऽप्रकम्पो भवतीत्यर्थः। विजितेन्द्रियश्च य ईदृशो युक्तः समाहित इति स उच्यते कथ्यते, स योगी समलोष्टाश्मकाञ्चनः लोष्टाश्मकाञ्चनानि समानि यस्य स समलोष्टाश्मकाञ्चनः ॥ ८ ॥

आ० टी०। चित्तसमाधानमेव विशिष्टफलं चेदिष्टं तर्हि कथंभूतः समाहितो व्यवह्रियते तत्राह **ज्ञानेति**। परोक्षापरोक्षाभ्यां ज्ञानविज्ञानाभ्यां संजातालंप्रत्ययोऽक्रियो हर्षविषादकामक्रोधादिरहितो योगी युक्तः समाहित इति व्यवहारभागी भवतीति पादत्रयव्याख्यानेन दर्शयति **ज्ञानमित्यादिना**। स च योगी परमहंसपरिव्राजकः सर्वत्रोपेक्षाबुद्धिरनातिशयवैराग्यभागीति कथयति **स योगीति** ॥ ८ ॥

प० टी०। अथ योगारूढमुपपाद्योपसंहरति **ज्ञानविज्ञानेति**। ज्ञानं शास्त्रगुरूपादिष्टं विज्ञानमनुभवस्ताभ्यां तृप्तो निरपेक्ष आत्मा चित्तं यस्यातः कूटस्थो निर्विकारोऽत एव विजितेन्द्रियोऽत एव समलोष्टाश्मकाञ्चनो मृत्पिण्डपाषाणसुवर्णेषु समः हेयोपादेयबुद्धिशून्यः स युक्तो योगारूढ इत्युच्यते ॥ ८ ॥

## सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ॥
## साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥

किं च सुहृदिति। सुहृदित्यादिश्लोकार्धमेकपदं। सुहृदिति। प्रत्युपकारमनपेक्ष्योपकर्ता, मित्रं स्नेहवद्, अरिः शत्रुः, उदासीनो न कस्य चित् पक्षं भजते, मध्यस्थो यो विरुद्धयोरुभयोर्हितैषी, द्वेष्य आत्मनोऽप्रियो, बन्धुः संबन्धीत्येषु साधुषु शास्त्रानुवर्तिष्वपि च पापेषु प्रतिषिद्धकारिषु सर्वेष्वेतेषु समबुद्धिः। कः किं कर्मेत्यव्यापृतबुद्धिरित्यर्थः। विशिष्यते विमुच्यत इति वा पाठान्तरं योगारूढानां सर्वेषामयमुत्तम इत्यर्थः ॥ ९ ॥

आ० टी०। योगारूढस्य प्रशस्तत्वमभ्युपेत्य योगस्याङ्गान्तरं दर्शयति **किं चेति**। पदच्छेदः पदार्थोक्तिरिति[1] व्याख्यानाङ्गं संपादयति **सुहृदितीति**। अरिर्नाम परोक्षमपकारकः प्रत्यक्षमप्रियो द्वेष्य इति विभागः। समबुद्धिरिति व्याचष्टे **कः किमिति**। प्रथमो हि प्रश्नो जातिगोत्रादिविषयो द्वितीयो व्यापारविषयः। उक्तप्रकारेणाव्यापृतबुद्धित्वे सर्वोत्कर्षो वा सर्वोपायविमोक्षो वा सिध्यतीत्याह **विशिष्यत इति**। पाठद्वयेऽपि सिद्धमर्थं संगृह्य कथयति **योगारूढानामिति** ॥९॥

प० टी०। अथ समबुद्धित्वमेव विशिनष्टि **सुहृदिति**। सुहृत्स्वभावेनैव हिताशंसी, मित्रं स्नेहवशेनैवोपकारकः, अरिर्घातक उदासीनो विवदमानयोरुभयोरप्युपेक्षकः, मध्यस्थस्तयोरुभयोरपि हिताशंसी द्वेष्टुं योग्यो द्वेष्यः, बन्धुः संबन्धी, साधवः सदाचाराः, पापा दुराचारा एतेषु समा रागद्वेषरहिता बुद्धिर्यस्य स विशिष्यते विशिष्टो भवति ॥ ९ ॥

---

१ पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजनम्। आक्षेपश्च समाधानं व्याख्यानं षड्विधं मतम् ॥ १ ॥

योगी युञ्जीत सततमात्मानं रहसि स्थितः ॥
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥

योगीति । अत एवमुत्तमफलप्राप्तये योगी ध्यायी युञ्जीत समादध्यात् सततं सर्वदात्मानमन्तःकरणं रहस्येकान्ते गिरिगुहादौ स्थितः सन्नेकाक्यसहायो रहसि स्थित एकाकी चेति विशेषणात् संन्यासं कृत्वेत्यर्थः। यतचित्तात्मा चित्तमन्तःकरणमात्मा देहश्च संयतौ यस्य स यतचित्तात्मा निराशीर्वीततृष्णोऽपरिग्रहश्च परिग्रहरहित इत्यर्थः । संन्यासित्वेऽपि सति त्यक्तसर्वपरिग्रहः सन् युञ्जीतेत्यर्थः ॥ १० ॥

आ० टी० । यथोक्तविशेषणवतो योगारूढेमुत्तमत्वे योगानुष्ठाने प्रयतितव्यमित्यङ्गाभिधानानन्तरं प्रधानमभिदधाति अत एवमिति । आदरनैरन्तर्यदीर्घकालत्वं विशेषणत्रयं योगस्य सूचयति सततमिति । तस्यैव पञ्चाङ्गान्युपन्यस्यति रहसीत्यादिना । सर्वदेत्यादरदीर्घकालयोरुपलक्षणम । प्रत्यगात्मानं व्यावर्तयति अन्तःकरणमिति । गिरिगुहादावित्यादिशब्देन योगप्रतिबन्धकदुर्जनादिविधुरो देशो गृह्यते । विशेषणद्वयस्य तात्पर्यमाह रहसीति । योगं युञ्जानस्य संन्यासिनो विशेषणान्तराणि दर्शयति यतेति । सति संन्यासित्वे किमित्यपरिग्रहणमर्थपुनरुक्तेरित्याशङ्क्य कौपीनाच्छादनादिष्वपि शक्तिनिवृत्त्यर्थमित्याह संन्यासित्वेऽपीति ॥ १० ॥

प० टी० । एवं योगारूढत्वदशां निरूप्येदानीं 'योगी युञ्जीत' इत्यादितस्तथा 'स योगी परमो मत' इत्यन्ततश्चतुर्विंशतिभिः श्लोकैः साङ्गमभ्यासयोगं निरूपयति योगीति । योगशास्त्रे तावद्योगत्रयमुपदिष्टम् । तत्र प्राणापानयोगो मनःपवनयोगो जीवब्रह्मणोर्योगश्च एतत्क्रमेण योगत्रयं प्राप्तुमिच्छुरात्मानं मनः सततं युञ्जीत समाहितं कुर्यात् । अथ चित्तक्षोभकाभावसामग्रीमनुवदति रहस्येकान्ते एकाकी संगशून्यो यतं नियमितमात्मा शरीरं येन निराशीर्निराकाङ्क्षोऽपरिग्रहः परिग्रहशून्यः ॥ १० ॥

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ॥
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११ ॥

अथेदानीं योगं युञ्जत आसनाहारविहारादीनां योगसाधनत्वेन नियमो वक्तव्यः, प्राप्तयोगस्य लक्षणं तत्फलादि चेत्यत आरभ्यते, तत्रासनमेव तावत् प्रथममुच्यते शुचाविति । शुचौ शुद्धे विविक्ते स्वभावतः संस्कारतो वा देशे स्थाने प्रतिष्ठाप्य स्थिरमचलमात्मन आसनं नात्युच्छ्रितं नातीवोच्छ्रितं नाप्यतिनीचं तच्च चैलाजिनकुशोत्तरं चैलमजिनं कुशाश्चोत्तरे यस्मिन्नासने तदासनं चैलाजिनकुशोत्तरं पाठक्रमाद्विपरीतोऽत्रानुक्रमश्चैलादीनाम् ॥ ११ ॥

आ० टी० । योगं योगाङ्गानि चोपदिश्योत्तरसंदर्भस्य तात्पर्यमाह अथेति । योगस्वरूपकतिपयतदङ्गप्रदर्शनानन्तर्यमथशब्दार्थः । विहारादीनामित्यादिशब्देन यथोक्तासनादिगतावान्तरभेदग्रहणं, तत्फलादि चेत्यादिशब्देन योगफलं सम्यग्ज्ञानं च तत्फलकैवल्यं ततो भ्रष्टस्याप्य-

न्तिकविनष्टत्वमित्यादि गृह्यते । एवं समुदायतात्पर्ये दर्शिते किमासीनः शयानस्तिष्ठन् गच्छन् कुर्वन् वा युञ्जीतेत्यपेक्षायामनन्तरश्लोकतात्पर्यमाह **तत्रेति** । निर्धारणे सप्तमी प्रथमं योगानुष्ठानस्य प्रधानमासीनः संभवादिति न्यायादिति यावत् । विविक्तत्वं द्वेधा विभजते **स्वभावत इति** । आसनस्यास्थैर्ये तत्रोपविश्य योगमनुतिष्ठतः समाधानायोगाद् योगासिद्धिरित्यभिसंधाय विशिनष्टि **अचलनमिति** । आस्यतेऽस्मिन्निति व्युत्पत्तिमनुश्रित्याह **आसनमिति** । आत्मन इति परकीयासनव्युदासार्थं, पतनभयपरिहारार्थं नात्युच्चमित्युक्तं, नाप्यतिनीचमिति भूतलपाषाणादिसंश्लेषे वातक्षोभाग्निमान्द्याद्यादिसंभावितदेशनिरासार्थं, चैलं वस्त्रमजिनं चर्म पशूनां तच्च मृगस्य कुशा दर्भास्ते चोत्तरे यस्मिन्नुपरिष्टादारभ्य तत्तथोक्तम् । प्रथमं चैलं ततोऽजिनं ततश्च कुशा इति प्रतिपन्नक्रममापातिकं क्रममतिक्रम्यादौ कुशास्ततोऽजिनं ततश्चैलमिति क्रमं विवक्षित्वाह **विपरीतोऽत्रेति** ॥ ११॥

**प० टी** । अथासननियमं दर्शयति **शुचौ देश** इति द्वाभ्याम् । शुचौ पवित्रे तीर्थादिसंनिहिते देशे शीतलतरुच्छायाम्बुप्रवाहमनोरमे प्रदेश आत्मनः स्वस्य स्थिरमचलं मूषककीटकाद्युपद्रवशून्यं यथा भवति तथासनं प्रतिष्ठाप्य किं भूतं नात्युच्छ्रितं नात्युच्चं कदापि पतनसंभवात् तथा नातिनीचं भूसंघट्टनेन गात्रोपद्रवादतो मध्यस्थमित्यर्थः । अथासनरचनामाह **चैलेति** । चैलं वस्त्रम्, अजिनं व्याघ्रादिचर्म, चैलाजिने कुशेभ्य उत्तरे उपरि स्थिते यस्मिन् कुशानामुपरि चर्म तदुपरि वस्त्रमित्यर्थः ॥ ११ ॥

# तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ॥
# उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२ ॥

तत्रेति । प्रतिष्ठाप्य किं तत्र तस्मिन्नासने उपविश्य योगं युञ्ज्यात् । कथं, सर्वविषयेभ्य उपसंहृत्यैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः चित्तं चेन्द्रियाणि च चित्तेन्द्रियाणि तेषां क्रिया संयता यस्य स यतचित्तेन्द्रियक्रियः । स किमर्थं योगं युञ्ज्यादित्याहात्मविशुद्धयेऽन्तःकरणस्य शुद्ध्यर्थमित्येतत् ॥ १२ ॥

आ० टी० । यथोक्तमासनं संपाद्य किं कर्तव्यमिति प्रश्नपूर्वकं कर्तव्यं तन्निर्दिशति **प्रतिष्ठाप्येति** । योगं युञ्जानस्येतिकर्तव्यताकलापं पृच्छति **कथमिति** । सर्वेभ्यो विषयेभ्यः सकाशात् प्रत्याहृत्य मनसो यदेकस्मिन्नेव ध्येये विषये समाधानं, यच्चित्तस्येन्द्रियाणां च बाह्यक्रियाणां संयमनं तदुभयं कृत्वा योगमनुतिष्ठेदित्याह **सर्वेति** । आसने यथोक्ते स्थित्वा यथोक्तया रीत्या योगानुष्ठानस्य प्रश्नपूर्वकं फलमाह **स किमर्थमित्यादिना** ॥ १२ ॥

**प० टी०** । तत्र तस्मिन्नासने उपविश्य एकाग्रं विक्षेपरहितं मनः कृत्वा योगं युञ्ज्यात् किं भूतो यताश्चित्तेन्द्रियक्रिया येन स तथात्मनो मनसः शुद्धय उपशान्तये ॥ १२ ॥

# समं कायशिरोग्रीवं धारयन्नचलं स्थिरः॥
# संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥१३॥

बाह्यसाधनमासनमुक्तमधुना शरीरस्य धारणं कथमित्युच्यते **सममिति** । समं कायशिरोग्रीवं कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं तत् समं धारयन्नचलं च समं

धारयतश्चलनं न संभवत्यतो विशिनष्टि अचलमिति । स्थिरः स्थिरो भूत्वेत्यर्थः । स्वं नासिकाग्रं संप्रेक्ष्य सम्यक् प्रेक्षणं दर्शनं कृत्वेवेतीवशब्दो लुप्तो द्रष्टव्यो न हि स्वनासिकाग्रसंप्रेक्षणमिह विधित्सितं किं तर्हि चक्षुषोर्दृष्टिसंनिपातः स चान्तःकरणसमाधानापेक्षो विवक्षितः स्वनासिकाग्रसंप्रेक्षणमेव चेद्विवक्षितं मनस्तत्रैव समाधीयेत नात्मन्यात्मनि हि मनसः समाधानं वक्ष्यत्यात्मसंस्थं मनः कृत्वेति तस्मादिवशब्दलोपेनाक्ष्णोर्दृष्टिसंनिपात एव संप्रेक्ष्येत्युच्यते दिशश्चानवलोकयन् दिशां चावलोकनमकुर्वन्नित्येवमन्तरा कुर्वन्नित्येतत् ॥ १३ ॥

आ० टी० । उक्तमनूद्यानन्तरश्लोकस्यापुनरुक्तमर्थमाह **बाह्येति** । समत्वमृजुत्वं कायः शरीरमध्यम् । अचलमिति विशेषणमवतार्य तस्य तात्पर्यमाह **सममिति** । कार्यकरणयोर्विषयपारवश्यशून्यत्वमचलत्वं स्थैर्यम् । किमितीवशब्दलोपोऽत्र कल्प्यते स्वनासिकाग्रसंप्रेक्षणमेव योगाङ्गत्वेनात्र विधित्सितं किं न स्यादित्याशङ्क्याह **न हीति** । तर्हि किमत्र विवक्षितमिति प्रश्नपूर्वकमाह **किं तर्हीति** । दृष्टिसंनिपातो दृष्टेश्चक्षुषो रूपादिविषयप्रवृत्तिराहित्यम् । कथमसावनायासेन सिध्यति तत्राह **स चेति** । समाधानस्य प्राधान्येनात्र विवक्षितत्वाद् दृष्टेर्बहिर्विषयत्वेन तदङ्गप्रसंगात्तस्या विषयेभ्यो व्यावृत्त्यान्तरे च संनिपातो विवक्षितो भवतीत्यर्थः । तथापि कथं स्वनासिकाग्रसंप्रेक्षणमत्र श्रुतमविवक्षितमित्याशङ्क्याह **स्वनासिकेति** । तत्रैव मनःसमाधाने का हानिरित्याशङ्क्य वाक्यशेषविरोधान्मैवमित्याह **आत्मनि हीति** । किं तर्हि संप्रेक्ष्येत्यादौ विवक्षितमित्याशङ्क्याह **तस्मादिति** । दक्षिणोत्तरचक्षुषोर्या दृष्टिस्तस्या बाह्याद्विषयाद्वैमुख्येनान्तरेव संनिपतनमत्र स्वकीयं नासिकाग्रं नासिकान्तं संप्रेक्ष्येति विवक्षितमित्यर्थः । तत्रैवोत्तरमपि विशेषणमनुकूलमित्याह **दिशश्चेति** । अनवलोकयन्नासीदित्युत्तरत्र संबन्धः, अन्तरा दिशामवलोकनमपि योगप्रतिबन्धकमिति तत्प्रतिषेधः ॥ १३॥

प० टी० । अथ चित्तैकाग्र्योपयोगिनीं देहधारणामाह **सममिति** द्वाभ्याम् । कायं देहमध्यः शिरश्च ग्रीवा चेति समाहारः कायशिरोग्रीवं सममवक्रं यथा भवति तथा धारयन् धारणां कुर्वन् आसीतेत्युत्तरेणान्वयः । अयमर्थः । योगशास्त्रप्रकारेणासनोपवेशे गुदलिङ्गान्तरे स्थितादाधारचक्रान्मूलबन्धादिबन्धत्रयसिद्धावाधिव्याधिमनोवेगोपशमे सति कायग्रीवाशिरसां समत्वं स्थाणुवदृजुत्वमचलत्वं च भवति । एवं देहधारणामुक्त्वा दृष्टिधारणामाह **दिश इति** । दिशः समन्ततोऽनवलोकयन्नपश्यन् तर्हि देहदृष्टिरवशिष्टा तामपि निषेधयति । स्वं नासिकाग्रं संप्रेक्ष्य अनेन चित्तैकाग्र्योपलक्षणमुदितम् ॥ १३ ॥

**प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ॥**
**मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥**

प्रशान्तेति । किं च प्रशान्तात्मा प्रकर्षेण शान्त आत्मान्तःकरणं यस्य सोऽयं प्रशान्तात्मा विगतभीर्विगतभयो ब्रह्मचारिव्रते स्थितो ब्रह्मचारिणो व्रतं ब्रह्मचारिव्रतं ब्रह्मचर्यं गुरुशुश्रूषाभिक्षाभुक्त्यादि तस्मिन् स्थितस्तदनुष्ठाता भवेदित्यर्थः । किं च मनः संयम्य मनसो वृत्तीरुपसंहृत्येत्येतन् मच्चित्तो मयि परमेश्वरे चित्तं यस्य सोऽयं मच्चित्तो युक्तः समाहितः सन्नासीतोपविशेद्

**मत्परोऽहं परो यस्यसोऽयं मत्परो भवति कश्चिद् रागी स्त्रीचित्तो न तु स्त्रियमेव परत्वेन गृह्णाति, किं तर्हि राजानं महादेवं वायं तु मच्चित्तो मत्परश्च ॥ १४ ॥**

**आ० टी०** । योगं युञ्जानस्य विशेषणान्तराणि दर्शयति **किं चेति** । अन्तःकरणस्य प्रशान्ती रागद्वेषादिदोषराहित्यं, तस्याश्च प्रकर्षो रागादिहेतोरापि निवृत्तिः, विगतभयत्वं सर्वकर्मपरित्यागे शास्त्रीयनिश्चयवशान्निःसंदिग्धबुद्धित्वं, भिक्षाभुक्त्यादीत्यादिशब्देन त्रिषवणस्नानशौचाचमनादि गृह्यते । विशेषणान्तरमाह **किं चे ति** । उपसंहृत्य योगनिष्ठो भवेदिति शेषः । मनोवृत्त्युपसंहारे ध्यानमपि न सिध्येत्तस्य तद्वृत्त्यावृत्तिरूपत्वादित्याशङ्क्याह **मच्चित्त इति** । विषयान्तरविषयमनोवृत्त्युपसंहारेणात्मन्येव तन्नियमनान्न ध्यानानुपपत्तिरित्यर्थः । मच्चित्तत्वेनैव मत्परत्वस्यसिद्धत्वाद् मत्पर इति पृथग् विशेषणमनर्थकमित्याशङ्क्याह **भवतीति** । अन्तःकरणशुद्धिर्योगस्यावान्तरफलम् ॥ १४ ॥

**प० टी०** । अथ मनोधारणामाह **प्रशान्तात्मेति** । प्रशान्तो निःसंकल्प आत्मा चित्तं यस्य विगतभीर्निरस्तभयो निर्जने एकाकिना कथं स्थातव्यमिति भयशून्यः। यद्वा विगतभीरित्युपलक्षणम् । "ह्रीर्धीरित्येतत्सर्वं मन एव" इति श्रुतेर्मनोधर्मरहितः । अथावसरमाह ब्रह्मचारिणां यद्व्रतं तत्र स्थितः संन्यासग्रहणात्पूर्वमेवेत्यर्थः । अथैवंविधमाह । कार्ये प्रवृत्तस्याश्रयव्यतिरेकेण विघ्नोपशमः कथं स्यादित्याह **मच्चित्त इति** । मयि चित्तं यस्य निरन्तरं मत्स्मरणवान् न हि तावदेव मत्प्रयोजनमित्याह **मत्पर इति**। अहमेव परं प्राप्तव्यं पदं यस्य स तथा। तदुक्तमकुलागमे 'सुखासने समासीनस्तत्त्वाभ्यासं समाचरन् । सदाभ्यासेन तत्कुर्यात्परतत्त्वप्रकाशनम् ॥१॥ आसनं प्राणसंरोधः प्रत्याहारोऽथ धारणा। ध्यानं समाधिरेतानि योगाङ्गानि वरानने ॥२॥ एकान्ते विजने रम्ये गुहायां पण्यभूमिके। रहिते मशकैर्दंशैर्देवायतनकेऽपि वा ॥ ३ ॥ सिद्धक्षेत्रे महातीर्थे ध्यानसिद्धिः प्रजायते। तत्र सिद्धासनं बद्ध्वा ऋजुकायं तु कारयेत् ॥४॥ ऊर्ध्वं मेढ्रादधो नाभेः कन्दो ग्रन्थिरिव स्थितः। तत्र नाड्यः समुत्पन्नाः सहस्राणि द्विसप्ततिः ॥ ५ ॥' श्रुतिरपि शातपथी–" हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते"इति । अत्रपुरीततमिति हृदयाकाशे नाडीभिर्निर्मितं स्थानम्, शेषं स्पष्टम् । तथा ' प्रधानाः प्राणवाहिन्यो भूयस्तत्र दश स्मृताः। इडा च पिङ्गला चैव सुषुम्ना च तृतीयका ॥ ६ ॥ सिनीवाली चानुमतिः पूषा चैव यशस्विनी। अलम्बुका कुहूश्चैव शङ्खिनी दशमी तथा ॥ ७ ॥ एतन्नाडीमयं चक्रं तिस्रस्तत्र प्रवाहिकाः । इडा च पिङ्गला चैव सुषुम्ना प्राणवाहिकाः । इडा वामे स्थिता भागे पिङ्गला दक्षिणे स्थिता ॥८॥ सुषुम्ना मध्यदेशे तु प्राणमार्गास्त्रयो मताः। पूरयेद्वामनाड्या च रेचयेदन्यया ततः ॥९॥ तथैवपूरयेद्भूयः पूरयेत्कुम्भवत्ततः । एवमभ्यासयोगेन नाडीशुद्धिः प्रजायते ॥ १० ॥ चन्द्राङ्गे प्राणमभ्यस्य सूर्याङ्गे पानमभ्यसेत् । शीतांशुसूर्ययोर्मध्ये चिन्तयेत्परमेश्वरम् ॥ ११ ॥ सुषुम्नान्तर्गतं देवं चिद्रूपं भावयेत्सदा। प्रणवं तारकं ब्रह्म नित्यं ध्यायन्ति योगिनः ॥ १२ ॥ तद्ध्याने तत्क्षणात्सिद्धिर्जायते नात्र संशयः। प्रणवाभ्यासतो योगी मया तुल्यो वरानने ॥ १३ ॥' योगमार्तण्डे–'योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसेन्मेढ्रे पादमथैवमेव नियतं धृत्वा समं विग्रहम् । स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्येद् भ्रुवोरन्तरं चैतन्मोक्षकपाटभेदजनकं सिद्धासनं प्रोच्यते ॥ १ ॥ वामोरूपरि दक्षिणं च चरणं संस्थाप्य वामं तथा दक्षोरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढौ । अङ्गुष्ठौ हृदये निधाय चुबुकं नासाग्रमालोकयेदेतद् व्याधिविकारनाशि यमिनां पद्मासनं प्रोच्यते ॥२॥ आधारं प्रथमं चक्रं स्वाधिष्ठानं द्वितीयकम् । योनिस्थानं द्वयोर्मध्ये कामरूपं निगद्यते ॥ ३ ॥ अपानप्राणयोरैक्यं क्षयो मूत्रपुरीषयोः। युवा भवति वृद्धोऽपि सततं मूलबन्धनात् ॥ ४ ॥ पार्ष्णिभागेन संपीड्य योनिमाकुञ्चयेद्गुदं । अपानमूलमाकृष्य मूलबन्धं निगद्यते ॥ ५ ॥ उदरे पश्चिमे भागे नाभेरूर्ध्वं निगद्यते । उड्डियानो ह्ययं बन्धः कण्ठदुःखौघनाशनः ॥ ६ ॥ बध्नातीह शिरोजालमधो याति

नभोजलम् । ततो जालन्धरं बन्धं कण्ठसंकोचलक्षणम् ॥ ७ ॥ जालन्धरकृते बन्धे कण्ठसंकोचलक्षणे। न पीयूषं पतत्यग्नौ न च वायुः प्रकुप्यति ॥ ८ ॥ कपालकुहरे जिह्वा प्रविष्टा विपरीतगा । भ्रुवोरन्तरगता दृष्टिर्मुद्रा भवति खेचरी ॥ ९ ॥ युक्तासनं समारुह्य समकायशिरोधरः । नासाग्रदृष्टिरेकान्ते जपेदोङ्कारमव्ययम् ॥ १० ॥ भूर्भुवःस्वरिमे लोकाः सोमसूर्याग्निदेवताः । यस्य मात्रासु तिष्ठन्ति तत्परं ज्योतिरोमिति ॥ ११ ॥ आसनेन रुजं हन्ति प्राणायामेन पातकम् । विकारं मानसं योगी प्रत्याहारेण मुञ्चति ॥ १२ ॥ धारणार्थं मनोधैर्यं ध्यानं निश्चलमद्भुतम् । समाधेर्मोक्षमाप्नोति त्यक्त्वा कर्म शुभाशुभम् ॥ १३ ॥ प्राणायामाद्विषड्क्षेन प्रत्याहारः प्रकीर्तितः । प्रत्याहाराद्विषड्क्षेन धारणा जायते शुभा ॥ १४ ॥ धारणा द्वादश ध्यानं प्रोक्तं ध्यानविशारदैः । ध्यानद्वादशकेनैव समाधिरभिधीयते ॥ १५ ॥ १४ ॥

**युञ्जन्नेवं सदात्मानं योगी नियतमानसः ॥**
**शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥**

अथेदानीं योगफलमुच्यते युञ्जन्निति । युञ्जन् समाधानं कुर्वन्नेवं यथोक्तेन विधानेन सदा योगी नियतमानसो नियतं संयतं मानसं मनो यस्य सोऽयं नियतमानसः स शान्तिमुपरतिं निर्वाणपरमां निर्वाणं मोक्षस्तत्परमा निष्ठा यस्याः शान्तेः सा निर्वाणपरमा तां निर्वाणपरमां मत्संस्थां मदधीनतामधिगच्छति प्राप्नोति ॥ १५ ॥

आ० टी० । संप्रति परमफलकथनपरत्वेनानन्तरश्लोकमादत्ते **अथेति** । योगस्वरूपं तदङ्गमासनमपि तत्कर्तृविशेषणमित्यस्यार्थस्य प्रकथनानन्तरमित्यथशब्दार्थः, आत्मानं युञ्जन्निति संबन्धः, आत्मशब्दो मनोविषयः, यथोक्तो विधिरासनादिः, उक्तविशेषणत्रयद्योतनार्थं सदेत्युक्तं, योगी ध्यायी संन्यासीत्यर्थः । मनःसंयमस्य योगं प्रत्यसाधारणत्वं दर्शयति **नियतेति** । शान्तिशब्दितोपरतेः सर्वसंसारनिवृत्तिपर्यवसायित्वं मत्वा विशिनष्टि **निर्वाणेति** । यथोक्ताया मुक्तेर्ब्रह्मस्वरूपावस्थानादनर्थान्तरत्वमाह **मत्संस्थामिति** । मदधीनां मदात्मिकामित्यर्थः ॥ १५ ॥

प० टी० । अथ योगाभ्यासफलमाह **युञ्जन्निति** । एवममुना प्रकारेण योग्यभ्यासरत आत्मानं मनः समाहितं कुर्वन्नियतं स्वाधीनं मानसं यस्य तथाविधः सन् शान्तिं संसारोपरममधिगच्छति । किंभूतां, निर्वाणं परमं प्राप्तव्यस्थानं यस्याम्, मयि संस्था स्थितिर्यया सा मदाकारेण संस्थानमित्यर्थः । श्रुतिरपि तैत्तिरीयके—" युञ्जानः प्रथमं मनस्तत्त्वाय सविता धिय " इति । भाष्यम्—प्रथमं प्रारम्भे मनो युञ्जानः स्वाधीनं कुर्वाणोऽनन्तरं तत्त्वायात्मप्राप्तये धियो बुद्धीर्युञ्जानः पुरुषः सविता स्वयमात्मैव भवति ॥ १५ ॥

**नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ॥**
**न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १६ ॥**

इदानीं योगिन आहारादिनियम उच्यते नात्यश्नत इति । नात्यश्नत आत्मसंमितमन्नपरिमाणमतीत्याश्नतोऽत्यश्नतो न योगोऽस्ति, न चैकान्तमनश्नतो योगोऽस्ति " यदु ह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति, यद्भूयो

हिनस्ति तद् यत् कनीयो न तदवति" इति श्रुतेः । तस्माद् योगी नात्मसंमितादन्नादधिकं न्यूनं वाश्नीयादथ वा योगिनो योगशास्त्रे परिपठितादन्नपरिमाणादतिमात्रमश्नतो योगो नास्ति । उक्तं हि 'अर्धमशनस्य सव्यञ्जनस्य तृतीयमुदकस्य तु वायोः संचरणार्थं तु चतुर्थमवशेषयेद्' इत्यादि परिमाणं तथा न चातिस्वप्नशीलस्य योगो भवति नैव चातिमात्रं जाग्रतो योगो भवति चार्जुन ॥ १६ ॥

आ० टी० । आहारादीत्यादिशब्देन विहारजागरितादि चोच्यते, आत्मसंमितमन्नपरिमाणमष्टग्रासादि आहारनियमे शतपथश्रुतिं प्रमाणयति **यदिति** । तदन्नं भुज्यमानं यद् ह वा इति प्रसिद्ध्या श्रुत्यानूदितमवति, अनुष्ठानयोग्यतामापाद्यानुष्ठानद्वारेण भोक्तारं रक्षति न पुनस्तदन्नमस्यानर्थाय भवतीत्यर्थः । यत् पुनरात्मसंमिताद् भूयोऽधिकतरं शास्त्रमतिक्रम्य भुज्यते तदात्मानं हिनास्ति भोक्तुरनर्थाय भवति यच्चान्नं कनीयोऽल्पतरं शास्त्रनिश्चयाभावादद्यते तदन्नमनुष्ठानयोग्यतादिद्वारा न रक्षितुं क्षमते तस्मादत्यधिकमत्यल्पं चान्नं योगमारुरुक्षता त्याज्यमित्यर्थः । श्रुतिसिद्धमर्थं निगमयति **तस्मादिति** । नेत्यादेर्व्याख्यानान्तरमाह **अथ वेति** । किं तदन्नपरिमाणं योगशास्त्रोक्तं यदधिकं न्यूनं वाभिव्यवहरतो योगानुपपत्तिरित्याशङ्क्याह **उक्तं हीति** । 'पूरयेदशनेनार्धं तृतीयमुदकेन तु । वायोः संचरणार्थाय चतुर्थमवशेषयेद्' इति वाक्यमादिशब्दार्थः । यथा नात्यन्तमश्नतोऽनश्नतश्च योगो न संभवति तथात्यन्तं स्वपतो जाग्रतश्च न योगः संभवतीत्याह **तथेति** ॥ १६ ॥

प० टी० । अथाभ्यासनिष्ठस्याहारादिनियममाह । **नात्यश्नत** इति द्वाभ्याम् । अति अत्यन्तमश्नाति जेमति तस्य तथैकान्तमत्यन्तमनश्नत उपोषितस्य तथात्यन्तं स्वप्नशीलस्य निद्रासक्तस्याथवात्यन्तं जाग्रतो योगो दुःखहा दुःखोपशमाय न भवति ॥ १६ ॥

## युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ॥
## युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥

कथं पुनर्योगी भवतीत्युच्यते युक्तेति । युक्ताहारविहारस्य युक्तचेष्टस्य आह्रियत इत्याहारोऽन्नं विहरणं विहारः पादक्रमस्तौ युक्तौ नियतपरिमाणौ यस्य स युक्ताहारविहारस्तस्य, युक्तचेष्टस्य तथान्या च युक्ता नियता चेष्टा यस्य कर्मसु, तथा युक्तस्वप्नावबोधस्य युक्तौ स्वप्नश्चावबोधश्च तौ नियतकालौ यस्य तस्य युक्ताहारविहारस्य कर्मसु युक्तस्वप्नावबोधस्य योगिनो योगो भवति दुःखहा दुःखानि सर्वाणि हन्तीति दुःखहा सर्वसंसारदुःखक्षयकृद् योगो भवतीत्यर्थः ॥ १७ ॥

आ० टी० । आहारनिद्रादिनियमविरहिणो योगव्यतिरेकमुक्त्वा तन्नियमवतो योगान्वयं व्याचष्टे **कथं पुनरित्यादिना** । अन्नस्य नियतत्वमर्धमशनस्येत्यादि, विहारस्य नियतत्वं योजनान्नपरं गच्छेदित्यादि, कर्मसु चेष्टाया नियतत्वं वाङ्नियमादि, रात्रौ प्रथमतो दशघटिकापरिमिते काले जागरणं मध्यतः स्वपनं पुनरपि दशघटिकापरिमिते जागरणमिति स्वप्नावबोधयोर्नियतकालत्वम्, एवं

प्रयतमानस्य योगिनो भवति । योगस्य फलमाह दुःखहेति । सर्वाणीत्याध्यात्मिकादिभेदभिन्नानीत्यर्थः । यथोक्तयोगमन्तरेणापि स्वप्नादौ दुःखनिवृत्तिरस्तीति विशिनष्टि सर्वेति । विशुद्धविज्ञानद्वारेति शेषः ॥ १७ ॥

प० टी० । किं तु युक्तेति । युक्तो नियमित आहारो भोजनं विहारश्चेष्टा यस्य तथा कर्मसु कार्येषु ॥ १७ ॥

**यदा विनियतं चित्तमात्मन्येवावतिष्ठते ॥**
**निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥**

अथाधुना कदा युक्तो भवतीत्युच्यते यदेति । यदा विनियतं चित्तं विशेषेण नियतं संयतमेकाग्रतामापन्नं चित्तं हित्वा बाह्यचिन्तामात्मन्येव केवलेऽवतिष्ठते स्वात्मनि स्थितिं लभत इत्यर्थः । निःस्पृहः सर्वकामेभ्यो निर्गता दृष्टादृष्टविषयेभ्यः स्पृहा तृष्णा यस्य योगिनः स युक्तः समाहित इत्युच्यते तदा तस्मिन् काले ॥ १८ ॥

आ० टी० । सफलस्य साङ्गस्य योगस्योक्त्यनन्तरं यदा हीत्यादावुक्तकालानुवादेन युक्तं लक्षयितुमनन्तरश्लोकप्रवृत्तिं दर्शयति अथाधुनेति । विशेषेण संयतत्वमेव संक्षिपति एकाग्रतामिति । आत्मन्येवेत्येवकारार्थं कथयति हित्वेति । केवलत्वमद्वितीयत्वम् । तस्यात्मस्थितिं विवृणोति स्वात्मनीति । चित्तस्य हि कल्पितस्यात्मैव तत्त्वं तत् पुनरन्यतः सर्वतो निवारितमधिष्ठाने निमग्नं तिष्ठतीति भावः । तस्यामवस्थायां सर्वेभ्यो विषयेभ्यो व्यावृत्ततृष्णो युक्तो व्यवह्रियत इत्याह निःस्पृह इति ॥ १८ ॥

प० टी० । तथा युक्तनिद्राप्रबोधस्य पुरुषस्य परीक्षामाह यदेति । विनियतं निरुद्धं चित्तमात्मन्येवावतिष्ठते । यदा च सर्वकामेभ्यो निःस्पृहो भवति तदा युक्तो निष्पन्नयोग इत्युच्यते ॥ १८ ॥

**यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ॥**
**योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९ ॥**

तस्य योगिनः समाहितं यच्चित्तं तस्योपमोच्यते यथेति । यथा दीपः प्रदीपो निवातस्थो निवाते वातवर्जिते स्थाने स्थितो नेङ्गते[1] न चलति सोपमोपमीयतेऽनयेत्युपमा योगज्ञैश्चित्तप्रचारदर्शिभिः स्मृता चिन्तिता । योगिनो यतचित्तस्य संयतान्तःकरणस्य युञ्जतो योगमनुतिष्ठत आत्मनः समाधिमनुतिष्ठत इत्यर्थः ॥ १९ ॥

आ० टी० । उपमा योगिनश्चित्तस्थैर्यस्योदाहरणमित्यर्थः । उपमाशब्दस्य प्रदीपविषयत्वसिद्ध्यर्थं करणव्युत्पत्तिं दर्शयति उपमीयत इति । योगिनो यथोक्तविशेषणवतश्चित्तस्थैर्यस्येति शेषः ॥ १९ ॥

---

१ नेङ्गते नैजति—मु० पु० ।

प० टी० । अथात्माकारतया स्थितस्योपमानमाह **यथेति** । वातशून्यं स्थानं निवातं तत्र स्थितो दीपो यथा नेङ्गते न चलति तत्रत्यं पदार्थमात्रं स्पष्टतया प्रकाशयति । प्रकृते सोपमा दृष्टान्तः स्मृतः । कस्य, आत्मनो योगं युञ्जतोऽभ्यस्यतो योगिनो विक्षेपशून्यचित्तस्य ॥ १९ ॥

**यत्रोपरमते चित्तं निरुद्धं योगसेवया ॥**
**यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥**

यत्रेति । एवं योगाभ्यासबलादेकाग्रीभूतं निवातप्रदीपकल्पं सद् यत्र यस्मिन् काल उपरमते चित्तमुपरतिं गच्छति निरुद्धं सर्वतो निवारितप्रचारं योगसेवया योगानुष्ठानेन यत्र चैव यस्मिंश्च काल आत्मना समाधिपरिशुद्धेनान्तःकरणेनात्मानं परं चैतन्यं सर्वतो ज्योतिःस्वरूपं पश्यन्नुपलभमानः स्व एवात्मनि तुष्यति तुष्टिं भजते ॥ २० ॥

आ० टी० । द्विविधः समाधिः संप्रज्ञातोऽसंप्रज्ञातश्च, ध्येयैकाकारसत्त्ववृत्तिर्भेदेन कथंचिज्ज्ञायमाना संप्रज्ञातः समाधिः, कथमपि पृथगज्ञायमाना सैव सत्त्ववृत्तिरसंप्रज्ञातः समाधिस्तत्र सामान्येन समाधिलक्षणमभिधायासंप्रज्ञातस्य समाधेरधुना लक्षणं विवक्षन्नाह **एवमिति** । काले समाध्युपलक्षिते, एवकारस्तुष्यतीत्यनेन संबध्यते । चकारस्य संबन्धमाह **यस्मिंश्चेति** । कालस्तु पूर्ववत् । कर्मकारकत्वेन निर्दिष्टमात्मानं तत्पदार्थत्वेन व्याचष्टे **परमिति** । आत्मनीत्यस्य त्वंपदार्थविषयत्वमाह **स्व एवेति** । परमात्मानं प्रतीच्येव तद्भावेनापरोक्षीकुर्वन्नतुष्टिहेत्वभावात्तुष्यत्येवेत्यर्थः, तस्मिन् काले योगसिद्धिर्भवतीति शेषः ॥ २० ॥

प० टी० । अथ निष्पन्नयोगस्वरूपमाह **यत्रेत्यादिचतुर्भिः** । यत्र यस्यामवस्थायां योगसेवया निरन्तराभ्यासेन निरुद्धं विक्षेपरहितं सदुपरमते उपरमं विषयेभ्यो व्यावृत्तिं प्राप्नोति । यत्र चात्मनैव शुद्धान्तःकरणेनात्मानं पश्यन् ज्ञानदृष्ट्यानुभवन्नात्मन्येव सुखस्वरूपे तुष्यति सुखरूपतया तिष्ठति तं **विद्यादिति** चतुर्थेनान्वयः ॥ २० ॥

**सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ॥**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१ ॥**

किं च सुखमिति । सुखमात्यन्तिकमत्यन्तमेव भवतीत्यात्यन्तिकमनन्तमित्यर्थः । यत्तद्बुद्धिग्राह्यं बुद्ध्यैवेन्द्रियनिरपेक्षया गृह्यत इति बुद्धिग्राह्यमतीन्द्रियमिन्द्रियगोचरातीतमविषयजनितमित्यर्थः । वेत्ति तदीदृशं सुखमनुभवति यत्र यस्मिन् काले न चैवायं विद्वानात्मस्वरूपे स्थितस्तस्मान्नैव चलति तत्त्वतस्तत्त्वस्वरूपान्न प्रच्यवत इत्यर्थः ॥ २१ ॥

आ० टी० । योगसिद्धिकालं प्रकारान्तरेण प्रकटयति **किं चेति** । बुद्धिशब्दः स्वानुभवविषयः । इन्द्रियनिरपेक्षस्वानुभवगम्यत्वोक्तेरतीन्द्रियमिति पुनरुक्तमित्याशङ्क्याह । अविषयेति पदच्छेदः । **न चेत्यादि** । अपेक्षितपूरणम् **आत्मस्वरूप इति** । तस्मात्तत्त्वत इति संबन्धः, नैवेत्येवकारसंबन्धोक्तिः, चकारः सप्तम्या संबन्धनीयः । यत्रेति पूर्ववत् संबन्धः ॥ २१ ॥

प० टी० । अथात्मसुखस्य विषयसुखातिरिक्तसत्त्वमुत्कृष्टत्वं च दर्शयति **सुखमिति** । अयं योगी यदात्यन्तिकं सर्वोत्कृष्टं सुखं वेत्त्यनुभवाति तद्बुद्धिग्राह्यम् । केवलं बुद्ध्यैवात्माकारया ग्राह्य-मनुभवनीयं । न तु विषयेन्द्रियजसुखवदित्याह **अतीन्द्रियमिति** । विषयेन्द्रियसंबन्धातीतम् । तथा सुषुप्तौ तथा चातीन्द्रियपदेन विषयसुखाद्वैलक्षण्यं दर्शितम् । आत्यन्तिकपदेनोत्कृष्टत्वं दर्शित-मित्यर्थः । अथ पुनरुत्कर्षमेव व्यनक्ति **यत्रेति** । यत्र यस्मिन् सुखे तत्त्वतो निश्चयेन स्थितः स्थिरीभूतः सन्नैव चलति सुखान्तरं नापेक्षते परमानन्दे क्षुद्रानन्दानामन्तर्भूतत्वात् । तदुक्तमध्यात्म-मीमांसायाम्—' जाग्रत्यामन्तरात्मा विषयसुखकृतेऽनेकयत्नांश्च कुर्वन् श्राम्यत्सर्वेन्द्रियेभ्योऽधिगतमपि सुखं विस्मरन्याति निद्राम् । विश्रामायात्मरूपे त्वतितरसुलभं तेन चातीन्द्रियं हि सौख्यं सर्वोत्तमं स्यात्परिणतिविरसादिन्द्रियोत्थात्सुखाच्च ॥ १ ॥ ' इति ॥ २१ ॥

**यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ॥**
**यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ २२ ॥**

यमिति । किं च यं लब्ध्वा यमात्मलाभं लब्ध्वा प्राप्य चापरमन्य-ल्लाभान्तरं ततोऽधिकमस्तीति न मन्यते न चिन्तयति । किं च यस्मिन्नात्म-तत्त्वे स्थितो दुःखेन शस्त्रनिपातादिलक्षणेन गुरुणा महतापि न विचा-ल्यते ॥ २२ ॥

आ० टी० । प्रकारान्तरेण प्रकृतं योगं विशिनष्टि **किं चेति** । आत्मलाभान्नपरं विद्यते इति स्मृत्वा व्याचष्टे **यमात्मलाभमिति** । लाभान्तरं पुरुषार्थभूतं, ततस्तस्मादात्मलाभादिति यावत, तं विद्यादित्युत्तरत्र संबन्धः । यस्मिन्नित्याद्यवतारयति **किं चेति** । अपरिपक्वयोगो यथा दर्शितेन दुःखेन प्रच्याव्यते न चैवं विचाल्यते यस्मिन् स्थितो योगी तं योगं विद्यादिति पूर्ववत् ॥ २२ ॥

प० टी० । अथ तदेव प्रकटयति **यदिति** । यत्सुखं लब्ध्वा ततः सकाशादपरं लाभमधिकं न मन्यते तस्यैव निरतिशयत्वात् । यथा सुषुप्तिसुखं प्राप्तः कश्चिद्भोजनार्थं प्रबोधनीयः प्रत्यवायश्र-वणात् । श्रुतिरपि—"तस्मादायतं न बोधयेद्दुर्भिषज्यं हास्य भवति" इति । भाष्यम्—यस्मात्सुषुप्तौ-निरतिशयं सुखं भवति तस्मात्कारणादायतं विस्तृतहस्तपादनिद्रितं पुरुषं न बोधयेज्जागरं न प्राप-येत् । हि यतोऽस्य जागरं प्रापितस्य दुर्भिषज्यमप्रतिकारं दुःखं भवति । किं च यस्मिन् सुखे स्थितः स्थिरीभूतः सन् गुरुणा महतापि रोगशोकादिदुःखेन न विचाल्यते स्वावस्थां न प्राप्यते ॥ २२ ॥

**तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ॥**
**स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३ ॥**

तमिति । यत्रोपरमते इत्याद्यारभ्य यावद्भिर्विशेषणैर्विशिष्ट आत्मावस्था-विशेषो योग उक्तस्तं विद्याद् विजानीयाद् दुःखसंयोगवियोगं दुःखैः सं-योगो दुःखसंयोगस्तेन वियोगो दुःखसंयोगवियोगस्तं दुःखसंयोगवियोगं योग इत्येवसंज्ञितं विपरीतलक्षणेन विद्याद् विजानीयादित्यर्थः । योगफलमुपसं-हृत्य पुनरन्वयारम्भेण योगस्य कर्तव्यतोच्यते, निश्चयानिर्वेदयोर्योगसाधनत्व-

१ यल्लब्ध्वेति पाठः प. टी. धृतः ।

विधानार्थं स यथोक्तफलो योगो निश्चयेनाध्यवसायेन योक्तव्योऽनिर्विण्णचेतसा न निर्विण्णमनिर्विण्णं किं चेतस्तेन निर्वेदरहितेन चेतसा चित्तेनेत्यर्थः॥ २३ ॥

आ० टी० । तं विद्यादित्याद्यपेक्षितं पूरयन्नवतारयति यत्रेति । तमित्यात्मावस्थाविशेषं परामृशति दुःखसंयोगस्य वियोगो वियोगसंज्ञितो युज्यते स कथं योगसंज्ञितः स्यादित्याशङ्क्याह विपरीतेति । इयं हि योगावस्था समुत्खातनिखिलदुःखभेदेति दुःखसंयोगाभावो योगसंज्ञामर्हतीत्यर्थः। उपसंहृतयोगफले किमिति पुनर्योगस्य कर्तव्यत्वमुच्यते तत्राह योगफलमिति । प्रकारान्तरेण योगस्य कर्तव्यत्वोपदेशारम्भोत्रान्वारम्भः योगं युञ्जानस्तत्क्षणादुक्तां संसिद्धिमलभमानः संशयानो विवर्तेतेति तन्निवृत्त्यर्थं पुनः कर्तव्योपदेशोऽर्थवानिति मत्वाह निश्चयेति । तयोः साधनत्वविधानमेवाक्षरयोजनया साधयति स यथेति । इह जन्मनि जन्मान्तरे वा सेत्स्यतीत्यध्यवसायेन योक्तव्यः कर्तव्यः ॥ २३ ॥

प० टी० । एवंभूतो योऽवस्थाविशेषः स एव योगशब्दव्यपदेश्य इत्याह तं विद्यादिति । तं योगसंज्ञितं विद्याद् योगोऽत्र परमात्मक्षेत्रयोर्योजनम् यथा सुषुप्तौ परमात्मा क्षेत्रज्ञेनाश्लिष्यते श्रुतिरपि—"एवमेवायं शारीर आत्मा प्राज्ञेन आत्मना संपरिष्वक्तो न बाह्यं किं च न वेदनान्तरम्" इति । भाष्यम्—एवमेव सुषुप्तिवच्छारीरः शरीरावच्छिन्नः परमात्मा क्षेत्रज्ञेन जीवेन परिष्वक्त आलिङ्गितो बाह्यमान्तरं वा किं चिन्न वेद न जानाति । अथ किंभूतं योगं, दुःखसंयोगवियोगं दुःखेन सह संयोगो यैस्ते दुःखसंयोगा विषयास्तेषां वियोगो यस्मिन्ननेन विषयसुखमपि दुःखपक्षान्तर्भूतमिति सूचितम् । अथ योगनिर्वाहार्थमाह सेति । एवं स योगो निश्चयेन नियमेन योक्तव्योऽभ्यसनीयः। अथ यद्यप्यभ्यासेन शीघ्रं सिद्धिर्भवति तथापि दुःखं न मन्तीतित्याह अनिर्विण्णचेतसेति । न निर्वेदं प्राप्तं चेतो यस्य तेनानुद्विग्नान्तःकरणेनेत्यर्थः ॥ २३ ॥

**संकल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः ॥**
**मनसैवेन्द्रियग्रामं विनियम्य समन्ततः॥ २४ ॥**

किं च संकल्पेति । संकल्पप्रभवान् संकल्पः प्रभवो येषां कामानां ते संकल्पप्रभवाः कामास्तान् कामांस्त्यक्त्वा परित्यज्य सर्वानशेषतो निर्लेपेन किं च मनसैव विवेकयुक्तेनेन्द्रियग्राममिन्द्रियसमुदायं विनियम्य नियमनं कृत्वा समन्ततः समन्तात् ॥ २४ ॥

आ० टी० । इतश्च योगस्य कर्तव्यत्वमिति प्रतिजानीते किं चेति । केन क्रमेण कर्तव्यत्वमित्यपेक्षायामाह संकल्पेति । संकल्पः शोभनाध्यासः । सर्वानित्युक्त्वा पुनरशेषत इति पुनरुक्तिरित्याशङ्क्याह निर्लेपेनेति । यथा शेषो न भवति तथा सर्वेषां कामानां शोभनाध्यासाधीनानां त्यागस्य योगानुष्ठानशेषत्ववद्विवेकयुक्तेन मनसा करणसमुदायस्य सर्वतो नियमनमपि तत्र शेषत्वेन कर्तव्यमित्याह किं चेति ॥ २४ ॥

प० टी० । एवमभ्यासयोगमुक्त्वाधुना राजयोगं वक्तुमारभते संकल्पेत्यादितः। संकल्पात् प्रभव उत्पत्तिर्येषां ते तथाभूता ये कामास्तान् सर्वानशेषतस्तन्मूलभूतवासनाभिः सह त्यक्त्वा। तत्रापि कारणमाह मनसेति। समन्ततः प्रसरन्तं ज्ञानकर्मेन्द्रियाणां ग्रामं समूहं मनसैव नियम्य न तु वायुधार-

णादिप्रयासैः । तदुक्तम्—'न याहं चेतस्त्वमितस्ततोपि देहेन्द्रियाद्यैर्न कुरुष्व कर्म । त्वं यत्र कुत्राप्युपविश्य नित्यं 'विचारयस्व स्वनिदानमन्तः' इति ॥ २४ ॥

**शनैः शनैरुपरमेद् बुद्ध्या धृतिगृहीतया ॥**
**आत्मसंस्थं मनः कृत्वा न किं चिदपि चिन्तयेत् ॥२५॥**

शनैरिति । किंच शनैः शनैर्न सहसोपरमेदुपरतिं कुर्यात्, कया बुद्ध्या, किंविशिष्टया धृतिगृहीतया धृत्या धैर्येण गृहीतया धैर्येण युक्तयेत्यर्थः। आत्मनि संस्थितमात्मैव सर्वं न ततोऽन्यत् किंचिदस्तीत्येवमात्मसंस्थं मनः कृत्वा न किं चिदपि चिन्तयेद्, एष योगस्य परमोऽवधिस्तत्रैवमात्मसंस्थं मनः कर्तुं प्रवृत्तो योगी ॥ २५ ॥

आ० टी० । कामत्यागद्वारेणेन्द्रियाणि प्रत्याहृत्य किं कुर्यादिति शङ्कितारं प्रत्याह **शनैः शनैरिति** । सहसा विषयेभ्यः सकाशादुपरमे मनसो न स्वास्थ्यं संभवतीत्यभिप्रेत्याह **न सहसेति** । तत्र साधनं धैर्ययुक्ता बुद्धिरित्याह **कया** इत्यादिना । भूम्यादीरव्याकृतपर्यन्ताः प्रकृतीरष्ट पूर्वत्र पूर्वत्र धारणं कृत्वोत्तरोत्तरक्रमेण प्रविलापयेदिति भावः । अव्यक्तमात्मनि प्रविलाप्यात्ममात्रनिष्ठं मनो विधाय चिन्तयितव्याभावादतिस्वस्थो भवेदित्याह **आत्मेति** । तत्र संस्थितिमेव मनसो विवृणोति **आत्मैवेति** । योगविधिमुपक्रम्य किमिदमुक्तमित्याशङ्क्याह **एष इति** । यन्मनसो नैश्चल्यमिति शेषः । ननु मनसः शब्दादिनिमित्तानुरोधेन रागद्वेषवशादत्यन्तचञ्चलस्यास्थिरस्य तत्र तत्र स्वभावेन प्रवृत्तस्य कुतो नैश्चल्यं नैश्चिन्त्यं चेति तत्राह **तत्रेति** । योगप्रारम्भः सप्तम्यर्थः, एवंशब्देन मनसैवेत्यादिरुक्तप्रकारो गृह्यते ॥ २५ ॥

प० टी० । अथास्यापि निर्वाहमाह **शनैः शनैरिति** । धृतिर्धीरता तया गृहीतया नियमितया निश्चयात्मिकया बुद्ध्या कृत्वा संकल्पात्मकं मनो बलादात्मसंस्थं कृत्वात्मातिरिक्तं न किं चिदपि चिन्तयेत् । एवं शनैः शनैरभ्यासक्रमेण न सहसोपरमेद्बाह्यप्रपञ्चादुपरमं प्राप्नुयात् । तदुक्तं योगसारावल्याम्—'असमर्थो यदाभ्यासे राजयोगं तदाचरेत् । येन स्यात्तुरीयावस्था सा पक्वैवोन्मनी भवेत् ॥ १ ॥ प्रसह्य संकल्पपरंपराणां संछेदने संततसावधानः । आलम्बनाशादपचीयमानं शनैः शनैः शान्तिमुपैति चेतः ॥ २ ॥ प्रकाश्यमाने परमात्मभानौ नश्यत्यविद्यातिमिरे समस्ते । अहो बुधा निर्मलदृष्टयोऽपि किं चिन्न पश्यन्ति जगत्स्वरूपम् ॥ ३ ॥' ॥ २५ ॥

**यतो यतो निश्चलति मनश्चञ्चलमस्थिरम् ॥**
**ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥**

यत इति । यतो यतो यस्माद्यस्मान्निमित्ताच्छब्दादेर्निश्चलति निर्गच्छति स्वभावदोषान्मनश्चञ्चलमत्यर्थं चलमत एवास्थिरं ततस्ततस्तस्मात्तस्माच्छब्दादेर्निमित्तान्नियम्य तत्तन्निमित्तं याथात्म्यनिरूपणेनाभासीकृत्य वैराग्यभावनया चैतन्मन आत्मन्येव वशं नयेदात्मवश्यतामापादयेत् ॥ २६ ॥

आ० टी० । स्वाभाविको दोषो मिथ्याज्ञानाधीनो रागादिः शब्दादेर्मनसो नियमन कथ मित्याशङ्क्याह तत्तन्निमित्तमिति । याथात्म्यनिरूपणं. क्षयिष्णुत्वदुःखसंमिश्रत्वाद्यालोचनं तेन तत्र तत्र वैराग्यभावनया तत्तदाभासीकृत्य ततस्ततो नियम्यैतन्मन इति संबन्धः ॥ २६ ॥

प० टी० । अथैतावतापि रजोगुणप्रचुरं मनो यद्यात्मप्रवणं न भवेत्तर्हि प्रत्याहरेण वशं नयेदित्याह यतो यत इति । स्वभावतश्चपलं बलाज्जलक्षिप्ततुम्बिकावद्धार्यमाणमस्थिरं मनो यं यं विषयं प्रति निश्चलति निर्गच्छति ततस्ततो विषयान्नियम्य प्रत्याहृत्यात्मन्येव वशं नयेत् । तदुक्तं वासिष्ठे-'हस्तं हस्तेन संपीड्य दन्तैर्दन्तान्विचूर्ण्य च । अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मनः ॥ १ ॥ चित्तमेकं न शक्नोति जेतुं स्वातन्त्र्यवर्ति यत् । ध्यानवार्तो वदन्मूढः स किं लोके न लज्जते ॥ २ ॥' इति । तथा चोक्तं विष्णुपुराणे । विषयेभ्यः समाहृत्य विज्ञातात्मा मनो मुनिः । चिन्तयेन्मुक्तये तेन ब्रह्मभूतं परेश्वरम् ॥ ३ ॥ आत्मभावं नयत्येनं तद्ब्रह्मध्यायनं मुने । विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा ॥ ४ ॥' ॥ २६ ॥

**प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ॥**
**उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥**

प्रेति । एवं योगाभ्यासबलाद् योगिन आत्मन्येव प्रशाम्यति मनः प्रशान्तमनसं प्रकर्षेण शान्तं मनो यस्य स प्रशान्तमनास्तं प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमं निरतिशयमुपैत्युपगच्छति शान्तरजसं प्रक्षीणमोहादिक्लेशरजसमित्यर्थः । ब्रह्मभूतं जीवन्मुक्तं ब्रह्मैव सर्वमित्येवं निश्चयवन्तं ब्रह्मभूतमकल्मषं धर्माधर्मादिवर्जितम् ॥ २७ ॥

आ० टी० । मनसो वशीकरणेनोपशमे किं स्यादित्याह एवमिति । योगाभ्यासो विषयविवेकद्वारा मनोनिग्रहाद्यावृत्तिः, प्रशान्तमात्मन्येव प्रलीनमिति यावत्, मनस्तद्वृत्त्योरभावे स्वरूपभूतसुखाविर्भावस्य स्वापादौ प्रसिद्धिं द्योतयितुं हिशब्दः । मोहादिक्लेशप्रतिबन्धाद्योगिनि यथोक्तसुखाप्राप्तिमाशङ्क्य मनोविलयमुपेत्य परिहरति प्रशान्तेति । तस्यास्मदादिविलक्षणत्वमाह ब्रह्मभूतमिति । अस्मदादेरपि स्वतो ब्रह्मभूतत्वेन तुल्यं जीवन्मुक्तत्वमित्याशङ्क्याह ब्रह्मैवेति । धर्माधर्मप्रतिबन्धादयुक्ता यथोक्तसुखप्राप्तिरित्याशङ्क्योक्तम् अकल्मषमिति ॥ २७ ॥

प० टी० । एवं रजोगुणक्षये सति स्वत एवात्मसुखप्राप्तिरित्याह प्रशान्तमिति । एवंविधमेनं योगिनं प्रत्युत्तमं सुखं सर्वोत्कृष्टमात्मसुखं स्वत एवोपैत्यधितिष्ठति । किंभूतं योगिनं प्रशान्तमनसमत एव शान्तरजसमत एव ब्रह्मभूतमकल्मषं निरस्तमोहजालम् ॥ २७ ॥

**युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ॥**
**सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥**

युञ्जन्निति । युञ्जन्नेवं यथोक्तेन क्रमेण योगी योगान्तरायवर्जितः सदा सर्वदात्मानं युञ्जन् विगतकल्मषो विगतपापः सुखेनानायासेन ब्रह्मसं-

स्पर्शं ब्रह्मणा परेण संस्पर्शो यस्य तद् ब्रह्मसंस्पर्शं सुखमत्यन्तमुत्कृष्टं सुखं निरतिशयं सुखमश्नुते व्याप्नोति ॥ २८ ॥

आ० टी० । उत्तमं सुखं योगिनो भवतीत्युक्तं तदेव स्फुटयति युञ्जन्निति । क्रमो यथोक्तो मनसैवेन्द्रियग्राममित्यादिः, योगान्तरायो रागद्वेषादिः, सदात्मानं युञ्जन्निति संबन्धः ॥२८॥

प० टी० । ततश्च कृतार्थो भवतीत्याह युञ्जन्नेवमिति । एवममुना प्रकारेणात्मानं मनो युञ्जन् वशीकुर्वन् योगी गतकल्मषोऽज्ञानशून्यो भवति । तथाविधः सन् सुखेन सुखोपायेन ब्रह्मणः संस्पर्शोऽविद्यानिवर्तकोऽपरोक्षसाक्षात्कारस्तदेवात्यन्तमात्यान्तिकं सुखं परमानन्दमश्नुते जीवन्मुक्तो भवतीत्यर्थः ॥ २८ ॥

**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ॥**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥**

इदानीं योगस्य यत् फलं ब्रह्मैकत्वदर्शनं सर्वसंसारविच्छेदकारणं तत् प्रदर्श्यते सर्वेति । सर्वभूतस्थं सर्वेषु भूतेषु स्थितं स्वमात्मानं सर्वभूतानि चात्मनि ब्रह्मादीनि स्तम्बपर्यन्तानि च सर्वभूतान्यात्मन्येकतां गतानीक्षते पश्यति योगयुक्तात्मा समाहितान्तःकरणः सर्वत्र समदर्शनः सर्वेषु ब्रह्मादिस्थावरान्तेषु विषमेषु सर्वभूतेषु समं निर्विशेषं विक्रियारहितं[2] ब्रह्मात्मैकत्वविषयं दर्शनं ज्ञानं यस्य स सर्वत्र समदर्शनः ॥ २९ ॥

आ० टी० । पापपदमुपलक्षणं पुण्यस्यापि संस्पर्शस्तादात्म्यमेकरसमुत्कर्षो विषयासंस्पर्शो योगमनुतिष्ठतो ब्रह्मभूतस्य सर्वानर्थनिवृत्तिनिरतिशयसुखप्राप्तिलक्षणो द्विविधो मोक्षो हेतुना केन स्यादिति शङ्कमानं प्रत्याह इदानीमिति । स्वमात्मानमीक्षत इति संबन्धः । सर्वभूतान्यपि तद्विशेषणत्वेन पश्यति चेन्न शुद्धवस्तुज्ञानमिति नाविद्यानिवृत्तिरित्याशङ्क्याह सर्वभूतानीति । उक्ते दर्शने चित्तसमाधानमुपायं दर्शयति योगेति । विषमेषूपाधिषु तदनुरोधाद्विषममेव दर्शनमुपदर्शितदर्शनप्रतिबन्धकं प्रत्युदस्यति सर्वत्रेति ॥ २९ ॥

प० टी० । एवं निरन्तरमन्तर्ध्यानावस्थस्य देहानुबन्धेनात्मानुभवमुक्त्वाधुना कदापि बाह्यदृष्टेः सर्वात्मकत्वेनात्मप्रतीतिमीशावास्योपनिषदुक्तां दर्शयति सर्वभूतस्थमिति । योगेनाभ्यसनेन युक्तः समाहित आत्मा मनो यस्यैवंविध आत्मानं समष्टिरूपं सर्वभूतेषु स्थूलव्यष्टिरूपेष्वन्तर्यामित्वेन तिष्ठन्तमीक्षते पश्यति तथा सर्वभूतान्यात्मनि स्थूलसमष्टिरूपे जलतरङ्गवत्तादात्म्येन पश्यति । अत एव सर्वत्र समदर्शनः सर्वभूतेषु समं तारतम्यविवर्जितं दर्शनं प्रतीतिर्यस्य स तथा । श्रुतिश्च—"यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं न तदा विचिकित्सति" इति । भाष्यम्—यः पुरुषः सर्वाणि भूतान्यात्मन्येव पश्यति । जले तरङ्गानिव तथा सर्वभूतेष्वात्मानमेव पश्यति । तरङ्गेषु जलमिव । एवंभूतश्चेत्तदा न विचिकित्सति तारतम्यविचारं न करोतीत्यर्थः ॥ २९ ॥

**यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ॥**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३० ॥**

---

१ अत्यन्तमन्तमतीत्य वर्तत इत्यत्यन्तम्—पा० लि० । २ विक्रियारहितम्—लि० १ पु० नास्ति ।

एतस्यात्मैकत्वदर्शनस्य फलमुच्यते यो मामिति । यो मां पश्यति वासुदेवं सर्वस्यात्मानं सर्वत्र सर्वेषु भूतेषु पश्यति सर्वं च ब्रह्मादिभूतजातं मयि सर्वात्मनि पश्यति तस्यैवमात्मैकत्वदर्शिनोऽहमीश्वरो न प्रणश्यामि न परोक्षतां गमिष्यामि, स च मे न प्रणश्यति स च विद्वान् मे मम वासुदेवस्य न प्रणश्यति न परोक्षो भवति तस्य च मम चैकात्मकत्वात् । स्वात्मा हि नामात्मनः प्रिय एव[1] भवति ॥ ३० ॥

आ० टी० । उक्तस्यैकत्वज्ञानस्य फलविकल्पत्वशङ्कां शिथिलयति **एतस्येति** । तत्रैकत्वदर्शनमनुवदति **यो मामिति** । तत्फलमिदानीमुपन्यस्यति **तस्येति** । ज्ञानानुवादभागं विभजते **यो मामिति** । तत्फलोक्तिभागं व्याचष्टे **तस्यैवमिति** । अनेकत्वदर्शिनोऽपीश्वरो नित्यत्वान्न प्रणश्यतीत्याशङ्क्याह **नेति** । अहं परमानन्दो न तं प्रति परोक्षो भवामीत्यर्थः । स चेत्यादि व्याचष्टे **विद्वानिति** । विद्वानिवाविद्वानपीश्वरस्य न नश्यतीत्याशङ्क्योक्तं **नेत्यादिना** । अविदुषश्च स्वरूपेण सतोऽपि व्यवहितत्वादविद्यया नष्टप्रायतेत्यर्थः । ईश्वरस्य विदुषश्च परस्परमपरोक्षत्वे हेतुमाह **तस्य चेति** । आत्मैकत्वेऽपि कथं मिथोऽपरोक्षत्वं तत्राह **स्वात्मेति** ॥ ३० ॥

प० टी० । अथ सूक्ष्मसमष्टिरूपेण सर्वात्मकत्वेनात्मप्रतीतिमाह **यो मामिति** । यः पुरुषो मां सूक्ष्मं समष्टिरूपं हिरण्यगर्भं सर्वत्र सूक्ष्मव्यष्टिरूपेषु सूक्ष्मशरीरेषु पश्यति सर्वं व्यष्टिरूपं मयि समष्टिरूपे पश्यति । तस्य पुरुषस्याहं न प्रणश्यामि सदैवानुभवारूढस्तिष्ठामि । स च पुरुषो मे न प्रणश्यति मत्कृपाकटाक्षशरण एव तिष्ठतीत्यर्थः ॥ ३० ॥

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ॥**
**सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३१ ॥**

यस्माच्चाहमेव सर्वात्मैकत्वदर्श्यित्येतत् पूर्वश्लोकार्थं सम्यग्दर्शनमनूद्य तत्फलं मोक्षोऽभिधीयते सर्वेति । सर्वथा सर्वप्रकारैर्वर्तमानोऽपि सम्यग्दर्शी योगी मयि वैष्णवे परमे पदे वर्तते नित्यमुक्त एव स न मोक्षं प्रति केन चित् प्रतिबध्यत इत्यर्थः ॥ ३१ ॥

आ० टी० । विद्वदीश्वरयोरेकत्वानुवादेन विद्याफलं विवृणोति **यस्माच्चेति** । तस्मादेकत्वदर्शनार्थं प्रयतितव्यमिति शेषः । पूर्वार्धेनानूद्योत्तरार्धेन फलविधिरिति मत्वाह **इत्येतदिति** । रागादिरहितस्य यमनियमादिसंस्कारवतः स्वैरप्रवृत्त्यसंभवेऽपि तामङ्गीकृत्य ज्ञानं स्तौति **सर्वथेति** । प्रतिभासतोऽपि यथेष्टचेष्टाङ्गीकारे कुतो ज्ञानवतो नित्यमुक्तत्वं प्रातीतिकदुराचारप्रतिबन्धादित्याशङ्क्याह **न मोक्षमिति** ॥ ३१ ॥

प० टी० । अथैतदनन्तरं सर्वदृश्यजातमात्माकारेण पश्यतीत्याह । यः सर्वभूताकारेण स्थितमेकत्वमास्थितः सन् भजत्यनुवर्तते स वर्तमानोऽपि नामरूपाकारेण स्थितोऽपि मयि वर्तते मदाकारो भवति । श्रुतिरपि—"यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति । भाष्यम्—यस्य विजानतो विज्ञानवतः पुरुषस्य सर्वाणि भूतात्मकं विश्वमात्मै-

[1] प्रकाश एव प्रिय एव भवति—पा० १ लि० पु० ।

वाभूत् । भूतभावनाराहित्येनात्माकारमेव जातं तस्यैकत्वमद्वैतमनुपश्यतः को मोहो मायाविलासरूपमज्ञानं कुतस्तथा तत्प्रयुक्तः शोकश्च कुत इत्यर्थः ॥ ३१ ॥

## आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ॥
## सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥

किं चान्यद् आत्मेति । आत्मौपम्येनात्मा स्वयमेवोपमीयत इत्युपमा तस्या उपमाया भाव औपम्यं तेनात्मौपम्येन सर्वत्र सर्वभूतेषु समं तुल्यं पश्यति योऽर्जुन स च किं समं पश्यतीत्युच्यते यथा मम सुखमिष्टं तथा सर्वप्राणिनां सुखमनुकूलं, वा शब्दश्चार्थे यदि वा यच्च दुःखं मम प्रतिकूलमनिष्टं यथा तथा सर्वप्राणिनां दुःखमनिष्टं प्रतिकूलमित्येवमात्मौपम्येन सुखदुःखे अनुकूलप्रतिकूले तुल्यतया सर्वभूतेषु समं पश्यति न कस्य चित् प्रतिकूलमाचरत्यहिंसक इत्यर्थः । य एवमहिंसकः सम्यग्दर्शननिष्ठः स योगी परम उत्कृष्टो मतोऽभिप्रेतः सर्वयोगिनां मध्ये ॥ ३२ ॥

आ० टी० । स्वैराचरणस्याप्रतिबन्धकत्वकथनात् परपीडनस्य योगिनः सम्यग्दर्शनं प्रत्यप्रतिबन्धकत्वप्रसक्तावुक्तं **किं चेति** । अन्यदपि किंचिदुच्यते, परमयोगिनो निर्देशद्वारा योगमाहात्म्यमित्यर्थः । उपमैवौपम्यमात्मा च तदौपम्यं च तेन सर्वभूतेषु यः समं पश्यतीत्युक्तं, तदेव समदर्शनं प्रश्नपूर्वकं विवृणोति **किमित्यादिना** । विकल्पार्थत्वं वारयति **वाशब्द इति** । उपदर्शितसमदर्शनफलमभिलषति **न कस्य चिदिति** । किमपेक्षया तस्य परमत्वं तत्राह **सर्वेति** ॥ ३२ ॥

प० टी० । अथैतादृशस्यापि पुरुषस्य लोकव्यवहारवच्चेष्टमानस्य दशामाह **आत्मौपम्येनेति** । यः पुरुषः सर्वत्र सर्वभूतेषु सुखं दुःखं वात्मौपम्येन पश्यति यथा मे आत्मसुखमिष्टं संसारदुःखमनिष्टं तथैव सर्वत्र भूयादिति पश्यति स परमश्चरमदशां प्राप्तो योगी मतः ॥ ३२ ॥

## ॥ अर्जुन उवाच ॥

## योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ॥
## एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ॥ ३३ ॥

एतस्य यथोक्तस्य सम्यग्दर्शनलक्षणस्य योगस्य दुःसंपाद्यतामालक्ष्य शुश्रूषुर्ध्रुवं तत्प्राप्त्युपायमर्जुन उवाच योऽयमिति । योऽयं योगस्त्वया प्रोक्तः साम्येन समत्वेन हे मधुसूदन एतस्य योगस्याहं न पश्यामि नोपलभे चञ्चलत्वान्मनसः किं स्थिरामचलां स्थितिं प्रसिद्धमेतत् ॥ ३३ ॥

आ० टी० । मनश्चञ्चलमस्थिरमित्युपश्रुत्य निर्विशेषे चित्तस्थैर्यं दुःशकमिति मन्वानस्तदुपशमं*बुभुत्सया पृच्छतीति प्रश्नमुत्थापयति **एतस्येति** । तत्प्राप्त्युपायं शुश्रूषुरिति मन्वानो मन-

* दुपशय–मु. पु.

सश्चञ्चलत्वेऽपि तन्निग्रहद्वारा योगस्थैर्यं संपाद्यतामित्याशङ्क्याह **एतस्येति** । प्रसिद्धमिति संबन्धः ॥ ३३ ॥

प० टी० । अथैतस्य योगस्य दुःसाध्यत्वं मन्यमानोऽर्जुनः प्राह **योऽयमिति** । मनसः साम्येन विक्षेपशून्येन योऽयं योगः केवलमात्माकारावस्थानुरूपरत्वया प्रोक्त एतस्याहं शाश्वतीं स्थितिं न पश्यामि कुतो मनसश्चञ्चलत्वादनेकविक्षेपैरस्थिरत्वात्, अत एव मधुसूदनेति संबुद्धिः, यतो मध्वादिदैत्यनिबर्हणे शक्तोऽसि परं त्वस्मन्मनो निगृहीतुं कुण्ठितशक्तिः सन्नकिं चित्करानस्माने-वोपदिशसीत्यर्थः ॥ ३३ ॥

## चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ॥
## तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥

चञ्चलमिति । चञ्चलं हि मनः कृष्ण इति कृषतेर्विलेखनार्थस्य रूपं भक्तजनपापादिदोषाकर्षणात् कृष्ण, हि यस्मान्मनश्चञ्चलं न केवलमत्यर्थं चञ्चलं प्रमाथि च प्रमथनशीलं प्रमथ्नाति शरीरमिन्द्रियाणि च विक्षिपति पर-वशीकरोति, किं च बलवत् प्रबलं न केन चिन्नियन्तुं शक्यं दुर्निवारत्वात्, किं च दृढं तन्तुनागवदच्छेद्यं तस्यैवंभूतस्य मनसोऽहं निग्रहं रोधं मन्ये वायो-रिव यथा वायोर्दुष्करो निग्रहस्ततोऽपि मनसो दुष्करं मन्य इत्यभिप्रायः ॥३४॥

आ० टी० । मनसश्चञ्चलत्वेऽपि कृष्णपदपरिनिष्पत्तिप्रकारं सूचयति **कृष्ण इतीति** । कथं कर्षकत्वमाप्तकामस्य भगवतः संभवतीत्याशङ्क्याह **भक्तेति** । ऐहिकामुष्मिकसर्वसंपदामाक-र्षणशीलत्वाच्चेति द्रष्टव्यम् । **प्रमथ्नाति क्षोभयति** । तदेव क्षोभकत्वं प्रकटयति **विक्षिपतीति** । दुर्निवारत्वमभिप्रेताद्विषयादाक्रष्टुमशक्यत्वं विशेषणान्तरमाह **किं चेति** । अच्छेद्यत्वं विशेषणान्तर-माह **किं च दृढमिति**। तन्तुनागो वरुणपाशशब्दितो जलचारी पदार्थोऽत्यन्तदृढतया छेत्तुमशक्यत्वेन प्रसिद्धो विवक्षितः । वायोरित्युक्तं व्यनक्ति **यथेति** ॥ ३४ ॥

प० टी० । अथ पुनः प्रश्नार्थमेव प्रकटयति **चञ्चलमिति** । भो कृष्ण तस्य मनसो नि-ग्रहं निरोधं सुदुष्करं सुतरां दुःखेन कर्तुमशक्यं मन्ये । कस्येव वायोरिव । यथाकाशे दोधूयमानस्य वायोः कुम्भादिषु निरोधः कर्तुं न शक्यते । न हि वायोरेकत्रावस्थानं युज्यते तद्वत् । अथ तस्य दुर्निग्रहत्वं चतुर्भिः प्रकारैरुपन्यस्यति **चञ्चलमिति** । चञ्चलमेकत्रानवस्थितम् प्रमाथि, प्रमथनशीलं देहेन्द्रियक्षोभकं, बलवद्विचारेणापि जेतुमशक्यम् । दृढमनादिविषयवासनानुविद्धतया वैराग्यादिना दुर्भेद्यम् ॥ ३४ ॥

## ॥ श्रीभगवानुवाच ॥

## असंशयं महाबाहो मनो दुर्निग्रहं चलम् ॥
## अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥

श्रीभगवानुवाच एवमेतद् यथा ब्रवीष्यसंशयं नास्ति संशयो मनो दु-

निग्रहं चञ्चलमित्यत्र हे महाबाहो किं त्वभ्यासेन त्वभ्यासो नाम चित्तभूमौ कस्यां चित् समानप्रत्ययावृत्तिश्चित्तस्य वैराग्येण च गृह्यते, वैराग्यं नाम दृष्टादृष्टेषु भोगेषु दोषदर्शनाभ्यासाद् वैतृष्ण्यं विषयेषु वितृष्णा वैराग्यं तेन च वैराग्येण गृह्यते विक्षेपरूपः प्रचारश्चित्तस्यैवं तन्मनो गृह्यते निगृह्यते निरुध्यत इत्यर्थः ॥ ३५ ॥

आ० टी० । प्रश्नमङ्गीकृत्य प्रतिवचनमुत्थापयति **श्रीभगवानिति** । कुत्र संशयराहित्यं तत्राह **मन इति** । कथं तर्हि मनोनिरोधो भवति तत्राह **किं त्विति** । अभ्यासस्वरूपं सामान्येन निदर्शयति **अभ्यासो नामेति** । कस्यां चिच्चित्तभूमावित्यविशेषिता ध्येयो विषयो निर्दिश्यते, समानप्रत्ययावृत्तिर्विजातीयप्रत्ययानन्तरितेति शेषः, चित्तस्येति षष्ठीप्रत्ययस्य तद्विकारत्वद्योतनार्थम् । वैराग्यस्वरूपं निरूपयति **वैराग्यमिति** । तेषु वैतृष्ण्यं वैराग्यं नामेति संबन्धः । तत्र हेतुं सूचयति **दोषेति** । विषयेषु वितृष्णाविषयेषु दोषदर्शनमभ्यस्यते तेन वैतृष्ण्यं जायते तेन निगृह्यमाणम् । निगृह्यमाणं निर्दिशति **विक्षेपेति** । तस्मिन् गृहीते निरुद्धे । मनोनिरोधेऽस्य किं स्यादित्यपेक्षायामाह **एवमिति** । अभ्यासहेतुकवैराग्यद्वारा चित्तप्रचारनिरोधे निरुद्धवृत्तिकं मनो विषयविमुखमन्तर्निष्ठं भवतीत्यर्थः ॥ ३५ ॥

प० टी० । अथ द्विप्रकारं निग्रहोपायमुपदिशन् भगवानाह **असंशयमिति** । चञ्चलत्वादिस्वभावं मनो निग्रोद्धुमशक्यमिति यद्वदसि तदसंशयं निःसंदिग्धमेव । तथापि अभ्यासेन वैराग्येण च गृह्यते वशीक्रियते । तत्राभ्यासो नाम निरन्तरमात्मानुध्यानं वैराग्यं च विषयवैरस्यम् । नन्वेतत्परस्पराश्रयमिति प्रतिभाति यतो मनसि निगृहीतेऽभ्यासो वैराग्यं वा सिध्यति तथाभ्यासवैराग्याभ्यां मनो निगृह्यत इति चेत्सत्यम् । एतस्योभयस्य विचाराधीनत्वात् तत्प्रश्नोत्तरं भगवता प्रागेव दत्तं शनैः शनैरुपरमेदिति तदेव 'अभ्यासेन च कौन्तेय वैराग्येण च गृह्यते' इत्यनेन स्मारितम् । तथाहि । तत्र परमार्थप्राप्तौ तावदात्मविचार एव शरणमिति द्रष्टव्यः श्रोतव्यो मन्तव्य इति । तद्यथा वेदाहमेतमित्यादिश्रुतयो वदन्ति, तत्रात्मा देहेन्द्रियादिविलक्षणस्तद्द्रष्टृत्वान्न हि घटद्रष्टा घट एव संभवति । अथ स कीदृगस्तीति विचारे तावद्रूपरसादिग्राहकत्वे प्रतिक्षणमन्वेषणीयः स एव प्रस्तुतमभ्यासः । तथोत्पत्तेरनन्तरमेतावत्समयं मया सुखदुःखयोर्मध्ये किमधिकमनुभूतमिति परामर्शे बाल्यपौगण्डकैशोरयौवनवार्धकाद्यवस्थासु बहुतरं दुःखमेव स्मर्यते । तथा विषयलाभार्थं प्रयत्नो भूयान् प्राणपर्यवसायी वातः स दुःखरूपो भोगसमयस्तु निमेषमात्रं तावदेव सुखं तदपि मत्स्यामिषन्यायेन परिणतिविरसत्वाद्दुःखपर्यवसाय्येवेति विचारेण वैराग्यप्रकारः । किं च चञ्चलेऽपि विषयलोलुपेऽपि मनस्यभ्यासो विरागश्च संभवति । तदुक्तं योगशास्त्रे——'यत्रैव याति चपलं ननु चित्तमेतत्तत्रैव भाति परमेश्वर एव साक्षात् । प्राग्दुःखदोऽथ विरमे विरसः पदार्थस्त्वात्मा चिरं सुखद इत्यनिशं विचिन्त्य' इति । अत एव कौन्तेय महाबाहो इति संबुद्ध्या विवेकत्यागयोर्ग्रहणम् । वयं त्वात्मभावस्थाः साहाय्यं करिष्याम एवेत्यर्थः ॥ ३५ ॥

असंयतात्मना योगो दुष्प्राप इति मे मतिः ॥
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६ ॥

असंयतेति । यः पुनरसंयतात्मा तेनासंयतात्मनाभ्यासवैराग्याभ्यामसंयत

आत्मान्तःकरणं यस्य सोऽयमसंयतात्मा तेनासंयतात्मना योगो दुष्प्रापो दुःखसंप्राप्य इति मे मतिः । यस्तु पुनर्वश्यात्माभ्यासवैराग्याभ्यां वश्यत्वमापादित आत्मा मनो यस्य सोऽयं वश्यात्मा तेन वश्यात्मना तु यतता भूयोऽपि प्रयत्नं कुर्वता शक्योऽवाप्तुं योग उपायतो यथोक्तादुपायात् ॥ ३६ ॥

आ० टी० । संयतात्मनो योगप्राप्तिः सुलभेत्युक्त्वा व्यतिरेकं दर्शयति **यः पुनरिति ।** व्यतिरेकोपन्यासपरं पूर्वार्धमनूद्य व्याकरोति **असंयतेति** । पूर्वोक्तान्वयव्याख्यानपरमुत्तरार्धं व्याचष्टे **यस्त्वित्यादिना** । अन्तःकरणस्य स्ववशत्वे सिद्धेऽपि वैराग्यादावास्थावता भवितव्यमित्याह **यततेति** । उपायो वैराग्यादिपूर्वको मनोनिरोधः ॥ ३६ ॥

प० टी० । अथोभयप्रकारविधुरस्य योगो दुःसाध्यस्तथा तदुभयोपेतस्य सुसाध्य इत्याह **असंयतात्मनेति ।** अभ्यासवैराग्याभ्यामसंयत आत्मा चित्तं यस्य तेन योगो दुष्प्रापः प्राप्तुमशक्यस्तथाभाभ्यां वश्यो वशवर्ती आत्मा यस्य तेन यतता प्रयत्नं कुर्वता पुरुषेणोपायतोऽभ्यासवैराग्यरूपादाप्तुं प्राप्तुं शक्य इति मे मतिर्ममाभिमतम् ॥ ३६ ॥

## ॥ अर्जुनउवाच ॥

## अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ॥
## अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७ ॥

तत्र योगाभ्यासाङ्गीकरणेन परलोकेहलोकप्राप्तिनिमित्तानि कर्माणि संन्यस्तानि योगसिद्धिफलं च मोक्षसाधनं सम्यग्दर्शनं न प्राप्तमिति योगी योगमार्गान्मरणकाले चलितचित्त इति तस्य नाशमाशङ्क्यार्जुन उवाच अयतिरिति । अयतिरप्रयत्नवान् योगमार्गे श्रद्धयास्तिक्यबुद्ध्या योगतो योगादन्तकालेऽपि चलितं मानसं मनो यस्य स चलितमानसो भ्रष्टस्मृतिः सोऽप्राप्य योगसंसिद्धिं योगफलं सम्यग्दर्शनं कां गतिं हे कृष्ण गच्छति ॥ ३७ ॥

आ० टी० । प्रश्नान्तरमुत्थापयति **तत्रेत्यादिना** । मनोनिरोधस्य दुःखसाध्यत्वमाशङ्क्य परिहृते सति प्रष्टा पुनरवकाशं प्रतिलभ्योवाचेति संबन्धः । लोकद्वयप्रापककर्मसंभवे कुतो योगिनो नाशाशङ्केत्याशङ्क्याह **योगाभ्यासेति** । तथापि योगानुष्ठानपरिपाकपरिप्राप्तिसम्यग्दर्शनसामर्थ्यान्मोक्षोपपत्तौ कुतस्तस्य नाशाशङ्केति चेन्मैवमनेकान्तरायवऽवाद् योगस्येह जन्मनि प्रायेण संसिद्धेरसिद्धिरित्यभिसंधायाह **योगसिद्धीति** । अभ्युदयनिःश्रेयसबहिर्भावो नाशो योगमार्गे तत्फलस्य सम्यग्दर्शनस्यादर्शनादिति शेषः । तर्हि ततो बहिर्मुखत्वमेवात्यन्तिकं संवृत्तमित्याशङ्क्याह **श्रद्धयेति** । तर्हि योगमार्गमाश्रयते नेत्याह **योगादिति** । मरणकाले व्याकुलेन्द्रियस्य ज्ञानसाधनानुष्ठानावकाशाभावाद् युक्तं ततश्चलितमानसत्वमित्याशङ्क्याह **भ्रष्टेति** । गम्यत इति गतिः पुरुषार्थः, सामान्यप्रश्नमन्तर्भाव्य विशेषप्रश्नो द्रष्टव्यः ॥ ३७ ॥

प० टी० । अथोभयशून्यत्वेन शिथिलाभ्यासवतः का गतिरित्यर्जुनः पृच्छति **अयतिरिति** । प्रथमं श्रद्धयोपेत ईश्वरार्पणतया कर्म कुर्वाणः सन् योगे प्रवृत्तो न तु मिथ्याचारतया

परं तु न सम्यग्यतते । योगसामग्रीविकलः सन् योगाच्चलितं विषयासक्तं मानसं यस्य स तथाभूतो योगसंसिद्धिमप्राप्य कां गतिं गच्छति ॥ ३७ ॥

**कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ॥**
**अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥३८॥**
**एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ॥**
**त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ३९ ॥**

कच्चिदिति । कच्चित् किं नोभयविभ्रष्टः कर्ममार्गाद् योगमार्गाच्च विभ्रष्टः संश्छिन्नाभ्रमिव नश्यति किं वा न नश्यत्यप्रतिष्ठो निराश्रयो हे महाबाहो । विमूढः सन् ब्रह्मणः पथि ब्रह्मप्राप्तिमार्गे ॥ ३८ ॥

एतदिति । एतन्मे मम संशयं कृष्ण छेत्तुमपनेतुमर्हस्यशेषतस्त्वदन्यस्त्वत्तोऽन्य ऋषिर्देवो वा छेत्ता नाशयिता संशयस्यास्य न हि यस्मादुपपद्यते न संभवत्यतस्त्वमेव छेत्तुमर्हसीत्यर्थः ॥ ३९ ॥

आ० टी० । प्रश्नमेव विवृणोति **कच्चिदिति**। प्रशस्तप्रश्नार्थत्वं कच्चिदित्यस्याङ्गीकृत्य व्याचष्टे **किमिति** । उभयविभ्रष्टत्वं स्पष्टयति **कर्मेत्यादिना** । वायुना छिन्नं विशकलितमभ्रं यथा नश्यति तद्वदित्याह **छिन्नेति** । नाशाशङ्कानिमित्तमाह **निराश्रय इति** । कर्ममार्गरूपावष्टम्भाभावेऽपि ज्ञानमार्गावष्टम्भस्तस्य भविष्यतीत्याशङ्क्याह **विमूढः सन्निति** । न हि कर्मिणं प्रतीयमाशङ्का युक्ताभिलाषं त्यक्त्वेश्वरे समर्प्यार्वाक् कर्मानुतिष्ठतो निरुपचारेण तद्भ्रंशवचनासंभवात् सर्वकर्मसंन्यासिनस्तु विहितानां त्यागात् ज्ञातोपायाच्चाविच्युतेरनर्थप्राप्तिशङ्का युक्तेति भावः ॥ ३८ ॥

आ० टी० । यथोपदर्शितसंशयापाकरणार्थमर्जुनो भगवन्तं प्रेरयन्नाह **एतदिति**। मत्तोऽन्यः कश्चिदृषिर्वा देवो वा त्वदीयं संशयं छेत्स्यतीत्याशङ्क्याह **त्वदन्य इति** । अन्यस्य संशयच्छेत्तुरभावे फलितमाह अत इति ॥ ३९ ॥

प० टी० । प्रश्नाभिप्रायं विशदयन् पुनराह **कच्चिदिति द्वाभ्याम्** । पूर्वं श्रद्धया कर्मणामीश्वरार्पणतया स्वर्गादिफलभ्रष्टः पुनर्योगाच्चलितत्वादनधिगतमोक्ष एवमुभयविभ्रष्टः संश्छिन्नाभ्रमिवाग्रतः पृष्ठतो वा सहायीभूताभ्रान्तराभावान्मध्यस्थितमभ्रं यथा विलीयते तद्वद्ब्रह्मणः पथि मोक्षमार्गे विमूढोऽत एवाप्रतिष्ठो निराश्रयः कच्चिन्नश्यति । एतदेनं मे संशयं छेत्तुं भो कृष्ण त्वमेवार्हसीति प्रश्नः । शेषं स्पष्टम् ॥ ३८ ॥ ३९ ॥

**॥ श्रीभगवानुवाच ॥**

**पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ॥**
**न हि कल्याणकृत् कश्चिद्दुर्गतिं तात गच्छति ॥ ४० ॥**

पार्थेति । हे पार्थ नैवेह लोके नामुत्र परस्मिन् वा लोके विनाशस्तस्य विद्यते नास्ति नाशो नाम पूर्वस्माद्धीनजन्मप्राप्तिः स तस्य योगभ्रष्टस्य

नास्ति, न हि यस्मात् कारणात् कल्याणकृच्छुभकृत्कश्चिद्दुर्गतिं कुत्सितां गतिं हे तात तनोत्यात्मानं पुत्ररूपेणेति पिता तात उच्यते पितैव पुत्र इति पुत्रोऽपि तात उच्यते शिष्योऽपि पुत्रतुल्य उच्यते, यतो न गच्छति ॥ ४० ॥

आ० टी० । योगिनो नाशाशङ्कां परिहरन्नुत्तरमाह **भगवानिति** । यदुक्तमुभयभ्रष्टो योगी नश्यतीति तत्राह **पार्थेति** । तत्र हेतुमाह **न हीति** । योगिनो मार्गद्वयाद्विभ्रष्टस्यैहिको नाशः शिष्टगर्हालक्षणो न भवतीति श्रद्धादेः सद्भावात्तथापि कथमामुष्मिकनाशशून्यत्वमित्याशङ्क्य तद्रूपनिरूपणपूर्वकं तदभावं प्रतिजानीते **नाशो नामेति** । तत्र हेतुभागं विभजते न **हीत्यादिना** । उभयभ्रष्टस्यापि श्रद्धेन्द्रियसंयमादेः सामिकृतश्रवणादेश्च भावादुपपन्नं शुभकृत्त्वम् । तातेति कथं पुत्रस्थानीयशिष्यः संबोध्यते पितुरेव तातशब्दत्वादित्याशङ्क्याह **तनोतीति** । तेन पुत्रस्थानीयस्य शिष्यस्य तातेति संबोधनमविरुद्धमित्यर्थः । न गच्छति कुत्सितां गतिं कल्याणकरत्वादिति नाशाभावः ॥ ४० ॥

प० टी० । अत्रोत्तरं भगवानाह **पार्थेति** । तस्य पुरुषस्येहामुत्र वा नाशो नास्ति इह लोकेऽधमयोनिप्राप्तिर्नाशः अमुत्र च निरयप्राप्तिर्नाशः । एवमुभयत्र नाशो नास्ति । कुतः भो तात तनोत्यात्मानं पुत्ररूपेणेति तातः पुत्र एवमर्जुनस्य परमप्रेमास्पदत्वात्तातेति संबुद्धिः । हि यस्मात्कारणात्कल्याणकृत्पूर्वमीश्वरार्पणतया कर्म कुर्वन् कश्चिदपि दुर्गतिं न गच्छति ॥ ४० ॥

**प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ॥**
**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥**

किं त्वस्य भवति प्राप्येति । योगमार्गेषु प्रवृत्तः संन्यासी सामर्थ्यात् प्राप्य गत्वा पुण्यकृतामश्वमेधादियाजिनां लोकास्तत्र चोषित्वा वासमनुभूय शाश्वतीर्नित्याः समाः संवत्सरास्तद्भोगक्षये शुचीनां यथोक्तकारिणां श्रीमतां विभूतिमतां गेहे गृहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥

आ० टी० । योगभ्रष्टस्य लोकद्वयेऽपि नाशाभावे किं भवतीति पृच्छति **किं त्विति** । तत्र श्लोकेनोत्तरमाह **प्राप्येति** । कथं संन्यासीति विशिष्यते तत्राह **सामर्थ्यादिति** । कर्माणि व्याप्टतस्य कर्मिणो योगमार्गप्रवृत्त्यनुपपत्तिस्तत्प्रवृत्तावपि फलाभिलाषविकलस्येश्वरे समर्पितसर्वकर्मणस्तद्भ्रंशाशङ्कानवकाशादित्यर्थः । समानां नित्यत्वं मानुषसमाविलक्षणत्वं, वैराग्यभावविवक्षया विभूतिमतां गृहे जन्मेति विशिष्यते ॥ ४१ ॥

प० टी० । किं तर्हि तत्र प्रथममल्पकालयोगभ्रष्टस्य गतिमाह **प्राप्येति** । स योगभ्रष्टः पुण्यकृतामश्वमेधयाजिनां लोकान् प्राप्य तत्र शाश्वतीः समा बहुतरसंवत्सरानुषित्वा भुक्त्वा शुचीनां सदाचारपरायणानां श्रीमतां धनिनां गेहे जायते उत्पद्यते ॥ ४१ ॥

**अथ वा योगिनामेव कुले भवति धीमताम् ॥**
**एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥**

तथेति । अथवा श्रीमतां कुलादन्यस्मिन् योगिनामेव दरिद्राणां कुले भवति जायते धीमतां बुद्धिमताम् । एतद्धि जन्म यद्दरिद्राणां योगिनां कुले

दुर्लभतरं दुःखेन लभ्यतरं पूर्वमपेक्ष्य लोके जन्म यदीदृशं यथोक्तविशेषणे कुले यस्मात् ॥ ४२ ॥

आ० टी० । श्रद्धावैराग्यादिकल्याणाधिक्ये पक्षान्तरमाह **अथ वेति** । योगिनामिति कर्मिणां ग्रहणं माभूदिति विशिनष्टि **धीमतामिति** । ब्रह्मविद्यावतां शुचीनां दरिद्राणां कुले जन्म दुर्लभं प्रमादकारणाभावादित्याह **एतद्धीति** । किमपेक्ष्यास्य जन्मनो दुःखलभ्यादपि दुःखलभ्यतरत्वं तदाह **पूर्वमिति** । यद्यपि विभूतिमतां शुचीनां गृहे जन्म दुःखलभ्यं तथापि तदपेक्षयेदं जन्म दुःखलभ्यतरं यदीदृशं शुचीनां दरिद्राणां विद्यावतामिति विशेषणोपेते कुले लोके जन्मलक्षणमित्यर्थः । यदुत्तमतरं जन्मोक्तं तस्योत्तमत्वे हेत्वन्तरमाह **यस्मादिति** ॥ ४२ ॥

प० टी० । अथ चिराभ्यस्तयोगभ्रंशे पक्षान्तरमाह **अथ वेति** । अथ वा योगिनां योगनिष्ठानां तथा धीमतां ज्ञानिनामेव कुले जायते न तु पूर्वोक्तानामनारूढयोगानाम् । एतदीदृशं यज्जन्म तद्दुर्लभतरं मोक्षहेतुत्वात् ॥ ४२ ॥

**तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ॥**
**यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ ४३ ॥**

तत्रेति । तत्र योगिनां कुले तं बुद्धिसंयोगं बुद्ध्या संयोगं बुद्धिसंयोगं लभते पौर्वदेहिकं पूर्वस्मिन् देहे भवं पौर्वदेहिकं, यतते च यत्नं करोति ततस्तस्मात् पूर्वकृतात् संस्काराद्भूयो बहुतरं संसिद्धौ संसिद्धिनिमित्तं हे कुरुनन्दन ॥ ४३ ॥

आ० टी० । बुद्ध्येत्यात्मविषययेति शेषः। पूर्वस्मिन् देहे भवं तत्रानुष्ठितसाधनाविशेषयुक्तमित्यर्थः । तर्हि यथोक्तजन्मनि साधनानुष्ठानमन्तरेणैव बुद्धिसंबन्धः स्यादित्याशङ्क्याह **यतते चेति** । प्रयत्नः श्रवणाद्यनुष्ठानविषयः ॥ ४३ ॥

प० टी० । तत्र किं भवतीत्याह सार्धेन **तत्रेति** । तत्र योगिनां कुले तं पौर्वदेहिकं प्राक् संस्कारागतं बुद्धिसंयोगं लभते । ततस्तेन बुद्धिसंयोगेन संसिद्धौ मोक्षसाधने यतते बहुतरं प्रयत्नं करोति ॥ ४३ ॥

**पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ॥**
**जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥**

कथंभूतं पूर्वदेहबुद्धिसंयोगम् इति तदुच्यते पूर्वेति । यः पूर्वजन्मनि कृतोऽभ्यासः स पूर्वाभ्यासस्तेनैव बलवता ह्रियते संसिद्धौ हि यस्मादवशोऽपि स योगभ्रष्टो न कृतं चेद् योगाभ्यासजात् संस्काराद् बलवत्तरमधर्मादिलक्षणं कर्म तदा योगाभ्यासजनितेन संस्कारेणाह्रियतेऽधर्मश्चेद्बलवत्तरः कृतस्तेन योगजोऽपि संस्कारोऽभिभूयत एव तत्क्षये तु योगजः संस्कारः स्वयमेव कार्यमारभते न दीर्घकालस्थस्यापि विनाशस्तस्यास्तीत्यतो जिज्ञासुरपि योगस्य

स्वरूपं ज्ञातुमिच्छन् योगमार्गे प्रवृत्तः संन्यासी योगभ्रष्टः सामर्थ्यात् सोऽपि शब्दब्रह्मवेदोक्तकर्मानुष्ठानफलमतिवर्तते कर्मानुष्ठानलक्षणमतिक्रामत्यपाकरिष्यति किमुत बुद्ध्या योगं तन्निष्ठोऽभ्यासं कुर्यात् ॥ ४४ ॥

आ० टी० । यदि पूर्वसंस्कारोऽस्येच्छामुपनयन् प्रवर्तयति तथा चाप्रवृत्तिरनिच्छया स्यादित्याशङ्क्याह **पूर्वेति** । स हि योगभ्रष्टः समनन्तरजन्मकृतसंस्कारवशादुत्तरस्मिन् जन्मनि अनिच्छन्नपि योगं प्रत्येवाकृष्टो भवतीत्यर्थः । तत्र कैमुतिकन्यायं सूचयति **जिज्ञासुरिति** । पूर्वार्धं विभजते **पूर्वेति** । तस्मान्नेच्छया तस्य प्रवृत्तिरिति शेषः । योगभ्रष्टस्याधर्मादि प्रतिबन्धेऽपि तर्हि पूर्वाभ्यासवशाद् बुद्धिसंबन्धः स्यादित्याशङ्क्याह **नेत्यादिना** । यदि योगभ्रष्टेन योगाभ्यासजनितसंस्कारप्राबल्यात् प्रबलतरधर्मप्रभेदरूपं कर्म न कृतं स्यात्तदा तेन संस्कारेण वशीकृतः सन्निच्छादिरहितोऽपि बुद्धिसंबन्धभाग् भवतीत्यर्थः । विपक्षे योगसंस्कारस्याभिभूतत्वान्न कार्यारम्भकत्वमित्याह **अधर्मश्चेदिति** । योगजसंस्कारस्याधर्माभिभूतस्य कार्यमकृत्वैवाभिभावकप्राबल्ये प्रणाशः स्यादित्याशङ्क्याह **तत्क्षयेत्विति** । कालव्यवधानान्निवृत्तिं शङ्कित्वोक्तं **नेति** । तृणजलौकादृष्टान्तश्रुत्या संस्कारस्य दीर्घतायाः समधिगतत्वादिति भावः । कैमुतिकन्यायोक्तिपरमुत्तरार्धं विभजते **जिज्ञासुरपीत्यादिना** । अत्रापि संन्यासीति विशेषणं पूर्ववदवधेयमित्याह **सामर्थ्यादिति** । न हि कर्मी कर्ममार्गे प्रवृत्तस्ततो भ्रष्टः शङ्कितुं शक्यते अतः संन्यासी पूर्वोक्तैर्विशेषणैः विशिष्टो योगभ्रष्टोऽभीष्टः सोऽपि वैदिकं कर्म तत्फलं चातिवर्तते किमुत योगं बुद्ध्वा तन्निष्ठः सदाभ्यासं कुर्वन् कर्म तत्फलं चातिवर्तते किमिति वक्तव्यमिति योजना। योगनिष्ठस्य कर्म तत्फलातिवर्तनं ततोऽधिकफलावाप्तिर्विवक्ष्यते॥४४॥

प० टी० । तत्र हेतुमाह **पूर्वेति** । तेनैव पूर्वाभ्याससंस्कारेणावशोऽपि कुतश्चिदन्तरायादनिच्छन्नपि ह्रियते बलात्कारेण विषयेभ्यः परावर्त्य ब्रह्मनिष्ठः क्रियते । तदुक्तं विष्णुपुराणे 'अनिष्पन्नसमाधिस्तु परब्रह्मोपलब्धिमान् । यद्यन्तरायदोषेण दुष्यते ह्यस्य मानसे । जन्मान्तरैरस्य सतो मुक्तिः पूर्वस्य जायते । विनिष्पन्नसमाधिस्तु मुक्तिमत्रैव जन्मनि । प्राप्नोति योगी योगाग्निदग्धकर्मा च योऽचिराद्' इति । अथ योगसामर्थ्यमाह **जिज्ञासुरिति** । योगस्वरूपं जिज्ञासुरपि योगप्रविष्टमात्रोऽपि शब्दब्रह्मातिवर्तते शब्दात्मकं ब्रह्म शब्दब्रह्म वेदस्तदुक्तफलानि स्वर्गादीन्यतिवर्तते, अतिक्रामति तेभ्योऽधिकं फलं प्राप्य मुच्यत इत्यर्थः। एवं मन्दप्रयत्नोऽपि योगी परां गतिं याति ॥४४॥

**प्रयत्नाद् यतमानस्तु योगी संशुद्धकिल्बिषः ॥**
**अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४५ ॥**

कुतश्च योगित्वं श्रेय इति प्रयत्नादिति । प्रयत्नाद्यतमानोऽधिकतरं यतमान इत्यर्थः। तत्र योगी विद्वान् संशुद्धकिल्बिषो विशुद्धकिल्बिषः संशुद्धपापोऽनेकेषु जन्मसु किं चित् किं चित् संस्कारजातमुपचित्य तेनोपचितेनानेकजन्मकृतेन संसिद्धोऽनेकजन्मसंसिद्धस्ततो लब्धसम्यग्दर्शनः सन् याति परां प्रकृष्टां गतिम् ॥ ४५ ॥

आ० टी० । योगनिष्ठस्य श्रेष्ठत्वे हेत्वन्तरं वक्तुमुत्तरश्लोकमवतारयति **कुतश्चेति** । मृदुप्रयत्नोऽपि क्रमेण मोक्ष्यते चेदधिकप्रयत्नस्य क्लेशहेतोरकिंचित्करत्वमित्याशङ्क्य हेत्वन्तरमेव प्रकटयति **प्रयत्नादिति** । तत्र योगविषये प्रयत्नातिरेके सतीत्यर्थः, ततः संचितसंस्कारसमुदायादिति यावत्

समुत्पन्नसम्यग्दर्शनवशात् प्रकृष्टा गतिः संन्यासिना लभ्यते तेन शीघ्रं मुक्तिमिच्छन्नाधिकप्रयत्नो भवेदल्पप्रयत्नस्तु चिरेणैव मुक्तिभागीत्यर्थः ॥ ४९ ॥

प० टी० । किं पुनः प्रयत्नादित्याह **अथेति** । अथ प्रयत्नादुत्तरोत्तरमधिकयोगेन यतमानो यत्नं कुर्वन् योगेनैव संशुद्धकिल्बिषो विधूतपापः सोऽप्यनेकेषु जन्मसूपचितेन योगेन संसिद्धः सम्यग्ज्ञानी भूत्वा श्रेष्ठां गतिं यातीति किं वक्तव्यमित्यर्थः ॥ ४९ ॥

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ॥**
**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४६ ॥**

यस्मादेवं तस्मात् तपस्विभ्य इति । तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि, ज्ञानमत्र शास्त्रार्थपाण्डित्यं तद्वद्भ्योऽपि मतो ज्ञातोऽधिकः श्रेष्ठ इति कर्मिभ्योऽग्निहोत्रादि कर्म तद्वद्भ्योऽधिको योगी विशिष्टो यस्मात्तस्माद्योगी भवार्जुन ॥ ४६ ॥

आ० टी० । सम्यग्ज्ञानद्वारा मोक्षहेतुत्वं योगस्योक्तमनूद्य योगिनः सर्वाधिकत्वमाह **यस्मादिति** । योगस्य सर्वस्मादुत्कर्षादवश्यकर्तव्यत्वाय योगिनः सर्वाधिक्यं साधयति **तपस्विभ्य इति** । योगिनो ज्ञानिनश्च पर्यायत्वात् कथं तस्य ज्ञानिभ्योऽधिकत्वमित्याशङ्क्याह **ज्ञानमिति** । योगिनः सर्वाधिकत्वं फलितमाह **तस्मादिति** ॥ ४६ ॥

प० टी० । **तपस्विभ्य इति** । तपस्विभ्यः कृच्छ्रचान्द्रायणादितपोनिष्ठेभ्यो, ज्ञानिभ्यः शास्त्रविद्भ्यः कर्मिभ्य इष्टापूर्तकारिभ्योऽपि योगी श्रेष्ठोऽभिमतस्तस्मात्त्वं योगी भव ॥ ४६ ॥

**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ॥**
**श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥ ४७ ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि
श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णा-
र्जुनसंवादे ध्यानयोगो नाम षष्ठाध्यायः ॥ ६ ॥

योगिनामिति । योगिनामपि सर्वेषां रुद्रादित्यादिध्यानपराणां मध्ये मद्गतेन मयि वासुदेवे समाहितेनान्तरात्मनान्तःकरणेन श्रद्धावान् श्रद्दधानः सन् भजते सेवते यो मां स मे मम युक्ततमोऽतिशयेन युक्तो मतोऽभिप्रेत इति ॥४७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यपूज्यपादश्रीमदाचार्यश्री-
शंकरभगवतः कृतौ श्रीभगवद्गीताभाष्येऽभ्यासयोगो
नाम षष्ठाध्यायः ॥ ६ ॥

आ० टी० । नन्वादित्यो विराडात्मा सूत्रं कारणमक्षरमित्येतेषामुपासका भूयांसो योगिनो गम्यन्ते तेषां कतमः श्रेयानिष्यते तत्राह **योगिनामिति** । यो भगवन्तं सगुणं निर्गुणं वा यथोक्तेन

चेतसा श्रद्दधानः सन्ननवरतमनुसंधत्ते स युक्तानां मध्येऽतिशयेन युक्तः श्रेयानीश्वरस्याभिमेतो न हि तदीयोऽभिप्रायोऽन्यथा भवितुमर्हतीत्यर्थः । तदनेनाध्यायेन कर्मयोगस्य संन्यासहेतोर्मर्यादां दर्शयता साङ्गं योगं विवृण्वता मनोनिग्रहोपायोपदेशेन योगभ्रष्टस्यात्यन्तिकनाशशङ्कां च शिथिलयता त्वंपदार्थाभिज्ञस्य ज्ञाननिष्ठत्वोक्त्या वाक्यार्थज्ञानान्मुक्तिरिति साधितम् ॥ ४७ ॥

इत्यानन्दगिरिकृतगीताभाष्यटीकायां षष्ठाध्यायः ॥ ६ ॥

**प० टी०** । अथ यमनियमपरायणानां योगिनामपि मद्भक्तः श्रेष्ठ इत्याह **योगिनामिति** । मद्गतेन मय्यासक्तेनान्तरात्मना मनसा यो मां परमेश्वरं श्रद्धया युक्तः सन् भजते स योगयुक्तेषु श्रेष्ठो मे मतोऽतो मद्भक्तो भवेति भावः । यतो मद्भक्तो मत्प्रसादेन सकलसाधनयोगपद्यवान् स्वत एव भवतीत्यर्थः । श्रुतिरपि—"योगे योगे तवस्तरं वाजे वाजे हवामहे । सखाय इन्द्रमूतये" इति । भाष्यम्—शुनःशेफः प्राणापानयोर्योगे मनःपवनयोर्योगे दुःसाध्ये सति यतस्तत्र विघ्नकर्तृभिः कामक्रोधादिभिः सह पुनः पुनर्वाजे संग्रामे समुपस्थिते सति वयं त्वामिन्द्रं परमात्मानं हवामहे आह्वयामः । किमर्थम्, ऊतये रक्षणार्थम् निर्वाहार्थमित्यर्थः । किंभूतं त्वाम्, तवस्तरम् अतिशयेन रक्षितारम् । किंभूता वयम्, सखायः परमप्रेमास्पदत्वेनानुग्राह्याः । तदुक्तम्—'एह्येहि वुद्ध भवतीति शान्त्यै गच्छाशु गोविन्दपदारविन्दम् । यद्यन्तरा त्वां विषया निहन्युः क्रोश त्वमम्भोरुहलोचनेति' ॥ ४७ ॥

**अथाध्यायतात्पर्यम्** । प्रोक्तो विज्ञानयोगः स्थिरमनसि सदात्मानुसंधानरूपो नो चेदभ्यासयोगो बहिरुपविशते चासनादिक्रमेण । अन्तर्योगानुवृत्तौ स्वयमुपरमते दृश्यतः प्राप्य तोषं वैराग्याभ्यासयोगात्परिहरति शनैर्वेगमित्याह षष्ठे ॥ १ ॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भ० गी० टी० पर० प्रपायामभ्यासयोगो नाम षष्ठाध्यायः ॥ ६ ॥

इति षष्ठाध्यायः ॥ ६ ॥

---

# अथ
# सप्तमाध्यायः ।
## श्रीभगवानुवाच ।

**मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ॥**
**असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥**

"योगिनामपि सर्वेषां मद्गतेनान्तरात्मना । श्रद्धावान् भजते यो मां स मे युक्ततमो मतः" इति प्रश्नबीजमुपन्यस्य स्वयमेवेदृशं मदीयं तत्त्वमेवं मद्गतान्तरात्मा स्यादित्येतद्विवक्षुर्भगवानुवाच मयीति । मयि वक्ष्यमाणविशेषणे परमेश्वर आसक्तं मनो यस्य स मय्यासक्तमना हे पार्थ योगं युञ्जन् मनःसमाधानं कुर्वन् मदाश्रयोऽहमेव परमेश्वर आश्रयो यस्य स मदाश्रयो यो हि कश्चित् पुरुषार्थेन केन चिदर्थीभवति स तत्साधनं कर्माग्निहोत्रादि तपो दानं वा

किं चिदाश्रयं प्रतिपद्यतेऽयं तु योगी मामेवाश्रयं प्रतिपद्यते हित्वान्यत् साधनान्तरं मय्येवासक्तमना भवति । यस्त्वमेवंभूतः सन्नसंशयं समग्रं समस्तं विभूतिबलशक्त्यैश्वर्यादिगुणसंपन्नं मां यथा येन प्रकारेण ज्ञास्यसि संशयमन्तरेणैवमेव भगवानिति तच्छृणूच्यमानं मया ॥ १ ॥

आ० टी० । कर्मसंन्यासात्मकसाधनप्रधानं त्वंपदार्थप्रधानं वा प्रथमषट्कं व्याख्याय मध्यमषट्कमुपास्यनिष्ठं तत्पदार्थनिष्ठं वा व्याख्यातुमारभमाणः समनन्तराध्यायमवतारयति **योगिनामिति** । अतीताध्यायान्ते मद्गतेनान्तरात्मना यो भजते मामिति प्रश्नबीजं प्रदर्श्य कीदृशं भगवतस्तत्त्वं कथं वा मद्गतान्तरात्मा स्यादित्यर्जुनस्य प्रश्नद्वये जाते स्वयमेव भगवानपृष्टमेव तद्वक्तुं इच्छन्नुक्तवानित्यर्थः । परमेश्वरस्य वक्ष्यमाणविशेषणं सकलजगदायतनत्वादिनानाविधविभूतिभागित्वं तत्रासक्तिर्मनसो विषयान्तरपरिहारेण तन्निष्ठत्वम् । मनसो भगवत्येवासक्तौ हेतुमाह **योगमिति** । विषयान्तरपरिहारे हि गोचरमालोच्यमानो भगवत्येव प्रतिष्ठितो भवतीत्यर्थः । तथापि स्वाश्रये पुरुषो मनः स्थापयति नान्यत्रेत्याशङ्क्याह **मदाश्रय इति** । योगिनो यदीश्वराश्रयत्वेन तस्मिन्नेवासक्तमनस्त्वमुपन्यस्तं तदुपपादयति **यो हीति** । ईश्वराख्याश्रयस्य प्रतिपत्तिमेव प्रकटयति **हित्वेति** । अस्तु योगिनस्त्वदाश्रयप्रतिपत्त्या मनसस्त्वय्येवासक्तिस्तथापि मम किमायातमित्याशङ्क्य द्वितीयार्धं व्याचष्टे **यस्त्वमेवमिति** । एवंभूतो यथोक्तध्याननिष्ठपुरुषवदेव मय्यासक्तमना यस्त्वं स त्वं तथाविधः सन्नसंशयमविद्यमानः संशयो यत्र ज्ञाने तद्यथा स्यात्तथा मां समग्रं ज्ञास्यसीति संबन्धः । समग्रमित्यस्यार्थमाह **समस्तमिति** । विभूतिर्नानाविधैश्वर्योपायसंपत्तिर्बलं शरीरगतं सामर्थ्यं शक्तिर्मनोगतं प्रागल्भ्यमैश्वर्यमीशितव्यविषयमीशनसामर्थ्यम्, आदिशब्देन ज्ञानेच्छादयो गृह्यन्ते । असंशयमिति पदस्य क्रियाविशेषणत्वं विशदयन् क्रियापदेन संबन्धं कथयति **संशयमिति** । विना संशयं भगवत्तत्त्वपरिज्ञानमेव स्फोरयति **एवमेवेति** । भगवत्तत्त्वे ज्ञातव्ये कथं मम ज्ञानमुपदेक्ष्यति न हि त्वामृते तदुपदेष्टा कश्चिदस्तीत्याशङ्क्याह **तच्छृण्विति** ॥ १ ॥

प० टी० । पूर्वाध्यायान्ते मद्गतेनान्तरात्मनेत्यादिनाभ्यासयोगेन कृत्वा देहावच्छेदेनान्तर्यामित्वेन स्थितस्य स्वस्वरूपस्य प्रतीतिमभिधायेदानीं सर्वात्मकत्वेनावस्थितस्य प्रतीतिसाधनोपायं दर्शयन् स्वमायाविभवमैश्वर्यं च प्रकटीकरोति **मयीति** । मयि परमेश्वर आसक्तमत्याद्दतं मनो यस्य स तथा मदाश्रयोऽहमेवाश्रयो यस्य मदेकशरणः सन् योगं युञ्जन्नभ्यस्यन्नसंशयं यथा भवति तथा मां समग्रं विभूतिबलशक्त्यैश्वर्यादिसहितं यथा ज्ञास्यसि तदिदं मया वक्ष्यमाणं शृणु सर्वापेक्षया योगाभ्यासो हि महत्तरं कार्यं तदाश्रयव्यतिरेकेण निर्विघ्नं न सेत्स्यतीति कृत्वा ममाश्रयमवलम्ब्य प्रवृत्तस्य सुखोपायेन योगसिद्धिर्भवतीत्यर्थः ॥ १ ॥

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ॥
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥

ज्ञानमिति । तच्च मद्विषयं ज्ञानं ते तुभ्यमहं सविज्ञानं विज्ञानसहितं स्वानुभवसंयुक्तमिदं वक्ष्यामि कथयिष्याम्यशेषतः कार्त्स्न्येन तज्ज्ञानं विवक्षितं स्तौति श्रोतुरभिमुखीकरणाय यज् ज्ञात्वा यज् ज्ञानं ज्ञात्वा नेह भूयः पुनर्ज्ञा-

तव्यं पुरुषार्थसाधनमवशिष्यते नावशेषो भवतीति तत्त्वज्ञो यः स सर्वज्ञो भवतीत्यर्थः ॥ २ ॥

आ० टी० । ज्ञास्यसीत्युक्त्या परोक्षज्ञानशङ्कायां तन्निवृत्त्यर्थं तदुक्तिप्रकारमेव विवृणोति तच्चेति । इदमपरोक्षं ज्ञानं चैतन्यम् । तस्य सविज्ञानस्य प्रतिलम्भे किं स्यादित्याशङ्क्याह यज्ज्ञात्वेति । इदमा चैतन्यस्य परोक्षत्वं व्यावर्त्यते, तदेव सविज्ञानमिति विशेषणेन स्फुटयति । अशेषतोऽनवशेषेण । तद्वेदनफलोपन्यासेन श्रोतारं तच्छ्रवणप्रवणं करोति तज्ज्ञानमिति । एकविज्ञानेन सर्वविज्ञानश्रुतिमाश्रित्योत्तरार्धतात्पर्यमाह यज्ज्ञात्वेति ॥ २ ॥

प० टी०। ज्ञानमिति । ज्ञानं शास्त्रोत्थं विज्ञानं मद्विषयानुभवस्तेन सहितमशेषतः साकल्येन वक्ष्यामि, यज्ज्ञात्वेह श्रेयोमार्गेऽन्यज्ज्ञातव्यं नावशिष्यते । मम साकल्येन सर्वात्मकत्वे ज्ञाते सति तदतिरिक्तं किं ज्ञातव्यमस्तीत्यर्थः ॥ २ ॥

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ॥
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥

अतो विशिष्टफलत्वाद्दुर्लभतरं ज्ञानं कथमित्युच्यते मनुष्याणामिति । मनुष्याणां मध्ये सहस्रेष्वनेकेषु कश्चिद्यतति प्रयत्नं करोति सिद्धये सिद्ध्यर्थं तेषां यततामपि सिद्धानां सिद्धा एव हि ते ये मोक्षाय मोक्षमार्गे यतन्ते तेषां कश्चिदेव मां वेत्ति तत्त्वतो यथावत् ॥ ३ ॥

आ० टी० । भगवत्तत्त्वज्ञानस्य विशिष्टफलत्वमुक्त्वा फलितमाह अत इति । ज्ञानस्य दुर्लभत्वं प्रश्नपूर्वकं प्रकटयति कथमित्यादिना । सहस्रशब्दस्य बहुवाचकत्वमुपेत्य व्याकरोति अनेकेष्विति । सिद्धये सत्त्वशुद्धिद्वारा ज्ञानोत्पत्त्यर्थमित्यर्थः । सिद्ध्यर्थं यतमानानां कथं सिद्धत्वमित्याशङ्क्याह सिद्धा एवेति । सर्वेषामेव तेषां ज्ञानोदयात्तस्य सुलभत्वमित्याशङ्क्याह तेषामिति ॥३॥

प० टी० । अथैतस्य दुर्लभत्वमाह मनुष्याणामिति । असंख्यातानां जीवानां मध्ये मनुष्याणां सहस्रेषु कश्चिद्विरलः सुकृतातिशयशाली सिद्धये स्वात्मज्ञानाय प्रवर्तते, तथा प्रयत्नं कुर्वतामपि सिद्धानां सहस्रेषु कश्चिन्मदनुग्रहपात्रं मां तत्त्वतो याथातथ्येन वेत्ति एतादृशमतिदुर्लभं तुभ्यमहं वक्ष्यामीत्यर्थः ॥ ३ ॥

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ॥
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥

अतः श्रोतारं प्ररोचनेनाभिमुखीकृत्याह भूमिरिति । भूमिरिति पृथिवीतन्मात्रमुच्यते न स्थूला 'भिन्ना प्रकृतिरष्टधा' इति वचनात् तथा ऽबादयोऽपि तन्मात्राण्येवोच्यन्ते आपोऽनलो वायुः खं मनो मन इति मनसः कारणमहंकारो गृह्यते बुद्धिरित्यहंकारकारणं महत्तत्त्वमहंकार इत्यविद्यासंयुक्तमव्यक्तं यथा विषसंयुक्तमन्नं विषमुच्यते एवमहंकारवासनावदव्यक्तं मूलकारणमहंकार इत्युच्य-

ते प्रवर्तकत्वादहंकारस्याहंकार एव हि सर्वस्य प्रवृत्तिबीजं दृष्टं लोके इतीयं यथोक्ता प्रकृतिर्मे ममैश्वरी मायाशक्तिरष्टधा भिन्ना भेदमागता ॥ ४ ॥

आ० टी० । ज्ञानार्थं प्रयत्नस्य तद्द्वारा ज्ञानलाभस्य तद्द्वयद्वारेण मुक्तेश्च दुर्लभत्वाभिधानस्य श्रोतृप्ररोचनं फलमिति मत्वाह **श्रोतारमिति**। आत्मनः सर्वात्मकत्वेन परिपूर्णत्वमवतारयन्नादावपरां प्रकृतिमुपन्यस्यति **आहेति** । भूमिशब्दस्य व्यवहारयोग्यस्थूलपृथिवीविषयत्वं व्यावर्तयति **भूमिरितीति**। तत्र हेतुमाह **भिन्नेति** । प्रकृतिसमभिव्याहाराद्गन्धतन्मात्रं स्थूलपृथिवीप्रकृतिरुत्तरविकारो भूमिरित्युच्यते न विशेष इत्यर्थः। भूमिशब्दवदबादिशब्दानामपि सूक्ष्मभूतविषयत्वमाह **तथेति** । तेषामपि प्रकृतिसमानाधिकृतत्वाविशेषात्तन्मात्राणां पूर्वपूर्वप्रकृतीनामुत्तरोत्तरविकाराणां न विशेषत्वसिद्धिरित्यर्थः। मनःशब्दस्य संकल्पविकल्पात्मककरणविषयत्वमाशङ्क्याह **मन इतीति** । न खल्वहंकाराभावे संकल्पविकल्पयोरसंभवात्तदात्मकं मनः संभवतीत्यर्थः । निश्चयलक्षणा बुद्धिरित्युपगमाद्बुद्धिशब्दस्य निश्चयात्मककरणविषयत्वमाशङ्क्याह **बुद्धिरितीति** । न हि हिरण्यगर्भसमष्टिबुद्धिरूपमन्तरेण व्यष्टिबुद्धिः सिध्यतीत्यर्थः । अहंकारस्याभिमानविशेषात्मकत्वेनान्तःकरणप्रभेदत्वं व्यावर्तयति **अहंकार इति** । अविद्यासंयुक्तमित्यविद्यात्मकमित्यर्थः । कथं मूलकारणस्याहंकारशब्दत्वमित्याशङ्क्योक्तमर्थं दृष्टान्तेन स्पष्टयति **यथेत्यादिना** । मूलकारणस्याहंकारशब्दत्वे हेतुमाह **प्रवर्तकत्वादिति** । तस्य प्रवर्तकत्वं प्रपञ्चयति **अहंकार एवेति** । सत्येवाहंकारे ममकारो भवति तयोश्च भावे सर्वा प्रवृत्तिरिति प्रसिद्धमित्यर्थः । उक्तां प्रकृतिमुपसंहरति **इतीयमिति** । इयमित्यपरोक्षा साक्षिदृश्येति यावत्, ऐश्वरी तदाश्रया तदैश्वर्योपाधिभूता । प्रकृतये महदाद्याकारेणेति प्रकृतिस्त्रिगुणं जगदुपादानं प्रधानमिति मतं व्युदस्यति **मायेति** । तस्यास्तत्कार्याकारेण परिणामयोग्यत्वं द्योतयति **शक्तिरिति** । **अष्टधेति** । अष्टभिः प्रकारैरिति यावत् ॥ ४ ॥

**प० टी०** । एवं निरूपणीयार्थे श्रोतारमभिमुखीकृत्येदानीं प्रकृतिद्वारा सृष्ट्यादिकर्तृत्वेनेश्वरतत्त्वं प्रतिज्ञातं निरूपयिष्यन् परापरभेदेन प्रकृतिद्वयमाह **भूमिरिति** द्वाभ्याम् । भूम्यादीनि पञ्च सूक्ष्माणि तन्मात्रारूपाणि भूतानि, मनःशब्देन तत्कारणीभूतोऽहंकारः, बुद्धिशब्देन तत्कारणीभूतं महत्तत्त्वम्, अहंकारशब्देन प्रथमाध्यासरूपा तत्कारणमविद्येत्येवं प्रकृतिर्मायाष्टधाष्टप्रकारा भिन्नेतिपदेन त्रयोदशाध्याये 'महाभूतान्यहंकार' इत्यादिचतुर्विंशतितत्त्वात्मना वक्ष्यमाणायाः प्रकृतेरत्रैवान्तर्भाव इत्युक्तम् ॥ ४ ॥

**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ॥**
**जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥**

अपरेति । अपरा न परा निकृष्टाशुद्धानर्थकरी संसाररूपा बन्धनात्मिकेयमितोऽन्या यथोक्तायास्त्वन्यां विशुद्धां प्रकृतिं ममात्मभूतां विद्धि मे परां प्रकृष्टां जीवभूतां क्षेत्रज्ञलक्षणां प्राणधारणनिमित्तभूतां हे महाबाहो यया प्रकृत्येदं धार्यते जगदन्तःप्रविष्टया ॥ ५ ॥

आ० टी० । अचेतनवर्गमेकीकर्तुं प्रकृतेरष्टधा परिणाममभिधाय विकारावच्छिन्नं कार्यकल्पं चेतनवर्गमेकीकर्तुं पुरुषस्य चैतन्यस्य विद्याशक्त्यवच्छिन्नस्यापि प्रकृतित्वं कथयितुमुक्तां प्रकृतिमनूद्य दर्शयति **अपरेति** । निकृष्टत्वं स्पष्टयति **अनर्थकरीति** । अनर्थकरत्वमेव स्फोरयति

**संसारेति** । कथंचिदप्यनन्यत्वव्यावृत्त्यर्थस्तुशब्दः । अन्यामत्यन्तविलक्षणामिति यावत् । अन्यत्वमेव स्पष्टयति **विशुद्धामिति** । प्रकृतिशब्दस्यात्र प्रयुक्तस्यार्थान्तरमाह **ममेति** । प्रकृष्टत्वमेव भोक्तृत्वेन स्पष्टयति **जीवभूतामिति** । प्रकृत्यन्तरादस्याः प्रकृतेरवान्तरविशेषमाह **ययेति** । न हि जीवरहितं जगद्धारयितुं शक्यमित्याशयेनाह **अन्तरिति** ॥ ५ ॥

**प० टी०** । इदानीं परापरत्वविभागमाह **अपरेयमिति** । इयमष्टधा निरूपिता प्रकृतिरपरा निकृष्टा जडत्वादितः सकाशात्परामुत्कृष्टामन्यां जीवभूतां जानीहि । परत्वे हेतुः यया चेतनया क्षेत्रज्ञरूपया स्वकर्मद्वारेणेदं जगद्धार्यते ॥ ५ ॥

**एतद्योनीनि भूतानि सर्वाणीत्युपधारय ॥**
**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥**

एतदिति । एतद्योनीन्येते परापरे क्षेत्रक्षेत्रज्ञलक्षणे प्रकृती योनी येषां भूतानां तान्येतद्योनीनि भूतानि सर्वाणीत्येवमुपधारय जानीहि, यस्मान्मम प्रकृतिर्योनिः कारणं सर्वभूतानामतोऽहं कृत्स्नस्य जगतः प्रभव उत्पत्तिः प्रलयो विनाशस्तथा प्रकृतिद्वयद्वारेणाहं सर्वज्ञ ईश्वरो जगतः कारणमित्यर्थः ॥६॥

**आ० टी०** । उक्तप्रकृतिद्वये कार्यलिङ्गकमनुमानं प्रमाणयति **एतद्योनीति** । प्रकृतिद्वयस्य जगत्कारणत्वे कथमीश्वरस्य जगत्कारणत्वं तदुपगतमित्याशङ्क्याह **अहमिति** । एतद्योनीत्युक्ते समनन्तरप्रकृतजीवभूतप्रकृतावेतच्छब्दस्याव्यवधानात् प्रवृत्तिमाशङ्क्य व्याकरोति **एतदिति** । सर्वाणि चेतनाचेतनानि जनिमन्तीत्यर्थः । सर्वभूतकारणत्वेन प्रकृतिद्वयमङ्गीकृतं चेत् कथमहमित्याद्युक्तमित्याशङ्क्याह **यस्मादिति** । मम प्रकृती परमेश्वरस्योपाधितया स्थिते इत्यर्थः । तर्हि प्रकृतिद्वयं कारणमीश्वरश्चेति जगतोऽनेकविधकारणाङ्गीकरणं स्यादित्याशङ्क्याह **प्रकृतीति** । अपरप्रकृतिरचेतनत्वात् परप्रकृतेश्चेतनत्वेऽपि किंचिज्ज्ञत्वादीश्वरस्यैव सर्वकारणत्वं युक्तमित्याह **सर्वज्ञेति** ॥६॥

**प० टी०** । अथ तदेवाह **एतद्योनीनीति** । एतत्परापरनामकं प्रकृतिद्वयमेव योनिः कारणं येषां तानि सर्वाणि स्थावरजङ्गमात्मकानि भूतानीत्यवधारय बुध्यस्व तत्र जडा प्रकृतिर्देहरूपेण परिणमते चेतना तु मदंशभूता भोक्तृत्वेन देहेषु प्रविश्य स्वकर्मणा तानि धारयति । ते मदीये प्रकृती मत्तः संभूतेऽतोऽहमेव कृत्स्नस्य सप्रकृतिकस्य जगतः प्रभवः प्रकर्षेण भवत्यस्मादिति प्रभवः परमकारणमहमित्यर्थः । तथा प्रलीयतेऽनेनेति प्रलयः संहर्ताप्यहमेवात्र । ऋक्शाखीया श्रुतिः—"य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यषीदत्पिता नः । स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आविवेश" इति । भाष्यम्—'य इमेति त्रयोदशर्चं सूक्तं वैश्वकर्मदैवत्यं त्रैष्टुभम्' इति सर्वानुक्रमः । **य इमेति** । यो विश्वकर्मा परमेश्वर इमा इमानि विश्वा भूतानि जुह्वत् प्रलयकाले प्राप्ते पृथिव्यादीनिमान्सप्तलोकान् स्वात्मन्याहुतिप्रक्षेपवत्संहरन् ऋषिरतीन्द्रियार्थद्रष्टा सर्वज्ञो होता संहाररूपस्य होमस्य कर्ता नोऽस्माकं पिता जनको निषसाद स्वरूपेण स्थितवान् लोकान् संहृत्य स्वयमेक एवासीत् । आत्मा वा इदमग्र एक एवासीत्सदेव सोम्येदमग्र आसीदित्यादिश्रुतेश्च । स तादृशः परमेश्वर आशिषा बहुस्यां प्रजायेयेत्येवंरूपया पुनः सिसृक्षया द्रविणमिच्छमानो धनोपलक्षितजगद्भोगमाकाङ्क्षमाणः प्रथमच्छत् प्रथमं मुख्यं निष्प्रपञ्चं पारमार्थिकं रूपमावृण्वन् अवरान् स्वसृष्टान् प्राणिहृदयप्रवेशानाविवेश जीवरूपेणाविष्टवान् । अत्र सृष्टिकाले प्रथमच्छत्पदेन भूतेष्वात्मानं जुह्वामीति वाजसनेयब्राह्मणार्थो दर्शितः । ब्राह्मणं च । हन्ताहं भूतेष्वात्मानं जुहवामि भूतान्यात्मनीति तत्सर्वेषु भूतेष्वात्मानं हुत्वेति ॥ ६ ॥

## मत्तः परतरं नान्यत् किंचिदस्ति धनंजय ॥
## मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥

मत्त इति । यस्मादेतत्ततो मत्तः परमेश्वरात् परतरमन्यत् कारणान्तरं किंचिन्नास्ति न विद्यतेऽहमेव जगत्कारणमित्यर्थः । हे धनंजय यस्मादेवं तस्मान्मयि परमेश्वरे सर्वाणि भूतानि सर्वमिदं जगत् प्रोतमनुस्यूतमनुगतमनुविद्धं ग्रथितमित्यर्थः । दीर्घतन्तुषु पटवत् सूत्रे च मणिगणा इव ॥ ७ ॥

आ० टी० । प्रधानात् परतोऽक्षरात् पुरुषवत् परमात्मनोऽपि परादन्यत् परं स्यादित्याशङ्क्य प्रकृतिद्वयद्वारा सर्वकारणत्वमीश्वरस्योक्तमुपजीव्य परिहरति **यस्मादिति** । नान्यदस्ति परमित्यत्र हेतुमाह **मयीति** । परतरशब्दार्थमाह **अन्यदिति** । स्वातन्त्र्यव्यावृत्त्यर्थमन्तरशब्दो निषेधफलं कथयति **अहमेवेति** । सर्वजगत्कारणत्वेन सिद्धमर्थं द्वितीयार्धव्याख्यानेन विशदयति **यस्मादिति** । अतो दीर्घेषु तिर्यक्षु च पटघटितेषु तन्तुषु पटस्यावगतिरवगम्यते तद्वन्मय्येवानुगतं जगदित्याह **दीर्घेति** । यथा च मणयः सूत्रेऽनुस्यूतास्तेनैव ध्रियन्ते तदभावे विप्रकीर्यन्ते तथा मय्येवात्मभूतेन सर्वं व्याप्तं ततो निकृष्टं विनष्टमेव स्यादिति श्लोकोक्तं दृष्टान्तमाह **सूत्रेति** ॥ ७ ॥

प० टी० । यस्मादेवं तस्मान् **मत्त इति** । मत्तः सकाशात् परतरमुत्कृष्टमन्यत्किं चिदपि नास्ति । यद्भासते तदवरमेव । पूर्वं प्रभवलयनिमित्तमहमेवास्मीत्युक्तमिदानीं स्थितिनिमित्तमहमेवास्मीत्याह **मयीति** । इदं सर्वं विचित्रं भूतजातं मयि प्रोतम् । किमिव **सूत्रे मणिगणा इव** । गणशब्देन विचित्रवर्णप्रमाणाकृतयो मणय एकस्मिन् सूत्रे प्रोतास्तिष्ठन्ति तद्वत् ॥ ७ ॥

## रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः ॥
## प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥

केन केन धर्मेण विशिष्टे त्वयि सर्वमिदं प्रोतमित्युच्यते रस इति । रसोऽहमपां यः सारः स रसस्तस्मिन् रसभूते मय्यापः प्रोता इत्यर्थः, एवं सर्वत्र यथाहमप्सु रस एवं प्रभास्मि शशिसूर्ययोः, प्रणव ओङ्कारः सर्ववेदेषु तस्मिन् प्रणवभूते मयि सर्वे वेदाः प्रोताः, तथा खे आकाशे शब्दः सारभूतस्तस्मिन् मयि खं प्रोतं, तथा पौरुषं पुरुषस्य भावः पौरुषं यतः पुंबुद्धिर्नृषु तस्मिन् मयि पुरुषाः प्रोताः ॥ ८ ॥

आ० टी० । अबादीनां रसादिषु प्रोतत्वप्रतीतिस्त्वय्येव सर्वं प्रोतमित्ययुक्तमिति मत्वा पृच्छति **केनेति** । तत्रोत्तरमुत्तरग्रन्थेन दर्शयति **उच्यत इति** । सारो मधुरो हेतुरिति यावत् । रसोऽहमिति कथं तत्राह **तस्मिन्निति** । अप्सु यो रसः सारस्तस्मिन्मयि मधुररसे कारणभूते प्रोता आप इतिवदुत्तरत्र सर्वत्र व्याख्यानं कर्तव्यमित्याह **एवमिति** । उक्तमर्थं दृष्टान्तं कृत्वा प्रभास्मीत्यादि व्याचष्टे **यथेति** । चन्द्रादित्ययोर्या प्रभा तद्भूते मयि तौ प्रोतावित्यर्थः । तत्र वाक्यार्थं कथयति **तस्मिन्निति** । प्रणवभूते तस्मिन् वेदानां प्रोतत्ववदाकाशे यः सारभूतः शब्दस्तद्रूपे परमेश्वरे प्रोतमाकाशमित्याह **तथेति** । पौरुषं नृष्विति भागं पूर्ववद्विभजते **तथेत्यादिना** । पुरुषत्वमेव

विशदयति यत इति । पुंस्त्वसामान्यात्मके परस्मिन्नीश्वरे प्रोतास्तद्विशेषास्तदुपादानत्वेन तत्स्वभावत्वादित्यर्थः ॥ ८ ॥

प० टी० । अथ जगत्स्थितिहेतुत्वमाह रसोहमिति पञ्चभिः । अप्सूदकेषु रसोऽहमस्मि रसतन्मात्रतया विभूत्याश्रयत्वेन स्थितोऽस्मि । तथा शशिसूर्ययोः प्रभास्मि चन्द्रेऽर्के वा प्रकाशरूपया विभूत्यास्मि । एवमुत्तरत्रापि द्रष्टव्यम् । सर्ववेदेषु वैखरीरूपेण प्रणवो वागूज ॐकारोऽस्मि, खे आकाशे शब्दतन्मात्ररूपोऽस्मि, नृषु पुरुषेषु पौरुषमुद्योगरूपोऽस्मि ॥ ८ ॥

**पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ॥**
**जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥**

पुण्य इति । पुण्यः सुरभिर्गन्धः पृथिव्यां चाहं तस्मिन् मयि गन्धभूते पृथिवी प्रोता, पुण्यत्वं गन्धस्य स्वभावत एव पृथिव्यां दर्शितमबादिषु रसादेः पुण्यत्वोपलक्षणार्थमपुण्यत्वं तु गन्धादीनामविद्याधर्माद्यपेक्षं संसारिणां भूतविशेषसंसर्गनिमित्तं भवति तेजो दीप्तिश्चास्मि विभावसावग्नौ तथा जीवनं सर्वभूतेषु येन जीवन्ति सर्वाणि भूतानि तज्जीवनं तपश्चास्मि तपस्विषु तस्मिंस्तपसि मयि तपस्विनः प्रोताः ॥ ९ ॥

आ० टी० । मयि सर्वमिदं प्रोतमित्यस्यैव परिपूरणार्थं प्रकारान्तरमाह पुण्य इति । पृथिव्यां पुण्यशब्दितो यः सुरभिगन्धः सोऽहमस्मीत्यत्र वाक्यार्थं कथयति तस्मिन्निति । कथं पृथिव्यां गन्धस्य पुण्यत्वं तत्राह पुण्यत्वमिति । यत्तु पृथिव्यां गन्धस्य स्वाभाविकं पुण्यत्वं दर्शितं तदबादिषु रसादेः स्वाभाविकपुण्यत्वस्योपलक्षणार्थमित्याह पृथिव्यामिति । प्रथमोत्पन्नाः पञ्चापि गुणाः पुण्या एव सिद्धादिभिरिव भोग्यत्वादिति भावः । कथं तर्हि गन्धादीनामपुण्यत्वप्रतिभानं तत्राह अपुण्यत्वं त्विति । तदेव स्फुटयति संसारिणामिति । गन्धादयः स्वकार्यैर्भूतैः सह परिणममानाः प्राणिनां पापादिवशादपुण्याः संपद्यन्त इत्यर्थः । पञ्चाग्निस्तेजस्तद्भूते मयि प्रोतोऽग्निरित्याह तेज इति । जीवनभूते च मयि सर्वाणि भूतानि प्रोतानीत्याह तथेति । जीवनशब्दार्थमाह येनेति । अन्नरसेनामृताख्येनेत्यर्थः । तपश्चास्मीत्यादेस्तात्पर्यमाह तस्मिन्निति । चित्तैकाग्र्यमनाशकादि वा तपस्तदात्मनीश्वरे प्रोतास्तपस्विनो विशेषणाभावे विशिष्टस्य वस्तुनोऽभावादित्यर्थः ॥ ९ ॥

प० टी० । किं च पुण्योऽविकृतो गन्धो गन्धतन्मात्रं पृथिव्यामहमस्मि विभावसावग्नौ यद्दीप्तं तेजस्तदहम् । सर्वभूतेषु जीवनं प्राणधारणमायुरहमित्यर्थः । तपस्विषु वानप्रस्थादिषु तपो द्वन्द्वसहिष्णुत्वरूपेणाहमस्मि ॥ ९ ॥

**बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ॥**
**बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥**

बीजमिति । बीजं प्ररोहकारणं मां विद्धि सर्वभूतानां हे पार्थ सनातनं चिरंतनं किंच बुद्धिर्विवेकशक्तिरन्तःकरणस्य बुद्धिमतां विवेकशक्तिमतामस्मि तेजः प्रागल्भ्यं तद्वतां तेजस्विनामहम् ॥ १० ॥

आ० टी० । ननु सर्वाणि भूतानि स्वकारणे प्रोतानि कथं तेषां त्वयि प्रोतत्वं तत्राह **बीजमिति** । बीजान्तराद्यपेक्षयानवस्थां वारयति **सनातनमिति** । चैतन्यस्याभिव्यंजकं तत्त्वनिश्चय-सामर्थ्यं बुद्धिस्तद्वतां या बुद्धिस्तद्भूते मयि सर्वे बुद्धिमन्तः प्रोता भवन्तीत्याह **किं चेति** । प्रागल्भ्य-वतां यत् प्रागल्भ्यं तद्भूते मयि तद्वन्तः प्रोता इत्याह **तेज इति** । तद्धि प्रागल्भ्यं यत्परा-भिभवसामर्थ्यं परैश्चाप्रधृष्यत्वम् ॥ १० ॥

प० टी० । किं च सर्वभूतानां चराचराणां बीजमङ्कुरोत्पादनसामर्थ्यं सनातनं नित्यमुत्तरोत्तरं सर्वकार्येष्वनुस्यूतं तदहमस्मि तथा बुद्धिमतां बुद्धिः प्रज्ञाहमस्मि तेजस्विनां तेजः प्रागल्भ्य-महमेवास्मि ॥ १० ॥

**बलं बलवतां चाहं कामरागविवर्जितम् ॥**
**धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥**

बलमिति । बलं सामर्थ्यमोजो बलवतामहं तच्च बलं कामरागविव-र्जितं कामश्च रागश्च कामरागौ कामस्तृष्णा संनिकृष्टेषु विषयेषु रागो रञ्जना प्राप्तेषु विषयेषु ताभ्यां कामरागाभ्यां विवर्जितं देहादिधारणमात्रार्थं बलं सत्त्व-महमस्मि न तु यत् संसारिणां तृष्णारागकारणं, किं च धर्माविरुद्धो धर्मेण शास्त्रार्थेनाविरुद्धो यः प्राणिषु भूतेषु कामो यथा देहधारणमात्राद्यर्थोऽशनपाना-दिविषयः कामोऽस्मि हे भरतर्षभ ॥ ११ ॥

आ० टी० । यच्च बलवतां बलं तद्भूते मयि तेषां प्रोतत्वमित्याह **बलमिति** । कामक्रोधा-दिपूर्वकस्यापि बलस्यानुमतिं वारयति **तच्चेति** । कामरागयोरेकार्थत्वमाशङ्क्यार्थभेदमावेदयति **काम-स्तृष्णेत्यादिना** । विशेषणसामर्थ्यसिद्धं व्यावर्त्य दर्शयति **न त्विति** । शास्त्रार्थाविरुद्धकामभूते मयि तथाविधकामवतां भूतानां प्रोतत्वं विवक्षित्वाह **किं चेति** । धर्माविरुद्धं काममुदाहरति **यथेति** ॥ ११ ॥

प० टी० । किं च बलवतां कामरागविवर्जितं बलमहमस्मि । तत्र कामोऽप्राप्ते वस्तुन्यभि-लाषो राजसः, रागः पुनरभिलषितेऽर्थे प्राप्तेऽभिरञ्जनात्मकस्तृष्णापरपर्यायस्तामसस्ताभ्यां वर्जितम् । यद्वा बलवतां पुरुषार्थवतां वीराणां बलं शौर्यं कामेषु विषयेषु रागः प्रीतिस्तद्विवर्जितम् । निःसंगत्वेन स्वधर्माचरणरूपमित्यर्थः । भूतेषु धर्माविरुद्धः स्वदारेषु पुत्रोत्पत्तिमात्रोपयोगी कामो मदनरूपे-णास्मि ॥ ११ ॥

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ॥**
**मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥**

किं च ये चैवेति । ये चैव सात्त्विकाः सत्त्वनिर्वृत्ता भावाः पदार्था राजसा रजोनिर्वृत्तास्तामसास्तमोनिर्वृत्ताश्च ये के चित् प्राणिनां स्वकर्मवशाज् जायन्ते भावास्तान् मत्त एव जायमानानित्येवं विद्धि सर्वान् समस्तानेव य-द्यपि ते मत्तो जायन्ते तथापि न त्वहं तेषु तदधीनस्तद्वशो यथा संसारिणस्ते पुनर्मयि मद्वशा मदधीनाः ॥ १२ ॥

आ० टी० । चिदानन्दयोरभिव्यञ्जकानां भावानामीश्वरात्मत्वाभिधानादन्येषामतदात्मत्वप्राप्तावुक्तं **किं चेति** । प्राणिनां त्रैविध्ये हेतुं दर्शयन् वाक्यार्थमाह **ये के चिदिति** । तर्हि पितुरिव पुत्राधीनत्वं ततो जायमानानां तदधीनत्वं तवापि स्यादिति विक्रियावत्त्वद्रूप्यत्वप्रसक्तिरित्याशङ्क्याह **यद्यपीति** । मम परमार्थत्वात्तेषां कल्पितत्वान्न तद्गुणदोषौ मयि स्यातामित्यर्थः । तेषामपि तद्वदेव स्वतन्त्रतासंभवात् किमिति कल्पितत्वमित्याशङ्क्याह **ते पुनरिति** । त्रिविधानां भावानां न स्वातन्त्र्यमीश्वरकार्यत्वेन तदधीनत्वात्तथा च कल्पितस्याधिष्ठानसत्ताप्रतीतिभ्यामेव तद्वत्त्वात्तन्मात्रसिद्धिरित्यर्थः ॥ १२ ॥

प० टी० । किं च ये चान्ये सात्त्विका भावाः शमदमादयो राजसा हर्षदर्पादयस्तामसाः शोकमोहादयः प्राणिनां स्वकर्मवशाज्जायन्ते । तान् सर्वान्मत्त एव जातान् विद्धि मदीयप्रकृतिगुणकार्यत्वात् । अथादितस्तेषु तेषु पदार्थेषु कारणात्मना तत्तद्रूपेण वर्तमानोऽप्यसंगत्वेन तिष्ठामीत्याह **न त्वहमिति** । तेषु पदार्थेषु नाहं तद्धर्मान् स्पृशामि । अथ वा ते प्रातिभासिकत्वान्मयि न सन्ति शुक्तिकायां रजतमिव ॥ १२ ॥

**त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ॥**
**मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥**

एवंभूतमपि परमेश्वरं नित्यशुद्धबुद्धमुक्तस्वभावं सर्वभूतात्मानं निर्गुणं संसारदोषबीजप्ररोहकारणं मां नाभिजानाति जगदित्यनुक्रोशं दर्शयति भगवान् । तच्च किंनिमित्तं जगतोऽज्ञानमुच्यते त्रिभिरिति । त्रिभिर्गुणमयैर्भावैर्गुणविकारै रागद्वेषमोहादिप्रकारैर्भावैः पदार्थैरेभिर्यथोक्तैः सर्वमिदं प्राणिजातं जगन्मोहितमविवेकतामापादितं सन्नाभिजानाति मामेभ्यो यथोक्तेभ्यो गुणेभ्यः परं व्यतिरिक्तं विलक्षणं चाव्ययं व्ययरहितं जन्मादिसर्वभावविकारवर्जितमित्यर्थः ॥ १३ ॥

आ० टी० । सतीश्वरस्य स्वातन्त्र्ये नित्यशुद्धत्वादौ च कुतो जगतस्तदात्मकस्य संसारित्वमित्याशङ्क्य तदज्ञानादित्याह **एवंभूतमपीति** । यद्यप्रपञ्चोऽविक्रियश्च त्वं कस्मात्त्वामात्मभूतं स्वयंप्रकाशं सर्वो जनस्तथा न जानातीति मत्वा शङ्कते **तच्चेति** । श्लोकेनोत्तरमाह **उच्यत** इति । एभ्यः परमित्यप्रपञ्चकत्वमुच्यते, अव्ययमिति सर्वविक्रियाराहित्यम् ॥ १३ ॥

प० टी० । अथैतदेव प्रकटयन्नाह **त्रिभिरिति** । एभिर्गुणैः सत्त्वरजस्तमोभिस्त्रिभिर्भावैः प्रकृतेः स्वभावैरिदं सर्वं जगन्मोहितम् । यतो मामेभ्यो गुणेभ्यः परमधिकरणरूपं बाधरहितं नाभिजानाति । प्रातिभासिकरजतार्थं धावमानः शुक्तिकां न वेत्तीत्यर्थः ॥ १३ ॥

**दैवी ह्येषा गुणमयी मम माया दुरत्यया ।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥**

कथं पुनर्दैवीमेतां त्रिगुणात्मिकां वैष्णवीं मायामतिक्रामन्तीत्युच्यते दैवीति । दैवी देवस्य ममेश्वरस्य विष्णोः स्वभावभूता हि यस्मादेषा यथोक्ता

**गुणमयी मम माया दुरत्यया दुःखेनात्ययोऽतिक्रमणं यस्याः सा दुरत्यया तत्रैवं सति सर्वधर्मान् परित्यज्य मामेव मायाविनं स्वात्मभूतं सर्वात्मना ये प्रपद्यन्ते ते मायामेतां सर्वभूतचित्तमोहिनीं तरन्त्यतिक्रामन्ति संसारबन्धनान्मुच्यन्त इत्यर्थः ॥ १४ ॥**

**आ० टी०** । यथोक्तानादिसिद्धमायापारवश्यपरिवर्जनायोगाज्जगतो न कदा चिदपि तत्त्वबोधसमुदयसंभावनेत्याशङ्कते **कथं पुनरिति** । भगवदेकशरणतया तत्त्वज्ञानद्वारेण मायातिक्रमः संभवतीति परिहरति **उच्यत** इति । कथं दुरत्ययत्वेन तदत्ययः स्यादिति तत्राह **मामेवेति** । प्रधानस्येव स्वातन्त्र्यं मायाया व्युदस्यति **देवस्येति** । स्वातन्त्र्ये मायात्वानुपपत्तिं हिशब्दद्योतितां हेतुं करोति **यस्मादिति** । अनुभवसिद्धा सा नाकस्मादपलापमर्हतीत्याह **एषेति** । जगतस्तत्त्वप्रतिबन्धकीभूता गुणाः सत्त्वादयः । ममेति प्रागुक्तमेव मायायाः संबन्धमनूद्य विधित्सितं दुरत्ययत्वं विभजते **दुःखेनेति** । मामेवेत्यादि व्याचष्टे **तत्रेति** । तस्मिन् मायारूपे यथोक्तरीत्या दुरत्यये सतीति यावत्, मामेवेत्येवकारेण मायाया वेद्यकोटिनिवेशाभावो विवक्ष्यते, सर्वात्मना कर्मानुष्ठानादिव्यग्रतामन्तरेणेत्यर्थः । मायातिक्रमे मोहातिक्रमो भवतीति मत्वा विशिनष्टि **सर्वेति** । मायातत्प्रयुक्तमोहयोरतिक्रमेऽपि कथं पुरुषस्य पुरुषार्थसिद्धिरित्याशङ्क्याह **संसारेति** ॥ १४ ॥

**प० टी०** । कथं पुनर्मायामतिक्रामन्तीत्याह **दैवीति** । एषा नानाविधजगदुपादानकारणत्वेन प्रतीयमानात एव गुणमयी दैव्यलौकिकसामर्थ्यवती यतो मम माया मदाश्रयवर्तिनी मदधीनत्वादन्येषां दुरत्यया दुःखेनापि नाशयितुमशक्या । तर्हि मोक्षोपायप्रयासो व्यर्थः स्यादित्याह **मामेवेति** । ये मामेवेश्वरं नान्यं प्रपद्यन्ते शरणं व्रजन्ति त एवैतामुक्तलक्षणां मायां तरन्ति नान्ये मदनुग्रहेण मत्साक्षात्कारात्स्वत एव नश्यन्तीत्यर्थः । अथ दैवी मम मायेत्यत्र तैत्तिरीयकश्रुतिः—"देवीमहं निर्ऋतिं वन्दमानः पितेव पुत्रं दासये वचोभिः" इति । भाष्यम्—निर्ऋतिं राक्षसीं मायां देवीं सामर्थ्यवतीमहं वन्दमानः पुरस्कुर्वाणोऽनन्तरं वचोभिरुपनिषद्भिर्भागैर्दासये दासत्वेन नियोजयामि । किंवत्, पिता पुत्रमिव स्वाज्ञावशवर्तिनीं करोमीत्यर्थः । अथ दुरत्ययेत्यत्र ऋक्शाखीया श्रुतिः—"चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते । तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम् । एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे । तं पाकेन मनसा पश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरम् ॥२॥" रावणभाष्यम्—चत्वारः कपर्दा उत्कर्षा यस्याः सा चतुष्कपर्दा पूर्वोपक्रान्ता माया । अथ तानेवोत्कर्षानाह युवतिरित्यादि । युवतिः सदा तरुणी कदापि वार्धकं न प्राप्नोत्ययमेक उत्कर्षः । तथा सुपेशा सुतरां पेशा पेशला कुशलाघटितघटनापटीयसी । तदुक्तम् "यथा स्वप्नमुहूर्ते स्यात्संवत्सरशतभ्रमः । तथा मायाविलासोऽयं जायते जाग्रति भ्रमः" इति । अयं द्वितीय उत्कर्षः । तथा घृतप्रतीका घृतवन्मिष्टं प्रतीकमुपक्रमो यस्याः सा परिणामे विषोपमेत्यर्थः । अयमेव तृतीय उत्कर्षः । तथा वयुनानीति, वयुनानि ज्ञानानि वस्ते छादयति तद्विपरीतस्वभावत्वात् । तर्हि चतुरुत्कर्षवती मायैवास्ति कथमीश्वरप्रसिद्धिरित्याह तस्यामिति । तस्यामुक्तलक्षणायां मायायां सुपर्णा सुपर्णौ शोभनपतनौ जीवेश्वरौ पक्षिणाविव वृषणौ सदसत्फलवर्षितारौ । द्विवचनस्यावाछन्दसीत्यात्वम् । निषेदतुर्निषण्णौ स्थितौ । कुतो ज्ञातमेतदत आह यत्रेति । यत्र भागधेयमर्थप्रकाशसामर्थ्यं द्योतयन्त्यर्थान्प्रकाशयन्ति । ते देवाश्चक्षुराद्या दधिरे धृतवन्तः । अनेन ज्ञानतिरोधानकर्त्र्या मायायाः सकाशादीश्वरस्य वैलक्षण्यं द्योतितम् । अथ सुपर्णाविति द्विवचनेनेश्वरस्य द्वैविध्यमापन्नं तत्परिहरति एक इति । वस्तुतः सुपर्ण एक एव स समुद्रमाविवेश समुन्दयति तिरोधत्ते एवंविधं प्रपञ्चमाविवेश । "तत्सृष्ट्वा तदेवानुप्राविशद्"इति श्रुतेः । स इदं भुवनं स्थूलप्रपञ्चरूपं विचष्टे ज्ञातवान् । तं पाकेन परिपक्वेन

बुद्धिरूपेण मनसान्तितोऽभ्यन्तरतो यावदपश्यमद्राक्षं तावत्तं सुपर्णं माता माया रेह्लि । लिह आस्वादने विसर्गेति च विसृजति त्यजति ।तथा उ इति निश्चितं सुपर्णो मातरं विसृजति। द्विवचनं तु तादात्म्यविषयकम् । अत एवाग्रतो वक्ष्यति "सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति" इत्यादि। अथ 'मामेव ये प्रपद्यन्त' इत्येतस्मिन्नर्थे तैत्तिरीयकसंहितास्वपि–"यत्ते देवी निर्ऋतिराबबन्ध दामग्रीवास्वविचर्त्यम् । इदं ते तद्विष्याम्यायुषो न मध्यादथाजीवः पितुमद्धि प्रमुक्त" इति । भाष्यम्–भो परमेश्वर ते देवी तव स्त्रीत्वेनाभिमता । पतिश्च पत्नी वा भवतामिति श्रुतेः । उत्कर्षवती वा निर्ऋतिः राक्षसी माया ग्रीवासु मन्यासु यदिदं दाम बन्धनरज्जुमासमन्ताद्बबन्ध जीवानां बन्धनं कृतवती तत् ते इति त्वया कृत्वा विष्यामि दूरीकरोमि नाशयामीत्यर्थः । अस्य दुरत्ययत्वमाह । किंभूतं दाम, आयुषो मध्याज्जीवता पुरुषेण।विचर्त्यं विचरणशीलं विचर्त्यं तथाविधं न भवत्यविचाल्यमित्यर्थः । अथ बन्धननाशानन्तरं पितुशब्देन अन्नं पितुमज्जीवः । अन्नादिविषयासक्तो जीवः प्रमुक्तो भवति मुक्तदशां प्राप्नोति । नकारो निश्चयार्थः । एवमीश्वरानुसंधानेन मायाभिभवे मोक्षोपायः सुकर एवेत्यर्थः ॥ १४ ॥

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ॥**
**माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥**

यदि त्वां प्रपन्ना मायामेतां तरन्ति कस्मात्त्वामेव सर्वे न प्रपद्यन्ते इत्युच्यते न मामिति । न मां परमेश्वरं दुष्कृतिनः पापकारिणो मूढाः प्रपद्यन्ते नराधमा नराणां मध्येऽधमा निकृष्टास्ते च माययापहृतज्ञाना आसुरं भावं हिंसानृतादिलक्षणमाश्रिताः ॥१५॥

आ० टी० । भगवन्निष्ठाया मायातिक्रमहेतुत्वे तदेकनिष्ठत्वमेव सर्वेषामुचितमिति पृच्छति **यदीति** । पापकारित्वेनाविवेकभयस्तया हिंसानृतादिभूयस्त्वाद्भूयसां जन्तूनां न भगवन्निष्ठत्वसिद्धिरित्याह उच्यत इति । मौढ्यं पापकारित्वे हेतुरत एव निकृष्टाः संमुषितमिव तिरस्कृतं ज्ञानं स्वस्वरूपचैतन्यमेषामिति ते तथा ॥ १५ ॥

प० टी० । अथ मद्प्राप्तिनिमित्तं माययेवेत्याह **न मामिति** । नरेषु येऽधमास्ते मां न प्रपद्यन्ते न भजन्ति । तत्र हेतुः मूढा विवेकशून्याः, तत्कृतो, दुष्कृतिनः पापशीला अतो माययापहृतज्ञानाः सन्त आसुरं भावमाश्रिताः सन्ति शास्त्राचार्योपदेशतः प्राप्तज्ञाना अपि तदावरकीभूतमायातो दम्भदर्पाभिमानपारुष्याद्यभिनिवेशवन्तो मां न भजन्तीत्यर्थः । तदुक्तम्–' दुःसंकल्पविकल्पकूलयुगुला धैर्यद्रुमोन्मूलिनी कल्लोलैरभिमानमत्सरमुखैः पङ्क्तिः परीतोर्मिका । आवर्तैर्ममतादिभिः परिवृता दुःखैकधारान्विता पूर्णा मोहपयस्विनीव निभृतं चेतःस्थितिर्मायिनाम् ॥ १५ ॥

**चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ॥**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥**

चतुरिति । ये पुनर्नरोत्तमाः पुण्यकर्माणश्चतुर्विधाश्चतुष्प्रकारा भजन्ते सेवन्ते मां जनाः सुकृतिनः पुण्यकर्माणो हे अर्जुन आर्त

आर्तिपरिगृहीतस्तस्करव्याघ्ररोगादिनाभिभूतोऽभिभवमापन्नो जिज्ञासुर्भगवत्तत्त्वं ज्ञातुमिच्छति योऽर्थार्थी धनकामो ज्ञानी विष्णोस्तत्त्वविच्च हे भरतर्षभ॥१६॥

**आ० टी०** । केषां तर्हि तन्निष्ठता सुकरेति तत्राह **ये पुनरिति** । ते भजन्ते भगवन्तमिति शेषः । ये त्वां भजन्ते ते किं सर्वे मायां तरन्ति नैवं प्रार्थनावैचित्र्यादित्याह **चतुर्विधा इति** । आपन्नस्तान्निवृत्तिमिच्छन्निति शेषः । **तत्त्वविदिति** । शब्दज्ञानवानात्मतत्त्वसाक्षात्कारमात्रार्थी मुमुक्षुरित्यर्थः ॥ १६ ॥

**प० टी०** । अथ भजनसुकृततारतम्येन चातुर्विध्यमाह **चतुर्विधा इति** । पूर्वजन्मनि कृतसुकृतसमूहाः सुकृतिनो मां भजन्ति । तदुक्तम्—'अनेकजन्मसाहस्रैस्तपोदानसमाधिभिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते' इति । अथोद्दिष्टं चातुर्विध्यमाह **आर्तेति** । तत्रार्तो रोगाद्यभिभूतः स यदि पूर्वकृतपुण्यपुञ्जस्तदा मां भजत्यन्यथा क्षुद्रदेवोपासनेन संसरति । ननु भगवतो मोक्षैकदातृत्वप्रसिद्ध्या क्षुद्रफलार्थं भजनमसंभावितमिति 'चेन्न ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति प्रतिज्ञातत्वात् । श्रुतिरपि—"यदि क्षतायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव । तमाहरामि निर्ऋतेरुपस्थादस्पार्शमेनं शतशारदाय" इति । भाष्यम्—क्षतायुरपमृत्युमान् गजेन्द्रादिः' परेत इहलोकाल्लोकान्तरं नीतः स्वबन्ध्वादिः, मृत्योरन्तिकं यमसमीपं नीतो गुरुबालकादिः । एवकारेण बुद्धिपूर्वकं नीतो न प्रमादेन तं प्राणिनं निर्ऋतेरुपस्थाद् यमसमीपतोऽप्याहरामि गुरुबालकवद्बलात्कारेणानयामि । अथ स पुनरपि मरिष्यति चेन्नेत्याह । एनं मृत्योर्मोचितं पुरुषं शतशारदाय शतवर्षपर्यन्तं जीवनाय । यद्वा शतशब्दोऽनन्तसंख्यावाची । अमृतत्वायास्पार्शमभयकरेण स्पृशामि । तथा जिज्ञासुरात्मज्ञानेप्सुस्तथार्थार्थी अर्थमिहामुत्रफलभोगमर्थयते स तथा तथा ज्ञान्यात्मवित् । नन्वात्मविदः कृतकृत्यता पुनर्भजनं कुत इति चेन्न । यत्प्रसादादात्मज्ञत्वोपकारः स कथं कृतज्ञेन विस्मर्यते । तदुक्तम्— विस्मर्यते कृतविदा कथमार्तबन्धो इत्यादि ॥ १६ ॥

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ॥
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥

तेषामिति । तेषां चतुर्णां मध्ये ज्ञानी तत्त्वविस्त्वान्नित्ययुक्तो भवत्येकभक्तिश्चान्यस्य भजनीयस्यादर्शनादतः स एकभक्तिर्विशिष्यते विशेषमाधिक्यमापद्यतेऽतिरिच्यत इत्यर्थः । प्रियो हि यस्मादहमात्मा ज्ञानिनोऽतस्तस्याहमत्यर्थं प्रियः प्रसिद्धं हि लोके आत्मा प्रियो भवतीति तस्माज् ज्ञानिन आत्मत्वाद्वासुदेवः प्रियो भवतीत्यर्थः । स च ज्ञानी मम वासुदेवस्यात्मैवेति ममात्यर्थं प्रियः ॥ १७ ॥

**आ० टी०** । चतुर्विधानां तेषां सुकृतिनां भगवदभिमुखानां तुल्यत्वमाशङ्क्याह **तेषामिति** । तस्य विशिष्यमाणत्वे हेतुमाह **प्रियो हीति** । नित्ययुक्तत्वं भगवत्यात्मनि सदा समाहितचेतस्त्वमसारे संसारे भगवानेव सारः सोऽहमस्मीत्येकस्मिन्नद्वितीये स्वस्मादत्यन्तमभिन्ने भगवति भक्तिः स्नेहविशेषोऽस्येत्येकभक्तिः । तस्याधिक्ये हेतुं विवृणोति **प्रियो हीत्यादिना** । भगवतो ज्ञानिनश्च परस्परं प्रेमास्पदत्वे प्रसिद्धिं प्रमाणयति **प्रसिद्धं हीति** । आत्मनो ज्ञानिनं प्रति प्रियत्वेऽपि भगवतो वासुदेवस्य कथं तं प्रति प्रियत्वमित्याशङ्क्याह **तस्मादिति** । अहं ज्ञानिनो निरुपाधिकप्रेमास्पदं

परमपुरुषार्थत्वेनात्मत्वेन च गृहीतत्वादित्यर्थः । ज्ञानिनोऽपि भगवन्तं प्रति प्रियत्वं प्रकटयति **स चेति** ॥ १७ ॥

प० टी० । **तेषामिति** । तेषां चतुर्णां मध्ये ज्ञानी तत्त्वविदेकभक्तिरव्यभिचारिण्या भक्त्या युक्तो विशिष्यते विशेषं प्राप्नोति । यावत्पर्यन्तं जीवन्मुक्तो भवति तावत्पर्यन्तं सिध्यादिविघ्नाभावमुद्दिश्य भक्तिं न त्यजतीत्यर्थः । अथ तस्य प्रेमानुबन्धमाह **प्रिय इति** । हीति निश्चयेन ज्ञानिनः पुरुषस्याहमत्यन्तं प्रियो निरतिशयप्रेमास्पदम् । श्रुतिरपि–" तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा " तथा " आत्मनस्तु कामाय सर्वं प्रियं भवति " इति । स्पष्टार्थम् । च परं सोऽपि मम प्रियोऽनुग्राह्यत्वात् ॥ १७ ॥

**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥**
**आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥१८॥**

न तर्ह्यार्तादयस्त्रयो वासुदेवस्य प्रियाः । न, किं तर्हि उदारा इति । उदारा उत्कृष्टाः सर्व एवैते त्रयोऽपि मम प्रिया एवेत्यर्थः । न हि कश्चिन्मद्भक्तो मम वासुदेवस्याप्रियो भवतीति ज्ञानी त्वत्यर्थं प्रियो भवतीति विशेषः । तत् कस्मादित्याह ज्ञानी त्वात्मैव नान्यो मत इति मे मम मतं निश्चयः, आस्थित आरोढुं प्रवृत्तः स च ज्ञानी हि यस्मादहमेव भगवान् वासुदेवो नान्योऽस्मीत्येवं युक्तात्मा समाहितचित्तः सन् मामेव परं ब्रह्म गन्तव्यमनुत्तमां गतिं गन्तुं प्रवृत्त इत्यर्थः ॥ १८ ॥

आ० टी० । ज्ञानी चेदत्यर्थमीश्वरस्य प्रियो भवति तर्हि विशेषणसामर्थ्यादितरेषामप्रियत्वं प्राप्तमिति शङ्कते **न तर्हीति** । तेषां भगवन्तं प्रति प्रियत्वमत्र विवक्षितमित्याह **नेति** । अत्यर्थमिति विशेषणस्य तर्हि किं प्रयोजनमिति पृच्छति **किं तर्हीति** । सर्वेषां भगवदभिमुखत्वादुत्कर्षेऽपि ज्ञानिनि तदतिरेकमङ्गीकृत्य विशेषणमित्याह **उदारा इति** । किं तत्र प्रमाणमित्याशङ्क्येश्वरज्ञानमित्याह **मे मतमिति** । ज्ञानी त्वात्मैवेत्यत्र हेतुमाह **आस्थित इति** । सर्वशब्दस्य ज्ञानिव्यतिरिक्तविषयत्वमाह **त्रयोऽपीति** । ज्ञानिव्यतिरिक्तानां भगवदभिमुखत्वेऽपि ज्ञानाभावापराधान्न भगवत्प्रीतिविषयतेत्याशङ्क्याह **न हीति** । कस्तर्हि ज्ञानवति सति विशेषस्तत्राह **ज्ञानी त्विति** । तमेव विशेषं प्रश्नपूर्वकं प्रकटयति **कस्मादित्यादिना** । सर्वमात्मानं पश्यतोऽप्यपक्षपातिनस्तस्य तव कथं यथोक्तो निश्चयः स्यादित्याशङ्क्यास्थित इत्येतद्व्याकरोति **आरोढुमिति** । आरोहे हेतुं सूचयति **स च ज्ञानीति** । आरोढुं प्रवृत्तत्वमेव स्फुटयति **मामेवेति** ॥ १८ ॥

प० टी० । तर्हि किमितरे त्रयस्त्वद्भक्ताः संसरन्ति न हि न हीत्याह **उदारा इति** । आर्तादयस्त्रयोऽप्युदारा मदर्पणपराः सन्तो मोक्षभागिन एव भवन्ति । ज्ञानी त्वात्मैव मत्स्वरूप एवेति मन्मतम् । सर्वविघ्नानां मूर्ध्नि पदं दत्वा मद्भावमागत इत्यर्थः । श्रुतिरपि शातपथी–" य एवं वेदाहं ब्रह्मास्मीति स इदꣳ सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषाꣳ स भवति " इति । भाष्यम्–यो ब्रह्माहमस्मीत्येवं वेद स इदं सर्वं भवति सर्वात्मको भवतीत्यर्थः । हीति निश्चयेन तस्य पुरुषस्याभूत्या अनैश्वर्याय च्यावनाय देवा इन्द्रादयोऽपि ने-

शते समर्था न भवन्ति । कुत एषामिन्द्रादीनामपि स आत्मान्तर्यामित्वेन प्रवर्तको भवतीत्यर्थः । एवं स युक्तात्मा पुरुषो मामेवानुत्तमां गतिमात्यन्तिकगतिस्वरूपमास्थित आश्रितः ॥ १८ ॥

**बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ॥**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥**

ज्ञानी पुनरपि स्तूयते बहूनामिति । बहूनां जन्मनां ज्ञानार्थसंस्कारार्जनाश्रयाणामन्ते समाप्तौ ज्ञानवान् प्राप्तपरिपाकज्ञानो मां वासुदेवं प्रत्यगात्मानं प्रत्यक्षतः प्रतिपद्यते। कथं, वासुदेवः सर्वमिति । य एवं सर्वात्मानं मां प्रतिपद्यते स महात्मा न तत्समोऽन्योऽस्त्यधिको वातः सुदुर्लभो मनुष्याणां सहस्रेष्वित्युक्तम् ॥ १९ ॥

आ० टी० । उत्तरश्लोकस्य गतार्थत्वं परिहरति **ज्ञानीति** । ज्ञानार्थसंस्कारो वासना तत्तज्जन्मनि पुण्यकर्मानुष्ठानजनिता बुद्धिशुद्धिस्तदाश्रयाणां तद्वतामनन्तानां जन्मनामिति यावत् । ज्ञानवत्त्वं प्राक्तनेष्वपि जन्मसु संभावितमित्याशङ्क्याह **प्राप्तेति** । ज्ञानवतो भगवत्प्रतिपत्तिं प्रश्नद्वारा विवृणोति **कथमिति** । यथोक्तज्ञानस्य तद्वतश्च दुर्लभत्वं सूचयति य **एवमिति** । महत् सर्वोत्कृष्टमात्मशब्दितं **चित्तमस्येति** । महात्मत्वे फलितं हेतुमाह **अत इति** । तत्र वाक्योपक्रमानुकूल्यं कथयति **मनुष्याणामिति** ॥ १९ ॥

प० टी० । एवंभूतो भक्तो दुर्लभ इत्याह **बहूनामिति** । बहूनां शुभाचारवतां जन्मनामन्ते चरमे जन्मनि वासुदेवः सर्वमिति ज्ञानवान् सर्वात्मकदृष्ट्या मां प्रपद्यते भजति । स महात्मापरिच्छिन्नदृष्टिः स च दुर्लभः । अयमर्थः । वासयति छादयति मायया विश्वमिति वासुस्तथा स्वप्रकाशेन दीव्यतीति देवस्तथाविधः सूत्रात्मा स एव सर्वमिति ज्ञानवान् । तदुक्तम्––'अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् । इति स्यान्निश्चितो मुक्तो बद्ध एवान्यथा भवेद् 'इति । तदेवं कामिनोऽपि सन्तः कामप्राप्तये परमेव भजन्ति ते कामान् प्राप्य शनैर्मुच्यन्त इत्युक्तम् ॥ १९ ॥

**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ॥**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥**

आत्मैव सर्वो वासुदेव इत्येवमप्रतिपत्तौ कारणमुच्यते कामैरिति । कामैस्तैस्तैः पुत्रपशुस्वर्गादिविषयैर्हृतज्ञाना अपहृतविवेकविज्ञानाः प्रपद्यन्तेऽन्यदेवताः प्राप्नुवन्ति वासुदेवादात्मनोऽन्या देवतास्तं तं नियमं देवताराधने प्रसिद्धो यो यो नियमस्तं तमास्थायाश्रित्य प्रकृत्या स्वभावेन जन्मान्तरार्जितसंस्कारविशेषेण नियता नियमिताः स्वयात्मीयया ॥ २० ॥

आ० टी० । किमिति तर्हि सर्वेषां प्रत्यग्भूते भगवति यथोक्तज्ञानं नोदेतीत्याशङ्क्य न मामित्यत्रोक्तं हृदि निधाय ज्ञानानुदये हेत्वन्तरमाह **आत्मैवेति** । कामैर्नानाविधैरपहृतविवेकविज्ञानस्य देवतान्तरनिष्ठत्वमेव प्रत्यग्भूतपरदेवताप्रतिपत्त्यभावे कारणमित्याह **कामैरिति** । देवतान्तरनिष्ठत्वे हेतुमाह **तं तमिति** । प्रसिद्धो नियमो जपोपवासप्रदक्षिणानमस्कारादिः । नियमविशेषाश्रयणे कारणमाह **प्रकृत्येति** ॥ २० ॥

प० टी० । अथ तदितरानाह **कामैस्तैस्तैर्हृतज्ञाना** इति चतुर्भिः । तैस्तैः पुत्रकलत्रमित्रशत्रुजयादिविषयैः कामैरपहृतविवेकाः सन्तोऽन्या मद्भिन्नलक्षणाः सर्वैश्वर्यसर्वज्ञत्वसर्वान्तर्यामित्वादिसामर्थ्यवर्जिताः क्षुद्रा भूतप्रेतयक्षादिदेवता भजन्ति । किंकृत्वा, तत्तद्देवताराधने यो यो नियम उपवासादिलक्षणस्तं तं नियममास्थाय स्वीकृत्य तत्रापि स्वकीयया प्रकृत्या पूर्वाभ्यासवासनया नियता वशीकृताः सन्तो देवताविशेषं भजन्ति तेषां मध्ये ॥ २० ॥

**यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ॥**
**तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥**

य इति । तेषां च कामिनां यो यः कामी यां यां देवतातनुं श्रद्धया संयुक्तो भक्तश्च सन्नर्चितुं पूजयितुमिच्छति तस्य तस्य कामिनोऽचलां स्थिरां श्रद्धां तामेव विदधामि स्थिरीकरोमि ययैवं पूर्वं प्रवृत्तः स्वभावतो यो यो यां देवतातनुं श्रद्धयार्चितुमिच्छतीति ॥ २१ ॥

आ० टी० । तत्तद्देवताप्रसादात् कामिनामपि सर्वेश्वरे सर्वात्मके वासुदेवे क्रमेण भक्तिर्भविष्यतीत्याशङ्क्याह **तेषां चेति** । स्वभावतो जन्मान्तरीयसंस्कारवशादित्यर्थः । भगवद्विहितया स्थिरया श्रद्धया संस्काराधीनया देवताविशेषमाराधयतोऽपि भगवदनुग्रहादेव फलप्राप्तिरित्याह **यो यो यामिति** ॥ २१ ॥

प० टी० । **यो य इति** । यो यो भक्तो यां यां तनुं देवतारूपां मयान्तर्यामिणा कृत्वा मद्रूपां श्रद्धयार्चितुमिच्छति । तस्य तस्य भक्तस्य तत्तन्मूर्तिविषयां तामेव श्रद्धामचलां दृढामहं भक्तानामन्तर्यामित्वेन विदधामि करोमि ॥ २१ ॥

**स तया श्रद्धया युक्तस्तस्याराधनमीहते ॥**
**लभते च ततः कामान् मयैव विहितान् हितान् ॥२२॥**

स तयेति । स तया मद्विहितया श्रद्धया युक्तः संस्तस्या देवतायास्तन्वाराधनमीहते चेष्टते लभते च ततस्तस्या आराधिताया देवतातन्वाः कामानीप्सितान् मयैव परमेश्वरेण सर्वज्ञेन कर्मफलविभागज्ञतया विहितान्निर्मितांस्तान् हि यस्मात्ते भगवता विहिताः कामास्तस्मात्तानवश्यं लभते इत्यर्थः । हितानिति पदच्छेदे हितत्वं कामानामुपचरितं कल्प्यं न हि कामा हिताः कस्य चित् ॥ २२ ॥

आ० टी० । ईहते निर्वर्तयतीत्यर्थः । आराधितदेवताप्रसादात् फलप्राप्तौ किमीश्वरेणेत्याशङ्क्य सर्वज्ञस्यतस्य कर्मफलविभागाभिज्ञस्य तत्तद्देवताधिष्ठातृत्वात्तस्यैव फलदातृत्वमित्याह **सर्वज्ञेनेति**। "एको बहूनां यो विदधाति कामान्" इत्यादिश्रुतिमाश्रित्य हितानीति पदद्वयं व्याचष्टे **यस्मादिति**। **हितानि**त्येकं पदमिति पक्षं प्रत्याह **हितानिति**। मुख्यत्वसंभवे किमित्यौपचारिकत्वमित्याशङ्क्याह **न हीति**॥२२॥

प० टी० । स तयेति । स भक्तस्तया श्रद्धया युक्तः संस्तस्यास्तनोराराधनमीहते करोति ततो ये संकल्पितास्तान् कामान् मयैव विहितान् दत्तानन्तर्यामित्वेन प्रयुक्ताद्देवताविशेषाल्लभन्ते । तदेवं यद्यपि सर्वा अपि देवता ममैव तनवोऽतस्तदाराधनमपि वस्तुतो ममाराधनमेव ॥ २२ ॥

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ॥
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३ ॥

अन्तेति । यस्मादन्तवत्साधनव्यापारा अविवेकिनः कामिनश्च तेऽतोऽन्तवद्विनाशि तु फलं तेषां तद्भवत्यल्पमेधसामल्पप्रज्ञानां देवान् देवयजो यान्ति देवान् यजतीति देवयजस्ते देवान् यान्ति मद्भक्ता यान्ति मामप्येवं समानेऽप्यायासे मामेव न प्रतिपद्यन्तेऽनन्तफलायाहो खलु कष्टं वर्तन्त इत्यनुक्रोशं दर्शयति भगवान् ॥ २३ ॥

आ० टी० । प्रेक्षापूर्वकारिणि कामानां हितत्वाभावे हेतुमाह यस्मादिति । किं च ये कामिनस्ते न विवेकिनस्ततश्चाविवेकपूर्वकत्वात् कामानां कुतो हितत्वाशङ्केत्याह अविवेकिन इति । कामानामानन्त्यफलत्वेन हितत्वमाशङ्क्याह अत इति । तेषामविवेकपूर्वकत्वमतःशब्दार्थः, तुशब्दोऽवधारणार्थः । कामफलस्य विनाशित्वे किमिति कामनिष्ठत्वं जन्तूनामित्याशङ्क्य प्रज्ञामान्द्यादित्याह अल्पेति । किं तर्हि साधनमनन्तफलायेत्याशङ्क्य भगवद्भक्तिरित्याह मद्भक्ता इति । अक्षरार्थमुक्त्वा श्लोकस्य तात्पर्यार्थमाह एवमिति । देवताप्राप्तौ भगवत्प्राप्तौ चेति शेषः, मामेवेत्यादौ देवताविशेषं प्रतिपद्यन्तेऽन्तवत् फलायेति वक्तव्यम् । उक्तवैपरीत्ये कारणमविवेकातिरिक्तं नास्तीत्यभिप्रेत्याह अहो खल्विति ॥ २३ ॥

प० टी० । अहमेव तत्तत्फलदाता तथापि साक्षान्मद्भक्तानां तेषां च फलवैषम्यं भवतीत्याह अन्तवदिति । अल्पमेधसां परिच्छिन्नदृष्टीनां मया दत्तमपि तत्फलमन्तवद्भवति विनाशि भवति । तदेवाह । देवान् यजन्ति ते देवयजस्तेऽन्तवतो देवान् यान्ति मद्भक्तास्ते मामनाद्यन्तं परमानन्दं प्राप्नुवन्ति । श्रुतिरपि शातपथी—"स यो हैतानन्तवत उपास्तेऽन्तवन्तꣳ स लोकं जयत्यथ यो हैताननन्तानुपास्तेऽनन्तꣳ स लोकं जयति" इति । जयति प्राप्नोति शेषं स्पष्टम् ॥ २३ ॥

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ॥
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥

किंनिमित्तं त्वामेव न प्रपद्यन्ते इत्युच्यते अव्यक्तमिति । अव्यक्तमप्रकाशं व्यक्तिमापन्नं प्रकाशं गतमिदानीं मन्यन्ते मां नित्यप्रसिद्धमीश्वरमपि सन्तमबुद्धयोऽविवेकिनः परं भावं परमात्मस्वरूपमजानन्तोऽविवेकिनो ममाव्ययं व्ययरहितमनुत्तमं निरतिशयं मदीयं भावमजानन्तो मन्यन्त इत्यर्थः ॥ २४ ॥

आ० टी० । भगवद्भजनस्योत्तमफलत्वेऽपि प्राणिनां प्रायेण तन्निष्ठत्वाभावे प्रश्नपूर्वकं निमित्तं निवेदयति किं निमित्तमित्यादिना । अप्रकाशं शरीरग्रहणात् पूर्वमिति शेषः । इदानीं लीलाविग्रहपरिग्रहावस्थायामित्यर्थः । प्रकाशस्य तर्हि कादाचित्कत्वं भगवति प्राप्तं नेत्याह नित्येति ।

कथं तर्हि भगवन्तमागन्तुकप्रकाशं मन्यन्ते तत्राबुद्धय इत्युत्तरं तद्विवृणोति **परमिति**। परमनुत्तममिति विशेषणद्वयं सोपाधिकनिरुपाधिकभावार्थम् ॥ २४ ॥

**प० टी०**। ननु च समाने प्रयासे महति च फलविशेषे सति सर्वेऽपि देवान्तरं हित्वा किमिति त्वामेव न भजन्तीत्याह **अव्यक्तमिति**। अव्यक्तं प्रपञ्चातीतं मनुष्यमत्स्यकूर्मादिदेहधारित्वेन व्यक्तिमापन्नं प्राप्तमित्यल्पबुद्धयो मन्यन्ते। तत्र हेतुः, मम परं भावं तात्त्विकस्वरूपमजानन्तः। कथंभूतं भावमव्ययम्, अनुत्तमं न विद्यते उत्तमं यस्माज्जगद्रक्षणार्थमाविर्भूतं शुद्धसत्त्वरूपमुत्कृष्टफलदातारमजानन्तस्तत्कालफलदं देवतान्तरमुपासते तेषामन्तवत्फलं भवति ॥ २४ ॥

# नाहं प्रकाशः सर्वस्य योगमायासमावृतः ॥
# मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥

तदज्ञानं किंनिमित्तम् इत्युच्यते नाहमिति। नाहं प्रकाशः सर्वस्य लोकस्य केषांचिदेव मद्भक्तानां प्रकाशोऽहमित्यभिप्रायः, योगमायासमावृतः योगो गुणानां युक्तिर्घटनं सैव माया योगमाया तया योगमायया समावृतः संछन्न इत्यर्थः। अतएव मूढो लोकोऽयं नाभिजानाति मामजमव्ययम् ॥२५॥

**आ० टी०**। अविवेकरूपमज्ञानं भगवन्निष्ठाप्रतिबन्धकमुक्तं तस्मिन्नपि निमित्तं प्रश्नपूर्वकमनाद्यज्ञानमुपन्यस्यति **तदज्ञानमित्यादिना**। त्रिभिर्गुणमयैरित्यनौपाधिकरूपस्याप्रतिपत्तौ कारणमुक्तमत्र तु सोपाधिकस्यापीति विशेषं गृहीत्वा व्याचष्टे **नाहमिति**। तर्हि भगवद्भक्तिरनुपयुक्तेत्याशङ्क्याह **केषांचिदिति**। सर्वस्य लोकस्य न प्रकाशोऽहमित्यत्र हेतुमाह **योगेति**। अनाद्यनिर्वाच्याज्ञानाच्छन्नत्वादेव मद्विषये लोकस्य मौढ्यं ततश्च मदीयस्वरूपविवेकाभावान्मन्निष्ठत्वराहित्यमित्याह **अत एवेति** ॥ २५ ॥

**प० टी०**। तेषां स्वाज्ञाने हेतुमाह **नाहमिति**। सर्वस्य लोकस्य नाहं प्रकाशोऽन्तर्यामित्वेन वर्तमानोऽपि परतत्त्वप्रकाशको न भवामि किं तु मद्भक्तानामेव यतोऽयं लोको योगमायासमावृतः सन् मूढोऽस्त्यतो मामजमव्ययं न जानाति। यद्वा सर्वस्य लोकस्य ज्ञानरूपः प्रकाशोऽचिन्त्यैश्वर्यया योगमायया समावृतोऽस्मि परं तु नाहं समावृतो यतो योगमाया तु स्वाश्रयाव्यामोहिनी यथा शरावस्थितेन कलुषोदकेन प्रतिबिम्बप्रकाश एवाव्रियते न सूर्यः। अत एव मूढो लोक एवंविधमभितो वर्तमानं न जानाति। अत एवान्तवत्फलं लभते। मद्भक्तस्त्वजमनादिमव्ययमनन्तं मां जानात्यतोऽनश्वरं फलं लभत इत्यर्थः। तदुक्तं टिप्पणिकासु—'चित्संवित्सुखरूप आत्मनि कथं मायावृतत्वं भवेन्मार्तण्डस्तमसाव्रियेत किमहो किं त्वीक्षणं पश्यताम्। अज्ञानेन विधीयते जलमुचेवार्कस्तदुक्तं द्विधा विक्षेपावरणाभिधं मुनिवरैर्मोहस्य शक्तिद्वयम्' इति। अत्र ऋक्शाखीया श्रुतिरपि—"अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः। न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव। नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति" इति सार्धऋक्। भाष्यम्—अजस्य जन्मरहितस्य महाभूतात्मकस्य विराजो नाभौ मध्ये हिरण्यगर्भाख्यमेकं लिङ्गदेहमर्पितं न्यस्तमिव स्थितम्। यस्मिन् लिङ्गदेहे विश्वानि सर्वाणि भुवनानि भूर्भुवःस्वरादीनि तस्थुः सूत्रे मणिगणा इव तिष्ठन्ति। तमित्युत्तरेणान्वयः। हे नरास्तं विश्वकर्माणमीश्वरं यूयं न विदाथ न विजानीथ। स को, य इमा इमानि जजान सूक्ष्मशरीरेण प्रविश्योत्पादितवान्। देवदत्तोऽहं यज्ञदत्तोहमित्याकारेण वयं न जानीम इति यदुच्यते तदसत्, न ह्यहंप्रत्ययगम्यं जीवरूपं विश्वकर्मणः परमेश्वरस्य तत्त्वम्, किं तु युष्माकमहंप्रत्यय-

गम्यानाम् । अन्यदहंप्रत्ययगम्यादतिरिक्तं सर्ववेदान्तवेद्यमीश्वरतत्त्वं बभूव भवति विद्यते । जीवरूपवत्तदपि कुतो न विद्म इति चेच्छ्रूयताम् । नीहारेण प्रावृता यूयं नीहारसदृशेनाज्ञानेन प्रावृता आच्छन्ना अतो न जानीथ । यथा नीहारो नात्यन्तमसद्दृष्टेरावरकत्वात् । काष्ठपाषाणाद्यवान्तरभेदं बोद्धुमशक्यत्वात् । एवमज्ञानमपि नात्यन्तमसदीश्वरतत्त्वावरकत्वात् । नापि सद्बोधमात्रनिवर्त्यत्वात् । ईदृशेनाज्ञानेन भवन्तः सर्वे जीवाः प्रावृता न केवलं प्रावृतत्वं किं च जल्प्याः देवोऽहं मनुष्योऽहमित्याद्यनृतजल्पपराः किं चासुतृपः केनाप्युपायेनासूंस्तर्पयन्त्युदरंभरा इत्यर्थः । न तु पारमेश्वरतत्त्वं विचारितवन्तः । किं च न केवलमिहलोकभोगमात्रतृप्ता उक्थशासो नानाविधेषु यज्ञेषूक्थं स्वर्गादिफलं शंसन्तः पृथिव्यां चरन्ति ॥ २९ ॥

**वेदाहं समतीतानि वर्तमानानि चार्जुन ॥**
**भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ २६ ॥**

यया योगमायया समावृतं मां लोको नाभिजानाति नासौ योगमाया मदीया सती ममेश्वरस्य मायाविनो ज्ञानं प्रतिबध्नाति यथान्यस्यापि मायाविनो मायाज्ञानं तद्वद् यत एवमतो वेदाहमिति । अहं तु वेद जाने समतीतानि समतिक्रान्तानि भूतानि तथा वर्तमानानि चार्जुन भविष्याणि च भूतानि वेदाहं मां तु वेद न कश्चन मद्भक्तं मच्छरणमेकं मुक्त्वा मत्तत्त्ववेदनाभावादेव न मां भजते ॥ २६ ॥

आ० टी० । मायया भगवानावृतश्चेत्तस्यापि लोकस्येव ज्ञानप्रतिबन्धः स्यादित्याशङ्क्याह **ययेति** । न हीयं माया मायाविनो विज्ञानं प्रतिबध्नाति मायात्वाल्लौकिकमायावत्, अथवा नेश्वरो मायाप्रतिबद्धज्ञानो मायावित्वाल्लौकिकमायाविवदित्यर्थः । भगवता मायाप्रतिबद्धज्ञानत्वाभावेन सर्वज्ञत्वमप्रतिबद्धं सिद्धमित्याह **यत इति** । लोकस्य मायाप्रतिबद्धविज्ञानत्वादेव भगवदाभिमुख्यशून्यत्वमित्याह **मां त्विति** । कालत्रयपरिच्छिन्नसमस्तवस्तुपरिज्ञाने प्रतिबन्धो नेश्वरस्यास्तीति द्योतनार्थस्तुशब्दः । **मां त्विति** लोकस्य भगवत्तत्त्वज्ञाने प्रतिबन्धं द्योतयति । तर्हि तद्भक्तिर्विफलेत्याशङ्क्याह **मद्भक्तमिति** । तर्हि सर्वोऽपि तद्भक्तिद्वारा त्वां ज्ञास्यति नेत्याह **मत्तत्त्वेति** । विवेकवतो मद्भजनं न तु विवेकशून्यसर्वस्यापीत्यर्थः ॥ २६ ॥

प० टी० । तदेवं स्वस्य सर्वोत्तमत्वमनावृतशक्तित्वं दर्शयति **वेदाहमिति** । समतीतान्यतिक्रान्तानि वर्तमानानि तथा भविष्याण्येवं त्रिकालवर्तीनि भूतानि स्थावरजङ्गमात्मकानि सर्वाण्यहं वेद जानामि मायाश्रयत्वान्मम तस्याश्चाश्रयव्यामोहकत्वाभावात्, मां च कोऽपि न वेद न वेत्ति । मन्मायामोहितत्वात्, मायायाः स्वाश्रयाधीनत्वमन्यमोहकत्वं प्रसिद्धमेव ॥ २६ ॥

**इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ॥**
**सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥ २७ ॥**

केन पुनस्त्वत्तत्त्ववेदनप्रतिबन्धेन प्रतिबद्धानि सन्ति जायमानानि सर्वभूतानि त्वां न विन्दन्तीत्यपेक्षायामिदमाह इच्छेति । इच्छाद्वेषसमुत्थेनेच्छा

च द्वेषश्चेच्छाद्वेषौ ताभ्यां समुत्तिष्ठतीतीच्छाद्वेषसमुत्थस्तेनेच्छाद्वेषसमुत्थेन । केनेति विशेषापेक्षायामिदमाह द्वन्द्वमोहेनेति । द्वन्द्वनिमित्तो मोहो द्वन्द्वमोहस्तावेवेच्छाद्वेषौ शीतोष्णवत् परस्परविरुद्धौ सुखदुःखतद्धेतुविषयौ यथाकालं सर्वभूतैः संबध्यमानौ द्वन्द्वशब्देनाभिधीयेते तत्र यदेच्छाद्वेषौ सुखदुःखतद्धेतुसंप्राप्त्या लब्धात्मकौ भवतस्तदा तौ सर्वभूतानां प्रज्ञायाः स्ववशापादनद्वारेण परमार्थात्मतत्त्वविषयज्ञानोत्पत्तिप्रतिबन्धकारणं मोहं जनयतः, न हीच्छाद्वेषदोषवशीकृतचित्तस्य यथाभूतार्थविषयज्ञानमुत्पद्यते बहिरपि किमु वक्तव्यं ताभ्यामाविष्टबुद्धेः संमूढस्य प्रत्यगात्मनि बहुप्रतिबन्धे ज्ञानं नोत्पद्यत इत्यतस्तेनेच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत भरतान्वय सर्वभूतानि संमोहितानि सन्ति संमोहं संमूढतां सर्गे जन्मन्युत्पत्तिकाल इत्येतद् यान्ति गच्छन्ति हे परंतप मोहवशान्येव सर्वभूतानि जायमानानि जायन्त इत्यभिप्रायः ॥ २७ ॥

आ० टी० । भगवत्तत्त्वविज्ञानप्रतिबन्धकं मूलाज्ञानातिरिक्तं प्रश्नद्वारेणोदाहरति **केनेत्यादिना** । पुनःशब्दात् प्रतिबन्धकान्तरविवक्षा गम्यते अपरोक्षमवान्तरप्रतिबन्धकमिदमा गृह्यते । विशेषमाकाङ्क्षापूर्वकं निक्षिपति **केनेति** । विशेषापेक्षायामिति द्वन्द्वशब्देन गृहीतयोरपीच्छाद्वेषयोर्ग्रहणम् । द्वन्द्वशब्दार्थोपलक्षणार्थमित्यभिप्रेत्याह **तावेवेति** । तयोरपर्यायमेकत्रानुपपत्तिं गृहीत्वा विशिनष्टि **यथाकालमिति** । न च तयोरनधिकरणं किंचिदपि भूतं संसारमण्डले संभवतीत्याह **सर्वभूतैरिति** । तथापि कथं तयोर्मोहहेतुत्वमित्याशङ्क्याह **तत्रेति** । तयोराश्रयः सप्तम्यर्थः । उक्तमेवार्थं कैमुतिकन्यायेन प्रपञ्चयति **न हीति** । पूर्वभागानुवादपूर्वकमुत्तरभागेन फलितमाह **अत इति** । प्रत्यगात्मन्यहङ्कारादिप्रतिबन्धप्रभावतो ज्ञानोत्पत्तेरसंभवोऽतःशब्दार्थः । कुलप्रयुक्तमहिम्ना स्वरूपशक्त्या च युक्तस्यैव यथोक्तप्रतिबन्धप्रतिविधानसामर्थ्यमिति द्योतनार्थं भारत परंतपेति संबोधनद्वयम् । तत्त्वज्ञानप्रतिबन्धे प्रकृतभवान्तरकारणमुपसंहरति **मोहेति** ॥ २७ ॥

प० टी० । तदेवं जीवानां मायामोहितत्वेन परमेश्वराज्ञानमुक्तं तस्यैवाज्ञानस्य दृढत्वे कारणमाह **इच्छाद्वेषेति** । सृज्यत इति सर्गस्तस्मिन् सर्गे स्थूलदेहोत्पत्तौ सत्यां तदनुकूले इच्छा प्रतिकूले द्वेषस्ताभ्यां समुत्पन्नो यः शीतोष्णसुखदुःखादिद्वन्द्वनिमित्तो मोहो विवेकभ्रंशस्तेन सर्वभूतानि संमोहमहमेवसुखी चेति गाढतमाभिनिवेशं प्राप्नुवन्त्यतस्तानि मज्ज्ञानाभावान्मां न भजन्तीति भावः ॥ २७ ॥

**येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ॥**
**ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८॥**

यत एवमतस्तेन द्वन्द्वमोहेन प्रतिबद्धप्रज्ञानानि सर्वभूतानि संमोहितानि मामात्मभूतं न जानन्त्यतएवात्मभावेन मां तु न भजन्ते के पुनरनेन द्वन्द्वमोहेन निर्मुक्ताः सन्तस्त्वां विदित्वा यथाशास्त्रमात्मभावेन भजन्त इत्यपेक्षितमर्थं

दर्शयितुमुच्यते येषामिति । येषां तु पुनरन्तगतं समाप्तप्रायं क्षीणं पापं जनानां पुण्यकर्मणां पुण्यं कर्म येषां सत्त्वशुद्धिकारणं विद्यते ते पुण्यकर्माणस्तेषां पुण्यकर्मणां ते द्वन्द्वमोहनिर्मुक्ता यथोक्तेन द्वन्द्वमोहेन निर्मुक्ता भजन्ते मां परमात्मानं दृढव्रता एवमेव परमार्थतत्त्वं नान्यथेत्येवं सर्वपरित्यागव्रतेन निश्चितविज्ञाना दृढव्रता उच्यन्ते ॥ २८ ॥

आ० टी० । जायमानभूतानां मोहपरतन्त्रत्वे फलितमाह **यत इति** । भगवत्तत्त्ववेदनाभावे तन्निष्ठत्ववैधुर्यं फलतीत्याह **अत एवेति** । यदि सर्वाणि भूतानि जन्म प्रतिपद्यमानानि संमूढानि सन्ति भगवत्तत्त्वपरिज्ञानशून्यानि भगवद्भजनपराङ्मुखानि तर्हि शास्त्रानुरोधेन भगवद्भजनमुच्यमानमधिकार्यभावादनर्थकमापद्येतेति शङ्कते **के पुनरिति** । अनेकेषु जन्मसु सुकृतवशादपाकृतदुरितानां द्वन्द्वप्रयुक्तमोहविरहिणां ब्रह्मचर्यादिनियमवतां भगवद्भजनाधिकारित्वान्न शास्त्रविरोधोऽस्तीति परिहरति **उच्यत इति** । तुशब्दद्योत्यमर्थमाह **पुनरिति** । मुक्तेरर्वाक्त्वसिद्ध्यर्थं समाप्तप्रायमित्युक्तम् । प्रकृतोपयोगं पुण्यस्य कर्मणो दर्शयितुं विशिनष्टि **सत्त्वेति** । उभयविधशुद्धेर्द्वन्द्वनिमित्तमोहनिवृत्तफलमाह **ते द्वन्द्वेति** । मोहनिवृत्तेर्भगवन्निष्ठापर्यन्तत्वमाह **भजन्त इति** । तेषां नानापरिग्रहवतां भगवद्भजनप्रतिहतिमाशङ्क्याह **दृढेति** ॥ २८ ॥

प० टी० । कुतस्तर्हि के चन भजन्तो दृश्यन्ते तत्राह **येषामिति** । येषां सुकृताचरणवतां सद्गतिप्रतिबन्धकं पापमन्तं गतं नाशं प्राप्तं ते द्वन्द्वनिमित्तेन मोहेन निर्मुक्ताः सन्तो मां भजन्ते "नैनं पाप्मा तपति" इतिश्रुतेः ॥ २८ ॥

## जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ॥
## ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥

ते किमर्थं भजन्त इत्युच्यते जरेति । जरामरणमोक्षाय जरामरणयोर्मोक्षार्थं मां परमेश्वरमाश्रित्य मत्समाहितचित्ताः सन्तो यतन्ति प्रयतन्ते ये ते यद् ब्रह्म परं तद्विदुः कृत्स्नं समस्तमध्यात्मं प्रत्यगात्मविषयं वस्तु तद्विदुः कर्म चाखिलं समस्तं विदुः ॥ २५ ॥

आ० टी० । यथोक्तानामधिकारिणां भगवद्भजनफलं प्रश्नद्वारा दर्शयति **ते किमर्थमिति** । जरामरणादिलक्षणो यो बन्धस्तद्विश्लेषार्थं भगवद्भजनमित्यर्थः । संप्रति सगुणस्य सप्रपञ्चस्य मध्यमानुग्रहार्थं ध्येयत्वमाह **मामाश्रित्येति** । जरादिसंसारनिवृत्त्यर्थं निर्गुणं निष्प्रपञ्चं मामुत्तमाधिकारिणो जानन्तीत्युक्तं 'मामेव ये प्रपद्यन्त' इत्यादावित्याह **जरेति** । मध्यमाधिकारिणं प्रत्याह **मामिति** । परमेश्वराश्रयणं नाम विषयविमुखत्वेन भगवदेकनिष्ठत्वमित्याह **मत्समाहितेति** । प्रयतनं भगवन्निष्ठासिद्ध्यर्थं बहिरङ्गानां यज्ञादीनामन्तरङ्गानां च श्रवणादीनामनुष्ठानम् । प्रागुक्तं जगदुपादानं परं ब्रह्म कथं ब्रह्म विदुरित्यपेक्षायां समस्ताध्यात्मवस्तुत्वेन सकलकर्मत्वेन च तद्विदुरित्याह **कृत्स्नमिति** ॥ २९ ॥

प० टी० । अथ सुकृताचरणेऽपि मदाश्रयव्यतिरेकेण विरागस्तत्त्वावबोधो वा न भवतीत्याह **जरेति** । अत्यन्तदुःखरूपयोर्जरामरणयोर्देहधर्मयोर्मोक्षाय नाशाय मां परमात्मानमाश्रित्य यतन्ते

योगाभ्यासादिप्रयत्नं कुर्वन्ति ते तत्परं ब्रह्म विदुस्तज्ज्ञानोपायरूपं कृत्स्नं समग्रमध्यात्मं च विदुस्तथा तन्निमित्तभूतमखिलं फलाभिसंधिरहितं कर्म च विदुः ॥ २९ ॥

**साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ॥**
**प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विज्ञानयोगो नाम सप्तमाध्यायः ॥ ७ ॥

साधीति । साधिभूताधिदैवमधिभूतं चाधिदैवं चाधिभूताधिदैवं तेन सहाधिभूताधिदैवेन वर्तते इति साधिभूताधिदैवं मां ये विदुः साधियज्ञं च सहाधियज्ञेन साधियज्ञं ये विदुः प्रयाणकाले मरणकालेऽपि च ते मां विदुर्युक्तचेतसः समाहितचित्ता इति ॥ ३० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यपूज्यपादभगवच्छ्रीशंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ॥ ७ ॥

आ० टी० । न केवलं भगवन्निष्ठानां सर्वाध्यात्मिककर्मात्मकब्रह्मवित्त्वमेव । किं त्वधिभूतादिसहितं तद्वेदित्वमपि सिद्ध्यतीत्याह **साधिभूतेति** । अध्यात्मं कर्माधिभूतमधिदैवमधियज्ञं चेति पञ्चकं कर्म तद् ब्रह्म ये विदुस्तेषां यथोक्तज्ञानवतां समाहितचेतसामापदवस्थायामपि भगवत्तत्त्वज्ञानमप्रतिहतं तिष्ठतीत्याह **प्रयाणेति** । अपि चेति निपाताभ्यां तस्यामवस्थायां करणग्रामस्य व्यग्रतया ज्ञानासंभवेऽपि मयि समाहितचित्तानामुक्तज्ञानवतां भगवत्तत्त्वज्ञानमयत्नलभ्यमिति द्योत्यते । तदनेन सप्तमेनोत्तममधिकारिणं प्रति ज्ञेयं निरूपयता तदर्थमेव सर्वात्मकत्वादिकमुपदिशता प्रकृतिद्वयद्वारेण सर्वकारणत्वादिति च वदता तत्पदवाच्यं तल्लक्ष्यं चोपेक्षितम् ॥ ३० ॥

इत्यानन्दगिरिकृतगीताभाष्यटीकायां सप्तमाध्यायः ॥ ७ ॥

प० टी० । न चैवंभूतानां योगभ्रंशशङ्कापीत्याह **साधिभूतेति** । अधिभूताधिदैवैः सह वर्तमानं मां ये विदुस्ते प्रयाणकाले निर्वाणसमयेऽपि युक्तचेतसस्तत्स्मरणवन्तः सन्तो मां विदुर्मां ज्ञात्वा तनुं त्यजन्ति । न तु देहान्तवेदनाभिर्व्याकुलीक्रियन्ते, किं तु मत्प्रसादात्सावधानाः सन्तस्तनुं त्यजन्तीत्यर्थः ॥ ३० ॥

**अथाध्यायतात्पर्यम्** । चित्संविद्रूपतोऽन्तर्हृदयमनुगतो भासते प्रत्यगात्मा बाह्यं भूम्यादिभूतेष्वतिशयितगुणैः संप्रविष्टो विभाति । वेदेष्वोङ्काररूपः सवितरि महसा वीर्यवत्यूर्जितेन प्राप्तस्तं वेत्ति योऽसौ मम तनुरिति तत्सप्तमेनोक्तमास्ते ॥ १ ॥ इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां परमार्थप्रपायां विज्ञानयोगो नाम सप्तमोऽध्यायः ॥ ७ ॥

इति सप्तमाध्यायः ॥ ७ ॥

# अथ

# अष्टमाध्यायः ।

## अर्जुन उवाच ।

**किं तद् ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ॥**
**अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥**
**अधियज्ञः कथं कोऽत्र देहेऽस्मिन् मधुसूदन ॥**
**प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥**

ते ब्रह्म तद्विदुः कृत्स्नमित्यादिना भगवतार्जुनस्य प्रश्नबीजान्युपदिष्टान्यतस्तत्प्रश्नार्थमर्जुन उवाच ॥ १ ॥ २ ॥

आ० टी० । सप्तमाध्यायान्ते 'येषां त्वन्तगतं पापम्' इत्यादिना येषां ब्रह्मादीनामनुसंधानमुक्तं यच्च प्रयाणकाले भगवतः स्मरणं दर्शितं तदिदं जिज्ञासमानः सन् पृच्छतीति प्रश्नसमुदायमवतारयति **ते ब्रह्मेति** । प्रश्नबीजानि तद्विषयभूतानि ब्रह्मादीनि वस्तूनीति यावत् । बुभुत्सितविषयप्रतिलम्भानन्तरं तेषां प्रश्नद्वारा निर्णयार्थमाह **अत इति** । यदुक्तं ते ब्रह्म तद्विदुरिति, तत् किं सोपाधिकं निरुपाधिकं वा ब्रह्मशब्दस्योभयत्रापि संभवादिति मत्वाह **किं तदिति** । यच्चोक्तं कृत्स्नमध्यात्ममिति तत्रात्मानं देहमधिकृत्य तस्मिन्नधिष्ठाने तिष्ठतीत्यध्यात्मशब्देन श्रोत्रादिकरणग्रामो वा प्रत्यग्भूतं ब्रह्मैव वा विवक्षितमित्याह **किमध्यात्ममिति** । "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इति श्रुतौ कर्मणो द्वैविध्यनिर्धारणात् कर्म चाखिलमित्यत्र कीदृक् कर्म गृहीतमिति पृच्छति **किमिति**। क्षराक्षराभ्यां कार्यकारणाभ्यामतीतस्य भगवतो न किंचिद्द्वेद्यमस्तीति सूचयति **पुरुषोत्तमेति**। साधिभूताधिदैवमित्यत्राधिभूतशब्देन पृथिव्यादिषु भूतेषु वर्तमानं किंचिदेव गृह्यते किं वा समस्तमेव कार्यमिति निर्दिधारयिषया पृच्छति **अधिभूतमिति** । अधिदैवमिति च दैवतविषयमनुध्यानं वा दैवतेष्वादित्यमण्डलादिषु वर्तमानं चैतन्यं वा जिघृक्षितमिति प्रश्नान्तरं प्रस्तौति **अधिदैवमिति** ॥ १ ॥

आ० टी० । साधियज्ञं चेत्यत्राधियज्ञशब्देन यज्ञमधिकृतो विज्ञानात्मा वा परदेवता वेति प्रश्नान्तरं प्रतिकरोति **अधियज्ञ इति** । स च कथं केन प्रकारेण ब्रह्मत्वेन चिन्तनीयः किं तादात्म्येन किं वात्यन्ताभेदेनेत्याह **कथमिति** । सर्वथापि स किमस्मिन् देहे वर्तते ततो बहिर्वा, देहे चेत् स कोऽत्र बुद्ध्यादिस्तद्व्यतिरिक्तो वेति जिज्ञासया ब्रूते **कोऽत्रेति** । अधियज्ञः कथं कोऽत्रेति न प्रश्नभेदकः कथमिति किंतु प्रकारभेदाविवक्षयेति द्रष्टव्यम् । यत्तु समाहितचित्तानामुत्क्रमणकालेऽपि भगवदनुसंधानं सिध्यतीति तदयुक्तमुत्क्रमणदशायां करणग्रामवैयग्र्याच्चित्तसमाधानानुपपत्तिरित्याभिप्रेत्याह **प्रयाणेति** ॥ २ ॥

प० टी० । एवं पूर्वाध्यायान्ते भगवदुपक्रान्तमध्यात्मप्रमुखसप्तप्रकाराणां स्वरूपं जिज्ञासुरर्जुनः पृच्छति **किं तदिति** द्वाभ्याम् । तत्र पूर्वपद्यं स्पष्टार्थम् ॥ १ ॥

प० टी० । **अधियज्ञ इति** । अत्र देहे यो यज्ञो वर्तते तस्मिन्कोऽधियज्ञोऽधिष्ठाता प्रयोजकस्तत्फलदाता च क इति प्रश्नस्योत्तरं भगवानाह ॥ २ ॥

## श्रीभगवानुवाच ॥

**अक्षरं परमं ब्रह्म स्वभावोऽध्यात्ममुच्यते ॥**
**भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥**

एषां प्रश्नानां यथाक्रमं निर्णयाय भगवानुवाच अक्षरमिति । अक्षरं न क्षरतीति परमात्मा, "एतस्य वा अक्षरस्य प्रशासने गार्गि" इतिश्रुतेः, ओङ्कारस्य चोमित्येकाक्षरं ब्रह्मेति परेण विशेषणात्तद्ग्रहणं परममिति च निरतिशये ब्रह्मण्यक्षर उपपन्नतरं विशेषणं तस्यैव परस्य ब्रह्मणः प्रतिदेहं प्रत्यगात्मभावः स्वभाव इति स्वो भावः स्वभावोऽध्यात्ममुच्यते । आत्मानं देहमधिकृत्य प्रत्यगात्मतया प्रवृत्तं परमार्थब्रह्मावसानं वस्तु स्वभावोऽध्यात्ममुच्यतेऽध्यात्मशब्देनाभिधीयते । भूतभावोद्भवकरो भूतानां भावो भूतभावस्तस्योद्भवो भूतभावोद्भवस्तं करोतीति भूतभावोद्भवकरो भूतवस्तूत्पत्तिकर इत्यर्थः । विसर्गो विसर्जनं देवतोद्देशेन चरुपुरोडाशादेः स्वस्य द्रव्यस्य वितरणं परित्यागः स एष विसर्गलक्षणो यज्ञः कर्मसंज्ञितः कर्मशब्दित इत्यर्थः । इत्येतस्माद्बीजभूताद्वृष्ट्यादिक्रमेण स्थावरजङ्गमानि भूतान्युद्भवन्ति ॥ ३ ॥

आ० टी० । व्याख्यातप्रश्नसप्तकस्य प्रतिवचनं भागवतमवतारयति **एषामिति** । क्रमेण कृतानां प्रश्नानां क्रमेणैव प्रतिवचने प्रष्टुरभीष्टं प्रतिपत्तिसौकर्यं च सिध्यतीति बुध्यमानो विशिनष्टि **यथाक्रममिति** । तत्र प्रश्नत्रयं निर्णेतुं भगवद्वचनमुदाहरति **अक्षरमिति** । किं तद्ब्रह्मेति प्रश्नस्य प्रतिवचनमक्षरं **ब्रह्मपरममिति** । तत्राक्षरशब्दस्य निरुपाधिके परस्मिन्नात्मन्यविनाशित्वव्याप्तिमत्वसंबन्धात् प्रवृत्तिं व्युत्पादयति **अक्षरमित्यादिना** । कथं पुनरक्षरशब्दस्य यथोक्ते परमात्मनि वृद्धप्रयोगमन्तरेण व्युत्पत्त्या प्रवृत्तिराश्रीयते । व्युत्पत्तेरर्थान्तरेऽपि संभवादित्याशङ्क्य द्यावापृथिव्यादिविषयनिरङ्कुशप्रशासनस्य परस्मादन्यस्मिन्नसंभवात्तथाविधप्रशासनकर्तृत्वेन श्रुतमक्षरं ब्रह्मैवेत्याह **एतस्येति** । रूढिर्योगमपहरतीति[1] न्यायादोङ्कारे वर्णसमुदायात्मन्यक्षरशब्दस्य रूढ्या प्रवृत्तिराश्रयितुमुचितेत्याशङ्क्याह **ओङ्कारस्येति** । प्रतिवचनोपक्रमे प्रक्रान्तमोङ्काराख्यमक्षरमेवोत्तरत्र विशेषितं भविष्यतीत्याशङ्क्य परमविशेषणविरोधान्न तस्य प्रक्रमः संभवतीत्याह **परममिति चेति** । किमध्यात्ममिति प्रश्नस्योत्तरं स्वभावोऽध्यात्ममित्यादि तद्व्याचष्टे **तस्यैवेति** । स्वकीयो भावः स्वभावः श्रोत्रादिकरणग्रामः स चात्मनि देहेऽहंप्रत्ययवेद्यो वर्तत इत्यमुं प्रतिभासं व्यावर्त्य स्वभावपदं गृह्णाति **स्वो भाव इति** । एवं विग्रहपरिग्रहे स्वभावोऽध्यात्ममुच्यते इत्यस्यायमर्थो निष्पन्नो भवतीत्यनुवादपूर्वकं कथयति **स्वभाव इति** । तस्यैव परस्येत्यादिनोक्तं न विस्मर्तव्यमिति विशिनष्टि **परमार्थेति** । परमेव हि ब्रह्म देहादौ प्रविश्य प्रत्यगात्मभावमनुभवति तत् सृष्ट्वा तदेवानुप्राविशदिति श्रुतेरित्यर्थः । किं कर्मेति प्रश्नस्योत्तरमुपादत्ते **भूतेति** । भूतान्येव भावास्तेषामुद्भवः समुत्पत्तिस्तां करोतीति व्युत्पत्तिं सिद्धवत् कृत्य विधान्तरेण व्युत्पादयति **भूतानामिति** । भावः सद्भावो वस्तुभा-

---

१ अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीसीति न्यायस्वरूपम् ।

वोऽतएव भूतवस्तूत्पत्तिकर इति वक्ष्यति वैदिकं कर्मात्रोक्तविशेषणं **कर्मशब्दितमिति** । विसर्गशब्दार्थं दर्शयन् विशदयति **विसर्ग इत्यादिना** । कथं पुनर्यथोक्तस्य यज्ञस्य सर्वेषु भूतेषु सृष्टिस्थितिप्रलयहेतुत्वेन तदुद्भवकरत्वमित्याशङ्क्य 'अग्नौ प्रास्ताहुतिः' इत्यादिस्मृतिमनुस्मृत्याह **एतस्माद्धीति** ॥३॥

**प० टी०** । **अक्षरमिति** । न क्षरतीत्यक्षरं परमं जगतो मूलकारणं यत्राकाशादिकमप्येतत्प्रोतम् । श्रुतिरपि शातपथी—"सहोवाचैतद्वैतदक्षरं गार्गि ब्राह्मणाभिवदन्त्यस्थूलमत एवाह्रस्वमदीर्घमलोहितमच्छायमतमोऽवाय्वनाकाशमसंगमस्पर्शमगन्धमरसमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमनामागोत्रमजरममरमभयममृतमरजोऽशब्दमविवृतम्" इत्यादि स्पष्टार्थम् । अध्यात्मस्वरूपमाह **स्वभाव इति** । स्वस्यैव ब्रह्मण एवांशतो जीवरूपेण भवनं स्वभावः स एवात्मानं देहमधिकृत्य भोक्तृत्वेन वर्तमानोऽध्यात्मशब्देनोच्यते । यद्वा इन्दति जानातीन्द्रोऽन्तरात्मा तमधिकृत्य वर्तत इतीन्द्रियमध्यात्ममित्यध्यात्मविदः । भूतानां जरायुजादीनां भावो वर्तमानत्वेन स्थितिरुद्भव उत्पत्तिस्तौ करोति यो विसर्गो देवतोद्देशेन द्रव्यत्यागरूपो यज्ञः कर्मशब्देनोच्यते ॥ ३ ॥

## अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ॥
## अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥

अधिभूतमिति । अधिभूतं प्राणिजातमधिभवतीति, कोऽसौ क्षरः क्षरतीति क्षरो विनाशी भावो यत्किंचिज्जनिमद्वस्त्वित्यर्थः । पुरुषः पूर्णमनेन सर्वमिति पुरि शयनाद्वा पुरुषः, आदित्यान्तर्गतो हिरण्यगर्भः सर्वप्राणिकरणानामनुग्राहकः सोऽधिदैवतमधियज्ञः सर्वयज्ञाभिमानिनी देवता विष्णवाख्या "यज्ञो वै विष्णुः" इति श्रुतेः, स हि विष्णुरहमेवात्रास्मिन् देहे यो यज्ञस्तस्याहमधियज्ञो यज्ञो हि देहनिर्वर्त्यत्वेन देहसमवायीति देहाधिकरणो भवति देहभृतां वर ॥४॥

**आ० टी०** । संप्रति प्रश्नत्रयस्योत्तरमाह **अधिभूतमिति** । अधिभूतं च किं प्रोक्तमित्यस्य प्रतिवचनम् **अधिभूतं क्षरो भाव इति** । तत्राधिभूतपदमनूद्य वाच्यमर्थं कथयति **अधिभूतमित्यादिना** । तस्य निर्देशमन्तरेण निर्ज्ञातुमशक्यत्वात् प्रश्नद्वारा तन्निर्दिशति **कोऽसाविति** । कार्यमात्रमत्र संगृहीतमिति वक्तुमुक्तमेव व्यनक्ति **यत् किंचिदिति** । अधिदैवं किमिति प्रश्ने पुरुषश्चेत्यादिप्रतिवचनं तत्र पुरुषशब्दमनूद्य मुख्यमर्थं तस्योपन्यस्यति **पुरुष इति** । तस्यैव संभावितमर्थान्तरमाह **पुरि शयनाद्वेति** । वैराजं देहमासाद्यादित्यमण्डलादिषु दैवतेषु योऽन्तरवस्थितो लिङ्गात्मा व्यष्टिकरणानुग्राहकोऽत्र पुरुषशब्दार्थः स चाधिदैवतमिति स्फुटयति **आदित्येति** । अधियज्ञः कथमित्यादिप्रश्नं परिहरन्नधियज्ञशब्दार्थमाह **अधियज्ञ इति** । कथमुक्तायां देवतायामधियज्ञशब्दः स्यादित्याशङ्क्य श्रुतिमनुसरन्नाह **यज्ञो वै इति** । परैव देवताऽधियज्ञशब्देनोच्यते सा च ब्रह्मणः सकाशादत्यन्ताभेदेन प्रतिपत्तव्येत्याह **स हि विष्णुरिति** । शास्त्रीयव्यवहारभूमिरत्रेत्युक्ता । देहसामानाधिकरण्याद्वात्रेत्यस्य व्याख्यानम् **अस्मिन्निति** । किमधियज्ञो बहिरन्तर्वा देहादिति संदेहो मा भूदित्याह **देह इति** । ननु यज्ञस्य देहाधिकरणत्वाभावात् कथं तथाविधयज्ञाभिमानिदेवतात्वं भगवता विवक्ष्यते तत्राह **यज्ञो हीति** । एतेन तस्य बुद्ध्यादिव्यतिरिक्तत्वमुक्तमवधेयं । न हि परा देवता दर्शितरीत्याधियज्ञशब्दिता बुद्ध्यादिष्वन्तर्भावमनुभावयितुमलं देहान् बिभ्रतीति देहभृतः सर्वे प्राणिनस्तेषामेष वरः श्रेष्ठो युक्तं हि भगवता साक्षादेव प्रतिक्षणं संवादं विदधानस्यार्जुनस्य सर्वेभ्यः श्रैष्ठ्यम् ॥ ४ ॥

प० टी० । अधिभूतमिति । क्षरो नश्वरो भावो देहादिपदार्थो भूतं प्राणिनमधिकृत्य वर्तते तदधिभूतम् द्रष्टव्यश्रोतव्यादि वा पुरुषो वैराजः सूर्यमण्डलवर्ती–" यद्देतन्मण्डलं तपति यश्चास्मिन् मण्डले पुरुषः" इति श्रुतेः । स्वस्वांशभूतसर्वदेवतानामधिपतिराधिदैवमुच्यते अत्रास्मिन् देहेऽन्तर्यामित्वेन स्थितोऽहमेवाधियज्ञः । यज्ञादिकर्मप्रवर्तकस्तत्फलदाता । ननु तर्ह्यध्यात्माधियज्ञयोः को भेद इति चेन्न । अन्तर्यामिणोऽसंगत्वादिगुणैर्जीववैलक्षण्यं तादात्म्येनेति श्रुतिनोदितम् । श्रुतिश्च–" द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" । अभिचाकशीति । रावणभाष्यम्–अत्र लौकिकपक्षिद्वयदृष्टान्तेन जीवपरमात्मानौ स्तूयेते । यथा लोके द्वौ सुपर्णौ सुपतनौ शोभनगमनौ सयुजा समानयोगौ सखाया समानख्यानौ समानं वृक्षमेकं देहाकारवृक्षं परिषस्वजाते आश्रयतः । तयोरन्य एकः पिप्पलं फलं स्वादुतरमत्ति । अपरोऽनश्नन्नभिचाकशीत्यभिपश्यति । तद्वद्द्वौ सुपर्णस्थानीयौ क्षेत्रज्ञपरमात्मानौ सयुजा समानयोगौ । योगो नाम संबन्धः स च तादात्म्यलक्षणः स एवात्मा जीवात्मनः स्वरूपम् एवमन्यस्यापीत्यैकात्म्ये। अतएव समानख्यानौ यस्य यादृशं ख्यानं स्फुरणं परमात्मनस्तदेवेतरस्याप्यत एव सखायौ एकरूपप्रकाशावित्यर्थः अथाधियज्ञस्वरूपमन्तकाले च स्वरूपप्राप्तिस्तदेतत्प्रश्नद्वयं बहुश्रुतिसंमतं पुनर्व्याख्यास्यति तत्र घोराङ्गिरसप्रतिपादितमधियज्ञमन्तकालप्राप्तिं चोपदिशन्नाह अधियज्ञोऽहमेवेति । भो देहभृतां वर अत्र देहेऽहमेवाधियज्ञो यज्ञं शारीरयागमधिकृत्य वर्ततेऽसावधियज्ञोऽन्तर्यागवतः पुरुषस्यान्तर्यामित्वेन वर्तमानस्तत्प्रवर्तकस्तत्फलसंपादकोऽप्यहमेवेत्यर्थः । उक्तं च टिप्पाणिकासु 'अध्यात्मादित्रयाभिज्ञो व्यवहारं करोति यः । शारीरं स च यज्ञोऽस्य तं यज्ञं पुरुषं विदुः ॥१॥ संस्कृतान्नस्य यान् ग्रासानेवंवित्पुरुषोऽश्नुते । ता एवाहुतयः प्रोक्ता जाठरे जातवेदसि॥ २ ॥ पिपासितोऽम्भः पिबति सोमपानमथास्य तत् । यज्ञस्योपसदश्चेष्टा मृतिश्चावभृथोऽस्य च' ॥३॥ इति । श्रुतिरपि छान्दोग्योपनिषत्सु "स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः । अथ यदश्नाति यत्पिबति यद्रमते यदुपसदैरेत्यथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतं शस्त्रैरेव तदेत्यथ यत्तपो दानमार्जवमहिंसासत्यवचनमिति ता अस्य दक्षिणास्तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवावभृथस्तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव सोऽन्तवेलायामेतत्रयं प्रतिपद्येताक्षितमेवास्य च्युतमसि प्राणशंसितमसि इति तत्र द्वे ऋचौ भवतः । आदित्प्रत्नस्य रेतस उद्वयं तमसस्परि । ज्योतिष्पश्यन्त उत्तरम्" इति । भाष्यम्–शारीरयज्ञसंपादी पुरुष आत्मानं यज्ञमनुमन्यते सोऽत्र तच्छब्देनोच्यते । स यदशिशिषति क्षुत्क्षामः सन्नशितुं भोक्तुमिच्छति तथा पिपासति तृषार्दितः सन् पातुमिच्छत्यत एव यन्न रमते क्षुत्पिपासाजनितदुःखमनुभवति ता अस्य यज्ञपुरुषस्य दीक्षा यतो दीक्षायामनशनादिना क्लेशानुभव एव यज्ञस्तु दीक्षोपसदस्तुतशस्त्रदक्षिणादिभिः संपद्यते । तत्र दीक्षा व्रतविशेषः । अथोपसद आह अथेति । स यज्ञपुरुषो यदश्नाति जेमति तथा यज्जलं पिबति तथा रमतेऽन्नपानादिना सुखमनुभवति तैरुपसदैरेति वर्तते यत उपसदस्तु यज्ञजनितसुखानुभवरूपाः । अथ स्तुतशस्त्रानाह यद्धसतीति यज्ञपुरुषो यद्धसति विनोदकथाभिरीषद्धास्यमुखोपक्रमं कुरुते, तथा जक्षति हसति तथा मैथुनमृतुकाले भार्यामनुगच्छति तानि स्तुतशस्त्राणि द्वादशस्तोत्राणि "द्वादशशस्त्राणि" इतिश्रुतेः। स्तुतं नामस्तोत्रमुद्गातुः स्तावकवाक्यसदर्भस्तथा होतृपठ्यमानऋक्संदर्भ उक्थापरपर्यायः शस्त्रशब्देनोच्यते ऋक्शाखीयब्राह्मणेऽपि । "अथानुस्तुतशस्त्रयोरवैकाहिकं प्रातः सवनम्" इत्यादि तैःस्तुतशस्त्रैरेति वर्तते । अथ दक्षिणामाह यत्तप इत्यादिना प्रसिद्धास्य दक्षिणा धर्मपुष्टिकरत्वात् । अथैतस्य यज्ञपुरुषस्य चरमदेहोत्पत्तिं श्रुत्यन्तरोक्तामाह तस्मादिति । यस्मादेवं यज्ञपुरुषस्वरूपं तस्मादन्यशाखोक्ताः श्रुतय आहुः सोष्यत्यसोष्टेति । तस्य पुरुषस्य तद्देहातिक्रमे तन्माता सोष्यति प्रसविष्यति तथासोष्ट प्रासूतेत्युपक्रममात्रं दर्शितम्, तदत्र प्रागेवोक्तम्–" तस्य

वैतस्य हृदयस्य पञ्च देवताः सुल्लयस्तथा पञ्च ब्रह्मपुरुषान्यो वेद तस्य कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकम्" इति । अत्र वीरशब्देन षड्रिपुजयशीलः प्रोच्यते । तथा बृहदारण्यकेऽपि—"तस्मात्पुत्रमनुशिष्टं लोक्यमाहुस्त्वं ब्रह्म त्वं यज्ञस्त्वं लोक" इति । पित्रा पृष्टः सन् स पुत्रः प्रत्याह 'ब्रह्माहं यज्ञोऽहं लोक' इति । इयमेव चरमदेहोत्पन्नस्य यज्ञपुरुषस्य परीक्षा । अनेन प्रकारेण पुनरुत्पादनं जन्मास्य तद्देहपरित्याग एवावभृथो यज्ञान्तस्नानम् । अथोपसंहरन्नाह तद्धैतद्धोति । एतन्निरूपितप्रमेयं घोरनामपूर्वक आंगिरस आचार्यो भगवते कृष्णाय देवकीपुत्रायोक्त्वा पुनरुवाच । तत्किम्, स यज्ञपुरुषोऽपिपास एव बभूव पिपासा रसादिसकलविपयेच्छा तद्रहितो बभूव भवति । अनन्तरं सोऽन्तवेलायां प्राणलयसमये भगवदुपादिष्टं यजुर्मन्त्रत्रयं प्रतिपद्यते प्राप्नोति । तत्किम्, अक्षितमसीति प्रथमः । अच्युतमसीति द्वितीयः । प्राणशंसितमसीति तृतीयः । भाष्यम्-निर्याणकाले यज्ञपुरुषः स्वात्मानं वदति । भो जीव त्वमक्षितमपरिच्छिन्नमखण्डैकरसमसि, तथाच्युतमप्रच्युतस्वभावमसि, तथा प्राणः श्वासवायुस्तेन शंसितं तनूकृतमसि लुप्तप्राणापानादिरसि । एवंविधस्तत्त्वमसीति महावाक्यसंदर्भः । अत्रास्मिन्नर्थे द्वे ऋचौ भवतस्ते यथा । आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् । परो यदिध्यते दिवा ॥ १ ॥ उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रासूर्यमगन्म ज्योतिरुत्तमम् ॥२॥ भाष्यम्—आदिति समन्तात् । इदेवकारार्थे प्रत्नस्य पुराणस्य चिरंतनस्य रेतसो बीजभूतस्य जगत्कारणस्य ब्रह्मणो ज्योतिः प्रकाशं वासरमहरहः पश्यन्ति पर इति लिङ्गविपर्यासः । ब्रह्मणो ज्योतिर्निवृत्तचक्षुषो ब्रह्मविदो ब्रह्मचर्यादिनिवृत्तिसाधनानिरुद्धान्तःकरणा आ समन्ततो ज्योतिः पश्यन्तीत्यर्थः । तत्किम् ज्योतिर्दिवि मूर्ध्नि स्वर्गे वा यदिध्यते दीप्यते । येन ज्योतिषाढ्यः सविता तपति चन्द्रमा भाति विद्युद्विद्योतते तारागणा भान्ति तदित्यर्थः । उद्वयमिति । उदूर्ध्वं ज्योतिः स्वप्रकाशं तेजो वयं पश्यन्तः सन्तोऽप्यगन्म प्राप्तवन्तः । किंभूतं तेजः, तमसः परि तमसोऽज्ञानात् परि परित उत्कृष्टम् । देवं द्योतमानं देवत्र देवेषु मध्य आसूर्यं सूर्यं मर्यादीकृत्य द्योतमानम् । उत्तमं निरतिशयम् । तदुक्तं नारायणोपनिषत्सु—"तस्यैवंविदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मनः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीयावद्ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसद" इत्यलमति विस्तरेण ॥ ४ ॥

**अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम् ॥**
**यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥**

अन्तकाल इति । अन्तकाले च मरणकाले मामेव परमेश्वरं विष्णुं स्मरन् मुक्त्वा परित्यज्य कलेवरं शरीरं यः प्रयाति गच्छति स मद्भावं वैष्णवं तत्त्वं याति नास्ति न विद्यतेऽत्रास्मिन्नर्थे संशयो याति वा न वेति ॥ ५ ॥

आ० टी० । यत्तु प्रयाणकाले चेत्यादि चोदितं तत्राह अन्तकाले चेति । मामेवेत्यवधारणेनाध्यात्मादिविशिष्टत्वेन स्मरणं व्यावर्त्यते विशिष्टस्मरणे हि चित्तविक्षेपान्न प्रधानस्मरणमपि स्यान्न च मरणकाले कार्यकरणपारवश्याद्भगवदनुस्मरणासिद्धिः सर्वदैव नैरन्तर्येणादरधिया भगवति समर्पितचेतसस्तत्कालेऽपि कार्यकरणजातमगणयतो भगवदनुसंधानसिद्धेः शरीरे तस्मिन्नहंममाभि-

मानाभावादिति यावत् । प्रयातीत्यत्र प्रकृतशरीरमपादानम् । "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुतिमाश्रित्याह **नास्तीति** । व्यासेध्यं संशयमेवाभिनयति **याति वेति** ॥ ५ ॥

प० टी० । **अन्तकाल** इत्यनेनान्तकाले ज्ञानोपायं दर्शयति । मामेवोक्तलक्षणमन्तर्यामिरूपं परमेश्वरं स्मरन्देहं त्यक्त्वा प्रकर्षेणार्चिर्मार्गेण याति स मद्भावं मद्रूपतां प्राप्नोत्यत्र संशयो नास्ति न केवलं मां स्मरन् मद्भावं प्राप्नोतीति नियमः ॥ ५ ॥

**यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ॥**
**तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥**

न मद्विषय एवायं नियमः किं तर्हि यं यमिति । यं यं वापि यं यं भावं देवताविशेषं स्मरंश्चिन्तयंस्त्यजति परित्यजत्यन्ते प्राणवियोगकाले कलेवरं तं तमेव स्मृतं भावमेवैति नान्यं कौन्तेय सदा सर्वदा तद्भावभावितस्तस्मिन् भावस्तद्भावः स भावितः स्मर्यमाणतयाभ्यस्तो येन स तद्भावभावितः सन् ॥ ६ ॥

आ० टी० । अन्तकाले भगवन्तमनुध्यायतो भगवत्प्राप्तिनियमवदन्यमपि तत्काले देवादिविशेषं ध्यायतो देहं त्यजतस्तत्प्राप्तिरवश्यंभाविनीति दर्शयति **नेत्यादिना** । कथं पुनरन्तकाले परवशस्य नियतविषयस्मृतिर्भवितुमुत्सहते तत्राह **सदेति** । देवादिविशेषपरतस्मिन्निति सप्तम्यर्थः, भावो भावना वासना स भावो भावितः संपादितो येन पुंसा स तथाविधः सन् यं यं भावं स्मरति तं तमेव देहत्यागादूर्ध्वं गच्छतीति संबन्धः ॥ ६ ॥

प० टी० । किं तर्हीत्याह **यं यमिति** । यं यं भावं देवतान्तरं वाप्यन्यमन्तकाले स्मरन् देहं त्यजति तं तमेव च स्मर्यमाणं भावं प्राप्नोति यथा जाग्रति स्मरणारूढं पदार्थं निद्रायामनुभवति । किंभूतः, सदा निरन्तरं तद्भावेन स्मरणारूढपदार्थेन भावितो वासितचित्तः ॥ ६ ॥

**तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च ॥**
**मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ७ ॥**

तस्मादिति । यस्मादेवमन्त्या भावना देहान्तरप्राप्तौ कारणं तस्मात् सर्वेषु कालेषु मामनुस्मर यथाशास्त्रं युध्य च युध्यस्व स्वधर्मं कुरु मयि वासुदेवेऽर्पिते मनोबुद्धी यस्य तव स त्वं मय्यर्पितमनोबुद्धिः सन् मामेव यथास्मृतमेष्यस्यागमिष्यस्यसंशयो न संशयोऽत्र विद्यते ॥ ७ ॥

आ० टी० । सततं भावना प्रतिनियतफलप्राप्तिनिमित्तान्त्यप्रत्ययहेतुरित्यङ्गीकृत्यानन्तरश्लोकमवतारयति **यस्मादिति** । विशेषणत्रयवतो भगवदनुस्मरणस्य भगवत्प्राप्तिहेतुत्वं भाति तस्मादित्युच्यते सर्वेषु कालेष्वादरनैरन्तर्याभ्यां सहेति यावत्, भगवदनुस्मरणे विशेषणत्रयसाहित्यं यथाशास्त्रमिति द्योत्यते । भगवदनुसंधानं कर्तव्यमुक्त्वा तेन सह स्वधर्ममपि कुरु युद्धमित्युपदिशता भ-

१ प्रतिषेध्यमित्यर्थः ।

गवता समुच्चयो ज्ञानकर्मणोरङ्गीकृतो भातीत्याशङ्क्याह **मयीति** । मनोबुद्धिगोचरं क्रियाकारकफलजातं सकलमपि ब्रह्मैवेति भावयन् युद्ध्यस्वेति ब्रुवता क्रियादिकलापस्य ब्रह्मातिरिक्तस्याभावाभिलापान्नात्र समुच्चयो विवक्षित इत्यर्थः । उक्तरीत्या स्वधर्ममनुवर्तमानस्य प्रयोजनमाह **मामेवेति** । उक्तसाधनवशात् फलप्राप्तौ प्रतिबन्धाभावं सूचयति **असंशय इति** ॥ ७ ॥

**प० टी०** । ननु तदा विवशस्य कथं स्मरणोद्यमः संभवतीत्याह **तस्मादिति** । यस्मादेवं तस्मात्कारणात् सर्वेषु कालेषु सुखदुःखभोगसमयेषु मामनुस्मरानुवेलं स्मरणारूढं कुरु । तेन निरन्तरानुध्यानसंस्कारेणान्तकालेऽपि स्वत एव स्मरणं भविष्यति न हि चित्तशुद्धिमन्तरेण स्मरणं भवत्यतो युध्यस्व संग्रामरूपं स्वधर्माचरणं कुरु । एवमवसाने मय्यर्पितमनोबुद्धिः सन्नसंशयं निश्चितं मामेवैष्यसि । देहान्तकाले मदाकार एव संकल्पो निश्चयो मय्येव । एवं कृते सति भक्तपक्षपातिनं मामेवैष्यसि । अत्र मामेवेत्येवकारादन्ययोगव्यवच्छेदः । तस्मादहमेवान्तर्यामित्वेन स्वस्मरणे प्रवर्तये । किं तु देहावसानदुःखं विस्मार्य स्वाभिमुखमाकर्षयामीत्यर्थः । तदुक्तम्—'स्पर्शाश्माप्यश्मसारं नयति कनकतां चान्तिकं चुम्बकाश्मा सूतेऽग्निं सूर्यकान्तो द्रवति तदपरश्चन्द्रसूर्याभिमुख्यात् । हन्त्यन्नं सन्निधानाद्विषमतिगहनो ह्यस्ति वस्तुप्रभावो जीवानां मुक्तिरेवं भवति भगवतः किं पुनर्भावनातः' इति। अधियज्ञस्वरूपं पूर्वलिखितमस्ति ॥ ७ ॥

**अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ॥**
**परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥**

किं च अभ्यासेति । अभ्यासयोगयुक्तेन मयि चित्तसमर्पणविषयभूते एकस्मिन् तुल्यप्रत्ययावृत्तिलक्षणो विलक्षणप्रत्ययान्तरितोऽभ्यासः स चासौ योगस्तेन युक्तं तत्रैव व्यापृतं प्रवृत्तं योगिनश्चेतस्तेन चेतसा नान्यगामिना नान्यत्र विषयान्तरे गन्तुं शीलमस्येति नान्यगामि तेन नान्यगामिना परमं निरतिशयं पुरुषं दिव्यं दिवि सूर्यमण्डले भवं दिव्यं याति गच्छति हे पार्थ अनुचिन्तयन् शास्त्राचार्योपदेशमनुध्यायन्नित्येतत् ॥ ८ ॥

**आ० टी०** । इतश्च पूर्वश्लोकोक्तार्थानुष्ठायी भगवन्तमन्तकाले प्राप्नोतीत्याह **किंचेति** । अभ्यासं विभजते **मयीति** । न हि चित्तसमर्पणस्य विषयभूतं भगवतोऽर्थान्तरं वस्तु सदस्तीति मन्वानो विशिनष्टि **चित्तेति** । अन्तरालकालेऽपि विजातीयप्रत्ययेषु विच्छिद्य विच्छिद्य जायमानेष्वपि सजातीयप्रत्ययावृत्तिरयोगिनोऽपि स्यादित्याशङ्क्याह **विलक्षणेति** । अभ्यासाख्येन योगेन युक्तत्वं चेतसो विवृणोति **तत्रैवेति** । तृतीयया परामृष्टोऽभ्यासयोगः सप्तम्यापि परामृश्यते । ननु प्राकृतानां चेतस्तथेत्याशङ्क्य विशिनष्टि **योगिन इति** । तच्चेचेतो विषयान्तरं परामृशेन्न तर्हि परमपुरुषार्थप्राप्तिहेतुः स्यादित्याशङ्क्याह **नान्यगामिनेति** । प्रामादिकं विषयान्तरपारवश्यमभ्यनुज्ञातुं ताच्छील्यप्रत्ययात्तेन तात्पर्यादपरामृष्टार्थान्तरेण परमपुरुषनिष्ठेनेत्यर्थः । तदेव पुरुषस्य निरतिशयत्वं यदपरामृष्टाखिलानर्थत्वमनतिशयानन्दत्वं तच्च प्रागेव व्याख्यातं नेह व्याख्यानमपेक्षते । "यश्चासावादित्ये" इत्यादिश्रुतिमनुसृत्याह **दिवीति** । तत्र विशेषतोऽभिव्यक्तिरेव भवनं, पूर्वोक्तेन चेतसा यथोक्तं पुरुषमनुचिन्तयन् याति तमेवेति संबन्धः । अनुचिन्तयन्नित्यत्रानुशब्दार्थं व्याचष्टे **शास्त्रेति** । चिन्तयन्निति व्याकरोति **ध्यायन्निति** ॥ ८ ॥

प० टी० । संततस्मरणस्याभ्यासोऽन्तरङ्गं कारणमित्याह **अभ्यासेति** । अभ्यासो नाम स्त्रीपुत्रवित्तादिभ्यो मनसः प्रत्याहाररूपः । योगो नाम मयि योजनम् । तेन युक्तं समाहितं तेन तथाभूतेन चेतसात एव नान्यगामिना पदार्थान्तरपराङ्मुखेन दिव्यं द्योतनात्मकं परमेश्वरमनुचिन्तयन् परमं पुरुषं परमात्मानं याति प्राप्नोति ॥ ८ ॥

## कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद् यः ॥
## सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥९॥

किंविशिष्टं च पुरुषं यातीत्युच्यते कविमिति । कविं क्रान्तदर्शिनं सर्वज्ञं पुराणं चिरंतनमनुशासितारं सर्वस्य जगतः प्रशासितारमणोः सूक्ष्मादप्यणीयांसं सूक्ष्मतरमनुस्मरेदनुचिन्तयेद् यः कश्चित् सर्वस्य कर्मफलजातस्य धातारं विचित्रतया प्राणिभ्यो विभक्तारं विभज्य दातारमचिन्त्यरूपं नास्य रूपं नियतं विद्यमानमपि केन चित् चिन्तयितुं शक्यते इत्यचिन्त्यरूपस्तमादित्यवर्णमादित्यस्येव नित्यचैतन्यप्रकाशो वर्णो यस्य तमादित्यवर्णं तमसः परस्तादज्ञानलक्षणान्मोहान्धकारात् परं तमनुचिन्तयन् यातीति पूर्वेणैव संबन्धः ॥ ९ ॥

आ० टी० । किंविशिष्टं पुरुषमनुचिन्तयन्निति संबन्धः, चकारात् कया वा नाड्योत्क्रामन्नित्यनुकृष्यते, तत्र ध्यानद्वारा प्राप्यस्य पुरुषस्य विशेषणानि दर्शयति उच्यत इति । क्रान्तदर्शित्वमतीतादिरशेषस्य वस्तुनो दर्शनशालित्वम् । तेन निष्पन्नमर्थमाह **सर्वज्ञमिति** । चिरंतनमादिमतः सर्वस्य कारणत्वादनादिमित्यर्थः सूक्ष्ममाकाशादितः सूक्ष्मतमं तदुपादानत्वादित्यर्थः । यो यथोक्तमनुचिन्तयेत् स तमेवानुचिन्तयन् यातीति पूर्वेणैव संबन्ध इति योजना । ननु विशिष्टजात्यादिमतो यथोक्तमनुचिन्तनं फलवद्भवति न त्वस्मदादीनामित्याशङ्क्याह **यः कश्चिदिति** । फलमत उपपत्ते[1]रिति न्यायेनाह **सर्वस्येति** । एतदप्रमेयं ध्रुवमिति श्रुतिमाश्रित्याह **अचिन्त्यरूपमिति** । न हि परस्य किं चिदपि रूपादि वस्तुतोऽस्ति अरूपवदेव हीति न्यायात् कल्पितमपि नास्मदादिभिः शक्यते चिन्तयितुमित्याह **नास्येति** । मूलकारणादज्ञानात्तत्कार्याच्च पुरस्तादुपरिष्टाद्व्यवस्थितं परमार्थतो ज्ञानतत्कार्यास्पृष्टमित्याह **तमसइति** ॥ ९ ॥

प० टी० । अथ चिन्तनीयं पुरुषं विशिनष्टि **कविमिति** द्वाभ्याम् । कविं सर्वज्ञं पुराणमनादिसिद्धमनुशासितारं नियन्तारमणोः सूक्ष्मादप्यणीयांसम् । सर्वस्य स्थूलसूक्ष्मप्रपञ्चस्य धातारमाश्रयभूतम् । सूक्ष्मत्वादेवाचिन्त्यरूपं तमसः प्रकृतेः परस्ताद्वर्तमानम् । आदित्यवत् स्वपरप्रकाशरूपो वर्णः स्वरूपं यस्यैवंभूतं पुरुषम् ॥ ९ ॥

## प्रयाणकाले मनसाचलेन भक्त्या युक्तो योगबलेन चैव ॥
## भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ॥१०॥

किंच प्रयाणकाल इति । प्रयाणकाले मरणकाले मनसाचलेन

1 फलमत उपपत्तेः । अ. ३। पा. २। सू. ३८। शाङ्करब्रह्मसूत्रभाष्ये द्रष्टव्यम् ।

प्रचलनवर्जितेन भक्त्या युक्तो भजनं भक्तिस्तया युक्तो योगबलेन चैव योगस्य बलं योगबलं तेन समाधिजसंस्कारप्रचयजनितं स्वचित्तस्थैर्यलक्षणं योगबलं तेन च युक्त इत्यर्थः । पूर्वं हृदयपुण्डरीके वशीकृत्य चित्तं तत ऊर्ध्वगामिन्या नाड्या भूमिजयक्रमेण भ्रुवोर्मध्ये प्राणमावेश्य स्थापयित्वा सम्यगप्रमत्तः सन् स एवंबुद्धिमान् योगी कविं पुराणमित्यादिलक्षणं तं परं पुरुषमुपैति प्रपद्यते दिव्यं द्योतनात्मकम् ॥ १० ॥

आ० टी० । इतश्च भगवदनुस्मरणं सफलत्वादनुष्ठेयमित्याह किं चेति । कदा तदनुस्मरणे प्रयत्नातिरेकोऽभ्यर्थ्यते तत्राह **प्रयाणकाल** इति । कथं तदनुस्मरणमित्युपकरणकलापप्रेक्ष्यमाणं प्रत्याह **मनसेति** । योऽनुस्मरेत् स किमुपैति तत्राह **स तमिति** । मरणकाले क्लेशबाहुल्येऽपि प्राचीनाभ्यासप्रसादासादितबुद्धिवैभवो भगवन्तमनुस्मरन् यथास्मृतमेव देहाभिमानविगमानन्तरमुपागच्छतीत्यर्थः । भगवदनुस्मरणस्य साधनं मनसैवानुद्रष्टव्यमिति श्रुत्युपदिष्टमाचष्टे **मनसेति** । तस्य चञ्चलत्वान्न स्थैर्यमीश्वरे सिध्यति तत् कथं तेन तदनुस्मरणमित्याशङ्क्याह **अचलेनेति** । ईश्वरानुस्मरणे प्रयत्नेन प्रवर्तितं विषयविमुखं तस्मिन्नेवानुस्मरणयोग्यपौनःपुन्येन प्रवृत्त्या निश्चलीकृतं ततश्चलनविकलं तेनेति व्याचष्टे **प्रचलनेति** । संप्रत्यनुस्मरणाधिकारिणं विशिनष्टि **भक्त्येति** । परमेश्वरे परेण प्रेम्णा सहितो विषयान्तरविमुखोऽनुस्मर्तव्य इत्यर्थः । योगबलमेव स्फोरयति **समाधिजेति** । योगः समाधिश्चित्तस्य विषयान्तरवृत्तिनिरोधेन परस्मिन्नेव स्थापनं तस्य बलं संस्कारप्रचयो ध्येयैकाग्र्यकरणं तेन तत्रैव स्थैर्यमित्यर्थः । चकारसूचितमन्वयमन्वाचष्टे **तेन चेति** । यत्तु कया नाड्योत्क्रमणं यातीति तत्राह **पूर्वमिति** । चित्तं हि स्वभावतो विषयेषु व्यापृतं तेभ्यो विमुखीकृत्य हृदये पुण्डरीकाकारे परमात्मस्थाने यत्नतः स्थापनीयम् । “अथ यदिदमस्मिन् ब्रह्मपुरे” इत्यादिश्रुतेस्तत्र चित्तं वशीकृत्यादावनन्तरं कर्तव्यमुपदिशति **तत इति** । इडापिङ्गले दक्षिणोत्तरे नाड्यौ हृदयान्निःसृते निरुध्य तस्मादेव हृदयाग्रादूर्ध्वगमनशीलया सुषुम्नया नाड्या हार्दं प्राणमानीय कण्ठावलम्बितं स्तनसदृशं मांसखण्डं प्रापय्य तेनाध्वना भ्रुवोर्मध्ये तमावेश्याप्रमादवान् ब्रह्मरन्ध्राद्विनिष्क्रम्य कविं पुराणमित्यादिविशेषणं परमपुरुषमुपगच्छतीत्यर्थः । भूमिजयक्रमेणेत्यत्र भूम्यादीनां पञ्चानां भूतानां जयो वशीकरणं तस्य तस्य भूतस्य स्वाधीनचेष्टावैशिष्ट्यं तद्द्वारेणेत्येतदुच्यते । स तमित्यादि व्याचष्टे **स एवमिति** ॥ १० ॥

प० टी० । प्रयाणकालेऽन्तकाले भक्त्या युक्तः संस्तन्निर्वाहितयोगबलेनाचलेन मनसा सम्यक् सुषुम्नाविवरेण भ्रुवोर्मध्ये प्राणमावेश्यानुस्मरेत् स तं पुरुषं दिव्यमुपैति ॥ १० ॥

**यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ॥**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये॥११॥**

योगमार्गानुगमनेनैव ब्रह्मविद्यामन्तरेणापि ब्रह्माप्यत इत्येवं प्राप्त इदमुच्यते । पुनरपि वक्ष्यमाणेनोपायेन प्रतिपित्सितस्य ब्रह्मणो वेदविद्वदनादिविशेषणविशेष्यस्याभिधानं करोति भगवान् यदक्षरमिति । यदक्षरं न क्षरतीत्यक्षरमविनाशि वेदविदो वेदार्थज्ञा वदन्ति “यद्वैतदक्षरं गार्गि ब्राह्मणा अभि-

वदन्ति " इति श्रुतेः।सर्वविशेषानिवर्तकत्वेनाभिवदन्त्यस्थूलमनण्वित्यादि। किं च विशन्ति प्रविशन्ति सम्यग्दर्शनप्राप्तौ सत्यां यतयो यतनशीलाः संन्यासिनो वीतरागा विगतो रागो येभ्यस्ते वीतरागा यच्चाक्षरमिच्छन्तो ज्ञातुमिति वाक्यशेषः । ब्रह्मचर्यं गुरौ चरन्तीति तत्ते पदं यदक्षराख्यं ब्रह्माख्यं पदं पदनीयं ते तुभ्यं संग्रहेण संग्रहः संक्षेपस्तेन संक्षेपेण प्रवक्ष्ये कथयिष्यामि " स यो ह तद्भगवन् मनुष्येषु प्रयणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति तस्मै सहोवाच एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कार " इत्युपक्रम्य " यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत " इत्यादिना वचनेन " अन्यत्र धर्मादन्यत्राधर्माद् " इति चोपक्रम्य " सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतदक्षरम् " इत्यादिभिश्च वचनैः परस्य ब्रह्मणो वाचकरूपेण प्रतिमावत् प्रतीकरूपेण च परब्रह्मप्रतिपत्तिसाधनत्वेन मन्दमध्यमबुद्धीनां विवक्षितस्योङ्कारस्योपासनं कालान्तरे मुक्तिफलमुक्तं यत्तदेवेहापि वक्तव्यं " कविं पुराणमनुशासितारं" "यदक्षरं वेदविदो वदन्ति " इति चोपन्यस्तस्य च परस्य ब्रह्मणः पूर्वोक्तरूपेण प्रतिपत्त्युपायभूतस्योङ्कारस्य कालान्तरमुक्तिफलमुपासनं योगधारणासहितं वक्तव्यम् ॥ ११ ॥

आ० टी० । येन केनचिन्मन्त्रादिना ध्यानकाले भगवदनुस्मरणे प्राप्ते सत्यभिधानत्वे नियन्तुं स्मर्तव्यत्वेन प्रकृतपरमपुरुषस्य त्रैविद्यवृद्धप्रसिद्ध्या प्रामाणिकत्वमाह **पुनरपीति** । उपायो वक्ष्यमाण ओङ्कारः । अविषये प्रतीचि ब्रह्मणि वेदार्थविदामपि कथं वचनमित्याशङ्क्याविषयत्वमित्येतावतैवेति मत्वा श्रुतिमुदाहरति **तद्धेति** । तथापि तस्मिन्नविषये सर्वविशेषशून्ये वचनमनुचितमित्याशङ्क्याह **सर्वेति** । न केवलं विद्वदनुभवसिद्धं यथोक्तं ब्रह्म किं तु मुक्तोपसृप्यतया मुक्तानामपि प्रसिद्धमित्याह किंचेति । केषां पुनः संन्यासित्वं तदाह **वीतरागा इति** । ज्ञानार्थं ब्रह्मचर्यविधानादपि **ब्रह्म** ज्ञेयत्वेन प्रसिद्धमित्याह **यच्चेति** । कथं तर्हि यथोक्तं ब्रह्म मम ज्ञातुं शक्यमित्याकुलितचेतसमर्जुनं प्रत्याह **तत्ते पदमिति** । वक्ष्यमाणेनोपायेनेत्युक्तं व्यक्तीकुर्वन्नोङ्कारद्वारा ब्रह्मोपासनं श्रुत्युक्तमनुक्रामति **स यो हेति** । सत्यकामेनाभिध्यानफलं जिज्ञासुना भगवन्निति पिप्पलादः संबोध्याभिमुखीक्रियते, निपातौ तु प्रसिद्धमर्थमवद्योतयन्तावभिध्यानस्य फलत्वेन कर्तव्यत्वमावेदयतः । मनुष्येषु मध्ये स योऽधिकृतो मनुष्यस्तत्प्रसिद्धमभिध्यानं यथा सिध्यति तथा सर्ववेदसारभूतमोङ्कारमाभिमुख्येन ध्यायीत तच्चाभिध्यानमाप्रयाणादिति[२] न्यायेन मरणान्तमनुष्ठेयं स चैवमनुतिष्ठन् प्रकृतेनाभिध्यानेन लोकानां जेतव्यानां बहुत्वात् कतमं लोकं जयतीति प्रश्ने पृष्टवते सत्यकामाय पिप्पलादनामा किलाचार्यः प्रतिवचनं प्रोवाच । तत्र प्रथममभिध्येयमोङ्कारं परापरब्रह्मत्वेन महीकरोति **एतद्वा इति** । त्रिमात्रेणाकारोकारमकारात्मकेनेति यावत् । योऽभिध्यायीत तमेव यथाभिध्यातं पुरु-

१ प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेदित्यादिना—अधिकं मु० पु० ।
२ आप्रयाणात्तत्रापि हि दृष्टम्—अ. ४। शाङ्करब्रह्म० द्रष्टव्यम् ।

षमधिगच्छतीत्यादिवचनेनोपासनमोङ्कारस्योक्तमित्यर्थः । प्रश्नश्रुतिवत् कठवल्ली च तत्रैवार्थे प्रवृत्तेत्याह अन्यत्रेति । अव्यवधानेनोपनिषदां व्यवधानेन च कर्मश्रुतीनां परस्मिन्नात्मनि पर्यवसानं दर्शयति सर्व इति । तपसामपि सर्वेषां चित्तशुद्धिद्वारा तत्रैव पर्यवसानमित्याह तपांसीति । तस्यैव च ज्ञानार्थमष्टाङ्गं ब्रह्मचर्यं तत्र तत्र विहितमित्याह यदिच्छन्त इति । तस्य पदनीयस्य ब्रह्मणः संक्षेपेण कथनमोङ्कारद्वारकमिति कथयति ओमित्येतदिति । ओमित्येतदित्युदाहृतवचनानां तात्पर्यं दर्शयति परस्येति । तस्य वाचकरूपेण वा तस्यैव प्रतीकरूपेण वा विवक्षितस्योपासनं यथोक्तैर्वचनैरुक्तमिति संबन्धः । ननु परस्मिन् ब्रह्मणि तत्त्वमस्यादिवाक्यादेव प्रतिपत्तिरधिकारिणो भविष्यति किमित्युपासनमोङ्कारस्योपन्यस्यते तत्राह परेति । यद्यपि विशिष्टस्याधिकारिणो विनैवोपासनमुपनिषद्भ्यो ब्रह्मणि प्रतिपत्तिरुत्पद्यते तथापि मन्दानां मध्यमानां च तद्धेतुत्वेनोङ्कारो विवक्षितस्तस्योपासनं ब्रह्मदृष्ट्या श्रुतिभिरुपदिष्टमित्यर्थः । तस्य क्रममुक्तिफलत्वादनुष्ठेयत्वं सूचयति कालान्तरेति । भवत्येवं श्रुतीनां प्रवृत्तिस्तावता प्रकृते किमायातमित्याशङ्क्याह उक्तं यदिति । तदेवेहापि वक्तव्यमित्युत्तरेण संबन्धः । उपासनमेवोपास्योपन्यासद्वारा स्फोरयति कविमित्यादिना । पूर्वोक्तरूपेणेत्यभिधानत्वेन प्रतीकत्वेन चेत्यर्थः । श्रौतस्योपासनस्यानूद्यमानस्य सोपस्करत्वं संगिरते योगेति ॥ ११ ॥

प० टी० । अथाभ्यासेन प्राप्तव्यं स्थानं वक्तुं प्रतिजानीते यदक्षरमिति । वेदविदो वेदार्थज्ञा याज्ञवल्क्यादयो यदक्षरमिति वदन्ति न क्षरतीत्यक्षरमस्थूलमनण्वह्रस्वमित्यादिश्रुत्या प्राङ्निरूपितम् । तथा यद्वीतरागा विरागवन्तो यतयः प्रयत्नशीला विशन्त्यात्माकारतया तिष्ठन्ति तथा यदिच्छन्तो ज्ञातुमिच्छन्तो गुरूपदिष्टं ब्रह्मचर्यं चरन्ति तत्ते तुभ्यं पदं पद्यते गम्यतेऽनेनेति पदं संग्रहेण संक्षेपेण प्रवक्ष्ये ॥ ११ ॥

**सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ॥**
**मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥**

प्रसक्तानुप्रसक्तं च यत्किंचिदित्येवमर्थ उत्तरो ग्रन्थ आरभ्यते सर्वेति । सर्वद्वाराणि सर्वाणि च तानि द्वाराणि च सर्वद्वाराण्युपलब्धौ तानि सर्वाणि संयम्य संयमनं कृत्वा मनो हृदि हृदयपुण्डरीके निरुध्य निरोधं कृत्वा निष्प्रचारतामापाद्य तत्र वशीकृतेन मनसा हृदयादूर्ध्वगामिन्या नाड्योर्ध्वमारुह्य मूर्धन्याधायात्मनः प्राणमास्थितः प्रवृत्तो योगधारणां धारयितुम् ॥ १२ ॥

आ० टी० । तर्हि कथम् 'अनन्यचेताः सततम्' इत्यादि वक्ष्यते तत्राह प्रसक्तेति । ओङ्कारोपासनं प्रसक्तं तदनन्तरं तत्फलमनुप्रसक्तं तद्द्वारा चापुनरावृत्त्यादि वक्तव्यकोटिनिविष्टमित्यर्थः । उक्तेऽर्थे समनन्तरग्रन्थमुत्थापयति इत्येवमर्थ इति । श्रोत्रादीनां कुत्र द्वारत्वं तत्राह उपलब्धाविति । तेषां संयमनं विषयेषु प्रवृत्तानां दोषदर्शनद्वारा तेभ्यो वैमुख्यापादनम् । कोऽयं मनसो हृदये निरोधस्तत्राह निःप्रचारमिति । मनसो विषयाकारवृत्तिं निरुध्य हृदि वशीकृतस्य कार्यं दर्शयति तत्रेति । ऊर्ध्वमित्यत्रापि हृदयादिति संबध्यते सर्वाण्युपलब्धिद्वाराणि श्रोत्रादीनि संनिरुध्य वायुमपि सर्वेभ्यो निगृह्य हृदयमानीय ततो निर्गतया सुषुम्नया कण्ठभ्रूमध्यललाटक्रमेण प्राणं मूर्धन्याधाय योगधारणामारूढो ब्रह्म व्याहरन् मां च तदर्थमनुस्मरन् परमां गतिं यातीति संबन्धः ॥ १२ ॥

प० टी० । अथ प्रतिज्ञातमर्थं साङ्गमाह सर्वद्वाराणीति द्वाभ्याम् । सर्वद्वाराणीन्द्रियद्वाराणि संयम्य विषयेभ्यः प्रत्याहृत्य न केवलं नेत्रमीलनमात्रेण किं तु मनो हृदि निरुध्य बाह्यविषयानस्मरन्नित्यर्थः मूर्ध्नि भ्रूमध्ये स्वस्य प्राणानाधायारोप्य योगधारणां स्थैर्यमास्थित आश्रितः । श्रुतिरपि ऋक्शाखायाम्—"युवा सुवासाः परिवीत आगात्स उ श्रेयान् भवति जायमानः । तं धीरासः कवय उन्नयन्ति स्वाध्यो३मनसा देवयन्तः" इति । भाष्यम्—बाल्यवार्धकाद्यैर्देहविकारैर्विरहितो युवा मुख्यप्राणो सुष्ठु वासः प्रावरणं यस्य सत्त्वाकारान्तःकरणवृत्तिप्रतिबिम्बितः परिवीतः शरीरावृतः सन्नगाज्जीवदशां प्राप्त उइति निश्चयेन स जायमानः प्रादुर्भूतः सन् श्रेयान् सत्कर्मनिरतो भवति । स स्वाध्यः सुखेनाराध्यस्तमेवंविधं धीरासो दृढव्रताः कवयः क्रान्तदर्शिनो ज्ञानिनो देवयन्तो देवत्वं प्राप्तुमिच्छन्तो मनसा सह उन्नयन्ति । सुषुम्नाविवरेणोर्ध्वं नयन्ति । अत्रार्थे ब्राह्मणमपि—"युवा सुवासाः परिवीतआगादित्युत्तमया परिदधाति प्राणो वै युवा सुवासाः सोऽयं शरीरैः परिवृत" इत्यादि । अथर्ववेदेऽप्याम्नातम्—"शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वगेता उत्क्रमणे भवन्ति" इति । भाष्यम्—शरीरान्तर्बाह्य नाड्यः सन्ति तासां मध्ये हृदयस्थव्यापारार्थमेकाधिकं शतं नाड्यः सन्ति तासां मध्ये एका नाडी मूर्धानमभिलक्षीकृत्य निःसृता निर्गता तया नाड्योर्ध्वमायन् गच्छन् प्राणोऽमृतत्वमेति मुक्तो भवति उत्क्रमणे प्राणोत्क्रमणे तु एता उक्तनाड्यो विष्वक् सर्वा अपि मूर्धानमभिनिस्सरन्ति । एवमुत्क्रान्तिसमये स्मर्तव्योऽहमित्युपदिष्टम् ॥ १२ ॥

**ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ॥**
**यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥ १३ ॥**

ओमिति । तत्रैव च धारयन् ओमित्येकाक्षरं ब्रह्म ब्रह्मणोऽभिधानभूतमोङ्कारं व्याहरन्नुच्चरंस्तदर्थभूतं मामीश्वरमनुस्मरन्ननुचिन्तयन् यः प्रयाति म्रियते स त्यजन् परित्यजन् देहं शरीरं त्यजन् देहमिति प्रयाणविशेषणार्थं देहत्यागेन प्रयाणमात्मनो न स्वरूपनाशेनेत्यर्थः । स एवं त्यजन् प्रयाति गच्छति परमां प्रकृष्टां गतिम् ॥ १३ ॥

आ० टी० । यथोक्तयोगधारणार्थं प्रवृत्तो मूर्धनि प्राणमाधाय धारयन् हि किं कुर्यादित्याशङ्क्यानन्तरश्लोकमवतारयति तत्रैवेति । एकं च तदक्षरं चेत्येकाक्षरमोमित्येवंरूपं तत् कथं ब्रह्मेति विशिष्यते तत्राह ब्रह्मण इति । यः प्रयातीति मरणमुक्त्वा त्यजन् देहमिति ब्रुवता पुनरुक्तिराश्रिता स्यादित्याशङ्क्य विशेषणार्थं विवृणोति देहेति । एवमोङ्कारमुच्चारयन्नर्थं चाभिध्यायन् ध्याननिष्ठः स पुमानित्यर्थः । परमामिति गतिविशेषणं क्रममुक्तिविवक्षया द्रष्टव्यम् ॥ १३ ॥

प० टी० । अथ जाप्यं किमित्याह ओमिति । ओमित्येकाक्षरं यस्य तदेकाक्षरं ब्रह्मैकाक्षरात्मको वेदो मात्रात्रयेण पूर्वोक्तयजुर्मन्त्रत्रयात्मैकस्तद्व्याहरन्नुच्चारयंस्तथा तदर्थरूपं मामनुस्मरन् यो जीवो देहं त्यजन् प्रकर्षेणार्चिर्मार्गेण यात्युत्क्रमते स परमां गतिं याति ॥ १३ ॥

**अनन्यचेताः सततं यो मां स्मरति नित्यशः ॥**
**तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥**

किंच अनन्येति । अनन्यचेता नान्यविषये चेतो यस्य सोऽयमनन्यचेता योगी सततं सर्वदा यो मां परमेश्वरं स्मरति नित्यशः सततमिति नैरन्तर्यमुच्यते नित्यश इति दीर्घकालत्वमुच्यते न षण्मासं संवत्सरं वा किं तर्हि यावज्जीवं नैरन्तर्येण यो मां स्मरतीत्यर्थः। तस्य योगिनोऽहं सुलभः सुखेन लभ्यः पार्थ नित्ययुक्तस्य सदा समाहितस्य योगिनो यत एवमतोऽनन्यचेताः सन् मयि सदा समाहितो भवेत् ॥ १४ ॥

आ० टी० । ननु वायुनिरोधविधुराणामुदीरितया रीत्या स्वेच्छाप्रयुक्तोत्क्रमणासंभवाद्दुर्लभा परमा गतिरापतेदिति तत्राह किं चेति । इतश्च भगवदनुस्मरणे प्रयतितव्यमित्यर्थः । सततं नित्यश इति विशेषणयोरपुनरुक्तत्वमाह सततमित्यादिना । उक्तमेवापौनरुक्त्यं व्यक्तीकरोति नेत्यादिना । जितासुरिच्छया देहं त्यजति तदितरस्तु कर्मक्षयेणैवेति विशेषं विवक्षयन्नाह यत इति ॥ १४ ॥

प० टी० । एवं मद्भक्तस्य तादृशीं दशामहमेव संपादयामीत्याह अनन्येति । सततमनवरतं नान्यन्मदतिरिक्तं चेतसि यस्य स तथाभूतः सन् यो जीवद्दशायां नित्यशो मां स्मरति तस्य नित्ययुक्तस्य समाहितमनसोऽहं सुलभः सुखेन प्राप्यो नान्यस्य ध्यानादिक्लेशराहित्येनापि स्वयमाविर्भूय प्रकटो भवामीत्यर्थः ॥ १४ ॥

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ॥
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥

तव सौलभ्येन किं स्यादित्युच्यते शृणु तन्मम सौलभ्येन यद्भवति मामुपेत्येति । मामुपेत्य मामीश्वरमुपेत्य मद्भावमापद्य पुनर्जन्म पुनरुत्पत्तिं न प्राप्नुवन्ति । किंविशिष्टं पुनर्जन्म न प्राप्नुवन्ति तद्विशेषणमाह दुःखालयं दुःखानामाध्यात्मिकादीनामालयमाश्रयम् आलीयन्ते यस्मिन् दुःखानि तद्दुःखालयं जन्म न केवलं दुःखालयमशाश्वतमनवस्थितस्वरूपं च नाप्नुवन्तीदृशं पुनर्जन्म माहात्मानो यतयः संसिद्धिं मोक्षाख्यां परमां प्रकृष्टां गताः प्राप्ताः ॥१५॥

आ० टी० । अनन्यचेतसं समाहितचेतसं प्रतीश्वरस्य सौलभ्यमेवामित्युच्यते किं त्वां प्राप्तास्त्वय्येवावतिष्ठन्ते किं वा पुनरावर्तन्ते चन्द्रलोकादिवेति संदेहात् पृच्छति तवेति । तत्रोत्तरश्लोकेन निश्चयं दर्शयति उच्यत इति । ईश्वरोपगमनं न सामीप्यमात्रमिति व्याचष्टे मद्भावमिति । पुनर्जन्मनोऽनिष्टत्वं प्रश्नद्वारा स्पष्टयति किमित्यादिना । महात्मत्वं प्रकृष्टसत्त्ववैशिष्ट्यं यतयस्तस्मिन्नेवेश्वरे समुत्पन्नसम्यग्दर्शिनो भूत्वेति शेषः ॥ १५ ॥

प० टी० । सुलभत्वे किं भवतीत्याह मामिति । एवमुक्तलक्षणा महात्मानो महानुभावा मां परमात्मानं प्राप्य दुःखालयं सर्वदुःखनिदानमशाश्वतं नश्वरं पुनर्जन्म न प्राप्नुवन्ति, यतस्ते परमां सिद्धिं गताः ॥ १५ ॥

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ॥
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥

ये पुनर्मां न प्राप्नुवन्ति ते पुनरावर्तन्ते के पुनस्त्वत्तोऽन्यत् प्राप्ताः पुनरावर्तन्त इत्युच्यते आब्रह्मेति। आब्रह्मभुवनाद्भवन्ति यस्मिन् भूतानीति भुवनं ब्रह्मभुवनं ब्रह्मलोक इत्यर्थः । आब्रह्मभुवनात् सह ब्रह्मभुवनेन लोकः सर्वे पुनरावर्तिनः पुनरावर्तनस्वभावाः हे अर्जुन मामेकमुपेत्य तु कौन्तेय पुनर्जन्म पुनरुत्पत्तिर्न विद्यते ॥ १६ ॥

आ० टी० । भगवन्तमुपगतानामपुनरावृत्तौ ततो विमुखानामनुपजातसम्यग्धियां पुनरावृत्तिरर्थसिद्धेत्याह **ये पुनरिति**। "अपाम सोमममृता अभूम" इति श्रुतेः। स्वर्गादिगतानामपि समानैवानावृत्तिरित्याशङ्क्ते **के पुनरिति** । अर्थवादश्रुतौ कर्मिणाममृतत्वस्यापेक्षिकत्वं विवक्षित्वा परिहरति **उच्यत इति** । एतेन भूरादिलोकचतुष्टयं प्रविष्टानां पुनरावृत्तावपि जनादिलोक एषां प्राप्तानामपुनरावृत्तिरिति विभागोक्तिरप्रामाणिकत्वादेव हेयेत्यवधेयम् । तर्हि तद्वदेवेश्वरं प्राप्तानामपि पुनरावृत्तिः शङ्क्यते नेत्याह **मामिति** । यावत्संपातश्रुतिवदीश्वरं प्राप्तानां निवृत्ताविद्यानां पुनरावृत्तिरप्रामाणिकीत्यर्थः ॥ १६ ॥

प० टी० । अथावान्तरसिद्ध्या शाश्वतं सुखदं च देहमपेक्षमाणानां पुनरावृत्तिरस्तीत्याह **आब्रह्मेति** । ब्रह्मणो भुवनं वासस्थानं ब्रह्मलोकस्तमभिव्याप्य ये लोका महर्लोकाद्या अपि पुनरावर्तिनो भवन्ति । ननु 'तपस्विनो दानशीला वीतरागास्तितिक्षवः । त्रिलोक्या उपरि स्थानं लभन्ते शोकवर्जितम्' इति पुराणोक्तत्वात्कथमुक्तं पुनरावर्तिन इति चेत्तत्रोच्यते । सुखेन चिरकालजीवितमपेक्ष्य सामवेदोक्तबृहद्रथंतरवैरूपवैराजशार्करवैतनौन्धसकालेयाद्यष्टसामात्मिकामासंदीं सस्तोमां महतीमृचमुपास्य साम्राज्यभौज्यस्वाराज्यवैराज्यादिक्रमेण पारमेष्ठ्यं सत्यलोकं प्राप्तोऽप्यायुरहोरात्रनिद्राजागरादिलौकिकव्यवहारत्वात्पुनरावर्तन्त एव। श्रुतिरपि शातपथी—"यो वा एतदक्षरमविदित्वा गार्ग्यस्मिँल्लोके जुहोति ददाति तपस्यत्यपि बहूनि वर्षसहस्राण्यन्तवानेवास्य स लोको भवति" इति । भाष्यम्—अत्र वाचक्नवीं प्रति याज्ञवल्क्यो वदति । भो गार्गि गर्गकन्ये वाचक्नवि यः पुरुष एतदनुभूयमानमक्षरं परं ब्रह्माविदित्वा ज्ञात्वास्मिँल्लोके जुहोति होमं करोति ददाति तुलाभारेण तपस्यति कृच्छ्रचान्द्रायणादिनैव यल्लोकार्थमेतावानुपायः स लोकोऽस्य पुरुषस्य बहून्यनेकानि वर्षसहस्राणि भुज्यमानोऽप्यन्तवानेव पुनश्च्यवनाय भवति । अथोक्तप्रमेयप्रतिपादकमृक्शाखीयं ब्राह्मणं च "अथात ऐन्द्रो महाभिषेकस्ते देवा अब्रुवन् सप्रजापतिका अयं वै देवतानाम्" इत्यादि । तथापस्तम्बसंहितास्वपि "सुपर्णोऽसि गरुत्मान् त्रिवृते शिरोगायत्रचक्षुः"इत्यादि । ग्रन्थविस्तरभयान्न लिख्यते शतश्लोकभाष्येऽस्माभिः सविस्तरं प्रोक्तमस्ति । अथ चोत्पन्नतत्त्वज्ञानिनस्ते मद्रूपतां प्राप्य विस्मृतसकलव्यवहाराः संसरणबीजभूतं जीवत्वं परिहाय ब्रह्मरूपास्तेषां पुनर्जन्म नास्तीत्याह **मामुपेत्येति** । तथा च विस्मृतसकलव्यवहारत्वमेव मत्प्राप्त्यभिव्यञ्जकम् । **श्रुतिरपि**—"स यथा सोन्धवखिल्यदुदके प्रास्तउदकमेवानुविलीयेत नाहस्योदग्रहणायेवस्याद्" इति । तथा "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्त" इति ॥ १६ ॥

सहस्रयुगपर्यन्तमहर्यद् ब्रह्मणो विदुः ॥
रात्रिं युगसहस्रां तां तेऽहोरात्रविदो जनाः ॥ १७ ॥

ब्रह्मलोकसहिता लोकाः कस्मात् पुनरावर्तिनः कालपरिच्छिन्नत्वात्

**कथं सहस्रेति । सहस्रयुगपर्यन्तं सहस्राणि युगानि पर्यन्तं पर्यवसानं यस्यास्तदहः सहस्रयुगपर्यन्तं ब्रह्मणः प्रजापतेर्विराजो विदुः, रात्रिमपि युगसहस्रामहःपरिमाणमेव के विदुरित्याह तेऽहोरात्रविदः कालसंख्याविदो जना इत्यर्थः ॥ १७ ॥**

आ० टी० । यस्य स्वाभाविकी वंशप्रयुक्ता च शुद्धिस्तस्यैवोक्तेऽर्थे बुद्धिरुदेतीति मत्वा संबुद्धिद्वयं ब्रह्मलोकसहितानां पुनरावृत्तौ हेतुं प्रश्नद्वारा दर्शयति **ब्रह्मेति** । उक्तमेव हेतुमाकाङ्क्षापूर्वकमुत्तरश्लोकेन साधयति **कथमित्यादिना** । यथोक्ताहोरात्रावयवमासर्त्वयनसंवत्सरावयवं शतसङ्ख्यायुरवच्छिन्नत्वात् प्रजापतेस्तदन्तर्वर्तिनामपि लोकानां यथायोग्यकालपरिच्छिन्नत्वेन पुनरावृत्तिरित्यभिप्रेत्य व्याचष्टे **सहस्रेत्यादिना** ॥ १७ ॥

प० टी० । अथ सत्यलोकव्यवहारमाह **सहस्रेति** । यद् ब्रह्मणो यस्य ब्रह्मणः सहस्रयुगानि पर्यन्तोऽवसानं यस्यैवंविधमहर्दिनं विदुः । तथैव युगसहस्रान्तां रात्रिं विदुरेवमहोरात्रं सोपपत्तिकत्वेन ये विदुस्ते जना अहोरात्रविदः । छान्दोग्येऽपि "सहस्रयुगपर्यन्तमहर्ब्राह्मं यदुच्यते" इति । अयमर्थः । कृतत्रेताद्वापरकालिसंज्ञकैश्चतुर्भिश्चरणैरेकैकं महायुगं तानि सहस्रमितानि ब्रह्मणो दिनं तावत्येव रात्रिस्तत्र सूर्यदर्शनादर्शननिमित्ते दिनरात्री भवत एवं सत्यलोकस्य सर्वलोकापेक्षयोच्चैः स्थितत्वात्तत्रत्याः सहस्रयुगपर्यन्तं सूर्यं पश्यति तावदेव तेषां जाग्रदवस्थानन्तरं तावत्कालमेव तेषां सुषुप्तिस्तत्र न पश्यन्ति । उक्तं च—'यदातिदूरगतो द्रुहिणः क्षितेः सततमाप्रलयं रविमीक्षते । भवति तावदयं शयितश्च तद्युगसहस्रयुगं द्युनिशं विधेः' इति । एवं मेरुशिरसि स्थितानां देवानां सौरवर्षमितमहोरात्रं पितॄणां तु चान्द्रमासेन मितम् । तथा लङ्कायमकोटिसिद्धपुरस्थितानां नित्यं त्रिंशद्घटीतुल्यं दिनं तावत्येव रात्रिः । एवमेतेषु नित्यं चरकालाभावाद्दिनरात्र्योः समत्वम् । इतरदेशेषु चरवशाद्दिनरात्र्योर्ह्रासवृद्धी भवेताम् । तेन प्रतिदेशं भिन्नाहोरात्रिव्यवस्था एवं यावत् षट्षष्टिमिता अक्षांशाश्चतुर्विंशतिर्लम्बांशा भवन्ति ततोऽनन्तरं चरादिव्यवहाराभावः । श्रुतिरपि ऋग्वेदे—" आपान्यदेत्यभ्यान्यदेति विश्वरूपे अहनी संचरेते । परिक्षितोस्तमोअन्यागुहाकराद्यौदुपाःशोशुचतारथेन " इति । भाष्यम्—विश्वरूपे बहुरूपे अहनी अहोरात्रे संचरेते सहाव्यवधानेन चरतः अहश्च कृष्णमहरर्जुनं चेत्युक्तत्वादुभयोरहः शब्दवाच्यत्वम् । तयोर्मध्ये अन्यद्रात्रिरूपमहरपैति प्रतिलोमं गच्छति । अन्यद्दिवाख्यमहरभ्येत्याभिमुख्येनागच्छति । परिक्षितोः पर्यायेण निवसतोः प्राणिनामायुः क्षपयतोर्वा तयोरन्या रात्रिस्तमस्तमोरूपा गुहा पदार्थगूहनं करोति अन्योषाः शोशुचता शोभमानेन रथेन अद्यौत् प्रकाशयति । एवं पितृदेवसत्यलोकादिषु स्वस्वाहोरात्रपरिभाषया मासवर्षादिकल्पना । तथा च स्ववर्षपरिभाषया ब्रह्मणः शतवर्षमायुः स महाकल्पः । तदुक्तम्—'शतायुः शतानन्द एवं प्रदिष्टस्तदायुर्महाकल्प इत्युक्तमाद्यैः । यतोऽनादिमानेष कालस्ततोऽहं नवेद्यत्र पद्मोद्भवा ये गतास्तान्' इत्यादि मनसि धृत्वोक्तं पुनरावर्तिन इति । तथाहोरात्रावद इत्यनेन महाकल्पावान्तरकल्पमनुयुगचरणशकवर्षायनर्तुमासपक्षाहोरात्रयामनाडीविनाडीप्राणत्रुट्यादिकालावयवाभिज्ञत्वेन गोलज्ञा इत्युक्तम् ॥ १७ ॥

**अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ॥**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥**

यत एवं कालपरिच्छिन्नास्तेऽतः पुनरावर्तिनो लोकाः प्रजापतेरहनि यद्भवति रात्रौ च तदुच्यते अव्यक्तेति । अव्यक्तादव्यक्तं प्रजापतेः स्वापावस्था तस्मादव्यक्ताद् व्यक्तयो व्यज्यन्त इति व्यक्तयः स्थावरजङ्गमलक्षणाः सर्वाः प्रजाः प्रभवन्त्यभिव्यज्यन्ते अह्न आगमोऽहरागमस्तस्मिन्नहरागमे काले ब्रह्मणः प्रबोधकाले तथा राज्यागमे ब्रह्मणः स्वापकाले प्रलीयन्ते सर्वा व्यक्तयस्तत्रैव पूर्वोक्तेऽव्यक्तसंज्ञके ॥ १८ ॥

**आ० टी** । अक्षरार्थमुक्त्वा तात्पर्यार्थमाह **यत इति** । यतः प्रजापतेरहस्तद् युगसहस्रपरिमितं या च तस्य रात्रिः सापि तथेति कालविदामभिप्रायमनुसृत्य ब्राह्मस्याहोरात्रस्य कालपरिमाणं दर्शयित्वा तत्रैव विभज्य कार्यं कथयति **प्रजापतेरिति** । अव्यक्तमव्याकृतमिति शङ्कां वारयाति **अव्यक्तमित्यादिना** । जातिप्रतियोगिभूता व्यक्तीर्व्यावर्तयति **स्थावरेति** । असदुत्पत्तिमसत्किं प्रत्यादिशति **अभिव्यज्यन्त इति** । पूर्वोक्तमव्यक्तसंज्ञकं स्वापावस्थं ब्रह्म प्रजापतिशब्दितं तस्मिन्निति यावत् ॥ १८ ॥

**प० टी०** । अथ यदर्थमेतावानुपक्रमस्तदाह **अव्यक्तादिति** द्वाभ्याम् । कार्यस्याव्यक्तरूपं कारणात्मकं तस्मादव्यक्तात्कारणरूपात्सकाशात्सर्वा नानारूपकर्मात्मका व्यक्तयः स्वरूपाण्यहरागमे ब्रह्मणो जाग्रदवस्थोपलक्षिते दिनारम्भे प्रभवन्ति प्रादुर्भवन्ति । तथा तस्यैव सुषुप्त्युपलक्षित राज्यागमे तत्रैवाव्यक्तसंज्ञके विलीयन्ते । यस्य कस्य चित्कार्यस्य स्वकारणे लय इति प्रसिद्धम् । अस्मिन्नर्थे शातपथ्यः श्रुतयः पूर्वदर्शिता एव । इदानीमृक्शाखीयाः श्रुतयश्च—"ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत।ततो रात्र्यजायत ततः समुद्रो अर्णवः समुद्रादर्णवादधि।संवत्सरोऽजायताहोरात्राणि विदधद्विश्वस्यमिषतोवशी । सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः" इति । भाष्यम्—ऋतं सत्यसंकल्पः, सत्यं यथार्थभाषणम् । अभीद्धादभितः प्रकाशमानात्परमेश्वरादधिजायते । अधिकत्वेनोत्कर्षेण जायते प्रथमं जगत्स्रष्टव्यमिति संकल्पः । अनन्तरं बहुस्यां प्रजायेयेति सत्यप्रतिज्ञा समुत्पन्नेत्यर्थः। किंभूतादभीद्धात्तपसस्तपोरूपात् सृष्ट्यर्थं लेपं कृतवतः । "स तपोऽतप्यत स तपस्तप्त्वा"इति श्रुतेः । ततो रात्रिरजायत रात्रिशब्देन काल उपलक्षितः सृष्टेर्निमित्तभूतः कालोऽप्याविर्भूतः । ततोऽनन्तरं समुद्यति व्याप्नोति समुद्र आकाशदिगादिपदार्थ आसीत् । ततोऽर्णवः सागर आसीत् । ततः पूर्वोक्तप्रकारेण रूपकालात्मसंवत्सरः सृष्ट्यादौ तावदहोरात्रनिमित्तभूतः समयोपाधिरूपः संवत्सरात्मकः प्रजापतिरजायत "स एव संवत्सरः प्रजापतिः षोडशकल" इति श्रुतेः । ततोऽहोरात्रिकं धाता स्रष्टा यथापूर्वं प्राचीनदिनादौ यथाऽकल्पयत्तथैवाद्यतनेदिनादावकल्पयत् कल्पितवान् । किं तत् । अहोरात्राणि तत्कारणीभूतौ सूर्याचन्द्रमसौ दिवं पृथिवीमन्तरिक्षमाकाशं स्वः स्वर्लोकं च । किंभूतः, मिषतो जागरादौ पश्यतो विश्वस्य सर्वलोकस्य वशी वशवर्ती । स्वत एव यथापूर्वं दर्शयतीत्यर्थः । अनया दृश्यप्रपञ्चस्य काल्पनिकत्वमुपपादितम् । तथा "नवो नवो भवति जायमानोऽह्नांकेतुरुषसामेत्यग्रम" इति । भाष्यम्—जायमानः प्रादुर्भूतोह्नांकेतुः सूर्य उपसां प्रातःकालानामग्रमुदयाचलमस्तकमेत्य प्राप्य नवो नवो भवति नवीन एवोत्पद्यते । तथा कण्वोपनिषत्सु "अथैष श्लोको भवति यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति प्राणाद्वा एष उदेति प्राणेऽस्तमेति तं देवाश्चक्रिरे धर्मं स एवाद्य स उश्व" इति । भाष्यम्—पूर्वश्रुतौ चक्षुरादिकमात्मानुभवेनोपयुज्यते किं त्वसदेवविषयीकरोतीत्यत्रोपपत्तिश्रुतिरेव दर्शयति तदेष श्लोको भवतीति । तत्तत्रार्थे एष श्लोको वेदोपजीव्यः प्रसिद्धो मन्त्रोऽस्तीत्याह सूर्य

इति । सूर्यो यत्रास्तं गच्छति यतश्चोदयं प्राप्नोति तत्किं वस्त्विति विचार्यमाणे एष सूर्यः प्राणान् मुख्यप्राणात् सूत्रात्मनः सकाशादुदेति उदयं प्राप्नोति । ततस्तस्मिन् प्राणेऽस्तमेति लयं प्राप्नोति । एवं सति द्योतयन्त्यर्थान् प्रकाशयन्ति देवाश्चक्षुराद्यास्तमुदयास्तलक्षणं धर्मं नैसर्गिकं चक्रिरे मेनिरे । कथं स एव सूर्योऽद्य समुदितस्तथा स एव श्व उत्तरदिन इति । अत्रैतदुक्तं भवति प्रत्यहमनुभूयमानौ सूर्योदयास्तौ न पारमार्थिकौ किं त्वापेक्षिकौ नेत्रगतावुदयास्तौ सूर्ये कल्प्येते न वस्तुतो नह्यहमुदितोऽस्तमितो वेत्ति सूर्यो वेत्ति । तदुक्तम् 'विचार्यमाणे तरणाविवाहनि' इति । एवं सत्युदितानुदितहोमव्यवस्थाप्यापेक्षिकी ॥ १८ ॥

**भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ॥**
**रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥**

अकृताभ्यागमकृतविप्रणाशदोषपरिहारार्थं बन्धमोक्षशास्त्रप्रवृत्तिसाफल्यप्रदर्शनार्थम् अविद्यादिक्लेशमूलकर्माशयवशाच्च वशो भूतग्रामो भूत्वा प्रलीयत इत्यतः संसारे वैराग्यप्रदर्शनार्थं चेदमाह[1] भूतग्राम इति । भूतग्रामो भूतसमुदायः स्थावरजङ्गमलक्षणो यः पूर्वस्मिन् कल्प आसीत् स एवायं नान्यो भूत्वा पुनरहरागमे प्रलीयते पुनः पुना रात्र्यागमेऽहःक्षयेऽवशोऽस्वतन्त्र एव पार्थ प्रभवति जायते स एवाहरागमे ॥ १९ ॥

आ० टी० । ननु प्रबोधकाले ब्रह्मणो यो भूतग्रामो भूत्वा तस्यैव स्वापकाले विलीयते तस्मादन्यो भूयो भूयो ब्रह्मणोऽहरागमे भूत्वा पुना रात्र्यागमे परवशो विनश्यति तदेवं प्रत्यवान्तरकल्पं भूतग्रामविभागो भवेदित्याशङ्क्यानन्तरश्लोकतात्पर्यमाह **अकृतेति** । प्रतिकल्पं प्राणिनिकायस्य भिन्नत्वे सत्यकृताभ्यागमादिदोषप्रसङ्गात्तत्परिहारार्थं भूतग्रामस्य प्रतिकल्पमैक्यमास्थेयमित्यर्थः । यदि स्थावरजङ्गमलक्षणप्राणिनिकायस्य प्रतिकल्पमन्यथात्वं तदेकस्य बन्धमोक्षान्वयिनोऽभावात् काण्डद्वयात्मनो बन्धमोक्षार्थस्य शास्त्रस्य प्रवृत्तिरफला प्रसज्येतातस्तत्साफल्यार्थमपि प्रतिकल्पं प्राणिवर्गस्य नवीनत्वानुपपत्तिरित्याह **बन्धेति** । कथं पुनर्भूतसमुदायोऽस्वतन्त्रः सन्नवशो भूत्वा प्रविलीयते तत्राह **अविद्यादीति** । आदिशब्देनास्मितारागद्वेषाभिनिवेशा गृह्यन्ते । यथोक्तं क्लेशपञ्चकं मूलं प्रति प्रतिलभ्य कल्पं प्रतिलभ्य धर्माधर्मात्मककर्मराशिरुद्भवति तद्वशादेवास्वतन्त्रो भूतसमुदायो जन्मविनाशावनुभवतीत्यर्थः । प्राणिनिकायस्य जन्मनाशाभ्यासोक्तेरर्थसिद्धमर्थमाह **इत्यत इति** । संसारे विपरिवर्तमानानां प्राणिनामस्वातन्त्र्यादवशानामेव जन्ममरणप्रबन्धसंबन्धादलमनेन संसारेणेति वैतृष्ण्यं तस्मिन् प्रदर्शनीयं तदर्थं चेदं भूतानामहोरात्रमावृत्तिवचनमित्यर्थः, समनन्तरवाक्यमिदमा परामृश्यते । रात्र्यागमे लयमनुभवतोऽहरागमे च प्रभवं प्रतिपद्यमानस्य प्राणिवर्गस्य तुल्यं पारवश्यमित्याशयवानाह **अह्न इति** ॥ १९ ॥

**प० टी०** । एवं ये जीवास्तावद्रात्र्यागमेऽव्यक्ते स्वकारणे लीना भवन्ति त एव पुनर्दिवसारम्भे देहधारिणो भवन्तीत्याह **भूतग्राम इति** । यो भूतग्रामो रात्र्यागमे स्वकारणेऽव्यक्ते लीयमानोऽभूत् स एवायं दिनादौ भूत्वा भूत्वा भूयः प्रादुर्भावं प्राप्य पुना रात्र्यागमे प्रलीयतेऽवशः कर्मपरतन्त्रः सन् । पुनरहरागमे प्रभवति देहधारित्वमवलम्बते । तदुक्तमकुलागमे 'बाहिर्मुखं पश्यति

---

१ चेदमुच्यते तदाह—पा० लि० ।

दृश्यजातमन्तर्मुखं पश्यति चित्स्वरूपम् । मध्ये तयोः स्वप्नमया हि सृष्टिरनादिरेवं मनसः स्वभावः' इति ॥ १ ॥ टिप्पणिकासु । 'अनिर्मिताः केन चिदीश्वरेण स्वाप्नाः पदार्थाः प्रभवन्त्यकस्मात् । तस्मिन् क्षणे तज्जनितो जनस्य सत्यानुभूत्या सुखदुःखभोगः । अनिर्मितः पूर्ववदाविरास्ते तद्वत्प्रपञ्चः स च जागरादौ । आसीत्पुरा चास्तमितः सुषुप्तावनादिसंस्कारवशं हि चेतः' इति ॥ १९ ॥

**परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः ॥**
**यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥**

यदुपन्यस्तमक्षरं तस्य प्राप्त्युपायो निर्दिष्ट ओमित्येकाक्षरं ब्रह्मेत्यादिनाथेदानीमक्षरस्यैव स्वरूपनिर्दिदिक्षयेदमुच्यते पर इति । अनेन योगमार्गेणेदं गन्तव्यमिति परस्तस्मादिति परो व्यतिरिक्तोऽभिन्नः कुतस्तस्मात् पूर्वोक्तादव्यक्तात्, तुशब्दोऽव्यक्ताक्षरस्य विवक्षितस्य व्यक्ताद्वैलक्षण्यविशेषणार्थः, भावोऽक्षराख्यं परं ब्रह्म । व्यतिरिक्तत्वे सत्यपि सालक्षण्यप्रसङ्गोऽस्तीति तद्विनिवृत्त्यर्थमाह अन्य इति । अन्यो विलक्षणः स चाव्यक्तोऽनिन्द्रियगोचरः परस्तस्मादित्युक्तं, कस्मात् पुनः परः पूर्वोक्ताद् भूतग्रामबीजभूतादविद्यालक्षणादव्यक्तादन्यो विलक्षणो भाव इत्याभिप्रायः । सनातनश्चिरंतनो यः स भावः सर्वेषु भूतेषु ब्रह्मादिषु नश्यत्सु न विनश्यति ॥ २० ॥

**आ० टी०** । अक्षरं ब्रह्म परममित्युपक्रम्य तदनुपयुक्तं किमिदमन्यदुक्तमित्याशङ्क्य वृत्तमनूद्यानन्तरग्रन्थसंगतिमाह **यदुपन्यस्तमिति** । अक्षरस्वरूपे निर्दिदिक्षिते तस्मिन् पूर्वोक्तयोगमार्गस्य कथमुपयोगः स्यादित्याशङ्क्य तत्प्राप्त्युपायत्वेनेत्याह **अनेनेति** । गन्तव्यमिति योगमार्गोक्तिरुपयुक्तेति शेषः, पूर्वोक्तादव्यक्तादिति संबन्धः । परशब्दस्य व्यतिरिक्तविषयत्वे तुशब्देन वैलक्षण्यमुक्त्वा पुनरन्यशब्दप्रयोगात् पौनरुक्त्यमित्याशङ्क्याह **व्यतिरिक्तत्व इति** । तुना द्योतितं वैलक्षण्यमन्यशब्देन प्रकटितं यतो भिन्नेष्वपि भावभेदेषु सालक्षण्यमालक्ष्यते ततश्चाव्यक्ताद्भिन्नत्वेऽपि ब्रह्मणस्तेन सादृश्यमाशङ्कते तन्निवृत्त्यर्थमन्यपदमित्यर्थः, यद्वा परशब्दस्य प्रकृष्टवाचिनो भावविशेषणार्थत्वे पुनरुक्तिशङ्कैव नास्तीति द्रष्टव्यम् । अनादिभावस्याक्षरस्याविनाशित्वमर्थसिद्धं समर्थयते **यः स भाव इति** । सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति स तु विनाशहेत्वभावान्न विनष्टुमर्हतीत्यर्थः ॥ २० ॥

**प० टी०** । अथ सर्वकारणीभूतस्य परमेश्वरस्य सकलव्यवहारातीतस्य शाश्वतत्वमाह **पर इति** । तस्मात्कार्यकरणसंघातरूपादव्यक्तात्सकाशात्पर उत्कृष्टस्तत्कारणीभूतस्तस्मादन्यस्तद्विलक्षणश्चाव्यक्तश्चक्षुराद्यगोचरः सनातनोऽनादिर्यो भावश्चालकः पदार्थोऽस्ति स सर्वेषु भूतेषु नश्यत्सु न विनश्यति "योऽवशिष्यते सोऽस्म्यहम्" इति स्मृतेः । तदुक्तमथर्ववल्लीषु । 'इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् । सत्त्वादपि महानात्मा महतोऽव्यक्तमुत्तमम् । अव्यक्तात्परः पुरुषो व्यापको लिङ्ग एव च । यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छाति' इति । ऋक्शाखायामपि— 'अपश्यमस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु । नानाहनूविभृते संभरेते असिन्वती बप्सती भूर्यत्त' इति । भाष्यम्—अस्य महतः सर्वोत्कृष्टस्य महित्वं व्यापकत्वम् अपश्यमद्राक्षम् । किंभूतस्य मर्त्यासु मरणधर्मिकासु विक्षु प्रजास्वमर्त्यस्य सनातनस्य येनेत्यध्याहारः । येन महित्वेन कृत्वा नानाहनूभा-

णिनामुत्तरावरे हनू शिप्रे विभृते भरणकृते दन्तैः संभरेते परिपूर्णे असिन्वती जिह्वया ग्रासं कलयन्त्यौ वप्सती दन्तैश्चूर्णयन्त्यौ भूरि यथा भवति तथा अत्तो भक्षयन्त्यौ गिलन्त्यौ । अचेतननानाशरीरेषु यद्भक्षणादि कर्म तदन्तर्गतेनैकेनैव पुरुषेणेत्यर्थः ॥ २० ॥

## अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ॥
## यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥

अव्यक्त इति । योऽसावव्यक्तोऽक्षर इत्युक्तस्तमेवाक्षरसंज्ञकमव्यक्तं भावमाहुः परमां प्रकृष्टां गतिं यं भावं प्राप्य गत्वा न निवर्तन्ते संसाराय तद्धासस्थानं परमं प्रकृष्टं मम विष्णोः परमं पदमित्यर्थः ॥ २१ ॥

आ० टी० । यथोक्तेऽव्यक्ते भावे श्रुतिसंमतिमाह **अव्यक्त इति** । तस्य परमगतित्वं साधयति **यं प्राप्येति** । योऽसावव्यक्तो भावोऽत्र दर्शितः स " येनाक्षरं पुरुषं वेद सत्यम् " इत्यादिश्रुतावक्षर इत्युक्तस्तं वाक्षरं भावं परमां गतिं "पुरुषान्न परं किं चित् सा काष्ठा सा परा गतिः" इत्याद्याः श्रुतयो वदन्तीत्याह **योऽसाविति** । परमपुरुषस्य परमगतित्वमुक्तं व्यनक्ति **यं भावमिति** । " तद्विष्णोः परमं पदम् " इति श्रुतिमत्र संवादयति **तद्धामेति** ॥ २१ ॥

प० टी० । अथाविनाशित्वे प्रमाणं दर्शयति **अव्यक्त इति** । योऽयं पूर्वमव्यक्तः सनातनो भाव उक्तः सोऽक्षर इत्युच्यते । न क्षरतीत्यक्षरस्तमक्षरं परमां गतिमाहुः । तं कम्, यं प्राप्य योगिनो न निवर्तन्ते तन्ममैवं परमं सर्वोत्कृष्टं धाम स्वरूपम् । मयि ज्ञाते तज्ज्ञातमित्यर्थः ॥२१॥

## पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ॥
## यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२ ॥

तल्लब्धेरुपाय उच्यते पुरुष इति । पुरुषः पुरि शयनात् पूर्णत्वाद्वा स परः पार्थ परो निरतिशयो यस्मात् पुरुषान्न परं किंचित् स भक्त्या लभ्यस्तु ज्ञानलक्षणयानन्ययात्मविषयया यस्य पुरुषस्यान्तःस्थानि मध्यस्थानि कार्यभूतानि कार्यं हि कारणस्यान्तर्वर्ति भवति येन पुरुषेण सर्वमिदं जगत्ततं व्याप्तमाकाशेनेव घटादि ॥ २२ ॥

आ० टी० । ननु व्यक्तादतिरिक्तस्य तद्विलक्षणस्य परमपुरुषस्य प्राप्तौ कश्चिदसाधारणो हेतुरेषितव्यो यस्मिन् प्रेक्षापूर्वकारी तत्प्रेक्षया प्रवृत्तो निर्वृणोति तत्राह **तल्लब्धेरिति** । परस्य पुरुषस्य सर्वकारणत्वं सर्वव्यापकत्वं च विशेषणद्वयमुदाहरति **यस्येति** । निरतिशयत्वं विशदयति **यस्मादिति** । तुशब्दोऽवधारणार्थः । भक्तिर्भजनम् । सेवाप्रदक्षिणप्राणायामादिलक्षणां तां व्यावर्तयति **ज्ञानेति** । उक्ताया भक्तेर्विषयतो वैशिष्ट्यमाह **अनन्ययेति** । कोऽसौ पुरुषो यद्विषया भक्तिस्तत्प्राप्तौ पर्याप्तेत्याशङ्क्योत्तरार्धं व्याचष्टे **यस्येति** । कथंभूतानां तदवस्थत्वं तत्राह **कार्यं हीति** । "स पर्यगाद् " इति श्रुतिमाश्रित्याह **येनेति** ॥ २२ ॥

प० टी० । अथ तमेव विशिनष्टि **पुरुष इति** । स एव पर उत्कृष्टः पुरुषः " एतावानस्य महिमातो ज्यायांश्च पूरुषः " इति श्रुतेः । स चाहं पुरुषेऽनन्ययाव्यभिचारिण्या भक्त्या लभ्यः ।

पुनः स क इत्याह । यस्यान्तर्यन्मध्ये सर्वाणि भूतानि सन्ति तथा येन सर्वमिदं दृश्यजातं तादात्म्यभावेन ततं विस्तारितं जले तरङ्गा इवेत्यर्थः ॥ २२ ॥

**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ॥**
**प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥**

प्रकृतानां योगिनां प्रणवावेशितब्रह्मबुद्धीनां कालान्तरमुक्तिभाजां तद्ब्रह्मप्रतिपत्तय उत्तरो मार्गो वक्तव्य इति यत्र काल इत्यादि विवक्षितार्थसमर्पणार्थमुच्यते। आवृत्तिमार्गोपन्यास इतरमार्गस्तुत्यर्थः। यत्रेति । यत्र काले प्रयाता इति व्यवहितेन संबन्धः। यत्र यस्मिन् काले त्वनावृत्तिमपुनर्जन्मावृत्तिं तद्विपरीतां चैव, योगिन इति कर्मिणश्चोच्यन्ते कर्मिणस्तु गुणतः 'कर्मयोगेन योगिनाम्' इति विशेषणात् तत्र विभज्यन्ते योगिनः, यत्र काले प्रयाता मृता योगिनोऽनावृत्तिं यान्ति यत्र काले च प्रयाता मृता आवृत्तिं यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥

आ० टी० । ननु ज्ञानायत्ता परमपुरुषप्राप्तिरुक्ता न च ज्ञानं मार्गमपेक्ष्य फलाय कल्पते विदुषो गत्युत्क्रान्तिनिषेधश्रुतेस्तथाच मार्गोक्तिरयुक्तेत्याशङ्क्य सगुणाशरणानां तदुपदेशोऽर्थवानित्यभिप्रेत्याह **प्रकृतानामिति** । वक्तव्य इति यत्र काल इत्याद्युच्यत इति संबन्धः । स चेद्वक्तव्यस्तर्हि किमित्यध्यात्मादिभावेन सविशेषं ब्रह्म ध्यायतां फलाप्तये मूर्धन्यनाडीसंबद्धे देवयाने पथ्युपास्यत्वाय वक्तव्ये कालो निर्दिश्यते तत्राह **विवक्षितेति** । सोऽर्थो मार्गस्तदुक्तिशेषत्वेन कालोक्तिरित्यर्थः । पितृयानमार्गोपन्यासस्तर्हि किमिति क्रियते तत्राह **आवृत्तिमिति** । मार्गान्तरस्यावृत्तिफलत्वादस्य चानावृत्तिफलत्वात्तदपेक्षया महीयानयमिति स्तुतिर्विवक्षितेति भावः। योगिन इति ध्यायिनां कर्मिणां च तन्त्रेणाभिधानमित्याह **योगिन इति** । कथं कर्मिषु योगिशब्दो वर्ततामित्याशङ्क्यानुष्ठानगुणयोगादित्याह **कर्मिणस्त्विति** । गुणतो योगिन इति संबन्धः । तत्रैव वाक्योपक्रमस्यानुकूल्यमाह **कर्मयोगेनेति** । अवशिष्टान्यक्षराणि व्याचक्षाणो वाक्यार्थमाह **यत्रेति**। योगिनो ध्यायिनोऽत्र विवक्षिताः, य आवृत्तावधिकृता योगिनः कर्मिण इति विभागः । कालप्राधान्येन मार्गद्वयोपन्यासमुपक्रम्य तमेव प्रधानीकृत्य देवयानं पन्थानमवतारयति **तं कालमिति**॥ २३ ॥

**प० टी०** । अथ 'यं प्राप्य न निवर्तन्ते' इति पूर्वमुक्तं तत्र मदुपासकानां योगिनां च पुनरावृत्त्यनावृत्त्युपलक्षकं तारतम्यभावेन मार्गद्वयमस्तीत्याह **यत्रेति** । भो भरतर्षभ योगिनो यत्र यस्मिन् काले प्रयातास्त्यक्तदेहाः सन्तोऽनावृत्तिमपुनर्जन्मावृत्तिं च पुनर्जन्म यान्ति प्राप्नुवन्ति तं कालं वक्ष्यामि ॥ २३ ॥

**अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ॥**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥**

तं कालमाह अग्निर्ज्योतिरिति । अग्निः कालाभिमानिनी देवता तथा ज्योतिर्देवतैव कालाभिमानिनी अथ वा अग्निज्योतिषी यथाश्रुते एव देवते

भूयसां तु निर्देशो यत्र काले तं कालमित्याम्रवणवत्, यथाहर्दैवताहरभिमानिनी शुक्लः शुक्लपक्षदेवता तथा षण्मासा उत्तरायणं तत्रापि देवतैव मार्गभूतेति स्थितोऽन्यत्र न्यायस्तत्र तस्मिन् मार्गे प्रयाता मृता गच्छन्ति ब्रह्म ब्रह्मविदो ब्रह्मोपासका ब्रह्मोपासनपरा जनाः क्रमेणेति वाक्यशेषो, न हि सद्योमुक्तिभाजां सम्यग्दर्शननिष्ठानां गतिरागतिर्वा क्वचिदस्ति "न तस्य प्राणा उत्क्रामन्ति" इति श्रुतेः। ब्रह्मसंलीनप्राणा एव ते ब्रह्ममया ब्रह्मभूता एव ते क्रमेण तु गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥

आ० टी० । यथोपक्रमं व्याख्याय यथाश्रुतं व्याख्याति **अथ वेति** । कथं तर्हि देवतानामभिनेत्रीणां ग्रहणे कालप्राधान्येन निर्देशः श्लिष्यते तत्राह **भूयसां त्विति** । मार्गद्वयेऽपि कालाद्यभिमानिन्यो देवताः कालशब्देनोच्यन्ते कालाभिमानिनीनां भूयस्त्वात् कालशब्देन सर्वासां देवतानामुपलक्षणत्वं विवक्षित्वा कालकथनमित्यर्थः । यथाम्राणां भूयस्त्वाद्विद्यमानेष्वपि द्रुमान्तरेषु आम्रैरेव वनं निर्दिश्यते तद्वदित्युदाहरणमाह **आम्रेति** । ननु मार्गचिह्नानां भोगभूमीनां वा तत्तच्छब्दैरुपादानसंभवे किमिति देवताग्रहणमित्याशङ्क्यातिवाहिकास्तल्लिङ्गादिति न्यायेनोत्तरमाह **इति स्थित इति** । तेषामग्न्यादीनां समीपमिति समीप्ये तत्रेति सप्तमी । ब्रह्म कार्योपाधिकं परं वा ब्रह्म परंपरया मुक्त्यालम्बनमत एव क्रमेणेत्युक्तम् । निर्गुणमप्रपञ्चं ब्रह्मास्मीति विद्यावतो व्यवच्छिनत्ति **ब्रह्मोपासनेति** । ननु ब्रह्मशब्दस्य मुख्यार्थत्वार्थं परब्रह्मविदामेवेयं गतिरुच्यते न बादर्यधिकरणविरोधादित्याह **न हीति** ॥ २४ ॥

प० टी० । तत्र प्रथमं स्वोपासकानामवसानेऽर्चिर्मार्गमाह **अग्निरिति**। तत्रार्चिर्मार्गोपलक्षकाः पञ्च सन्ति । तत्र संस्काराग्निर्द्वेधा दीप्तो धूमितश्च। एवमर्चिर्मार्गे दीप्तोऽग्निः। तत्र श्रुतिः—" अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठं ते नम उक्तिं विधेम " इति । भाष्यम्—तत्र मुमुक्षुर्यावज्जीवमग्निशुश्रूषया प्रसादितमग्निं स्वनिर्याणे प्रार्थयते । भो देव दीप्यमानाग्ने अस्मान् सुपथार्चिर्मार्गेण नय । किमर्थं, राये मुक्तिलक्षणाय धनाय । तथा भो विद्वन् ज्ञानवन् विश्वानि सर्वाणि वयुनानि ज्ञानानि देहीत्यध्याहारः । अथास्मिन्नर्थेऽस्मज्जुहुराणमस्मत्प्रतिबन्धकमेनः पातकं युयोधि नाशय । इतः परं ते तुभ्यं भूयिष्ठां मनोवाक्कायैः कृतामन्ते निर्याणे नमउक्तिं नमस्कारोक्तिं विधेम । यथोत्क्रमणसमये ज्योतिः प्रकाशकं रूपम् । श्रुतिरपि—"तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वा" इति । स्पष्टार्थम् । तथाहरादीनां त्रयाणामर्चिर्मार्गोपलक्षणानां कालोपाधीनामहःशुक्लपक्षोत्तरायणानामभिमानिन्यो देवताः सन्ति ता एवोत्तरोत्तरमर्चिर्मार्गप्रापका भवन्ति तत्रार्चिर्मार्गे प्रयाता ब्रह्मविदो जीवास्त्यक्तदेहाः सन्तो ब्रह्म गच्छन्ति। अत्र शातपथी श्रुतिः—" ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिरभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं तान्वैद्युतात्पुरुषो मानस एत्य ब्रह्मलोकान् गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषामिह न पुनरावृत्तिरस्ति" इति। भाष्यम्—अरण्ये वानप्रस्थदशां प्राप्ताः श्रद्धागुरुशास्त्रविश्वासाः सत्यं ब्रह्मोपासते तेऽर्चिर्मार्गेऽधिकारिणो भवन्ति । तमेव मार्गमाह । अर्चिस्तेजोऽहर्दिनमापूर्यमाणपक्षः शुक्लपक्षः मकरसंक्रमादितः षण्मा-

---

१ अतिवाहिकास्तल्लिङ्गात्-अ० ४ । पा० ३ । सू० ४ । शाङ्कर ब्रह्म० प्रष्टव्यम् ।

सान् आदित्यः सूर्य उदगेति तदुत्तरायणं तेभ्यो मासेभ्यो देवलोकं तस्मादादित्यलोकं तस्मादपि वैद्युतं विद्युल्लोकं तस्मादपि मानसः पुरुषो लिङ्गदेहावृतो जीवो ब्रह्मलोकान् सत्यलोकान् गमयति प्राप्नोति । ते तेषु ब्रह्मलोकेषु परा उत्कृष्टास्तत्त्वज्ञानवन्तः परावतो दूरदेशादागता ये वसन्ति तेषामिह संसारे न पुनरावृत्तिरस्ति । ब्रह्मलोकप्राप्तावप्युत्पन्नतत्त्वज्ञानिन एव न परावर्तन्त इत्यर्थः । इदं देवयानम् ॥ २४ ॥

**धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ॥**
**तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥**

धूम इति । धूमो रात्रिर्धूमाभिमानिनी च देवता तथा कृष्णः कृष्णपक्षदेवता षण्मासा दक्षिणायनमिति च पूर्ववद्देवतैव तत्र चन्द्रमसि भवं चान्द्रमसं ज्योतिस्तत्फलमिष्टादिकारी योगी कर्मी प्राप्य भुक्त्वा तत्क्षयादिह निवर्तते पुनः ॥ २५ ॥

**आ० टी०** । प्रकृतं देवयानं पन्थानं स्तोतुं पितृयानमुपन्यस्यति **धूम इति** । अत्रापि मार्गचिह्नानि भोगभूमिं च व्यवच्छिद्यातिवाहिकदेवताविषयत्वं धूमादिपदानां विभजते **धूमेत्यादिना** । **तत्रे**ति सप्तमी पूर्ववदेव सामीप्यार्था, इष्टादीत्यादिशब्देन पूर्तदत्ते गृह्येते । कृतात्ययेऽनुशयवानिति न्यायं सूचयति **तत्क्षयादिति** । आरोहावरोहयोरभ्यासवाचिना पुनःशब्देन संसारस्यानादित्वं सूच्यते ॥ २५ ॥

**प० टी०** । अथ पितृयानमाह **धूम इति** । पूर्वोक्तमार्गाद्विपरीते धूममार्गे रात्रिकृष्णपक्षदक्षिणायनाभिमानिदेवताभिः पितृलोकं प्राप्यते ततस्तत्रारोहणमार्गेण योगी चान्द्रमसं ज्योतिः प्राप्य पुनरवरोहणमार्गेण निवर्तते पुनरावर्तते । श्रुतिरपि—"अथ ये यज्ञेन दानेन तपसा लोकं यजन्ति ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान् षण्मासान् दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ति तेषां यदा तत्पर्यवैत्यथेममेवाकाशमभिनिष्पद्यन्त आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं प्राप्यान्नं भवन्ति त एवमेवानुपरिवर्तन्तेऽथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदि दन्दशूकम् । भाष्यम्—तत्र **चन्द्रमिति** । चन्द्रं प्राप्यान्नं भवन्ति देवानामन्नत्वेन परिणमन्ति । यथा देवाः सोमं राजानमाप्यायस्वापक्षीयस्वेति मन्त्रेण भक्षयन्ति तथैनानपि भक्षयन्ति ततस्तेषां भक्षितानां यदा तत्पर्यवेत्यवरोहणमार्गेण निष्क्रमणं भवति अथ तदाकाशमभिनिष्पद्यन्ते अन्तरिक्षलोके प्रादुर्भवन्त्याकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं तत्रान्नमोषधीत्वं प्राप्य ते एवममुना प्रकारेणानुवर्तन्ते कीटादियोनिं प्राप्नुवन्ति ततोऽप्यधमाधमयोनिं गच्छन्ति । तैत्तिरीयकेऽपि—"प्रजानन्तः प्रतिगृह्णन्ति पूर्वे प्राणमङ्गेभ्यः पर्याचरन्तम् । सुवर्गं याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठ शरीरैः" इति भाष्यम्—पूर्वे योगिनः प्रजानन्तस्तत्त्वज्ञानवन्तोऽङ्गेभ्यःशरीरेभ्यः पर्याचरन्तमुद्गच्छन्तं प्राणं प्रतिगृह्णन्ति स्वाधीनं कुर्वन्ति स्वेच्छया देहं त्यजन्ति । भो चेतस्त्वं तु देवयानैः पथिभिरर्चिरादिमार्गैः सुवर्गं स्वर्गं सत्यलोकं याहि, अथ वा तत्कर्तुमशक्तश्चेत्तर्हि कर्मणा पितृलोकेप्सुः पितृयानेन कृत्वा पुनः शरीरैरवरोहणमार्गप्राप्तैरोषधीषु प्रतितिष्ठ अन्नत्वेनपरिणतो भव परं तूभयमार्गपरिभ्रष्टो मा भवेत्यर्थः । ऋक्शाखायामपि "द्वे सृती अशृणवं पितृणामहं देवानामुत मर्त्यानाम् । ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च" इति । भाष्यम्—पितृणां देवानामुतापि मनुष्याणां द्वे सृती द्वौ मार्गौ देवयानपितृ-

यानाख्यावहमशृणवमश्रौषम् यद्विश्वं पितरं पालकत्वेन पितृभूतां द्यां तथा धारकत्वेन मातृभूतां पृथिवीमन्तरा द्यावापृथिव्योर्मध्ये भवति तदिदं विश्वमग्निना संस्कृतं सदेतद्देव लोकं पितृलोकं च गच्छंस्ताभ्यां मार्गाभ्यां समेति गच्छति ॥ २९ ॥

**शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ॥**
**एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥ २६ ॥**

शुक्लेति । शुक्लकृष्णे शुक्ला च कृष्णा च शुक्लकृष्णे ज्ञानप्रकाशकत्वात् शुक्ला तदभावात् कृष्णा, एते शुक्लकृष्णे हि गती जगत इत्यधिकृतानां ज्ञानकर्मणोर्न जगतः सर्वस्यैवैते गती संभवतः शाश्वते नित्ये संसारस्य नित्यत्वान्नित्ये मते अभिप्रेते तत्रैकया शुक्लया यात्यनावृत्तिमावृत्तिमन्ययेतरयावर्तते पुनर्भूयः ॥ २६ ॥

आ० टी० । रात्र्यादौ मृतानां ब्रह्मविदामब्रह्मप्राप्तिशङ्कानिवृत्त्यर्थमभिमानिदेवताग्रहणाय मार्गयोर्नित्यत्वमाह **शुक्लेति** । ज्ञानप्रकाशकत्वाद्विद्याप्राप्यत्वादर्चिरादिप्रकाशोपलक्षितत्वाच्च शुक्ला देवयानाख्या गतिस्तदभावाज् ज्ञानप्रकाशकत्वाभावाद्धूमाद्यप्रकाशोपलक्षितत्वादविद्याप्राप्यत्वाच्च कृष्णा पितृयानलक्षणा गतिस्तयोर्गत्योः श्रुतिस्मृतिप्रसिद्धयर्थो हिशब्दः । जगच्छब्दस्य ज्ञानकर्माधिकृतविषयत्वेन संकोचे हेतुमाह **न जगत इति** । अन्यथा ज्ञानकर्मोपदेशानर्थक्यादित्यर्थः । तयोर्नित्यत्वे हेतुमाह **संसारस्येति** । मार्गयोर्यावत् संसारभावित्वे फलितमाह **तत्रेति** । क्रममुक्तिरनावृत्तिः, भूयो भोक्तव्यकर्मक्षये शेषकर्मवशादित्यर्थः ॥ २६ ॥

प० टी० । तदेवं निवृत्तिकर्मोपासनया क्रममुक्तिं तथा काम्यकर्मभिः स्वर्गभोगानन्तरमावृत्तिमुक्त्वेदानीमुपसंहरन्नस्पष्टमाचष्टे **शुक्लकृष्णे इति** । शुक्लार्चिरादिगतिः प्रकाशरूपिणी कृष्णा धूमादिगतिस्तमोरूपिणी एते गती मार्गौ ज्ञानकर्माधिकारिणो जगतः शाश्वते अनादी संमते संसारस्यानादित्वात् । तयोरेकया शुक्लयानावृत्तिं मोक्षं गच्छति । अन्यया कृष्णया तु पुनरावर्तते ॥ २६ ॥

**नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ॥**
**तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥**

नैते इति । नैते यथोक्ते सृती मार्गौ पार्थ जानन् संसारायैकान्या मोक्षाय चेति योगी न मुह्यति न कश्चन कश्चिदपि तस्मात् सर्वेषु कालेषु योगयुक्तः समाहितो भवार्जुन ॥ २७ ॥

आ० टी० । गतेरुपास्यत्वाय तद्विज्ञानं स्तौति **नैते इति** । योगस्य मोहापोहकत्वे फलितमाह **तस्मादिति** । ज्ञानप्रकारमनुवदति **संसारायेति** । मोक्षाय क्रममुक्त्यर्थमित्यर्थः । **योगी** ध्याननिष्ठो गतिमपि ध्यायन्नैव मुह्यति केवलं कर्म दक्षिणमार्गप्रापकं कर्तव्यत्वेन न **प्रत्येतीत्यर्थः** । योगस्यापुनरावृत्तिफलत्वे नित्यकर्तव्यत्वं सिद्धमित्युपसंहरति **तस्मादिति** ॥ २७ ॥

प० टी० । अथ मार्गज्ञानफलमाह **नैते इति** । भो पार्थ योगी सन्नेते सृती मार्गौ जानन्

कांश्चिदपि न मुह्यति सुखबुद्ध्या स्वर्गादिसुखं न कामयते । किं त्वात्मनिष्ठ एव भवति । तस्मात्सर्वेषु कालेषु भोजनादिसमयेष्वपि योगयुक्तो जीवब्रह्मणोरैक्ये परिणिष्ठितो भव ॥ २७ ॥

**वेदेषु यज्ञेषु तपःसु चैव दानेषु यत्पुण्यफलं प्रदिष्टम् ॥**
**अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम्॥२८॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे तारकब्रह्मयोगो नामाष्टमोऽध्यायः ॥ ८ ॥

शृणु योगस्य माहात्म्यं वेदेष्विति । वेदेषु सम्यगधीतेषु यज्ञेषु च साद्गुण्येनानुष्ठितेषु तपःसु च सुतप्तेषु दानेषु च सम्यग्दत्तेषु यदेतेषु पुण्यफलं प्रदिष्टं शास्त्रेणात्येत्यतीत्य गच्छति तत् सर्वं फलजातमिदं विदित्वा सप्तप्रश्ननिर्णयद्वारेणोक्तं सम्यगवधार्यानुष्ठायेह योगी परमुत्कृष्टमैश्वरं स्थानमुपैति प्रतिपद्यते, आद्यमादौ भवं कारणं ब्रह्मेत्यर्थः ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यपूज्यपादश्रीशंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये ब्रह्माक्षरनिर्देशो नामाष्टमोऽध्यायः ॥ ८ ॥

आ० टी० । श्रद्धाविवृद्ध्यर्थं योगं स्तौति शृण्विति । पवित्रपाणित्वप्राङ्मुखत्वादिसाहित्यमध्ययनस्य सम्यक्त्वमङ्गोपाङ्गोपेतत्वमनुष्ठानस्य साद्गुण्यं तपसां शास्त्रोक्तानां सुतप्तत्वं मनोबुद्ध्याद्यैकाग्र्यपूर्वकत्वं दानस्य च सम्यक्त्वं देशकालपात्रानुगुणत्वमिदं विदित्वेत्यत्रेदंशब्दार्थमेव स्फुटयति सप्तेति । यद्यपि 'किं तद् ब्रह्म' इत्यादौ 'अधियज्ञः कथं कोऽत्र' इत्यत्र प्रश्नद्वयं प्रतिभासानुसारेण कैश्चिदुक्तं तथापि प्रतिवचनालोचनायां द्वित्वप्रतीत्यभावात् प्रकारभेदविवक्षया चशब्दद्वयस्य प्रतिनियतत्वान्न सप्तेति विरुध्यते । न चेदं वेदनं मायान्तकं किंत्वनुष्ठानपर्यन्तमित्याह सम्यगिति । प्रकृतो ध्याननिष्ठो योगीत्युच्यते । ऐश्वरं विष्णोः परमं पदं तदेव तिष्ठत्यस्मिन्नशेषमिति स्थानं योगानुष्ठानादशेषफलातिशायि मोक्षलक्षणं फलं क्रमेण लब्धुं शक्यमिति भावः । तदनेन सप्तप्रश्नप्रतिवचनेन योगमार्गं दर्शयता ध्येयत्वेन तत्पदार्थो व्याख्यातः ॥ २८ ॥

इत्यानन्दगिरिकृतगीताटीकायामष्टमोऽध्यायः ॥ ८ ॥

प० टी० । अथ सर्वोपायापेक्षया ज्ञानयोगिन एवोत्तमपदप्राप्तिर्नान्यस्येत्याह वेदेष्विति । वेदेष्वध्ययनादिभिर्योगेषु ज्योतिष्टोमादिषु तपस्सु कृच्छ्रचान्द्रायणादिषु दानेषु तुलाभारादिषु यद्धूममार्गप्रापकं पुण्यफलं प्रदिष्टं तद्योगी विदित्वा ज्ञानी भूत्वा सर्वमप्यतिक्रम्याद्यं परमुत्कृष्टं स्थानं प्रागुक्तं विष्णोः पदं प्राप्नोति ॥ २८ ॥

अथाध्यायतात्पर्यम्—गृह्णत्यात्मप्रकाशान्निजविषयमतोऽध्यात्ममत्रेन्द्रियं स्यात्सूर्याद्यं तत्प्रवृत्ति

प्रजनयति ततश्चाधिदैवंतदुक्तम् । रूपाद्यं चाधिभूतं यदनुगतमनुध्येयमात्मस्वरूपं तेनान्ते तस्य तिष्ठाम्यहमभिमुखमित्यष्टमे स्पष्टमाह ॥ ८ ॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां परमार्थप्रपायां सप्तप्रश्नार्थनिर्णयो नामाष्टमोऽध्यायः ॥ ८ ॥

इत्यष्टमाध्यायः ॥ ८ ॥

---

# अथ
# नवमाध्यायः ।

## श्रीभगवानुवाच ।

**इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ॥**
**ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥**

अष्टमे नाडीद्वारेण धारणायोगः सगुण उक्तस्तस्य च फलमग्न्यर्चिरादिक्रमेण कालान्तरे ब्रह्मप्राप्तिलक्षणमेवानावृत्तिरूपं निर्दिष्टं तत्रानेनैव प्रकारेण मोक्षप्राप्तिफलमधिगम्यते नान्यथेति तदाशङ्काव्यावित्सया भगवानुवाच इदमिति । इदं ब्रह्मज्ञानं वक्ष्यमाणमुक्तं च पूर्वेष्वध्यायेषु तद्बुद्धौ संनिधीकृत्येदमित्याह, तुशब्दो विशेषनिर्धारणार्थः, इदमेव तु सम्यग्ज्ञानं साक्षान्मोक्षप्राप्तिसाधनं 'वासुदेवः सर्वमिति' "आत्मैवेदं सर्वम्" "एकमेवाद्वितीयम्" इत्यादिश्रुतिस्मृतिभ्यो "नान्यदथ येऽन्यथातो विदुरन्यराजानस्तेऽक्षय्यलोका भवन्ति" इत्यादिश्रुतिभ्यश्च ते तुभ्यं गुह्यतमं गोप्यतमं प्रवक्ष्यामि कथयिष्याम्यनसूयवेऽसूयारहिताय । किं तज्ज्ञानं किंविशिष्टं विज्ञानसहितमनुभवयुक्तं यज्ज्ञानं ज्ञात्वा प्राप्य[2] मोक्ष्यसेऽशुभात् संसारबन्धनात् ॥ १ ॥

आ० टी० । अतीतेनागामिनोऽध्यायस्यागतार्थत्वं वक्तुं वृत्तमनुवदति **अष्टम इति** । नाडी सुषुम्नाख्या धारणाख्येनाङ्गेन युक्तो योगः सगुणः सर्वद्वारसंयमनादिगुणस्तेन सहित इत्यर्थः । तत्फलोक्त्यर्थमनन्तराध्यायारम्भमाशङ्क्याह **तस्य चेति** । अग्निर्र्चिरित्यादिनोपलक्षितेन क्रमवता देवयानेन यथेति यावत् । ज्ञानानन्तरमेव यथोक्तफललाभादलमनेन मार्गेणेत्याशङ्क्याह **कालान्तर इति** । अर्चिरादिमार्गेण ब्रह्मप्राप्तौ मुक्तेर्मार्गायत्तत्वात् "नतस्य" इत्यादिश्रुतिविरोधः स्यादित्याशयेन शङ्कते **तत्रेति** । वृत्तोऽर्थः सप्तम्यर्थः । उक्ताशङ्कानिवृत्त्यर्थमनन्तराध्यायमुत्थापयति **तदाशङ्केति** । संप्रयुक्तत्वेनापरोक्षत्वाभावेऽपि पूर्वोत्तरग्रन्थालोचनया बुद्धिसंनिधानादिशब्देन ब्रह्मज्ञानं गृहीतमित्याह **तद्बुद्धाविति** । प्रकृताज्ज्ञानाज्ज्ञानस्य वैशिष्ट्यावद्योती तुशब्द इत्याह **तुशब्द इति** । निपातार्थमेव स्फुटयति **इदमेवेति** । तस्मिन्नर्थे संवादकत्वेन श्रुतिस्मृती दर्शयति **वासुदेव इति** । अद्वैतज्ञानवद् द्वैतज्ञानमपि केषांचिन्मोक्षहेतुरित्याशङ्क्याह **नान्यदिति** । द्वैतज्ञानं मोक्षाय न क्षम-

---

१ व्यावृत्तीच्छया–पा० । ल७ पु. २ प्राप्य- लि. पु. नास्ति ।

मित्यत्र श्रुतिमुदाहरति अथेति । अविद्याप्रकरणोपक्रमार्थोऽथशब्दः, अतो द्वैतादन्यथा भिन्नत्वेनेत्यर्थः । विदुस्तत्त्वमिति शेषः । द्वैतस्य दुर्निरूपत्वेन कल्पितत्वात् तज्ज्ञानं रज्जुसर्पादिज्ञानतुल्यत्वान्न क्षेमप्राप्तिहेतुरिति चकारार्थः । असूया गुणेषु दोषाविष्करणं तद्रहिताय ज्ञानाधिकृतायेत्यर्थः । ज्ञानं ब्रह्म चैतन्यं तद्विषयं वा प्रमाणज्ञानं तस्य तेनैव विशेषितत्वानुपपत्तिमाशङ्क्य व्याकरोति अनुभवेति । विज्ञानमनुभवः साक्षात्कारस्तेन सहितमित्यर्थः । उक्तज्ञानं प्राप्तस्य किं स्यादित्याशङ्क्याह यज्ज्ञानमिति ॥ १ ॥

प० टी० । एवं पूर्वाध्याये 'भूतग्रामः स एवायम्' इत्यादिवाक्यैर्दृश्यप्रपञ्चजातस्य नश्वरत्वगर्भितं मिथ्यात्वं दर्शयित्वेदानीं तदेवोपपत्त्या दृढीकर्तुं तथा योगवैभवतः स्वस्य सत्यत्वं दर्शयितुं नवमाध्यायप्रवृत्तिः । तत्र प्रथमं वक्ष्यमाणप्रमेयस्यातिरहस्यत्वेन दुर्लभत्वमाह इदमित्यादित्रिभिः । कृपया वक्तुं प्रवृत्ते मय्यनसूयवे देहधारित्वादिदोषदृष्टिरहिताय ते तुभ्यं विज्ञानसहितं ज्ञानं वक्ष्यामि । ज्ञानं शास्त्राचार्योपदिष्टं विज्ञानमनुभवरूपम् । यदिदं गुह्यतममप्रकाश्यप्रमेयं स्वधर्माचरणादि ततोऽपि देहादिव्यतिरिक्तात्मस्वरूपं गुह्यतरं ततोऽपि परमात्मनः साक्षाद्दर्शनं गुह्यतमम् । तदेवाह यदिति । यज्ज्ञात्वाशुभाद्दुःखप्रदात्प्रपञ्चान्मोक्ष्यसे परमात्मप्रतीतौ प्रपञ्चातीतो भविष्यसि ॥ १ ॥

**राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ॥**
**प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥**

तच्च स्तौति राजविद्येति । राजविद्या विद्यानां राजा दीप्त्यतिशयत्वाद् दीप्यते हीयमतिशयेन ब्रह्मविद्या सर्वविद्यानां राजगुह्यं तथा गुह्यानां राजा पवित्रं पावनमिदमुत्तमं सर्वेषां पावनानां शुद्धिकारणानामिदं ब्रह्मविज्ञानमुत्कृष्टतममनेकजन्मसहस्रसंचितमपि धर्माधर्मादि समूलं कर्म क्षणमात्राद्भस्मीकरोति यतोऽतः किं तस्य पावनत्वं वक्तव्यम् । किं च प्रत्यक्षावगमं प्रत्यक्षेण सुखादेरिवावगमो यस्य तत् प्रत्यक्षावगममनेकगुणवतोऽपि धर्मविरुद्धत्वं दृष्टं श्येनयाग इव न तथात्मज्ञानं धर्मविरोधि किंतु धर्म्यं धर्मादनपेतमेवमपि स्याद् दुःसंपाद्यमित्यत आह सुसुखं कर्तुं यथा रत्नविवेकविज्ञानं तत्राल्पायासानां कर्मणां सुखसंपाद्यानामल्पफलत्वं दृष्टं दुष्कराणां च महाफलत्वं दृष्टमितीदं तु सुखसंपाद्यत्वात् फलक्षयाद् व्येतीति प्राप्तौ तत्राहाव्ययं नास्य फलतः कर्मवद् व्ययोऽस्तीत्यव्ययमतः श्रद्धेयमात्मज्ञानम् ॥ २ ॥

आ० टी० । तदाभिमुख्यसिद्धये तज्ज्ञानं स्तौति तच्चेति । ब्रह्मविद्या विद्यानां राजा श्रेष्ठेत्यत्र हेतुमाह दीप्तीति । कुतो ब्रह्मविद्याया विद्यान्तरेभ्यो दीप्त्यतिशयवत्त्वं तदाह दीप्यते हीति । दृश्यते हि विद्वदन्तरेभ्यो लोके पूजातिरेको ब्रह्मविदामिति भावः । उत्कृष्टतमं शुद्धिकारणं ब्रह्मज्ञानमित्येतदुपपादयति अनेकेति । तत्र श्रुतिस्मृती प्रमाणयितव्ये न शास्त्रैकगम्यमिदं ज्ञानं किंतु प्रत्यक्षप्रमेयमित्याह किंचेति । प्रत्यक्षमवगम्यमानमस्मिन्निति तथा, यद्वावगम्यत इत्यवगमः फलं प्रत्यक्षोऽवगमोऽस्येति दृष्टफलत्वं ज्ञानस्योच्यते । धर्म्यमित्येतद्व्याकरोति अनपेतमिति । धर्मस्येव तस्य क्लेशसाध्यत्वमाशङ्क्याह एवमपीति । तत्र विषयं विवेकज्ञानं संप्रयोगादुप-

देशापेक्षादनायासेन दृष्टं तथेदं ब्रह्मज्ञानमित्याह यथेति । अव्ययमितिविशेषणमाशङ्कापूर्वकं विवृणोति तत्रेत्यादिना । व्यवहारभूमिः सप्तम्यर्थः । ज्ञानस्याक्षयफलत्वे फलितमाह अत इति ॥ २ ॥

प० टी० । अथ प्रतिपाद्यप्रमेयस्यापि दुर्लभत्वं तारकत्वं चाह राजविद्येति । विद्यानामध्यात्मविद्यानां राजा तथा गुह्यानां गुह्यार्थानां राजातिश्रेष्ठमित्यर्थः । पवित्रं शोधकम् उत्तममुत्कृष्टतमम् आत्मप्राप्तावन्तरङ्गकारणम् प्रत्यक्षावगमम् प्रत्यक्षेण प्रतीत्यावगमयितुं योग्यम् धर्म्यं धर्मादनपेतं सर्वधर्मफलत्वात् कर्तुमनुष्ठातुं सुसुखं सुखेन शक्यम् न तु कायद्रव्यक्लेशजनकम् अव्ययमक्षयफलत्वात् ॥ २ ॥

**अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ॥**
**अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥**

अश्रद्दधाना इति । ये पुनरश्रद्दधानाः श्रद्धाविरहिता आत्मज्ञानस्य धर्मस्यास्य स्वरूपे तत्फले च नास्तिकाः पापकारिणोऽसुराणामुपनिषदं देहमात्रात्मदर्शनमेव प्रतिपन्ना असुतृपः पापाः पुरुषाः परंतपाप्राप्य मां परमेश्वरं मत्प्राप्तौ नैवाशङ्केति मत्प्राप्तिमार्गसाधनभेदभक्तिमात्रमप्यप्राप्येत्यर्थः । निवर्तन्ते निश्चयेनावर्तन्ते क्व मृत्युसंसारवर्त्मनि मृत्युयुक्तः संसारो मृत्युसंसारस्तस्य वर्त्म नरकतिर्यगादिप्राप्तिमार्गस्तस्मिन्नेव वर्तन्त इत्यर्थः ॥ ३ ॥

आ० टी० । आत्मज्ञानाख्ये धर्मे श्रद्धावतां तन्निष्ठानां परमपदप्राप्तिमुक्त्वा ततो विमुखानां संसारप्राप्तिमाह ये पुनरिति । आत्मज्ञानतत्फलयोर्नास्तिकानेव विशिनष्टि पापेति । उक्तानामात्मंभरीणां भगवत्प्राप्तिसंभावनाभावादप्राप्य मामित्यप्रसक्तप्रतिषेधः स्यादित्याशङ्क्याह मत्प्राप्ताविति ॥ ३ ॥

प०टी० । एवं चेत्तर्हि सर्वेऽपि मुक्ता भवेयुरित्याह अश्रद्दधाना इति । अस्य धर्मस्येति कर्मणि षष्ठीद्वयम् । इमं धर्ममश्रद्दधाना आस्तिक्यादननुष्ठातारः पुरुषा मामप्राप्य मृत्युसंसारवर्त्मनि निवर्तन्ते भूयः संसरन्ति ॥ ३ ॥

**मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ॥**
**मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥**

इति ज्ञानस्तुत्यार्जुनमभिमुखीकृत्याह मयेति । मया मम यः परो भावस्तेन ततं व्याप्तं सर्वमिदं जगदव्यक्तमूर्तिना न व्यक्ता मूर्तिः स्वरूपं यस्य मम सोऽहमव्यक्तमूर्तिस्तेन मयाव्यक्तमूर्तिना करणागोचरस्वरूपेणेत्यर्थः । तस्मिन्मय्यव्यक्तमूर्तौ स्थितानि मत्स्थानि सर्वभूतानि ब्रह्मादीनि स्तम्बपर्यन्तानि न हि निरात्मकं किंचिद्भूतं व्यवहारायावकल्पतेऽतो मत्स्थानि मयात्मनात्मवत्त्वेन स्थितान्यतो मयि स्थितानीत्युच्यते, तेषां भूतानामहमेवात्मेत्यतस्तेषु

स्थित इति मूढबुद्धीनामवभासतेऽतो ब्रवीमि न चाहं तेषु भूतेष्ववस्थितो मूर्तवत् संश्लेषाभावेनाकाशस्याप्यन्तरस्तमो ह्यहम् ॥ ४ ॥

**आ० टी०** । स्तुतिनिन्दाभ्यां ज्ञाननिष्ठां महीकृत्य ज्ञानं व्याख्यातुमारभते **स्तुत्येति** । सोपाधिकस्य व्याप्यसंभवमभिप्रेत्य विशिनष्टि **ममेति** । अनवच्छिन्नस्य भगवद्रूपस्य निरुपाधिकत्वमेव साधयति **करणेति** । व्याप्यव्यापकत्वेन जगतो भगवतश्च परिच्छेदमाशङ्क्याह **तस्मिन्निति** । तथापि भगवतो भूतानां चाधाराधेयत्वेन भेदः स्यादित्याशङ्क्याह **न हीति** । निरात्मकस्य व्यवहारानर्हत्वे फलितमाह **अत इति** । ईश्वरस्य भूतात्मत्वे तेषु स्थितिः स्यादित्याशङ्क्याह **तेषामिति** । तस्य तेषु स्थित्यभावं व्यवस्थापयति **मूर्तवदिति** ॥ ४ ॥

**प० टी०** । तदेवं वक्तव्यतया प्रस्तुतस्य राजविद्याराजगुह्याख्यधर्मस्य स्तुत्या स्तोतारमभिमुखीकृत्य तदेव ज्ञानं कथयति **मयेति द्वाभ्याम्** । इदमिदंत्वेन भासमानं पुनर्जगद्गत्वरं सर्वं नामरूपकर्मात्मकं दृश्यजातं मयाधिकरणरूपेण कृत्वा ततं विस्तारं प्राप्तं । किंभूतेन मयाव्यक्तमूर्तिना न व्यक्ता ज्ञाता मूर्तिः स्वरूपं यस्यैवंविधेनाज्ञातेन मया निमित्तभूतेन मदज्ञानान्मय्येवाविर्भूतम् अज्ञाततया शुक्त्या-रजतमिवेत्यर्थः । तदुक्तं वासिष्ठे—'मदज्ञानोदितं विश्वं मय्येव लयमागतम्' इति । अथ मयेतितृतीयया परमात्मनो जगत्कारणत्वे प्राप्ते तद्व्यतिरेकेण निषेधयति **मत्स्थानीति** । कारणं हि कार्यमभिव्याप्य तिष्ठतीति न्यायेन यद्यपि सर्वभूतानि मयि तिष्ठन्तीति प्रतिभाति तथापि तेषु भूतेष्वहं न व्यवस्थितः । यथा यद्यपि शुक्तौ रजतं प्रतीयते तथापि रजते शुक्त्यंशो न प्रतीयते । यदि प्रतीयेत तर्हि संभ्रम एव न स्यादित्यर्थः ॥ ४ ॥

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥**
**भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥**

नेति । न ह्यसंसर्गि वस्तु क्वचिदाधेयभावेनावस्थितं भवत्यत एवासंसर्गित्वान्मम न च मत्स्थानि भूतानि ब्रह्मादीनि पश्य मे योगं युक्तिघटनं मे ममैश्वरं योगमात्मानमीश्वरस्येदमैश्वरं माहात्म्यमित्यर्थः । तथा च श्रुतिरसंसर्गित्वादसंगतां दर्शयति "असंगो न हि सज्जते" इति इदं चाश्चर्यमन्यत् पश्य भूतभृदसंगोऽपि सन् भूतानि बिभर्ति न च भूतस्थो यथोक्तेन न्यायेन दर्शितत्वाद् भूतस्थत्वानुपपत्तेः। कथं पुनरुच्यते असौ ममात्मेति विभज्य देहादिसंघातं तस्मिन्नहङ्कारमध्यारोप्य लोकबुद्धिमनुस्मरन् व्यपदिशति ममात्मेति। न पुनरात्मन आत्मान्य इति लोकवदजानंस्तथा भूतभावनो भूतानि भावयत्युत्पादयति वर्धयति वा भूतभावनः ॥ ५ ॥

**आ० टी०** । संश्लेषाभावेऽपि किमिति नाधेयत्वमत आह **न हीति** । परमेश्वरस्य भूतेषु स्थित्यभावेऽपि भूतानां तत्र स्थितिरास्थितेति कुतोऽसंगत्वं तत्राह **अतएवेति** । न चेत्यत्र चकारोऽवधारणार्थः । भूतानामीश्वरेणैव स्थितिरित्यत्र हेतुमाह **पश्येति** । आत्मनोऽसंगत्वस्वरूपमित्यत्र प्रमाणमाह **तथा चेति**। असङ्गश्चेदीश्वरस्तर्हि कथं मत्स्थानि भूतानीत्युक्तं कथं च तथोक्तांश्च मत्स्थानीति तद्विरुद्धमुदीरितमित्याशङ्क्याह **इदंचेति** । तर्हि भूतसंबन्धः स्यादिति नेत्याह **न चेति** । यथोक्तेन

न्यायेन असङ्गत्वेनेति यावत्, असङ्गतया वस्तुतो भूतासंबन्धेऽपि कल्पनया तदविरोधान्न मिथोविरोधोऽस्तीति भावः । आत्मनः सकाशादात्मनोऽन्यत्वायोगात् कुतः संबन्धोक्तिरित्याशङ्क्याह **असाविति**। यथा लोको वस्तुतत्त्वमजानन् भेदमारोप्य ममायमिति संबन्धमनुभवति न तथेह संबन्धव्यपदेश आत्मनि स्वतो भेदाभावादतो भेदेऽसत्येव लोके संबन्धबुद्धिदर्शनमनुसरन् भगवानात्मनो देहादिसंघातं विभज्याहङ्कारं तस्मिन्नारोप्य असौ ममात्मेति भेदं व्यपदिशति तथा च संघातस्य ममेति व्यपदेशात्ततो निकृष्टस्य स्वरूपस्यात्मशब्देन निर्देशान्न भूतस्थोऽसावित्यर्थः । पूर्वोक्तासंगत्वाङ्गीकारेणैवात्मा भूतानि भावयतीत्याह **तथेति** ॥ ५ ॥

प० टी० । अथैतदेव प्रकटयन्नाह **न चेति** । च परं भूतानि मत्स्थानि न भवन्ति । तथा च पूर्वं मत्स्थानि सर्वभूतानीति यदुक्तं तत्र नेति निषेधेन प्रातिभासिकत्वं द्योतितम् । तथा च भ्रमनिवृत्तिकाले शुक्तिकायां रजतं नास्त्येव । तदुक्तम् 'सौम्याम्भसि यथा वीचिर्न चास्ति न च नास्ति च। तथा जगद्ब्रह्मणीदं शून्याशून्यपदं गतम्' इति । अथाधिकरणं विना भ्रमोत्पत्तिर्नास्तीत्याह **पश्येति** । दृश्यजाते प्रतीतेऽपि मे ऐश्वरं योगमीश्वरेण सह जात ऐश्वरो योग आध्यासिकः संबन्ध इति पश्य । तदेवाह **भूतभृदिति** । ममात्मा मत्स्वरूपं भूतभृदधिकरणरूपेण भूतानि बिभर्ति परं न भूतस्थोऽसंगत्वात् । न ह्याकाशे भूतानि तिष्ठन्त्याकाशो वा भूतेष्विति केनापि प्रतीयते । तथा ममात्मा भूतभावनो भूतानि भाव्यन्ते कल्प्यन्ते यस्मिन् स तथा ॥ ५ ॥

**यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ॥**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥**

यथोक्तेन श्लोकद्वयेनोक्तमर्थं दृष्टान्तेनोपपादयन्नाह यथेति । यथा लोके आकाशस्थित आकाशे स्थितो नित्यं सदा वायुः सर्वत्र गच्छतीति सर्वत्रगो महान् परिमाणतस्तथाकाशवत् सर्वगते मय्यसंश्लेषेणैव स्थितानि मत्स्थानीत्येवमुपधारय जानीहि ॥ ६ ॥

आ० टी० । सृष्टिस्थितिसंहाराणामसंगात्माधारत्वं 'मया ततमिदम्' इत्यादिश्लोकद्वयेनोक्तोऽर्थस्तद्दृष्टान्तेनोपपादयन्नादौ दृष्टान्तमाहेति योजना । सदेत्युत्पत्तिस्थितिसंहारकालो गृह्यते । आकाशादेर्महतोऽन्याधारत्वं कथमित्याशङ्क्याह **महानिति** । तथा सर्वगामित्वात् परिमाणतो महान् वायुराकाशे सदा तिष्ठति तथाकाशादीनि महान्त्यपि सर्वाणि भूतान्याकाशकल्पे पूर्णे प्रतीच्यसंगे परस्मिन्नात्मनि संश्लेषमन्तरेण स्थितानीत्यर्थः ॥ ६ ॥

प० टी० । अथासंश्लिष्टयोरप्याधाराधेयभावं दृष्टान्तेन द्रढयति **यथेति** । अवकाशं विनावस्थानानुपपत्तेर्नित्यमाकाशस्थितो महान् सर्वगोऽपि वायुर्निरवयवेनाकाशेन सह न संश्लिष्यते । तथा सर्वाणि भूतानि मयि वर्तमानान्यपि मयि न संश्लिष्यन्ते इत्युपधारय जानीहि । तदुक्तम् - 'यथा विशुद्ध आकाशे सहसैवाभ्रमण्डलम् । भूत्वा विलीयते तद्वदात्मनीहाखिलं जगद्' इति ॥ ६ ॥

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ॥**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७ ॥**

**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ॥**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥**

एवं वायुराकाश इव मयि स्थितानि सर्वभूतानि सर्वाणि भूतानि स्थितिकाले तानि सर्वभूतानि कौन्तेय प्रकृतिं त्रिगुणात्मिकामपरां निकृष्टां यान्ति मामिकां मदीयां कल्पक्षये ब्राह्मे प्रलयकाले पुनर्भूयस्तानि भूतान्युत्पत्तिकाले कल्पादौ विसृजाम्युत्पादयाम्यहं पूर्ववत् ॥ ७ ॥

एवमविद्यालक्षणां प्रकृतिं स्वां स्वीयामवष्टभ्य वशीकृत्य विसृजामि पुनः पुनः प्रकृतितो जातं भूतग्रामं भूतसमुदायमिमं वर्तमानं कृत्स्नं समग्रमवशमस्वतन्त्रमविद्यादिदोषैः परमवशीकृतं प्रकृतेर्वशात् स्वभाववशात् ॥ ८ ॥

आ॰ टी॰ । आकाशे वाय्वादिस्थितिवदाकाशादीनि भूतानि स्थितिकाले परमेश्वरे स्थितानि चेत्तर्हि प्रलयकाले ततोऽन्यत्र तिष्ठेयुरित्याशङ्क्याह **एवमिति**। प्रकृतिशब्दस्य स्वभाववचनत्वं व्यावर्तयति **त्रिगुणात्मिकामिति** । सा चापरेयमिति प्रागेव सूचितेत्याह **अपरामिति** । तस्याश्चेश्वराधीनत्वेनास्वातन्त्र्यमाह **मदीयामिति** । प्रलयकाले भूतानि यथोक्तां प्रकृतिं यान्ति चेदुत्पत्तिकालेऽपि ततस्तेषामुत्पत्तेरीश्वराधीनत्वं भूतसृष्टेन स्यादित्याशङ्क्याह **पुनरिति** ॥ ७ ॥

आ॰ टी॰ । तर्हि कीदृशी प्रकृतिः सा च कथं सृष्टावुपयुक्तेत्याशङ्क्याह **एवमिति** । संसारस्यानादित्वद्योतनार्थं पुनः पुनरित्युक्तम् । भूतसमुदायस्याविद्यास्मितादिदोषपरवशत्वे हेतुमाह **स्वभाववशादिति** ॥ ८ ॥

प॰ टी॰ । तदेवासंगत्वेऽपि जगत्कारणत्वं जगतश्च मिथ्यात्वसहचरितं नश्वरत्वं मायया कृत्वा भवतीत्याह **सर्वभूतानीति द्वाभ्याम्**। भो कौन्तेय कल्पक्षये कल्पप्रलये सर्वभूतानि मामिकां मत्संबन्धिनीं प्रकृतिं यान्ति । तथा कल्पादौ पुनस्तानि विसृजामि कुतः प्रकृतेर्वशात् प्राचीनकर्मनिमित्तस्वभावबलात् ॥ ७ ॥ ८ ॥

**न च मां तानि कर्माणि निबध्नन्ति धनंजय ॥**
**उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥**

तर्हि तस्यैव परमेश्वरस्य भूतग्रामं विषमं विदधतस्तन्निमित्ताभ्यां धर्माधर्माभ्यां संबन्धः स्यादितीदमाह भगवान् न च मामिति । न च मामीशं तानि भूतग्रामस्य विषमविसर्गनिमित्तानि कर्माणि निबध्नन्ति धनंजय तत्र कर्मणामसंबद्धत्वे कारणमाह उदासीनवदासीनं यथोदासीन उपेक्षकः कश्चित् तद्वदासीनमात्मनोऽविक्रियत्वमसंसक्तं फलसंगरहितमभिमानवर्जितमहं करोमीति तेषु कर्मस्वतोऽन्यस्यापि कर्तृत्वाभिमानाभावः फलसंगाभावश्चाबन्धकारणमन्यथा कर्मभिर्बध्यते मूढः कोशकारवदित्यभिप्रायः ॥ ९ ॥

आ० टी० । यदि प्राकृतं भूतग्रामं स्वभावादविद्यातन्त्रं विषमं विदधासि तर्हि तव विषमसृष्टिप्रयुक्तं धर्मादिमत्त्वमित्यनीश्वरत्वापत्तिरिति शङ्कते **तर्हीति** । तत्रेति सप्तम्या परमेश्वरो निरुच्यते । ईश्वरस्य फलसंगाभावात् कर्तृत्वाभिमानाभावाच्च कर्मासंबन्धवदीश्वरादन्यस्यापि तदुभयाभावो धर्माद्यसंबन्धे कारणमित्याह **अतोऽन्यस्येति** । यदि कर्मसु कर्तृत्वाभिमानो वा कस्यचित् कर्मफलसंयोगो वा स्यात्तत्राह **अन्यथेति** ॥ ९ ॥

प० टी० । नन्वेवं नानाविधानि कर्माणि कुर्वतस्तवापि जीववद्बन्धः कथं न स्यादित्याह **नचेति** । तानि सृष्ट्यादीनि कर्माणि मां न निबध्नन्ति । कर्मासक्तिर्हि बन्धहेतुः । अवाप्तसकलकामत्वान्मम नास्ति । किंभूतं मामुदासीनवदासीनं वर्तमानम् । ननूदासीनत्वे कर्तृत्वानुपपत्तेः कर्तृत्वे चोदासीनत्वानुपपत्तेरत उदासीनवदित्युक्तम् ॥ ९ ॥

**मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ॥**
**हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥ १० ॥**

तत्र भूतग्राममिमं विसृजाम्युदासीनवदासीनमिति च विरुद्धमुच्यते तत्परिहारार्थमाह मयेति । मया सर्वतो दृशिमात्रस्वरूपेणाविक्रियात्माध्यक्षेण मम माया त्रिगुणात्मिकाविद्यालक्षणा प्रकृतिः सूयत उत्पादयति सचराचरं जगत् । तथा च मन्त्रवर्णः "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" इति साक्षिमात्रेण हेतुना निमित्तेनानेनाध्यक्षत्वेन कौन्तेय जगत् सचराचरं व्यक्ताव्यक्तात्मकं विपरिवर्तते सर्वावस्थासु दृशिकर्मत्वापत्तिनिमित्ता हि जगतः सर्वा प्रवृत्तिरहमिदं भोक्ष्ये पश्यामीदं शृणोमीदं सुखमनुभवामि दुःखमनुभवामि तदर्थमिदं करिष्याम्येतदर्थमिदं करिष्य इदं ज्ञास्यामीत्याद्यवगतिनिष्ठावसानैव योऽस्याध्यक्षः । "परमे व्योमन्" इत्यादयश्च मन्त्रा एतमर्थं दर्शयन्ति । ततश्चैकस्य देवस्य सर्वाध्यक्षभूतचैतन्यमात्रस्य परमार्थतः सर्वभोगानभिसंबन्धिनोऽन्यस्य चेतनान्तरस्याभावे भोक्तुरन्यस्याभावात् किं निमित्तेयं सृष्टिरित्यत्र प्रश्नप्रतिवचने अनुपपन्ने "कोऽद्धा वेद क इह प्रावोचत् कुत आयातः कुत इयं विसृष्टिः" इत्यादिमन्त्रवर्णेभ्यो, दर्शितं च भगवताज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव इति ॥ १० ॥

आ० टी० । ईश्वरे स्रष्टृत्वमौदासीन्यं च विरुद्धमिति शङ्कते **तत्रेति** । पूर्वग्रन्थः सप्तम्यर्थः । विरोधपरिहारार्थमुत्तरश्लोकमवतारयति **तदिति** । तृतीयाद्वयं समानाधिकरणमित्यभ्युपेत्य व्याचष्टे **मयेत्यादिना** । प्रकृतिशब्दार्थमाह **ममेति** । तस्या अपि ज्ञानत्वं व्यावर्तयति **त्रिगुणेति** । पराभिप्रेतं प्रधानं व्युदस्यति **अविद्येति** । साक्षित्वे प्रमाणमाह **तथा चेति** । मूर्तित्रयात्मनो भेदं वारयति **एक इति** । अखण्डजाड्यं प्रत्याह **देव इति** । आदित्यवत्ताटस्थ्यं प्रत्यादिशति **सर्वभूतेष्विति** । किमिति तर्हि सर्वैर्नोपलभ्यते तत्राह **गूढ इति** । बुद्ध्यादिवत् परिच्छिन्नत्वं व्यवच्छिन-

त्ति **सर्वव्यापीति** । तर्हि नभोवदनात्मत्वं नेत्याह **सर्वभूतेति** । तर्हि तत्र तत्र कर्मतत्फलसंबन्धित्वं स्यात्तत्राह **कर्मेति** । सर्वाधिष्ठानत्वमाह **सर्वेति** । सर्वेषु भूतेषु सत्तास्फूर्तिप्रदत्वेन संनिधिर्वासोऽच्यते न केवलं कर्मणामेवायमध्यक्षोऽपि तु तद्वतामपीत्याह **साक्षीति** । दर्शनकर्तृत्वशङ्कां शातयति **चेतेति** । अद्वितीयत्वं केवलत्वम् । धर्माधर्मादिराहित्यमाह **निर्गुण इति** । किं बहुना सर्वविशेषशून्य इति चकारार्थः । उदासीनस्यापीश्वरस्य साक्षित्वमात्रं निमित्तीकृत्य जगदेतत् पौनःपुन्येन सर्गसंहारावनुभवतीत्याह **हेतुनेति** । कार्यवत्कारणस्यापि साक्ष्यधीना प्रवृत्तिरिति वक्तुं व्यक्ताव्यक्तात्मकमित्युक्तं, सर्वावस्थास्वित्यनेन सृष्टिस्थितिसंहारावस्था गृह्यन्ते । तथापि जगतः स्वर्गादिभ्यो भिन्ना प्रवृत्तिः स्वाभाविकी, नेश्वरायत्तेत्याशङ्क्याह **दृशीति** । न हि दृशा व्याप्यत्वं विना जडवर्गस्य कापि प्रवृत्तिरिति हिशब्दार्थः । तामेव प्रवृत्तिमुदाहरति **अहमित्यादिना** । भोगस्य विषयोपलम्भभावासंभवान्नानाविधां विषयोपलब्धिं दर्शयति **पश्यामीति** । भोगफलमिदानीं कथयति **सुखमिति** । विहितप्रतिषिद्धाचरणनिमित्तं सुखं दुःखं चेत्याह **तदर्थमिति** । न च विमर्शपूर्वकं विज्ञानं विनानुष्ठानमित्याह **इदमिति** । इत्याद्या प्रवृत्तिरिति संबन्धः । सा च प्रवृत्तिः सर्वा दृक्कर्मत्वमुररीकृत्यैव विवृणोतीत्युक्तं निगमयति **अवगतीति** । तत्रैव च प्रवृत्तेरवसानमित्याह **अवगतिरवसान इति** । परस्याध्यक्षत्वमात्रेण जगच्चेष्टेत्यत्र प्रमाणमाह **योऽस्येति** । अस्य जगतो योऽध्यक्षो निर्विकारः स परमे प्रकृष्टे हार्दे व्योम्नि स्थितो निर्विकारो न परमे प्रकृष्टे हार्दे व्योम्नि स्थितो दुर्विज्ञेय इत्यर्थः । ईश्वरस्य साक्षित्वमात्रेण स्रष्टृत्वे स्थिते फलितमाह **ततश्चेति** । किंनिमित्तास्येयं सृष्टिर्न तावद्भोगार्था परस्य परमार्थतो भोगासंबन्धित्वात्तस्य सर्वसाक्षिभूतचैतन्यमात्रत्वान्न चान्यो भोक्ता चेतनान्तराभावादीश्वरस्यैकत्वादचेतनस्याभोक्तृत्वान्न च सृष्टिरपवर्गार्था तद्विरोधित्वान्नैवं प्रश्नो वा तदनुरूपं प्रतिवचनं वा संयुक्तं परस्य मायानिबन्धने सर्गे तस्यानवकाशत्वादित्यर्थः । परस्यात्मनो दुर्विज्ञेयत्वे श्रुतिमुदाहरति **कोऽद्धेति** । तस्मिन् प्रवक्तापि संसारमण्डले नास्तीत्याह **क इहेति** । जगतः सृष्टिकर्तृत्वेन परस्य ज्ञेयत्वमाशङ्क्य कूटस्थात्ततो न सृष्टिर्जातेत्याह **कुत इति** । न हीयं विविधसृष्टिरन्यस्मादपि कस्माच्चिदुपपद्यतेऽन्यस्य वस्तुनोऽभावादित्याह **कुत इति** । कथं तर्हि सृष्टिरित्याशङ्क्याज्ञानाधीनेत्याह **दर्शितं चेति** ॥ १० ॥

**प० टी०** । अथैतदेवोपपादयति **मयेति** । मयाध्यक्षेणाधिष्ठात्रा कृत्वा प्रकृतिः सचराचरं विश्वं सूयते जनयति । अनेनैव मदधिष्ठानरूपेण हेतुना निमित्तभूतेनेदं जगद्विपरिवर्तते पुनः पुनर्जायते । सांनिध्यमात्रेणाधिष्ठातृत्वं कर्तृत्वमुदासीनत्वं चाविरुद्धमिति भावः । अत्रैतदुक्तं भवति । सत्याश्रयव्यतिरेकेणासत्यावस्थानमेव नोपपद्यते । शुक्तिकया विना रजतस्येवैवं सति रजतोत्पत्तिस्थितिविनाशान् शुक्तिर्न स्पृशति तद्वत्प्रकृतेऽपीत्यर्थः । अथादितो निरूपितार्थे ऋक्शाखीयश्रुतिसंदर्भः—"किं स्विदासीदधिष्ठानमारम्भणं कतमं स्वित्कथासीत् । यतो भूमिं जनयन्विश्वकर्मा विद्यामौर्णोन्महिना विश्वचक्षाः ॥ १ ॥ नासदासीन्नो सदासीत्तदानीं नासीद्रजो नोव्योमापरोयत् । किमावरीवः कुहकस्य शर्मन्नम्भःकिमासीद्गहनं गभीरम् ॥ २ ॥ न मृत्युरासीदमृतं न तर्हि न रात्र्या अन्हसीत्प्रकेतः । आनीदवा तं स्वधया तदेकं तस्माद्धान्यं न परः किं च न स ॥३॥" इति । आसां क्रमेण रावणभाष्यम्—किं स्विदासीदिति पूर्वमन्त्रे जगत्प्रलयकाले जगत्संहृत्य पश्चात्सिसृक्षायां द्यावापृथिव्योरुत्पादनवेलायामधिष्ठानं किं स्विदासीत् किं नु किंचिदित्यर्थः । तथारम्भणं कतमं स्विद् आरभ्यतेऽनेनेत्यारम्भणमुपादानकारणं कतमद्भवेत्तदपि नेत्यर्थः । यद्यपि संभवदारम्भणं कथमासीत्कथमभूत्किं सदसद्वा भवेदित्यर्थः । उभयमपि नोत्पद्यते । सच्चेदद्वैतत्वभङ्गः असच्चेत्तदात्मकयोर्द्यावापृथिव्योरुपादानानर्हत्वात् । "नान्यत्किं च न मिषत्" इत्यादिश्रुतेश्च । यतो यस्मादधिष्ठानादारम्भणाच्च विश्वचक्षाः सर्वद्रष्टा परमेश्वरो भूमिं जनयन् वर्तते तथा द्यां दिवं व्यौर्णोत् व्यवृणोत्सृष्टवान् । म-

हिना स्वमहित्वेन । अथैतस्य प्रश्नोत्तरस्य प्रतिपादिकां श्रुतिमाह नासदिति । अनया सृष्टेः प्राङ् निरस्तसमस्तप्रपञ्चलयावस्था निरूप्यते । प्रलयदशायामवस्थितं यदस्य जगतो मूलकारणं तदसच्छशविषाणवन्नीरूपाख्यं नासीत् । न हि तादृशात्कारणादस्य सतो जगत उत्पत्तिः संभवति तथा नो सदासीत् । परमार्थसतः परमात्मनोऽन्यत्सदस्तीत्युच्यमाने द्वैतत्वप्रसंगः । नापि व्यवहारसत् अग्रे व्यवहाराभावस्य वक्षमाणत्वात् । तस्मादुभयविलक्षणमनिर्वाच्यमेवासीदित्यर्थः । अथ व्यावहारिकसत्त्वं निषेधयति तदानीमिति । लोको रजांस्युच्यत इति यास्कः । अत्र सामान्यापेक्षमेकवचनम् । एवं व्यवहारसत्ता पृथिव्यादीनामभावादित्यर्थः । तथा व्योमान्तरिक्षं तदपि नासीत् । पर इति सकारान्तं परस्तादित्यर्थे वर्तते । व्योम्नः परस्ताद्द्युलोकप्रभृतिसत्यलोकान्तं यदस्ति तदपि नासीदित्यर्थः । अनेन ब्रह्माण्डमपि निषिद्धं भवति । यत एतद्भासमानं भूतजातं पूर्वं नासीत् किं तु शुक्तिकारजतवन्मध्यएवोत्पन्नमिति श्रुत्या निरूपितम् । नत्वासीदिति धातोस्तदानीमित्यव्ययस्य च भूतकालवाचित्वाद्व्योमादीनामसंभवेऽपि किंचित्कालआसीदितिचेन्न आनीदवातमिति श्रुत्या तस्यापि निषेधात् । अतः सकलमपि दृश्यजातं प्राङ्निरूपितसदसद्विलक्षणोपादानकं प्रातिभासिकमिति पर्यवसन्नम् । अथैतस्य ज्ञानैकनाश्यत्वेन प्रातिभासिकत्वं दृढीकुर्वन्नाह किमावरीव इति प्रागुक्तं दृश्यजातं शर्मन्निति शर्मण्यबाधिते ब्रह्मणि किमावरीवः किमावरकं भवति वा नेत्यर्थः । अनेन यत्सदसद्विलक्षणमासीत्तत्स्वाश्रयाव्यामोहकमित्युक्तम् । यथा कुहकस्यैन्द्रजालिकस्य गहनं गभीरमक्षोभ्यमम्भस्तेन मायया रचितमम्भो मध्य एवोत्पन्नं सत्कुहकस्यावरकं भवति वा नेत्यर्थः । किं च न मृत्युरिति । तदानीं शर्मणि केवलस्वरूपे मृत्युर्जन्ममरणात्मको बन्धोऽमृतं मोक्षो वा नासीत् । यथा सूर्ये रात्र्या अहश्च प्रकेतो ज्ञानं नास्ति तद्वत् । तर्हि किं त्वानीदिति । एकमवातमप्राणं शुद्धं ब्रह्मैवासीत् । "अप्राणो ह्यमना" इति श्रुतेः । तथा अप्राणमनामगोत्रमिति च । एवं तत्स्वधया स्वस्मिन् ध्रियते कल्पते सा स्वधा तया कृत्वासीत् कर्तृरूपेणासीदित्यत्र आनीदिति धातुः प्रयुक्तः । एवं मायाशबलितं सूत्रात्मसंज्ञमासीदित्युक्तम् । हेतिनिश्चयेन तस्मादन्यत्किं च किमपि नास नासीत् परस्तादग्रेऽवसानेपि तदेव ॥ १० ॥

**अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ॥**
**परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११ ॥**

अवेति । एवं मां नित्यशुद्धमुक्तस्वभावं सर्वजन्तूनामात्मानमपि सन्तमवजानन्त्यवज्ञां परिभवं कुर्वन्ति मां मूढा अविवेकिनो मानुषीं मनुष्यसंबन्धिनीं तनुं देहमाश्रितं मनुष्यदेहेन व्यवहरन्तमित्येतत् परं प्रकृष्टं भावं परमात्मतत्त्वमाकाशकल्पमाकाशादप्यन्तरतममजानन्तो मम भूतमहेश्वरं सर्वभूतानां महान्तमीश्वरं स्वमात्मानं ततश्च तस्य ममावज्ञानभावनेनाहता वराकास्ते ॥ ११ ॥

आ० टी० । सर्वाध्यक्षः सर्वभूताधिवासो नित्यमुक्तश्चेत्त्वं तर्हि किमिति त्वामेवात्मत्वेन भेदेन वा सर्वे न भजन्ते तत्राह एवमिति । विपर्यस्तबुद्धित्वं भगवदवज्ञायां कारणमित्याह मूढा इति । भगवतो मनुष्यदेहसंबन्धात्तस्मिन् विपर्यासः संभवतीत्याह मानुषीमिति । अस्मदादिवद्देहतादात्म्याभिमानं भगवतो व्यावर्तयति मनुष्येति । भगवन्तमवजानतामविवेके मूलाज्ञानं हेतुमाह परमिति । ईश्वरावज्ञानात् किं भवतीत्यपेक्षायां तदवज्ञानप्रतिबद्धबुद्धयः शोच्या भवन्तीत्याह ततश्चेति । भग-

वदवज्ञानादेव हेतोरवजानन्तस्ते जन्तवोवराकाः शोच्याः सर्वपुरुषार्थबाह्याः स्युरिति संबन्धः । तत्र हेतुं सूचयति तस्येति । प्रकृतस्य भगवतोऽवज्ञानमनादरणं निन्दनं वा तस्य भावनं पौनःपुन्यं तेना हतास्तज्जनितदुरितप्रभावात् प्रतिबद्धबुद्धय इत्यर्थः ॥ ११ ॥

**प० टी०** । अथ प्रागुक्तं स्वकीयमध्यक्षत्वं प्रकटयन् जगत्कारणीभूतमायागतं मौढ्यं जीवेष्वनुवर्तत इत्याह **अवजानन्तीति** । मम परमुत्कृष्टं भावं तत्त्वं प्रकटमप्यजानन्तो मूढाः सर्वभूतमहेश्वरं मामवजानन्त्यवमन्यन्ते । महच्छब्देन सर्वभूतनिवासत्वे सति तदन्तर्यामित्वेनेश्वरं नियन्तारं न गणयन्ति । कथमवाङ्मनसगोचरं चिन्मात्रं ज्ञास्यन्तीत्याह । **मानुषीमिति** । किंभूतं मां मानुषीं तनुमाश्रितम् । भक्तानुकम्पया ज्ञातुं सुलभां शुद्धसत्त्वमयीं मनोहारिणीं मनुष्याकारां मूर्तिमधिष्ठायाविर्भूतम् । तदुक्तम् "विश्वप्रकाशमपि योजनषट्सहस्रविस्तारमुक्तमपिभिर्यदि हार्कबिम्बम् । मर्त्यैर्वितास्तिमितमीक्षत एतदेव पश्यन्ति मर्त्यमिव विश्वविभुं विमूढाः" इति। **श्रुतिरपि ऋग्वेदे** । "मया सोऽन्नमत्ति यो विपश्यति यः प्राणिति यईंशृणोत्युक्तम् । अमन्तवो मां तउपक्षियन्ति श्रुधिश्रुतश्रद्धिवन्ते वदामि" इति। भाष्यम्-अमृणस्य ब्रह्मरूपस्य महर्षेः कन्यावाङ्नाम्नी ब्रह्मरूपिणी वदति। योऽन्नमत्ति स भोक्तृत्वशक्तिरूपया मयैव कृत्वान्नमत्ति तथा यो मनोभिरामं विषयं पश्यति । सादरमवलोकयति यश्च प्राणिति श्वासोच्छ्वासादिकं करोति य ईं अयं शृणोति स मयैव कृत्वा एवं सति य ईदृशीमन्तर्यामिरूपेणावस्थितामुपकारिणीं न जानन्ति ते माममन्तवोऽमन्यमाना अजानन्तो मद्विषयज्ञानरहिताः सन्त उपक्षियन्ति उपक्षीणाः संसारेण दीना यातायातयातनाभिर्दीना भवन्ति । हे श्रुतविश्रुतसखे श्रुधि मया वक्ष्यमाणं शृणु । किं तच्छ्रोतव्यम् । श्रद्धिवं श्रद्धिः श्रद्धा तया युक्तं श्रद्धानेन लभ्यमित्यर्थः । ईदृशं ब्रह्मात्मकं वस्तु ते वदामि ॥ ११ ॥

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ॥**
**राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२ ॥**

कथं मोघाशेति । मोघाशा वृथाशा आशिषो येषां ते मोघाशास्तथा मोघकर्माणो यानि चाग्निहोत्रादीनि तैरनुष्ठीयमानानि कर्माणि तानि च तेषां भगवत्परिभवात् स्वात्मभूतस्यावज्ञानान्मोघान्येव निष्फलानि कर्माणि भवन्तीति मोघकर्माणस्तथा मोघज्ञाना मोघं निष्फलं ज्ञानं येषां ते मोघज्ञाना ज्ञानमपि तेषां निष्फलमेव स्याद् विचेतसो विगतविवेकाश्च ते भवन्तीत्यभिप्रायः । किं च ते भवन्ति राक्षसीं रक्षसां प्रकृतिं स्वभावम् आसुरीमसुराणां च प्रकृतिं मोहिनीं मोहकरीं देहात्मवादिनीं श्रिता आश्रिताश्छिन्धि भिन्धि पिब खाद परस्वमपहरेत्येवंवदनशीलाः क्रूरकर्म कुर्वाणा भवन्तीत्यर्थः । "असूर्या नाम ते लोका" इति श्रुतेः ॥ १२ ॥

**आ० टी०** । भगवन्तमवजानतां प्रश्नपूर्वकं शोच्यत्वं विशदयति **कथमिति** । भगवन्निन्दापराणां न काचिदपि प्रार्थनार्थवतीत्याह **वृथेति** । ननु भगवन्तो निन्दन्तोऽपि नित्यं नैमित्तिकं वा कर्मानुतिष्ठन्ति, तदनुष्ठानाच्च तेषां प्रार्थनाः सार्था भाविष्यन्तीति नेत्याह **तथेति**।परिभवस्तिरस्करणं, अवज्ञानमनादरणम् । तेषामपि **शास्त्रार्थज्ञानवतां** तद्द्वारा प्रार्थनार्थवत्त्वमित्याशङ्क्याह **तथा मोघेति ।** तथापि यौक्तिकविवेकवशात्तत्प्रार्थनासाफल्यमित्याशङ्क्याह **विचेतस इति** । न केवलमुक्तविशेषण-

त्वमेव तेषां किंतु वर्तमानदेहपातादनन्तरं तत्तदतिक्रूरयोनिप्राप्तिश्च निश्चितेत्याह **किं चेति** । मोहकरीमिति प्रकृतिद्वयेऽपि तुल्यं विशेषणं, छिन्धि भिन्धि पिब खादस्वेति प्राणिहिंसारूपो रक्षसां स्वभावोऽसुराणां स्वभावस्तु न देहि नो जुहुधि परस्वमेवापहरेत्यादिरूपः, मोहो मिथ्याज्ञानम् । उक्तमेव स्फुटयति **छिन्धीति** ॥ १२ ॥

**प० टी०** । अथ तेषां मूढत्वमेव प्रकटयाति **मोघाशा इति** । मोघा निष्फला क्षुद्रदेवतोपासनया क्षणभङ्गुरा क्षुद्रफलाशा येषां ते, अत एव मद्विमुखत्वान्मोघानि सान्तानि कर्माणि येषां ते, तथा मोघं कुतर्काश्रितं ज्ञानं येषां ते विचेतसो विक्षिप्तचेतसः । अथ सर्वत्र हेतुमाह **राक्षसीमित्यादि** । राक्षसीं तामसीं हिंसाप्रचुरामासुरीं कामक्रोधदर्पबहुलां मोहिनीं बुद्धिभ्रंशकरीं प्रकृतिं स्वभावमाश्रिताः सन्तो मामवजानन्तीति पूर्वेणान्वयः । तदुक्तम्—'काचिद्वामोहमूर्तिः परपुरुषरता राक्षसी प्रादुरासीत्सा गर्भिण्यर्भकौघं विषममजनयत्पञ्चभूताभिधानम् । यात्येकं नीचमार्गैरतिजडमपरं धावतीतस्ततोऽन्यद्बाह्यान्तःशून्यमन्यद्दहति तदपरं किं पुनस्तत्समाजे' इति ॥ १२ ॥

**महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ॥**
**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥**

महेति । ये पुनः श्रद्दधाना भगवद्भक्तिलक्षणे मोक्षमार्गे प्रवृत्ता महात्मानस्त्वक्षुद्रचित्ता मामीश्वरं पार्थ दैवीं देवानां प्रकृतिं शमदमदयाश्रद्धादिलक्षणामाश्रिताः सन्तो भजन्ति सेवन्तेऽनन्यमनसोऽनन्यचित्ता ज्ञात्वा मां भूतादिं भूतानामाश्रयमादिकारणं वियदादीनां प्राणिनां चादिकारणमाश्रयमव्ययम् ॥ १३ ॥

**आ० टी०** । के पुनर्भगवन्तं भजन्ते तानाह **ये पुनरिति** । महान् प्रकृष्टो यज्ञादिभिः शोधित आत्मा सत्त्वं येषामिति व्युत्पत्तिमाश्रित्याह **अक्षुद्रेति** । तुशब्दोऽवधारणे । प्रकृतिं विशिनष्टि **शमेति** । अन्यस्मिन् प्रत्येकभूते मयि परस्मिन्नेव मनो येषामिति व्युत्पत्त्या व्याकरोति **अनन्यचित्ता इति** । अज्ञाते सेवानुपपत्तेः शास्त्रोपपत्तिभ्यामादौ ज्ञात्वा ततः सेवन्त इत्याह **ज्ञात्वेति** । **अव्ययमविनाशिनम्** ॥ १३ ॥

**प० टी०** । के तर्हि त्वामाराधयन्तीत्याशङ्क्य द्वेधा मदुपासकाः सन्तीत्याह **महात्मान इति** । महान् कामक्रोधजयशील आत्मा मनो येषां ते महात्मानो दैवीं मोक्षसाधनीभूतां प्रकृतिं स्वभावं श्रिताः सन्तोऽनन्यमनसोऽव्यभिचारिण्या भक्त्योपेता मद्भक्ता मां सगुणब्रह्मत्वेन भजन्ति ज्ञानिनस्तु मामव्ययमनाद्यन्तं भूतादिस्थूलप्रपञ्चकारणीभूतं निर्गुणब्रह्मरूपं ज्ञात्वा भजन्ति ॥ १३ ॥

**सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ॥**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४ ॥**

कथं सततमिति । सततं सर्वदा भगवन्तं ब्रह्मस्वरूपं मां कीर्तयन्तो यजन्तश्चेन्द्रियोपसंहारशमदमदयाहिंसादिलक्षणैर्धर्मैः प्रयतन्तश्च दृढव्रता दृढं

स्थिरमचाऽचल्यं व्रतं येषां ते दृढव्रता नमस्यन्तश्च मां हृदयेशयमात्मानं भक्त्या नित्ययुक्ताः सन्त उपासते सेवन्ते ॥ १४ ॥

आ० टी० । भजनप्रकारं पृच्छति **कथमिति** । तत्प्रकारमाह **सततमिति** । सर्वदेति श्रवणावस्था गृह्यन्ते, कीर्तनं वेदान्तश्रवणं प्रणवजपश्च, व्रतं ब्रह्मचर्यादि, नमस्यन्तो मां प्रति चेतसा प्रह्वीभवन्तो भक्त्या परेण प्रेम्णा नित्ययुक्ताः सन्तः सदा संयुक्ताः ॥ १४ ॥

प० टी० । अथ भक्तानां भजनप्रकारमाह **सततमिति** । सततं निरन्तरं कीर्तयन्तो मन्नामघोषं कुर्वन्तस्तथा दृढव्रता निश्चितसंकल्पाः सन्तो यतन्तः प्रयत्नं कुर्वन्तो भक्त्या न तु दम्भेन । मद्विभूतीर्मूर्तीर्वा नमस्यन्तो नमस्कारं कुर्वन्तो नित्ययुक्ता नियमवन्त उपासते ॥ १४ ॥

## ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ॥
## एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५ ॥

ते केन केन प्रकारेणोपासत इत्युच्यते ज्ञानेति । ज्ञानयज्ञेन ज्ञानमेव भगवद्विषयं यज्ञस्तेन ज्ञानयज्ञेन यजन्तः पूजयन्तो मामीश्वरं चान्येऽन्यामुपासनां परित्यज्योपासते तच्च ज्ञानमेकत्वेनैकमेव परं ब्रह्मेति परमार्थदर्शनेन यजन्त उपासते केचिच्च पृथक्त्वेनादित्यचन्द्रादिभेदेन स एव भगवान् विष्णुरादित्यादिरूपेणावस्थित इत्युपासते केचिद् बहुधावस्थितः स एव भगवान् सर्वतोमुखो विश्वरूप इति तं विश्वरूपं सर्वतोमुखं बहुधा बहुप्रकारेणोपासते ॥ १५ ॥

आ० टी० । उपासनप्रकारभेदप्रतिपित्सया पृच्छति **ते केनेति** । तत्प्रकारभेदोदीरणार्थं श्लोकमवतारयति **उच्यत इति** । इज्यते पूज्यते परमेश्वरोऽनेनेति प्रकृते ज्ञाने यज्ञशब्दः, ईश्वरं चेति चकारोऽवधारणे । देवतान्तरध्यानत्यागमपिशब्दसूचितं दर्शयति **अन्यामिति** । अन्ये च ब्रह्मनिष्ठामिति यावत् । ज्ञानयज्ञमेव विभजते **तच्चेति** । उत्तमाधिकारिणामुपासनमुक्त्वा मध्यमानामधिकारिणामुपासनप्रकारमाह **केचिच्चेति** । तेषामेवाहं यज्ञः स्मार्तः किंच स्वधाहं पितृभ्यो यद्दीयते तत्स्वधा तथाहमौषधं सर्वप्राणिभिर्यदद्यते । प्रकारान्तरेणोपासनमुदीरयति **केचिदिति** । बहुप्रकारेणाग्न्यादित्यादिरूपेणेति यावत् ॥ १९ ॥

प० टी० । अथ ज्ञानिनः कथं भजन्त इत्याह **ज्ञानयज्ञेनेति** । अन्ये च ज्ञानयज्ञेन सर्वत्रात्मदर्शनरूपेण मां यजन्त एकत्वेन स्थूलसमष्टिरूपेण पृथक्त्वेनेन्द्रादिविभूतिरूपेण बहुधा सर्वदेहेषु वा मां विश्वतोमुखं विश्वरूपमुपासते । श्रुतिश्च—"हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्" इति । भाष्यम्—एतत्सर्वं व्यष्टिरूपं मिलित्वा ऋतं बृहत् समष्टिरूपं सत्यं ब्रह्मैवास्ति । तदेवाह हंस इति । हंसो जीवो ब्रह्मैव तथा शुचौ ज्ञाने ज्ञेयत्वेनास्तीति शुचिषद् वसुः स्थूलप्रपञ्चरूपो विराडप्यन्तरिक्षसदाकाशे वर्तमानः सोऽपि । यद्वा वसुर्यज्ञः, तथा जुहोतीति होता सोऽपि ब्रह्मैव तथा वेदिषदुत्तरवेद्यां वर्तमानोऽतिथिरग्निः सोऽपि तथा दुरोणे यज्ञार्थस्थापिते द्रोणकलशे वर्तमानं दुरोणसत्, तथा नृषु मनुष्येषु तिष्ठतीति नृषद्वरेषु देवेषु तिष्ठतीति वरसत्, तथा ऋते प्राणे तिष्ठतीति ऋतसद्व्योम्नि तिष्ठतीति व्यो-

मसत्, तथाऽजा उदकजा जीवा गोजा भूमिजा ऋतजा वायुजा अद्रिजा पर्वतजाश्चेति सर्वं ब्रह्मरूपम् ॥ १९ ॥

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ॥
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥

यदि बहुभिः प्रकारैरुपासते कथं त्वामेवोपासत इत्यत आह अहमिति । अहं श्रौतकर्मभेदोऽहमेवाहं यज्ञः स्मार्तः । किं च स्वधान्नमहं पितृभ्यो यद्दीयते तत् स्वधा तथाहमौषधं सर्वप्राणिभिर्यदद्यते तदौषधशब्दवाच्यव्रीहियवादिसाधनमथवा स्वधेति सर्वप्राणिसाधारणमन्नमौषधमिति व्याध्युपशमार्थं भेषजं मन्त्रोऽहं यत् पितृभ्यो देवताभ्यश्च हविर्दीयतेऽहमेवाज्यं हविश्चाहमग्निर्यस्मिन् हूयते सोऽप्यग्निरहमेवाहं हुतं हवनकर्म च ॥ १६ ॥

आ० टी० । भगवदेकविषयमुपासनं तर्हि न सिध्यतीति शङ्कते यदीति । प्रकारभेदमादाय ध्यायन्तोऽपि भगवन्तमेव ध्यायन्ति तस्य सर्वात्मकत्वादित्याह अत आहेति । क्रतुयज्ञशब्दयोरनयोरपौनरुक्त्यं दर्शयन् व्याचष्टे श्रौत इति । क्रियाकारकफलज्ञानं भगवदतिरिक्तं नास्तीति समुदायार्थः ॥ १६ ॥

प० टी० । अथ सर्वरूपत्वं प्रपञ्चयति अहमिति चतुर्भिः । तत्रापि बाह्यकर्मरूपत्वमादौ वदति । क्रतुः श्रौतो ज्योतिष्टोमादिर्यज्ञः स्मार्तः पञ्चयज्ञादिः स्वधा पित्रर्थं श्राद्धादिरौषधमोषधिप्रभवं भेषजमन्नं वा मन्त्रः पुरोऽनुवाक्यादिराज्यं होमसाधनमग्निराहवनीयादिर्हुतं होम एतत्सर्वमहमेव ॥ १६ ॥

पिताहमस्य जगतो माता धाता पितामहः ॥
वेद्यं पवित्रमोङ्कार ऋक्साम यजुरेवच ॥ १७ ॥

किंच पितेति । पिता जनयिताहमस्य जगतो माता जनयित्री धाता कर्मफलस्य प्राणिभ्यो विधाता पितामहः पितुः पिता वेद्यं वेदितव्यं पवित्रं पावनमोङ्कारश्च ऋक्साम यजुरेव च ॥ १७ ॥

आ० टी० । इतश्च भगवतः सर्वात्मकत्वमनुमन्तव्यमित्याह किं चेति । पवित्रं पूयतेऽनेनेति व्युत्पत्त्या परिशुद्धिकारणं पुण्यं कर्मेत्याह पावनमिति । वेदितव्ये ब्रह्मणि वेदनसाधनमोङ्कारस्तत्र प्रमाणमृगादि च चकारादथर्वाङ्गिरसो गृह्यन्ते ॥ १७ ॥

प० टी० । किं च सूक्ष्मप्रपञ्चरूपोऽप्यहमस्मीत्याह द्वाभ्यां पितेति । पिता लिङ्गरूपो बीजप्रदत्वान्माता मानाश्रयत्वाद्धाता कर्मफलदाता वेद्यं ज्ञेयं वस्तु पवित्रं शोधकम् ॐकारो वाग्जोऽवाग्जश्चाहमृगादिवेदत्रयी चाहमेव ॥ १७ ॥

गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ॥
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १८ ॥

किंच गतिरिति। गतिः कर्मफलं भर्ता पोष्टा प्रभुः स्वामी साक्षी प्राणिनां कृताकृतस्य, निवासो यस्मिन् प्राणिनो निवसन्ति शरणमार्तानां प्रपन्नानामार्तिहरः सुहृत् प्रत्युपकारानपेक्ष उपकारी प्रभव उत्पत्तिर्जगतः प्रलयः प्रलीयते यस्मिन्निति प्रलयस्तथा स्थानं तिष्ठत्यस्मिन्निति निधानं निक्षेपः कालान्तरोपभोग्यं बीजं प्ररोहकारणं प्ररोहधर्मिणामव्ययं यावत् संसारभावित्वादव्ययं नह्यबीजं किंचित् प्ररोहति नित्यं च प्ररोहदर्शनाद्बीजसंततिर्न व्येतीत्येव गम्यते ॥ १८ ॥

आ० टी० । भगवतः सर्वात्मकत्वे हेत्वन्तरमाह **किं चेति**। गम्यत इति प्रकृतिविलयपर्यन्तं कर्मफलं गतिरित्याह **कर्मेति** । पोष्टा कर्मफलस्यैव प्रदाता । कार्यकरणप्रपञ्चस्याधिष्ठानमित्याह **निवास इति**। शीर्यते दुःखमस्मिन्निति व्युत्पत्तिमाश्रित्याह **शरणमिति** । प्रभवत्यस्माज्जगदिति व्युत्पत्तिमादायोक्तम् **उत्पत्तिरिति**। कारणस्य कथमव्ययत्वमित्याशङ्क्याह **यावदिति** । कारणमन्तरेणापि कार्यं कदाचिदुदेष्यति किं कारणेनेत्याशङ्क्याह **न हीति** । मा भूत्तर्हि संसारदशायामेव कार्योत्पत्तिरित्याशङ्क्याह **नित्यं चेति** । कारणव्यक्तेर्नाशमङ्गीकृत्य तदन्यतमव्यक्तिशून्यत्वं पूर्वकालस्य नास्तीति सिद्धवत्कृत्य विशिनष्टि **बीजेति** ॥ १८ ॥

प० टी० । किं च **गतिरिति** । गम्यतेऽनेनेति गतिश्चरणव्यापारहेतुर्भर्ता पोषयिता प्रभुर्नियन्ता साक्षी शुभाशुभद्रष्टा निवासो भोगस्थानं शरणं रक्षकः सुहृत्प्रियतमः प्रकृष्ट उत्तमो भवश्चरमदेहो यस्मात् प्रकर्षेण लयोऽपुनर्भवो यस्मात् निधीयते यस्मिन्निति निधानं बीजं कारणं तच्चाव्ययमविनाशि । न तु व्रीह्यादिबीजवन्नश्वरमित्यर्थः ॥ १८ ॥

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ॥
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥

किं च तपामीति । तपाम्यहमादित्यो भूत्वा कैश्चिद्रश्मिभिस्तपाम्यहं वर्षं कैश्चिद्रश्मिभिरुत्सृजाम्युत्सृज्य पुनर्निगृह्णामि कैश्चिद्रश्मिभिरष्टभिर्मासैः पुनरुत्सृजामि प्रावृष्यमृतं चैव देवानां मृत्युश्च मर्त्यानां सद् यस्य यत् संबन्धितया विद्यमानं तद्विपरीतमसच्चैवाहमर्जुन न पुनरत्यन्तमेवासद्भगवान् स्वयं कार्यकारणे वा सदसती ये पूर्वोक्तैर्विद्यतिप्रकारैरेकत्वपृथक्त्वादिविज्ञानैर्यज्ञैर्मां पूजयन्त उपासते ज्ञानविदस्ते यथाविज्ञानं मामेव प्राप्नुवन्ति ॥ १९ ॥

आ० टी० । इतश्च सर्वात्मत्वे भगवतो न विवदितव्यमित्याह **किं चेति** । 'आदित्याज्जायते वृष्टिः' इति स्मृतिमवष्टभ्य व्याचष्टे **कैश्चिदिति** । वर्षोत्सर्गनिग्रहावेकस्यैकस्मिन् काले विरुद्धावित्याशङ्क्याह **अष्टभिरिति** । ऋतुभेदेन वर्षस्य निग्रहोत्सर्गावेककर्तृकावविरुद्धावित्यर्थः । यस्य कारणस्य संबन्धत्वेन यत् कार्यमभिषज्यते तदिह सदित्युच्यते कारणसंबन्धेनानभिव्यक्तं कारणमेवानभिव्यक्तनामरूपमसदिति व्यवह्रियते तदेतदाह **सदिति** । शून्यवादं व्युदस्यति **न पुनरिति** । भगवतोऽत्यन्तासत्त्वे कार्यकारणकल्पना निराधिष्ठाना न तिष्ठेदित्यर्थः । तर्हि यथाश्रुतं कार्यस्य सत्त्वं

कारणस्य चासत्त्वमास्थेयमित्याशङ्क्य वाशब्देन निषेधति **कार्येति** । तर्हि कार्यस्यात्यन्तिकं सत्त्वं वाचारम्भणश्रुतेनापीतरस्यात्यन्तिकमसत्त्वं "कुतस्तु खलु" इत्यादिश्रुतेरित्यर्थः । उक्तैर्ज्ञानियज्ञैर्भगवदभिध्यानाभिनिविष्टबुद्धीनां किं फलमित्याशङ्क्य सद्यो वा क्रमेण वा मुक्तिरित्याह **ये इति** ॥ १९ ॥

**प० टी०** । अथ स्थूलप्रपञ्चरूपोऽप्यहमेवेत्याह **तपामीति** । कदाचित्प्रलयकाले द्वादशादित्यरूपेण तपामि भूतजातं शोषयामि । श्रुतिरपि नारायणोपनिषत्सु "आर्द्रं ज्वलति ज्योतिरहमस्मि ज्योतिर्ज्वलति ब्रह्माहमास्मि" इत्यादि । भाष्यम्—प्रलयकाले आर्द्रं शुक्रशोणितोद्भवं प्राणिजातं ज्वलति द्वादशादित्यरूपेण संकर्षणमुखानलेन दह्यते तदा ज्योतीरूपस्तैजसो विराडस्मि अथ यदा ज्योतिः सोऽपि ज्वलति तदा लिङ्गरूपं ब्रह्माहमस्मि तथा वर्षं पर्जन्यं निगृह्णाम्याकर्षयाम्याकर्षणं करोमि पुनः सृष्टिकाले वर्षं पर्जन्यमुत्सृजामि मुञ्चामि अमृतं जीवनमहमेव मृत्युः क्रमप्राप्तः । एवमुपसंहरति **सदिति** । सद्व्यवहारसत् स्थूलप्रपञ्चरूपमसत् सूक्ष्मप्रपञ्चरूपमहमेव ॥ १९ ॥

**त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ॥**
**ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान् २०**

त्रैविद्येति । ये पुनरज्ञाः कामकामास्त्रैविद्या ऋग्यजुःसामविदो याज्ञिकास्ते मां वस्वादिवेदरूपिणमिष्ट्वा संपूज्य यज्ञशेषं सोमपाः सोमं पिबन्तीति सोमपास्तेनैव सोमपानेन ते पूतपापाः शुद्धकिल्बिषा यज्ञैरग्निष्टोमादिभिरिष्ट्वा पूजयित्वा स्वर्गतिं स्वर्गगमनं स्वरेव गतिः स्वर्गतिस्तां प्रार्थयन्ते ते च पुण्यं पुण्यफलमासाद्य संप्राप्य सुरेन्द्रलोकं शतक्रतोः स्थानमश्नन्ति भुञ्जते दिव्यान् दिवि भवान् प्राकृतान् देवभोगान् देवानां भोगास्तान् ॥ २० ॥

**आ० टी०** । भगवद्भक्तानामपि निष्कामानामेव मुक्तिरिति दर्शयितुं सकामानां पुंसां संसारमवतारयति **ये पुनरिति** । तिस्रो विद्या अधीयन्ते विदन्तीति वा ते त्रैविद्या वेदविदस्तदाह **ऋगिति** । वस्वादीत्यादिशब्देन सवनत्रयेशानादित्या रुद्राश्च गृह्यन्ते शुद्धकिल्बिषा निरस्तपापा इति यावत् ॥ २० ॥

**प० टी०** । अथैकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखमित्यादिप्रकारेण ये न भजन्ति तेषां जन्ममृत्युप्रवाहो दुर्वार इत्याह द्वाभ्याम् **त्रैविद्या इति** । ऋग्यजुःसामलक्षणास्तिस्रो विद्यास्तास्तु कर्मफलप्रशंसनभागस्त्रैविद्यं तदनुष्ठातारस्त्रैविद्याः यज्ञावशेषीभूतं वल्लीरूपं सोमं पिबन्ति ते सोमपाः पूतपापाः शोधितकल्मषाः सन्तो मामिन्द्रादिदेवतारूपिणमिष्ट्वा पूजयित्वा स्वर्गलोकप्राप्तिं प्रार्थयन्ते ते पुण्यं पुण्यफलप्रदं सुरेन्द्रलोकमासाद्य प्राप्य दिवि स्वर्गे दिव्यान् देवोपभोग्यान् भोगानश्नन्ति भुञ्जते ॥ २० ॥

**ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ॥**
**एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥ २१ ॥**

ते तमिति । ते तं भुक्त्वा स्वर्गलोकं विशालं विस्तीर्णं क्षीणे पुण्ये मर्त्यलोकमिमं विशन्त्याविशन्ति एवं हि यथोक्तेन प्रकारेण केवलं वैदिकं कर्मानुप्रपन्नास्ते गतागतं गतं चागतं च गतागतं गमनागमनं कामकामाः कामान् कामयन्त इति कामकामा लभन्ते गतागतमेव न तु स्वातन्त्र्यं क्वचिल्लभन्त इत्यर्थः ॥ २१ ॥

आ॰ टी॰ । तर्हि स्वर्गप्राप्तेरपि भगवत्प्राप्तितुल्यतेत्याशङ्क्याह **ते तमिति** । पुण्ये स्वर्गप्राप्तिहेताविति यावत्, प्रसिद्धार्थो हिशब्दः, त्रयाणां होत्रादीनां वेदत्रयविहितानां धर्माणां समाहारस्त्रिधर्मं तदेव त्रैधर्म्यं तदनुप्रपन्नास्तदनुगता इति यावत् । कामकामानां गमनागमनद्वारा कामितत्फलाप्तिश्चेदिष्टमेव चेष्टितमित्याशङ्क्याह **गतेति** ॥ २१ ॥

प॰ टी॰ । ततः किं भवतीत्याह **ते तमिति** । ते तमुक्तप्रकारं स्वर्गलोकं विशालं स्थूलफलदं भुक्त्वा पुण्ये क्षीणे सति मर्त्यलोकं विशन्ति देवदेहं त्यक्त्वा पुनर्लिङ्गदेहेन गर्भं प्रविशन्ति । एवममुना प्रकारेण त्रयीधर्मं त्रय्या दर्शितं फलप्रशंसनरूपं धर्ममनुलक्षीकृत्य प्रवृत्ता याज्ञिकाः कामान् विषयान् कामयन्ते ते कामकामाः सन्तो गतागतं यातायातं लभन्ते । श्रुतिरपि शातपथी "आत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्यकर्म क्षीयते । अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते" इति । भाष्यम्—अन्यदेवतोपासनया नावरं फलं प्राप्यत इति पूर्वमुक्तं तस्मादात्मानमेव लोकं लोक्यते प्राप्यते सर्वमनेनेति लोकस्तमेवात्मानमुपासीत नान्यम् । स य आत्मानमुपास्ते तस्य हेति निश्चयेन कर्म न क्षीयते भोगेनोपक्षीणं न भवति किं तु ज्ञानमुत्पाद्य मोक्षं प्रापयति । अथ स विषयसुखापेक्षश्चेत्तर्हि तदप्यात्मन एव प्राप्यत इत्याह अस्मादिति । अस्मादात्मनः सकाशाद्यद्यत्कामयते तत्तत्सृजते सिध्यादिकमुत्पादयति किं पुनरन्यत् । तदुक्तं टिप्पणिकासु—" यत्सत्यं तदुपासितव्यममुना सत्यं यतो लभ्यतेऽसत्योपासनया तथैव च फलं स्वप्नोत्थराज्यादिवत् । आयासे सदृशेऽपि तुच्छफलदे मार्गे प्रवृत्तिः कथं माया वैभवमेतदेव तदिदं भक्त्या हरेर्वाप्यते ॥ २१ ॥

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ॥**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२ ॥**

अनन्या इति । ये पुनर्निष्कामाः सम्यग्दर्शिनोऽनन्या अपृथग्भूताः परं देवं नारायणमात्मत्वेन गताः संतश्चिन्तयन्तो मां ये जना : संन्यासिनः पर्युपासते तेषां परमार्थदर्शिनां नित्याभियुक्तानां सतताभियोगिनां योगक्षेमं योगोऽप्राप्तस्य प्रापणं क्षेमस्तद्रक्षणं तदुभयं वहामि प्रापयाम्यहं ज्ञानी त्वात्मैव मे मतं स च मम प्रियो यस्मात्तस्मात्ते ममात्मभूताः प्रियाश्चेति नन्वेषामपि भक्तानां योगक्षेमं वहत्येव भगवान् सत्यमेवं वहत्येव किं त्वयं विशेषोऽन्ये ये भक्तास्ते स्वात्मार्थं स्वयमपि योगक्षेममीहन्तेऽनन्यदर्शिनस्तु नात्मार्थं योगक्षेममीहन्ते न हि ते जीविते मरणे वात्मनो ग्रन्थिं कुर्वन्ति केवलमेव भगवच्छरणास्तेऽतो भगवानेव तेषां योगक्षेमं वहतीति ॥ २२ ॥

आ० टी० । फलमनभिसन्धाय त्वामेवाराधयतां सम्यग्दर्शननिष्ठानामत्यन्तनिष्कामानां कथं योगक्षेमौ स्यातामित्याशङ्क्याह **ये पुनरिति** । तेषां योगक्षेमं वहामीत्युत्तरत्र संबन्धः । येभ्योऽन्यो न विद्यत इति व्युत्पत्तिमाश्रित्याह **अपृथगिति** । कार्यस्यैव कारणे कर्मतादात्म्यं व्यावर्तयति **परमिति** । अहमेव वासुदेवः सर्वात्मा न मत्तोऽन्यत् किंचिदस्तीति ज्ञात्वा तमेव प्रत्यक्षं सदा ध्यायन्त इत्याह **चिन्तयन्त इति** । प्राकृतान् व्यावर्त्य मुख्यानधिकारिणो निर्दिशति **संन्यासिन इति** । पर्युपासते परितः सर्वतोऽनवच्छिन्नतया पश्यन्तीत्यर्थः । नित्याभियुक्तानां नित्यमनवरतमादरेण ध्याने व्यापृतानामित्याह **सततेति** । योगं च क्षेमं च योगक्षेमं । तत्रापुनरुक्तमर्थमाह **योग इति** । किमर्थं परमार्थदर्शिनां योगक्षेमं वहामीत्याशङ्क्याह **ज्ञानी त्विति** । अतस्तेषां योगक्षेमं वहामीति संबन्धः । सम्यग्दर्शननिष्ठानामेव योगक्षेमं वहति भगवानिति विशेषणममृष्यमाणः शङ्कते **नन्विति** । अन्येषामपि भक्तानां भगवान् योगक्षेमं वहतीत्येतदङ्गीकरोति **सत्यमिति** । तर्हि भक्तेषु ज्ञानिषु च विशेषो नास्तीति पृच्छति **किं त्विति** । तत्र विशेषं प्रतिज्ञाय विवृणोति **अयमित्यादिना** । योगक्षेममुद्दिश्य स्वयमीहन्ते चेष्टां कुर्वन्तीति यावत् । आत्मविदां स्वार्थयोगक्षेममुद्दिश्य चेष्टाभावं स्पष्टयति **न हीति** । ग्रन्थिरपेक्षा कामानामित्येतत् । ज्ञानिनां तर्हि सर्वज्ञानास्थेत्याशङ्क्याह **केवलमिति** । तेषां तदेकशरणत्वे फलितमाह **अत इति** । इतिशब्दो **विशेषशब्देन** संबध्यते ॥ २२ ॥

प० टी० । एवं क्षुद्रदेवतोपासकानां प्रयासवैयर्थ्यमुक्त्वा स्वोपासकानां सुखोपायप्राप्तिं दर्शयति **अनन्या इति** । न विद्यते मत्तोन्यद्देवतान्तरं येषां तेऽनन्याः सन्तो ये जनाश्चिन्तयन्तः केवलं स्मरन्तो न तु द्रव्यव्ययकायक्लेशं कुर्वाणा मामुपासते तेषां नित्यं निरन्तरमभियुक्तानामभितो मद्योगदर्शिनामहं योगक्षेमं वहामि । अप्राप्तस्य प्राप्तिर्योगः प्राप्तस्य निर्विघ्नतया रक्षणं क्षेमं निर्वहामि ॥ २२ ॥

## येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः ॥
## तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २३ ॥

ये इति । नन्वन्या अपि देवतास्त्वमेव चेत्तद्भक्ताश्च त्वामेव भजन्ते सत्यमेवं येऽन्यदेवताभक्ता अन्यासु देवतासु भक्ता अन्यदेवताभक्ताः सन्तो यजन्ते पूजयन्ति श्रद्धयास्तिक्यबुद्ध्यान्विता अनुगतास्तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकमविधिरज्ञानं तत्पूर्वकमज्ञानपूर्वकं यजन्त इत्यर्थः ॥२३॥

आ० टी० । तत्तद्देवतात्मना परस्यैवात्मनः स्थित्यभ्युपगमाद्देवतान्तरपराणामपि भगवच्छरणत्वाविशेषात्तदेकनिष्ठत्वमकिंचित्करमिति मन्वानः शङ्कते **नन्विति** । उक्तमङ्गीकृत्य परिहरति **सत्यमित्यादिना** । देवतान्तरयाजिनां भगवद्याजिभ्यो विशेषमाह **अविधीति** । तद्व्याकरोति **अविधिरिति** ॥ २३ ॥

प० टी० । ननु पूर्वमुक्तं मामिष्ट्वा स्वर्गतिं प्रार्थयन्त इति तर्हि त्वत्पूजनादधिगतस्वर्गाः पुनः कथं स्वर्गाच्च्यवन्त इत्याशङ्क्याह **येऽपीति द्वाभ्याम्** । येऽन्यदेवताभक्ता इन्द्रादिदेवतोपासका येऽपि श्रद्धयान्विताः सन्तो यजन्ते तेऽपि तदन्तर्यामित्वेन स्थितं मामेव यजन्ति । परं त्वविधिपूर्वकं यजन्ति मोक्षप्रापकमद्वैतोपासनं विधिस्तादितरमविधिस्तत्पूर्वकं यजन्ति ॥ २३ ॥

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ॥
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २४ ॥

कस्मात्तेऽविधिपूर्वकं यजन्ते इत्युच्यते यस्माद् अहमिति । अहं हि सर्वयज्ञानां श्रौतानां स्मार्तानां च सर्वेषां यज्ञानां देवतात्मत्वेन भोक्ता च प्रभुरेव च मत्स्वामिको हि यज्ञोऽधियज्ञोऽहमेवात्रेति चोक्तं तथा न तु मामभिजानन्ति तत्त्वेन यथावदतश्चाविधिपूर्वकमिष्ट्वा यागफलात् च्यवन्ति प्रच्यवन्ते ते ॥ २४ ॥

**आ० टी०** । ननु वस्वादित्येन्द्रादिज्ञानपूर्वकमेव तद्भक्तास्तद्याजिनो भवन्तीति कथमविधिपूर्वकं तेषां यजनमिति शङ्कते **कस्मादिति** । देवतान्तरयाजिनां यजनमविधिपूर्वकमित्यत्र हेत्वर्थत्वेन श्लोकद्वयमुत्थापयति **उच्यत इति** । सर्वेषां द्विविधानां यज्ञानां वस्वादिदेवतात्वेनाहमेव भोक्ता स्वेनान्तर्यामिरूपेण प्रभुश्चाहमेवेति प्रसिद्धमेतदिति हिशब्दः । प्रभुरेव चेत्युक्तं विवृणोति **मत्स्वामिको हीति** । तत्र पूर्वाध्यायगतवाक्यं प्रमाणयति **अधियज्ञोऽहमिति** । तथापि देवतान्तरयाजिनां यजनमविधिपूर्वकमिति कुतः सिद्धं तत्राह **तथा इति** । ममैव यज्ञेषु भोक्तृत्वे प्रभुत्वे च सतीति यावत् । तयोर्भोक्तृप्रभ्वोर्भावस्तत्त्वं तेन भोक्तृत्वेन प्रभुत्वेन च मां यथावद् यतो न जानन्त्यतो भोक्तृत्वादिना ममाज्ञानान्मय्यनर्पितकर्माणश्चावर्तन्ते कर्मफलादित्याह **अतश्चेति** ॥ २४ ॥

**प० टी०** । एतदेव विविच्याह **अहमिति** । हि यस्मात्कारणादहमेव सर्वयज्ञानां भोक्ता प्रभुः फलदाता च । एवं सति मां तत्त्वेन याथातथ्येन नाभिजानन्त्यतस्ते च्यवन्ति पुनर्मर्त्यलोके विशन्ति । अत्रैतदुक्तं भवति । देवर्षिपितृपूर्वकास्तावन्नश्वरनामरूपोपेता देहविशेषा मदुपाधयस्तत्तल्लोके वसन्ति तत्र तत्र सर्वेषामन्तर्याम्यहमेवास्म्येवंविधं मामज्ञात्वा पृथक्त्वेन तत्तदुपाध्युद्देशेन यत्कृतं यजनं तेनाहमेव संतर्पितो भवामि ततो मत्संतर्पणशेषेण तेऽपि संतर्पिता भवेयुः । तथा च मामद्वयानन्दमखण्डैकरसमुद्दिश्य यदुपासनं स एव विधिस्तथा मूढानां यदुपाध्युपासनमेवाविधिस्तत्पूर्वकं यजनं नश्वरफलं स्यात् । अत्र श्रुतिरपि शातपथी–"अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवम्" इति । स्पष्टोऽर्थः । तथा "अथो अयं वात्मा सर्वेषां भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां लोकोथ यदऽनुब्रूते तेन ऋषीणामथ यत्प्रजामिच्छते यत्पितृभ्यो निपृणाति तेन पितॄणामथ यन्मनुष्यान् वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयाङ्स्यापिपीलिकाभ्य उपजीवन्ति तेन तेषां लोको यथा हवै स्वाय लोकायारिष्टिमिच्छन् देवं हैवंविदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वा एतद्विदितं मीमाङ्सितम्" इति । भाष्यम्–अथो अनन्तरं वा इति प्रकारान्तरेणोच्यते । तत्किम्, अयमात्मा सर्वेषां भूतानां लोकः संतर्पणस्थानं तथा च सोऽधिकारी ऋत्विग् यज्जुहोति मन्त्रपूर्वकं हविरग्नौ क्षिपति । तथा यद्यजते स्वातन्त्र्येण यज्ञकर्ता यद्वा श्रौतस्मार्तप्रकारेण तेन देवानामिन्द्रसूर्यादीनां लोक आत्मा संतर्पितो भवति । अथ यदनुब्रूते स्वाध्यायमधीते तेन ऋषीणां यत्पितॄणामृणपरिहारिणीं प्रजामिच्छते इच्छति अथवा यत्पितृभ्यो निपृणाति श्राद्धे ददाति तेन पितॄणां तथा मनुष्यान् वासयते आवासं कृत्वा ददाति तथा यदेभ्यो मनुष्येभ्योऽशनमन्नं ददाति तेन मनुष्याणां लोकोऽथ पशुभ्यो महिषीबलीवर्दादिभ्यस्तृणोदकं विन्दति तेन तेषाम् । तथा यदस्य गृहेषु श्वापदाः श्वमार्जारादयो वयांसि पक्षिणः काककलविङ्कादयः पिपीलिका मर्यादीकृत्य कीटविशेषा

उपजीवन्ति तेन तेषां लोके आत्मैव संतर्पितः स्यात् । यथा वै इति निश्चयेन स्वाय लोकाय परमात्मने ऽविष्टि कुशलं वाञ्छति । एवमेतदेव विदितं ज्ञातमिति वदन्ति तथा मीमांसितं विचारितमेतदन्यदज्ञातमविचारितं चेत्यर्थः । तदुक्तं टिप्पणिकासु — 'सुरर्षिपितृमानवप्रभृति दत्तमेवंविदा तदाहुरमृतप्रदं यदभवत्तदात्मार्पणम् । अदायि पदलब्धये क्रतुभुजामनेवंविदा गतं गतपरिश्रमप्रदमसत्यसंतर्पणात् ॥ १ ।' तथा 'एकोऽनेकैः स्वरूपैर्नटति नटवरो दर्शयन् हावभावांस्तत्तद्रूपान् पृथगभिलषितेष्वत्र सामाजिकेषु । कस्मै चित्किश्चिदर्थं वितरति मुदितस्तेन संतर्पितः स्यादेकः सर्वान्तरात्मार्पणमखिलतनुभ्योऽर्पितं स्यात्तथैव ॥ २ ॥' इति । ऋग्वेदेऽपि । 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम" इति । भाष्यम्— 'हिरण्यगर्भ इति दशर्चं सूक्तं त्रैष्टुभम्' इति सर्वानुक्रमः । तत्र प्रथमा हिरण्यगर्भ इति । हिरण्मयोऽण्डो गर्भवद्यस्योदरे वर्तते सोऽसौ सूत्रात्मा हिरण्यगर्भोऽग्रे प्रपञ्चोत्पत्तेः प्राक् समवर्तत । मायाध्यक्षात्सिसृक्षोः परमात्मनः सकाशात्समजायत । यद्यपि परमात्मैव हिरण्यगर्भस्तथापि तदुपाधिभूतानां वियदादीनां सूक्ष्मभूतानां ब्रह्मण उत्पत्तेस्तदुपाहितोऽप्युत्पन्न इत्युच्यते । स च जातो जातमात्र एवैकोऽद्वितीयः सन् भूतस्य विकारजातस्य ब्रह्माण्डादेः सर्वस्य जगतः पतिरीश्वर आसीत् । न केवलं पतिरासीत् किं तु पृथिवीं द्यां दिवं च दाधार धारयत्येवं सति तं सर्वात्मकमपहाय कस्मै देवाय हविषा कृत्वा विधेम परिचरेम सर्वं ब्रह्मार्पणमेव भवतीत्यर्थः ॥ २४ ॥

**यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ॥**
**भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥ २५ ॥**

यान्तीति । येऽप्यन्यदेवताभाक्तिमत्त्वेनाविधिपूर्वकं यजन्ते तेषामपि यागफलमवश्यंभाविकं कथं, यान्ति गच्छन्ति देवव्रता देवेषु व्रतं नियमो भक्तिश्च येषां ते देवव्रता देवान् यान्ति पितॄनाग्निष्वात्तादीन् यान्ति पितृव्रताः श्राद्धादिक्रियापराः पितृभक्ता भूतानि विनायकमातृगणचतुर्भगिन्यादीनि यान्ति भूतेज्या भूतानां पूजका यान्ति मद्याजिनो मद्यजनशीला वैष्णवा मामेव यान्ति समानेऽप्यायासे मामेव न भजन्तेऽज्ञानात्तेन तेऽल्पफलभाजो भवन्तीत्यर्थः ॥ २५ ॥

आ० टी० । यद्यन्यदेवताभक्ता भगवत्तत्त्वाज्ञानात् कर्मफलाच्च्यवन्ते तर्हि तेषां देवतायजनमकिंचित्करमित्याशङ्क्याह **येऽपीति** । देवतान्तरयाजिनामनावृत्तिफलाभावेऽपि तत्तद्देवतायागानुरूपफलप्राप्तिध्रौव्यान्न तदकिंचित्करमित्यर्थः । देवतान्तरयाजिनामावश्यकं तत्फलमाशङ्कापूर्वकमुदाहरति **कथमित्यादिना** । नियमो बल्युपहारप्रदक्षिणप्रह्वीभावादिरित्यर्थः । देवतान्तराराधनस्यान्तवत्फलमुक्त्वा भगवदाराधनस्यानन्तफलत्वमाह **यान्तीति** । भगवदाराधनस्यानन्तफलत्वे देवतान्तराराधनं त्यक्त्वा भगवदाराधनमेव युक्तमायाससाम्यात् फलातिरेकाच्चेत्याशङ्क्याह **समानेऽपीति** । अज्ञानाधीनत्वेन देवतान्तराराधनवतां फलतो न्यूनतां दर्शयति **तेनेति** ॥ २५ ॥

**प० टी०** । एवमुपक्रान्तप्रमेयस्य फलितमर्थमाह **यान्तीति** । देवेष्विन्द्रादिषु व्रतं नियमो येषां ते देवानन्तवतो यान्ति तथा पितृव्रता नियमेन षण्णवतिश्राद्धकर्तारः पितॄन्यान्ति भूतेषु विनायकमातृकादिष्विज्या येषां ते भूतानि यान्ति । तथा मां सर्वात्मकं यजन्ते मद्याजिनो मां यान्ति म-

द्रूपतां प्राप्नुवन्ति । तथा च मत्संतर्पणेन सर्वे देवाः संतर्पिता भवन्तीत्यर्थः । तदुक्तम्—'स्मृत्या लोकेषु वर्णाश्रमविहितमदो नित्यकाम्यादिकर्म सर्वं ब्रह्मार्पणं स्यादिति निगमगिरः संगिरन्तेऽतिरम्ये । यन्नासानेत्राजिह्वाकरचरणशिरःश्रोत्रसंतर्पणेन तुष्येदाङ्गिश्च साक्षात्तरुरिव सकलो मूलसंतर्पणेन ॥ २५ ॥

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ॥**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६ ॥**

पत्रमिति । न केवलं मद्भक्तानामनावृत्तिलक्षणमनन्तफलमुक्तं सुखाराधनश्चाहं कथं, पत्रं पुष्पं फलं तोयमुदकं यो मे मह्यं भक्त्या प्रयच्छति तदहं पत्रादि भक्त्योपहृतं भक्तिपूर्वकं प्रापितं भक्त्युपहृतमश्नामि गृह्णामि प्रयतात्मनः शुद्धबुद्धेः ॥ २६ ॥

आ० टी० । अनन्तफलत्वाद्भगवदाराधनमेव कर्तव्यमित्युक्तं सुकरत्वाच्च तथेत्याह **न केवलमिति** । भगवदाराधनस्य सुकरत्वमेव प्रश्नपूर्वकं प्रपञ्चयति **कथमित्यादिना** । यद्धि पुष्पादिकं भक्तिपूर्वकं मदर्थमर्पितं तेनायं शुद्धचेतास्तपस्वी मामाराधयतीत्यहमवधारयामीत्याह **पत्रमित्यादिना** ॥ २६ ॥

प० टी० । तदेव पित्रादिप्राप्त्यर्थं कायक्लेशार्थं व्ययादिना भूयानायासोऽस्ति मत्प्राप्तिस्तथा नेत्याह **पत्रमिति** । तस्य प्रयतात्मनः शुद्धचित्तस्य पुरुषस्य तत्पत्रपुष्पादिकमहमश्नामि गृह्णामि नान्यस्य । तस्य कस्य, यो मे मह्यं भक्त्या भावेन प्रयच्छति न दम्भेन । तत्किम्, भक्त्युपहृतम् । भक्त्या भजनेनार्जवेनानीतं न तु बलात्कारेण चौर्येण वा । तस्मादवाप्तसकलकामोऽहं भक्त्यैव लभ्यो नोपचारैरित्यर्थः ॥ २६ ॥

**यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥**
**यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥ २७ ॥**

यदिति । एवमतो यत् करोषि यदाचरसि शास्त्रीयं कर्म स्वतः प्राप्तं यदश्नासि यत् खादसि यज्जुहोषि हवनं निर्वर्तयसि श्रौतं स्मार्तं वा यद्ददासि प्रयच्छसि ब्राह्मणादिभ्यो हिरण्मयपात्ररत्नादि यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणं मत्समर्पणम् ॥ २७ ॥

आ० टी० । तदाराधनस्य सुकरत्वे तदेवावश्यकमित्याह **यत इति** । स्वतः शास्त्रादृते प्राप्तं गमनादीति यावत् । यदश्नासि यं कंचिद्भोगं भुङ्क्षे । हवनस्य स्वतस्त्वं वारयति **श्रौतमिति** । मत्समर्पणं तत् सर्वं मह्यं समर्पयेत्यर्थः ॥ २७ ॥

प० टी० । तदेवं पत्रपुष्पाद्यर्पणार्थं मत्प्रतिमाविभूतिगवेषणप्रयासो मास्त्वित्याह **यदिति** । स्वभावतः शास्त्रतो वा करचरणव्यापारेण यत्किंचित्कर्म करोषि यदश्नासि भोक्तुमिच्छसि जुहोष्यग्नौ क्षिपसि ददासि तपस्यसि च तत्सर्वं मदर्पणं कुरु । संकल्पमात्रेणैव मदर्पणं भवति न पुनर्दर्शनाद्यपेक्ष्येत्यर्थः ॥ २७ ॥

**शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ॥**
**संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २८ ॥**

एवं कुर्वतस्तव यद्भवति तच्छृणु शुभाशुभफलैरिति । शुभाशुभफलैरेवं शुभाशुभे इष्टानिष्टफले येषां तानि शुभाशुभफलानि कर्माणि तैः शुभाशुभफलैः कर्मबन्धनैरेवं मत्समर्पणं कुर्वन् मोक्ष्यसे सोऽयं संन्यासयोगो नाम संन्यासश्चासौ मत्समर्पणतया कर्मकर्तृत्वाद्योगश्चासाविति तेन संन्यासयोगेन युक्त आत्मान्तःकरणं यस्य तव स त्वं संन्यासयोगयुक्तात्मा सन् विमुक्तः कर्मबन्धनैर्जीवन्नेव पतिते चास्मिन् शरीरे मामुपैष्यस्यागमिष्यसि ॥ २८ ॥

आ० टी० । किमतो भवति तदाह **एवमिति** । भगवदर्पणबुद्ध्या सर्वकर्म कुर्वतो जीवन्मुक्तस्य प्रारब्धकर्मावसाने विदेहकैवल्यमावश्यकमित्याह **शुभेत्यादिना** । भगवदर्पणकारणान्मुक्तिः संन्यासयोगाच्चेति साधनद्वयशङ्कां शातयति **सोऽयमिति** ॥ २८ ॥

म० टी० । तत्फलमाह **शुभाशुभैरिति** । एवममुना प्रकारेण मदर्पणाधिया क्रियमाणानां कर्मणां कर्मबन्धनैष्कर्म्यनिबन्धनैः शुभाशुभफलैरिष्टानिष्टैर्मोक्ष्यसे विमुक्तो भविष्यसि । यथाग्नौ भर्जितबीजानामङ्कुरोत्पादकत्वं नास्ति तथैव ब्रह्मार्पणधिया कृतानां कर्मणां फलजनकत्वं नास्तीत्यर्थः । ततश्च संन्यासयोगेन प्रागुक्तेन युक्त आत्मा चित्तं यस्यैवंविधस्त्वं विमुक्तो जीवन्मुक्तदशां प्राप्य मामुपैष्यसि ॥ २८ ॥

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ॥**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥२९॥**

रागद्वेषवांस्तर्हि भगवान् यतो भक्ताननुगृह्णाति नेतरानिति तन्न समोऽहमिति । समस्तुल्योऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियोऽग्निवदहं दूरस्थानां यथाग्निः शीतं नापनयति समीपमुपसर्पतामपनयति तथाहं भक्ताननुगृह्णामि नेतरान् ये भजन्ति तु मामीश्वरं भक्त्या मयि ते स्वभावत एव न मम रागनिमित्तं मयि वर्तन्ते तेषु चाप्यहं स्वभावत एव वर्ते नेतरेषु नैतावता तेषु द्वेषो मम ॥ २९ ॥

आ० टी० । भगवतो रागद्वेषवत्त्वेनानीश्वरत्वमाशङ्क्य परिहरति **रागेत्यादिना** । तर्हि भगवद्भजनमकिंचित्करमित्याशङ्क्याह **अग्निवदिति** । तत्प्रपञ्चयति **यथेति** । भक्तानभक्तांश्चानुगृह्णतोऽननुगृह्णतश्च भगवतो न कथं रागादिमत्त्वमित्याशङ्क्याह **ये भजन्तीति** । ये हि वर्णाश्रमादिधर्मैर्मां भजन्ति ते तेनैव भजनेनाचिन्त्यमाहात्म्येन परिशुद्धबुद्धयो मयि मत्समीपे वर्तन्ते मदभिव्यक्तियोग्यचित्ता भवन्ति, तुशब्दोऽस्य विशेषस्य द्योतनार्थः, तेषु च समीपे समक्षं तेषामहमपि स्वभावतो वर्तमानस्तदनुग्रहपरो भवामि, यथा व्यापकमपि सावित्रं तेजः स्वच्छे दर्पणादौ प्रतिफलति

---

१ स्वान्येव कर्मबन्धनानि तैः कर्मबन्धनैः—पा० लि० पु०

तथा परमेश्वरोऽवर्जनीयतया भक्तिनिरस्तसमस्तकलुषसत्त्वेषु पुरुषेषु संनिधत्ते दैवीं प्रकृतिमाश्रिता भजन्तीत्युक्तत्वादित्यर्थः ॥ २९ ॥

प० टी० । तर्हि भक्तेभ्य एव मोक्षं ददासि नाभक्तेभ्यस्तेन तवापि रागद्वेषप्रयुक्तं वैषम्यं स्यादित्याह **समोऽहमिति** । अहं सर्वभूतेषु समः समस्वभावोऽस्म्यतो मे मम द्वेष्यः प्रियो वा कश्चिदपि नास्ति किं तु ये मां भक्त्या भजन्ति ते मय्यनुग्राह्यत्वेन वर्तन्ते अहमपि तेष्वनुग्राहकत्वेन वर्ते,ये तु न भजन्ति ते यथावस्थिता एव तिष्ठन्ति, मयि तु रागद्वेषव्यवस्था नास्तीत्यर्थः । 'ये यथा मां प्रपद्यन्ते' इति पूर्वमेवोक्तम् । यथा मार्गे स्थितं वृक्षं केऽपि फलार्थिनः केऽपि पुष्पार्थिनः केऽपि च्छायार्थिनः श्रयन्ते ते स्वस्वाभिमतं लभन्ते वृक्षस्य तु नोभयत्रापेक्षोपेक्षा वा । श्रुतिरपि ऋग्वेदे–"या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमाः । शिक्षा सखिभ्यो हविषि स्वधा वः स्वयं यजस्व तन्वं वृधानः" इति । भाष्यम्–भो विश्वकर्मन् विश्वानि सर्वाणि कर्माणि यदर्थमिति विश्वकर्मा परमेश्वरस्तस्य संबुद्धिस्ते तव या यानि परमाण्युत्कृष्टानि धामानि देवशरीराणि तथा यान्यवमान्यपकृष्टानि पश्वादिशरीराणि तथा यानि मध्यमा मध्यमानि मनुष्यशरीराणि सन्ति तेषु मध्ये सखिभ्यः स्वानुकूलेभ्यः शिक्षा ज्ञानोपदेशस्तथा हविषि प्रलयकाले होतव्यत्वेन प्राप्ते स्वप्रतिकूले जीवजाते वो युस्माकं स्वधा स्वस्मिन् ध्रियत आरोप्यते सा स्वधा मायाज्ञानमिति स्वयमेव प्राप्तमस्ति । त्वं तु तन्वं शरीरं वृधानो वर्धमानः प्रकटीकुर्वाणो यजस्व भजस्व अनुग्राहयस्वेत्यर्थः ॥ २९ ॥

**अपि चेत् सुदुराचारो भजते मामनन्यभाक् ॥**
**साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः ॥ ३० ॥**

शृणु मद्भक्तेर्माहात्म्यम् अपि चेदिति । अपि चेद् यद्यपि सुष्ठु दुराचारः सुदुराचारोऽतीवकुत्सिताचारोऽपि भजते मामनन्यभाग् नान्यभक्तिः सन् साधुरेव सम्यग्वृत्त एव स मन्तव्यो ज्ञातव्यः सम्यग् यथावद् व्यवसितो हि यस्मात् साधुनिश्चयः सः ॥ ३० ॥

आ० टी० । प्रकृतां भगवद्भक्तिं स्तुवन् पापीयसामपि तत्राधिकारोऽस्तीति सूचयति **शृण्विति** । सम्यग्वृत्त एव भगवद्भक्तो ज्ञातव्य इत्यत्र हेतुमाह **सम्यगिति** ॥ ३० ॥

प० टी० । अपि च मद्भक्तेरवितर्क्यः प्रभाव इत्याह अपि चेति । सुतरामत्यन्तं दुराचारोऽपि संश्चेन्मां भजते । किंभूतोऽनन्यभाक् । मत्तो नान्यद्देवतान्तरं भजते । तत्पापपरिहारसमर्थे मय्यध्यवसायं कृतवान् ॥ ३० ॥

**क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ॥**
**कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१ ॥**

क्षिप्रमिति । उत्सृज्य च बाह्यां दुराचारतामन्तः सम्यग्व्यवसायसामर्थ्यात् क्षिप्रं शीघ्रं भवति धर्मात्मा धर्मचित्त एव शश्वन्नित्यं शान्तिं चोपशमं निगच्छति प्राप्नोति शृणु परमार्थं कौन्तेय प्रतिजानीहि निश्चितां प्रतिज्ञां कुरु न मे मम भक्तो मयि समर्पितान्तरात्मा मद्भक्तो न प्रणश्यतीति ॥ ३१ ॥

आ० टी० । हेत्वर्थमेव प्रपञ्चयति उत्सृज्येति । भगवन्तं भजमानस्य कथं दुराचारता परित्यक्ता भवतीत्याशङ्क्याह क्षिप्रमिति । सति दुराचारे कथं धर्मचित्तत्वं तदाह शश्वदिति । उपशमो दुराचारादुपरमः । किमिति तद्भक्तस्य दुराचारादुपरतिरुच्यते दुराचारोपहतचेतस्तया किमित्यसौ न नङ्क्ष्यतीत्याशङ्क्याह शृण्विति ॥ ३१ ॥

प० टी० । अथ तदेव सहेतुकमाह क्षिप्रमिति । मद्भजनेन क्षिप्रं तत्कालमेव धर्मात्मा भवति शुद्धचित्तः सन् शाश्वतीं शान्तिं निगच्छति प्राप्नोति । तदुक्तम्—'विकर्म यच्चोत्पतितं कथं चिद्धुनोति सर्वं हृदि संनिविष्टः' इति । अत्रार्थे संदिहानमर्जुनं प्रोत्साहयन्नाह न मे भक्त इति । मद्भक्तो मद्भजनशीलत्वाद्विधूतकल्मषः सन्न प्रणश्यतीति प्रतिजानीहि प्रतिज्ञां कुरु । अत्रोदाहरणमुद्धवोऽभूद्यतो मुनिशापेन सर्वयादवकुलसंहारेऽप्यात्यन्तिकभक्तियोगान्नाशं न प्राप्तवानित्यर्थः । 'नाम्नोऽस्ति यावती शक्तिः, इत्यादिना नाममात्रस्यैतादृक् सामर्थ्यं किं पुनरनन्यभजनस्येति तात्पर्यम् ॥ ३१ ॥

**मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ॥**
**स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ३२ ॥**

किं च मां हीति । मां हि यस्मात् पार्थ व्यपाश्रित्य मामाश्रित्याश्रयत्वेन गृहीत्वा येऽपि स्युर्भवेयुः पापयोनयः पापानि योनिर्येषां ते पापयोनयः पापजन्मानः । के त इत्याह स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति गच्छन्ति परां गतिं प्रकृष्टां गतिम् ॥ ३२ ॥

आ० टी० । इतश्च भगवद्भक्तिर्विधातव्येत्याह किंचेति । न मे भक्तः प्रणश्यतीत्यत्र हेतुमाचक्षाणो भक्त्यधिकारे जातिनियमो नास्तीत्याह मां हीति ॥ ३२ ॥

प० टी० । अथ नहि मद्भक्तिः कुलाचाराद्यपेक्षत इति प्रतीतिमुत्पादयन्नाह मामिति । भो पार्थ हीति निश्चयेन मां व्यपाश्रित्यानन्यतया मदाश्रयं प्राप्य ये पापयोनयः स्युः पापाधिकारिणी योनिरुत्पत्तिर्येषां ते तथाविधास्तेऽपि परां गतिं यान्ति । अत्रार्थे प्रतीतिमुत्पादयति स्त्रिय इति । 'अनृतं साहसं माया मूर्खत्वमतिलुब्धता' इत्यादिनिसर्गदोषोपहताः स्त्रियो गोपिकास्तत्रापि जारबुद्ध्या संगतास्तथा वैश्याः कृष्यादिना गोपरक्षणकर्तारो नन्दगोपप्रमुखास्तथा शूद्रास्तत्परिचारका अपि मदाश्रयेण परमां गतिं यान्तीति वस्तुमहिमा तावल्लौकिक इति पूर्वमेव सदृष्टान्तमुक्तं स्पर्शाश्माप्यश्मसारमिति । श्रुतिरपि तैत्तिरीयके "त्वामग्ने यजमाना अनुद्यून्विश्वा वसूनि दधिरे वार्याणि । त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजा विवव्रुः" इति । भाष्यम्—भो अग्ने वैश्वानर विश्वरूप विश्वं वैश्वानरो विराडिति परिभाषोक्तेः । त्वामनुद्यून् प्रतिदिवसान् यजमाना यजन्तः पूजयन्तो वार्याणि वारयितुं योग्यान्यदेयान्यपि विश्वा विश्वानि सर्वाणि वसूनि धनानि दधिरेऽर्पितवन्तो यत उशिजो मेधाविनो मोक्षार्थिनो वसतिमपेक्षमाणा वा गोमन्तं धनप्रचुरं व्रजं गोकुलाख्यं घोषं विवव्रुर्वरयांचक्रुः । किमुद्दिश्य, त्वया सह त्वत्संनिधानेन द्रविणं विषयभोगमिच्छमाना अपेक्षमाणास्तावतैव कृतार्थाः । ऋग्वेदेऽपि—"ता वां वास्तून्युष्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य कृष्णः परमं पदमवभाति भूरि" । भाष्यम्—वां वयमुष्मसि त्रिविधतापप्राप्तौ सत्यां तानि वास्तूनि गृहाणि गमध्यै गन्तुं प्राप्तुमयासो गन्तारः । तानि कानि, यत्र येषु गृहेषु भूरिशृङ्गा गावः सन्ति । शृङ्गा इत्युपलक्षणं तेन महाप्रमाणा महौधस्का इत्यर्थः । अहेत्यव्ययमेवकारार्थे । अत्रात्रैव गेहेषु तस्योरुगायस्य उरुभिर्वेदैर्गीयमानस्य विष्णोर्भूरि महत्तरमलुप्तशक्तिमत् परमं

पदं पारमार्थिकं रूपं कृष्णो यादवोऽस्तीति वेदैरुच्यत इत्यर्थः। सामसंहितास्वपि–"प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः यस्य त्वमावितथ" इति। भाष्यम्–भो अग्ने विश्वरूप स पुरुषस्तवोतिभिस्तव रक्षणैः कृत्वा संसारं प्रतरति। किंभूताभिरूतिभिः, सुवीराभिः सुतरां शक्ताभिरत एव वाजकर्मभिर्वाजस्य बलस्य कर्मभिः कारणरूपाभिः। यद्रक्षणेन कृत्वा सकलविघ्नमूर्ध्नि पदं धत्त इत्यर्थः। स कः पुरुषो यस्य त्वमवितथसख्यं प्राप्तोऽसि। अत्रार्थे रैवतं सामापि "रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः क्षुमन्तो याभिर्मदेम" इति। भाष्यम्–इन्द्रे परमात्मनि भगवति सधमादेऽस्माभिः सह हर्षयुक्ते सति क्षुमन्तो नयन्तश्चारयन्तो वयं याभिर्गोभिर्मदेम हृष्येम। ता गावो रेवतीः क्षीराज्यादिधनवत्यस्तुविवाजाः प्रभूतबलाश्च सन्तु। एतस्य गानं सामदर्पणे–रारेवतीशब्द आत्वम् त्राधाद्रावामार्गाः। एतान्युद्गातकर्षणानि षट्क्षुमन्त इति नकारलोपः। ईहाऔहोहोइडा एत एव स्तोमाः षट्॥ ३२॥

**किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा॥**
**अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्॥ ३३॥**

किं पुनरिति। किं पुनर्ब्राह्मणाः पुण्याः पुण्ययोनयो भक्ता राजर्षयस्तथा राजानश्च ते ऋषयश्चेति राजर्षयो यत एवमतोऽनित्यं क्षणभङ्गुरमसुखं च सुखवार्जितं मनुष्यलोकं प्राप्य पुरुषार्थसाधनं दुर्लभं मनुष्यत्वं लब्ध्वा भजस्व सेवस्व माम्॥ ३३॥

आ० टी०। यदि पापयोनिः पापाचारश्च त्वद्भक्त्या परां गतिं गच्छति तर्हि किमुत्तमजातिनिमित्तेन संन्यासादिना किं वा सद्वृत्तेनेत्याशङ्क्याह **किं पुनरिति**। उत्तमजातिमतां ब्राह्मणादीनामतिशयेन परा गतिर्यतो लभ्यतेऽतो भगवद्भजनं तैरेकान्तेन विधातव्यमित्याह **यत इति**। मनुष्यदेहातिरिक्तेषु पश्वादिदेहेषु भगवद्भजनयोग्यताभावात् प्राप्ते मनुष्यत्वे तद्भजने प्रयतितव्यमित्याह **दुर्लभमिति**॥ ३३॥

प० टी०। सत्येवं सत्कुलाचारवतः किं पुनरित्याह **किं पुनरिति**। ब्राह्मणा वेदविदः पुण्याः सदाचारवन्तस्तत्रापि भक्ता मद्भजनशीलास्तथा राजानश्च ते ऋषयश्च जनकाद्याः पृथग्वा राजान ऋषयश्चेति परां गतिं यान्तीति किं चित्रम्। एवं त्वमपि राजर्षिरस्यतो मां भजस्वेत्यर्थः। तदुक्तं बोधसुधाकरे–'अयमुत्तमोऽयमधमो जात्या रूपेण संपदा वयसा। श्लाघ्योऽश्लाघ्यो वेत्थं न वेत्ति भगवाननुग्रहावसरे॥१॥ अन्तस्थभावभोक्ता यतोऽन्तरात्मा यथा महामेघः। खदिरश्चम्पक इति वा प्रवर्षणे किं विचारयति' इति। श्रुतिरपि शातपथी–"तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथा ऋषीणां तथा मनुष्याणाम्" इति। भाष्यम्–तदात्माख्यं वस्तु देवानां मध्ये यो यः प्रत्यबुध्यत ज्ञातवान् स एव तदभवद्ब्रह्मरूपोऽभवत् तथैव ऋषीणां मनुष्याणां च तथा चात्मप्राप्तौ न जात्यादितारतम्यमित्यर्थः। ऋकशाखायामपि–"सर्वे नन्दन्ति यशसा गतेन सभासाहेन सख्या सखायः" इति। भाष्यम्–न तस्य प्रतिमास्ति तस्य नाम महद्यश इति श्रुतेर्यशसा परमात्मना गतेन प्राप्तेन सर्वे देहिनो नन्दन्ति परमानन्दाप्लुता भवन्ति। किंभूतेन सभासाहेन सभामिन्द्रियसभां लौकिकव्यवहारं वा सहते आक्रमते तथाविधेन। पुनः किंभूतेन, सख्योपकारकेण। किंभूताः सर्वे सखायः सर्वभूतसुहृत्तमास्तथा च सर्वभूतसुहृत्तमत्वमेवात्मप्राप्तिनिदानं नतूत्तमाधमत्वमिति रावणभाष्यम्। ब्राह्मणं त्वेतां श्रुतिमधिदैविकास्थित्या व्याकरोति यशो वै सोमो राजेत्यादिना। अथ

प्रकृतमनुसरामः । अस्मिन्नर्थे मा विलम्बं कुर्वित्याह **अनित्यमिति** । इममनित्यं क्षणभङ्गुरमसुखं दुःखैकनिदानं लोकं मर्त्यलोकं मनुष्यदेहं प्राप्य मां परमात्मानं भजस्व नित्यं मदनुसंधानमेव मद्भजनम्, अत्र विलम्बो मास्त्वित्यनित्यानि पदानि । अतोऽप्यग्रेऽधमयोनिप्राप्तौ किं च लप्स्यतीत्यर्थः । श्रुतिरपि सामसंहितासु—"आवो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः । अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम्" इति । भाष्यम्—भो यजमाना अणुचित्ताःसर्वेन्द्रियोपरमरूपान्मरणात्तनयित्नोरकस्मिकाशनिरूपात्पुरा पूर्वं जीवद्दशायामेवाग्निं प्रकाशमानं हिरण्यरूपं हिरण्यगर्भमीश्वरं राजानं स्वामिनं कृणुध्वं कुरुध्वं । किमर्थमवसे रक्षणार्थं मरणे जाते सति पश्चान्न किमपि चलतीत्यर्थः । अथ तस्य स्वामित्वे कोऽतिशय इत्याह । किंभूतं रोदस्योर्मायाविलासरूपयोर्द्यावापृथिव्योर्होतारं होमकर्तारं "य इमा विश्वा भुवनानि जुह्वद्" इतिश्रुतेः । अत एव रुद्रं क्रूरम् । अथ न केवलं क्रूरं सत्ययजं सत्यस्यानन्दरूपस्य संगमयितारम् । तथाध्वरस्येति षष्ठ्या द्वितीयार्थोऽवगम्यते तथा च संप्राप्त्यै कृतयागाद्यनुष्ठानं पुरुषमावो रक्षितवान् ॥ ३३ ॥

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥**
**मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४ ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे राजगुह्ययोगो नाम नवमोऽध्यायः ॥९॥

कथं मन्मना इति । मयि मनो यस्य तव स त्वं मन्मना भव तथा मद्भक्तो भव मद्याजी मद्यजनशीलो भव मामेव च नमस्कुरु मामेवेश्वरमेष्यस्यागमिष्यसि युक्त्वा समाधाय चित्तमेवमात्मानं मामेवमहं हि सर्वेषां भूतानामात्मा परा च गतिः परमयनं तं मामेवंभूतमेष्यसीत्यतीतेन पदेन संबन्धः, मत्परायणः सन्नित्यर्थः ॥ ३४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये राजविद्याराजयोगो नाम नवमोऽध्यायः ॥ ९ ॥

आ० टी० । भगवद्भक्तेरित्थंभावं पृच्छति **कथमिति** । ईश्वरभजने इतिकर्तव्यतां दर्शयति **मन्मना इति** । एवं भगवन्तं भजमानस्य मम किं स्यादित्याशङ्क्याह **मामेवेति** । समाधाय भगवत्येवेति शेषः । एवमात्मानमित्येतद्विवृणोति **अहं हीति** । अहमेव परमयनं तवेति मत्परायणस्तथाभूतः सन् मामेवात्मानमेष्यसीति संबन्धः । तदेवं मध्यमानां ध्येयं निरूप्य नवमेनाधमानामाराध्याभिधानमुखेन निजेन पारमार्थिकेन रूपेण प्रत्युक्तेन ज्ञानं परमेश्वरस्य परमाराधनमित्यभिदधता सोपाधिकं तत्पदवाच्यं निरुपाधिकं च तत्पदलक्ष्यं व्याख्यातम् ॥ ३४ ॥

**इत्यानन्दगिरिकृतगीताभाष्यटीकायां नवमोऽध्यायः ॥ ९ ॥**

प० टी० । अथ भजनप्रकारमाह **मन्मना इति** । मयि मनो यस्यासौ मन्मनाः संकल्पो मदाकार एव तथाविधो भव । मम भक्तो भव नान्यस्य क्षुद्रस्य । मद्याजी भव मदर्थमेव यजस्व

तथा तारतम्यविवर्जनेन मां सर्वत्रावस्थितं नमस्कुरु । तदुक्तम्–"विसृज्य स्मयमानान् स्वान् दृशं व्रीडां च दैहिकीं । प्रणमेद्दण्डवद्भूमावाश्वचाण्डालगोखरम्" इति । युक्तो योगयुक्तो भूत्वा मामेवात्मानं परमानन्दरूपमेष्यसि प्राप्स्यसि । तदुक्तम्–" विलिखितमिवरूपं चित्तभित्तौमुरारेः सुमन इव मनोयैरर्पितं तत्पदाब्जे । प्रतिपदमुदयद्भिः सात्विकैरङ्किताङ्गास्त इह भवपयोधेः पारमुल्लङ्घयन्ति " इति ॥ ३४ ॥

अथाध्यायतात्पर्यम् । विश्वाभासः किलासौ मदधिकरणकः स्यान्मदज्ञानकार्यं यन्मिथ्या तद्धि सत्याश्रयमिति नियमो नैव मिथ्याश्रितं रुत् । सत्ये सत्यं भ्रमान्ते न भजति सहसावस्थितिं मय्यसंगे तत्स्पर्शो वा कदाचिन्न भवति नवमेनोक्तमेतद्रहस्यम् ॥ १ ॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां परमार्थप्रपायां राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥ ९ ॥

इति नवमाध्यायः ॥ ९ ॥

---

# अथ
# दशमाध्यायः ।
## श्रीभगवानुवाच ।

**भूय एव महाबाहो शृणु मे परमं वचः ॥**
**यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥१॥**

सप्तमाध्याये भगवतस्तत्त्वं विभूतयश्च प्रकाशिता नवमे च, अथेदानीं येषु येषु भावेषु चिन्त्यो भगवांस्ते ते भावा वक्तव्याः, तत्त्वं च भगवतो वक्तव्यमुक्तमपि दुर्विज्ञेयत्वादित्यतो भगवानुवाच भूय इति । भूय एव भूयः पुनर्[1] हे महाबाहो शृणु मे मदीयं परमं प्रकृष्टं निरतिशयवस्तुनः प्रकाशकं वचो वाक्यं, यत् परमं ते तुभ्यं प्रीयमाणाय मद्वचनात् प्रीयसे त्वमतीवामृतमिव पिबंस्ततो वक्ष्यामि हितकाम्यया हितेच्छया ॥ १ ॥

आ० टी० । अध्यायद्वये सिद्धमर्थं संक्षेपतोऽनुभाषते **सप्तम इति** । तत्त्वं सोपाधिकं निरुपाधिकं च, विभूतयः सविशेषनिर्विशेषरूपप्रतिपत्त्युपयोगिन्यः । उत्तराध्यायस्याध्यायद्वयेन संबन्धं वदन्नध्यायान्तरमवतारयति **अथेति** । वक्तव्याः सविशेषध्याने निर्विशेषप्रतिपत्तौ च शेषत्वेनेति शेषः । ननु सविशेषं निर्विशेषं च भगवतो रूपं प्रागेव तत्र तत्रोक्तं तत् किमिति पुनरुच्यते तत्राह **उक्तमपीति** । तद्यदि तत्र तत्र तत्त्वमुक्तं तथापि पुनर्वक्तव्यं दुर्विज्ञेयत्वादिति यतो मन्यतेऽत इति योजना । प्रकृष्टत्वं वचसः स्पष्टयति **निरतिशयेति** । तदेव वचो विशिनष्टि **यत्परममिति** । सकृदुक्तेरर्थसिद्धेरसकृदुक्तिरनार्थिकेत्याशङ्क्याह **प्रीयमाणायेति** । ततो वक्ष्यामि तुभ्यमिति **पूर्वेण** संबन्धः ॥ १ ॥

१ भूयः पुनः—लि. १ पु. नास्ति

प० टी० । एवं द्वितीयाध्यायमादीकृत्याध्यायाष्टके क्रमेण देहादिव्यतिरिक्तात्मस्वरूपदर्शनपूर्वकं तत्प्राप्त्युपायभूतकर्मनैष्कर्म्याभ्यासभक्तियोगांस्तदधिकारिणश्च निरूप्य स्थूलसूक्ष्मप्रपञ्चमिथ्यात्वदर्शनप्रसंगेन स्वसत्यत्वं च प्रकटयन् मुख्यप्राणापरपर्यायमपञ्चीकृतभूतविग्रहहिरण्यगर्भात्मकं स्वस्वरूपं निरूपितमिदानीं मध्यमप्राणापरपर्यायं पञ्चीकृतभूतविग्रहं स्थूलव्यष्टिसमष्ट्याकारं विराडात्मकस्वरूपं दर्शयितुं दशमैकादशाध्याययोः प्रवृत्तिस्तत्र दशमे व्यष्ट्यपरपर्याया विभूतिर्निरूप्यते । तत्रालौकिकसामर्थ्यवती व्यष्टिरेव विभूतिः सा च विश्वरूपाङ्गोद्भूतदेवदेवर्षिगन्धर्वसिद्धावतारपक्षिसमयछन्दःपशुमनुष्योरगवृक्षादिरूपैरनन्तास्ति, तत्र श्रुतिस्मृतिप्रसिद्धाः कियन्त्योऽपि दर्शयितुं भगवानुपक्रमते भूय इति । महाबाहो इति संबुद्ध्यार्जुनस्य स्वाज्ञानोद्भूतप्रपञ्चजये परमपुरुषार्थाधिष्ठानमुक्तम् । भुय एव पुनरपि मे वचः शृणु । भूयःपदेन सप्तमनवमप्रोक्ताः काश्चिद्विभूतयः सन्तीति सूचितम् । किंभूतं वचः, परमं परमार्थनिरूपकं यदमृतोपमं ते तुभ्यं प्रीयमाणाय प्रीतिं प्राप्तवते हितकाम्यया हितेच्छया वक्ष्यामि ॥ १ ॥

**न मे विदुः सुरगणाः प्रभवं न महर्षयः ॥**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥**

किमर्थमहं वक्ष्यामीत्यत आह न म इति । न मे विदुर्न जानन्ति सुरगणाः, किं ते न विदुः, मम प्रभवं प्रभावं प्रभुशक्त्यतिशयम्, अथ वा प्रभवं प्रभवनमुत्पत्तिं वा नापि महर्षयो भृग्वादयो विदुः कस्मात्ते न विदुरित्युच्यतेऽहमादिः कारणं हि यस्माद्देवानां महर्षीणां च सर्वशः सर्वप्रकारैः ॥ २ ॥

आ० टी० । हितं दुर्विज्ञेयं तत्त्वज्ञानं कश्चिदन्योऽपि परमं वचो मह्यं वक्ष्यति तेन च मम तत्त्वज्ञानं भविष्यत्यतो भगवद्वचनमकिंचित्करमिति शङ्कित्वा परिहरति **किमर्थमित्यादिना** । इन्द्रादयो भृग्वादयश्च भगवत्प्रभावं न विन्दन्तीत्यत्र प्रश्नपूर्वकं हेतुमाह **कस्मादिति** । निमित्तत्वेनोपादानत्वेन च यतो देवादीनां भगवानेव हेतुरतस्तद्विकारास्ते न तस्य प्रभावं विदुरित्यर्थः ॥ २ ॥

प० टी० । अथ स्ववचनस्यातिरहस्यत्वेन दुर्ज्ञेयत्वमाह । **न मे विदुरिति** । मे प्रभवं लीलया प्रादुर्भावं सुरगणास्तथा महर्षयो भृग्वादयोऽपि न विदुर्न जानन्ति । कुत इत्याह **अहमिति** । हि यस्मात्कारणादहं सर्वशः सर्वेषां देवानां महर्षीणां चादिः कारणम् । अनादिसिद्धतया प्राचीनान्मत्तः सकाशाद्देवर्षीणामुत्पत्तेः । श्रुतिरपि—" मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत " इति । तथा—" सप्तर्षयः प्रविहिताः शरीरे " इति । तथा कण्वा आप—" तस्या सप्तऋषयः सप्त तीरे वागष्टमी " इति । भाष्यं तु—तीरे मुखसमीपे नेत्रश्रोत्रनासाजिह्वारूपसप्तेन्द्रियरूपाः सप्तर्षय इत्यर्थः ॥ २ ॥

**यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ॥**
**असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥**

किं च यो मामिति । यो मामजमनादिं च यस्मादहमादिर्हि देवानां महर्षीणां च न ममान्य आदिर्विद्यतेऽतोऽहमजोऽनादिश्चानादित्वमजत्वे हेतुस्तं मामजमनादिं च यो वेत्ति विजानाति लोकमहेश्वरं लोकानां महान्तमीश्वरम-

संमूढः संमोहवर्जितः स मर्त्येषु मनुष्येषु सर्वपापैः सर्वैः पापैर्मतिपूर्वामति-पूर्वकृतैः प्रमुच्यते प्रमोक्ष्यते ॥ ३ ॥

आ० टी० । इतश्च कश्चिदेव भगवत्प्रभावं वेत्तीत्याह किं चेति । कोऽसौ प्रभावो भगवतो यं बहवो न विदुरित्यपेक्षायां पारमार्थिकं प्रभावं तदधीनफलं च[1] कथयति यो मामिति । पदद्वयापौनरुक्त्यमाह अनादित्वमिति ॥ ३ ॥

प० टी० । अथ स्वज्ञाने फलमाह यो मामिति । सर्वकारणत्वादेव न विद्यते आदिः कारणं यस्य तमनादिमत एवाजं जन्मरहितं सर्वलोकानां भूर्भुवःस्वर्महर्जनस्तपोमुख्यानां महान्तमीश्वरं चालकमेवंविधं मां यो वेत्ति स मर्त्येष्वसंमूढो मोहरहितः सन् सर्वपापैः प्रमुच्यते ॥ ३ ॥

**बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ॥**
**सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥ ४ ॥**

अतश्चाहं महेश्वरो लोकानां, बुद्धिरिति । बुद्धिरन्तःकरणस्य सूक्ष्माद्यर्थावबोधनसामर्थ्यं तद्वन्तं बुद्धिमानिति हि वदन्ति, ज्ञानमात्मादिपदार्थानामवबोधः, असंमोहः प्रत्युपपन्नेषु बोद्धव्येषु द्रव्येषु विवेकपूर्विका प्रवृत्तिः, क्षमाक्रुष्टस्य ताडितस्य वाविकृतविचित्तता, सत्यं यथादृष्टस्य यथाश्रुतस्य चात्मानुभवस्य परबुद्धिसंक्रान्तये तथैवोच्चार्यमाणा वाक् सत्यमुच्यते, दमो बाह्येन्द्रियोपशमः, शमोऽन्तःकरणस्योपशमः, सुखमाह्लादो, दुःखं संतापो, भव उद्भवोऽभावस्तद्विपर्ययः, भयं च त्रासोऽभयमेव च तद्विपरीतम् ॥ ४ ॥

आ० टी० । भगवतो लोके महेश्वरत्वे हेत्वन्तरमाह अतश्चेति । मुमुक्षुभिराराध्यत्वसिद्धये बन्धमोक्षसाधनं पुरस्कृत्याशेषं जगत् प्रकृत्यधिष्ठातृत्वलक्षणं सोपाधिकं भगवत्प्रभावमभिधत्ते बुद्धिरिति । सूक्ष्मादीत्यादिशब्देन सूक्ष्मतरः सूक्ष्मतमश्चार्थो गृह्यते । उक्तं सामर्थ्यं बुद्धिरित्यस्मिन्नर्थे प्रसिद्धिं प्रमाणयति तद्वन्तमिति । आत्मादीति तदवबोधवन्तं हि ज्ञानिनं वदन्ति, अन्तःकरणस्योपशमो विषयेभ्यो व्यावृत्तिरिति शेषः ॥ ४ ॥

प० टी० । लोकमहेश्वरतामेव दर्शयति बुद्धिर्ज्ञानमिति त्रिभिः । बुद्धिः सारासारविचारनैपुण्यम्, ज्ञानमात्मविषयम्, असंमोहोऽव्याकुलीभावः, क्षमा सहिष्णुत्वम्, सत्यं यथार्थभाषणम्, दमो बाह्येन्द्रियनिग्रहः, शमोऽन्तःकरणसंयमः, सुखमनुकूलवेदनम्, दुःखं तद्विपरीतम्, भव उद्भवः, अभावस्तद्विपरीतः, भयं त्रासः, अभयं तद्विपरीतम् ॥ ४ ॥

**अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ॥**
**भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥**

अहिंसेति । अहिंसापीडा प्राणिनां, समता समचित्तता, तुष्टिः सन्तोषः पर्याप्तबुद्धिर्लाभेषु, तप इन्द्रियसंयमपूर्वकं शरीरपीडनं, दानं यथाशक्ति

---

[1] तद्धि फलं च—पा. लि. पु. ।

संविभागः, यशो धर्मनिमित्ता कीर्तिः, अयशस्त्वधर्मनिमित्ता कीर्तिः, भवन्ति भावा यथोक्ता बुद्ध्यादयो भूतानां प्राणिनां मत्त एवेश्वरात् पृथग्विधा नानाविधाः स्वकर्मानुरूपेण ॥ ५ ॥

आ० टी० । **यथाशक्तीति** । पात्रे श्रद्धया स्वशक्तिमनतिक्रम्यार्थानां देशकालानुगुण्येन प्रतिपादनमित्यर्थः । उक्तानां बुद्ध्यादीनां साश्रयाणामीश्वराद्धुत्पत्तिं प्रतिजानीते **भवन्तीति** । नानाविधत्वे हेतुमाह **स्वकर्मेति** ॥ ५ ॥

प० टी० । **अहिंसेति** । अहिंसा परपीडानिवृत्तिः, समता रागद्वेषराहित्यम्, तुष्टिर्दैवलब्धेन संतोषः, तपः शारीरादि, दानं न्यायगतस्य धनस्य पात्रार्पणम्, यशः सत्कीर्तिरयशोऽपयश एवमेते बुद्ध्यादयस्तद्विपरीताश्च भूतानां पृथग्विधानां भावाः प्राणिनां स्वभावाः सर्वे मनःकोशरूपान्मत्तः सकाशादुद्भवन्ति । श्रुतिरपि—" कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव " इति ॥ ५ ॥

**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ॥**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥**

किं च महर्षय इति । महर्षयः सप्त भृग्वादयः पूर्वेऽतीतकालसंबन्धिनश्चत्वारो मनवस्तथा सावर्णा इति प्रसिद्धाः, ते च मद्भावा मद्गतभावना वैष्णवेन सामर्थ्येनोपेता मानसा मनसैवोत्पादिता मया जाता उत्पन्ना येषां मनूनां महर्षीणां च सृष्टिर्लोक इमाः स्थावरजङ्गमाः[1] प्रजाः ॥ ६ ॥

आ० टी० । कथंचिदपि तेषामात्मातिरेकेणाभावान्मत्त एवेत्युक्तं न केवलं भगवतः सर्वप्रकृतित्वमेव किंतु सर्वज्ञत्वसर्वेश्वरत्वरूपमधिष्ठातृत्वमपीत्याह **किं चेति** । आद्या भृग्वादयो वसिष्ठान्ताः सर्वज्ञा विद्यासंप्रदायप्रवर्तकास्तथेति मनूनामपि पूर्वत्वेनाद्यत्वमनुकृष्यते । के ते मनवस्तत्राह **सावर्णा इति** । इति प्रसिद्धाः पुराणेषु प्रजानां पालकाः स्वयमीश्वराश्चेति शेषः । महर्षीणां मनूनां च तुल्यं विशेषणं **ते चेति** । मयि सर्वज्ञे सर्वेश्वरे गता भावना येषां ते तथा । भावनाफलमाह **वैष्णवेनेति** । वैष्णव्या शक्त्याधिष्ठितत्वेन ज्ञानैश्वर्यवन्त इत्यर्थः । तेषां जन्मनो वैशिष्ट्यमाचष्टे **मानसा इति** । मन्वादीनेव विशिनष्टि **येषामिति** । विद्यया जन्मना च संततिभूता मन्वादीनामस्मिल्लोके सर्वाः प्रजा इत्यर्थः ॥ ६ ॥

प० टी० । अथ सृष्टिकर्तारोऽपि मत्त एवोद्भूता इत्याह **महर्षय इति** । सप्त महर्षयो 'भृगुं मरीचिमत्रिं च पुलस्त्यं पुलहं क्रतुम् । वसिष्ठं च महातेजाः सोऽसृजन्मनसा सुतान्' तेभ्योऽपि चत्वारः सनकादयस्तथा मनवश्चतुर्दश स्वायंभुवादयो मद्भावा मत्सामर्थ्यवन्तो हिरण्यगर्भात्मनो मम मानसाः संकल्पमात्राज्जाता येषां पुत्रपौत्रादिरूपा इमाः प्रजा लोके वर्तन्ते । इत्यनेन ब्रह्मादिस्तम्बपर्यन्तं या सृष्टिः सा सांकल्पिकी काल्पनिका न कार्यकरणसंघातरूपा "यथा पूर्वमकल्पयत्" इति श्रुतेः ॥ ६ ॥

---

१ जङ्गमलक्षणाः—पा. मु. पु. ।

**एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ॥**
**सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥**

एतामिति । एतां यथोक्तां विभूतिं विस्तारं योगं च युक्तिं चात्मनो घटनमथवा योगैश्वर्यसामर्थ्यं सर्वज्ञत्वं योगजं योग उच्यते मम मदीयं योगं यो वेत्ति तत्त्वतस्तत्त्वेन यथावदित्येतत् सोऽविकम्पेनाप्रचलितेन योगेन सम्यग्दर्शनस्थैर्यलक्षणेन युज्यते संबध्यते नात्र संशयो नास्मिन्नर्थे संशयोऽस्ति ॥ ७ ॥

**आ० टी०** । सोपाधिकं प्रभावं भगवतो दर्शयित्वा तज्ज्ञानफलमाह **एतामिति** । बुद्ध्याद्युपादानत्वेन विविधा भूतिर्भवनं वैभवं सर्वात्मकत्वं तदाह **विस्तारमिति** । ईश्वरस्य तत्तदर्थसंपादनसामर्थ्यं योगस्तदाह **आत्मन इति** । योगस्तत्फलमैश्वर्यं सर्वज्ञत्वं सर्वेश्वरत्वं च मदीयं शक्तिज्ञानलेशमाश्रित्य मन्वादयो भृग्वादयश्चेशते जानते च तदाह **अथवेति** । यथा तौ विभूतियोगौ तथा निरङ्कुशत्वेनेति वेदनस्य निरङ्कुशत्वं दर्शयति **यथावदिति** । सोपाधिकं ज्ञानं निरुपाधिकज्ञाने द्वारमित्याह **सोऽविकम्पेनेति** । उक्तेऽर्थे प्रतिबन्धाभावमाह **नास्मिन्निति** ॥ ७ ॥

**प० टी०** । अथोक्तपरंपरायास्तत्त्वज्ञानस्य फलमाह **एतामिति** । एतां भृग्वादिलक्षणां मद्विभूतिं योगमैश्वरलक्षणं तत्त्वतो यो वेत्ति सोऽविकम्पेन स्थिरेण ममैश्वर्येण युज्यते युक्तो भवति नात्र संशयो नार्थवादोऽयमित्यर्थः ॥ ७ ॥

**अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ॥**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥**

कीदृशेनाविकम्पेन योगेन युज्यत इत्युच्यते अहमिति । अहं परं ब्रह्म वासुदेवाख्यं सर्वस्य जगतः प्रभव उत्पत्तिर्मत्त एव स्थितिनाशक्रियाफलोपभोगलक्षणं विक्रियारूपं सर्वं जगत् प्रवर्तत इत्येवं मत्वा भजन्ते सेवन्ते मां बुधा अवगतपरमार्थतत्त्वार्था भावसमन्विता भावो भावना परमार्थतत्त्वाभिनिवेशस्तेन समन्विताः संयुक्ता इत्यर्थः ॥ ८ ॥

**आ० टी०** । कथं तावकविभूत्यैश्वर्यज्ञानमुक्तयोगस्य हेतुरिति मत्वा पृच्छति **कीदृशेनेति** । उक्तज्ञानमाहात्म्यात् प्रतिष्ठिता भगवन्निष्ठा । सिद्ध्यतीत्याह **उच्यत इति** । प्रभवत्यस्मादिति प्रभवः सर्वप्रकृतिः सर्वात्मेत्याह **उत्पत्तिरिति** । सर्वज्ञात् सर्वेश्वरान्मत्तो निमित्तात् सर्वस्थितिनाशादि भवति मयान्तर्यामिणा प्रेर्यमाणं सर्वं यथास्वं मर्यादामनतिक्रम्य चेष्टते तदाह **मत्त इति** । इत्थं मम सर्वात्मत्वं सर्वप्रकृतित्वं सर्वेश्वरत्वं सर्वज्ञत्वं च महिमानं ज्ञात्वा मय्येव निष्ठावन्तो भवन्तीत्याह **इत्येवमिति** । संसारासारताज्ञानवतां भगवद्भजनेऽधिकारं द्योतयति **अवगतेति** । परमार्थतत्त्वे पूर्वोक्तरीत्या ज्ञाते प्रेमादरावभिनिवेशाख्यौ भवतस्तेन संयुक्तत्वं च भगवद्भजने भवति हेतुरित्याह **भावेति** ॥ ८ ॥

**प० टी०** । यथा विभूतियोगयोर्ज्ञानेन तत्त्वज्ञानं भवति तद्दर्शयति **अहमिति चतुर्भिः** । अहं सर्वस्य भृग्वादिमन्वन्तप्रपञ्चस्य प्रभवः कारणं तथा मत्तः सकाशात्सर्वं प्रवर्तते व्यवहार इति मत्वानुभवेन ज्ञात्वा भावसमन्विताः प्रीतियुक्ता बुधा ज्ञानिनो मां भजन्ते ॥ ८ ॥

**मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ॥**
**कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥**

किंच मच्चित्ता इति । मच्चित्ता मयि चित्तं येषां ते मच्चित्ता मद्गतप्राणा मयि गताः प्राणाश्चक्षुरादयः प्राणा येषां ते मद्गतप्राणा मय्युपसंहृतकरणा इत्यर्थः । अथवा मद्गतप्राणा मद्गतजीवना इत्येतद्बोधयन्तोऽवगमयन्तः परस्परमन्योऽन्यं कथयन्तो ज्ञानबलवीर्यादिधर्मैर्विशिष्टं मां तुष्यन्ति च परितोषमुपयान्ति रमन्ति च रतिं च प्राप्नुवन्ति प्रियसंगत्येव ॥ ९ ॥

आ० टी० । न केवलमुक्तमेव भगवद्भजने साधनान्तरं चास्तीत्याह **किं चेति** । ईश्वरात् प्रतीचः प्रागुक्तादन्यत्र चित्तप्रचाररहित्यं भगवद्भजनोपायमाह **मयीति** । चक्षुरादीनां भगवतोऽप्राप्तिस्तदगोचरत्वात्तस्येत्याशङ्क्याह **मय्युपसंहृतेति** । भगवदतिरेकेण जीवनेऽपि नादरस्तदपि मय्येवार्पितं भक्तानामित्याह **अथवेति** । आचार्येभ्यः श्रुत्वा वादकथया परस्परं भगवन्तं सब्रह्मचारिणो बोधयन्ति तदपि भगवद्भजनसाधनमित्याह **बोधयन्त इति** । आगमोपपत्तिभ्यां भगवन्तमेव विशिष्टधर्माणं शिष्येभ्यो गुरवो व्यपदिशन्ति तदपि भगवद्भजनमेवेत्याह **कथयन्त इति** । भक्तानां तुष्टिरती स्वरसतः स्यातामित्याह **तुष्यन्तीति** । मनोरथपूर्त्या रतिप्राप्तौ कामुकसंमतमुदाहरणमाह **प्रियेति** ॥ ९ ॥

प० टी० । प्रीतिपूर्वकं भजनमाह **मच्चित्ता इति** । मय्येव चित्तं येषां ते मच्चित्ता अन्तर्निष्ठा मयि गताः प्राणा इन्द्रियाणि येषां ते बहिरपि मद्रूपं जगत्पश्यन्तः । एवमनुभूतमर्थं परस्परं श्रुतिवाक्यैर्बोधयन्तस्तथा भक्त्या मां कथयन्तः कीर्तयन्तः सन्तस्तुष्यन्ति तेन रमन्ति निर्वृतिं लभन्ते ॥ ९ ॥

**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ॥**
**ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १० ॥**

ये यथोक्तैः प्रकारैर्भजन्ते मां भक्ताः सन्तः प्रीतिपूर्वकं, तेषामिति । तेषां सततयुक्तानां नित्याभियुक्तानां निवृत्तसर्वबाह्यैषणानां भजतां सेवमानानां, किमर्थित्वादिना कारणेनेत्याह प्रीतिपूर्वकं प्रीतिः स्नेहस्तत्पूर्वकं मां भजतामित्यर्थः । ददामि प्रयच्छामि बुद्धियोगं बुद्धिः सम्यग्दर्शनं मत्तत्त्वविषयं तेन योगो बुद्धियोगस्तं बुद्धियोगं येन बुद्धियोगेन सम्यग्दर्शनलक्षणेन मां परमेश्वरमात्मभूतमात्मत्वेनोपयान्ति प्रतिपद्यन्ते ॥ १० ॥

आ० टी० । यदुक्तं सोऽविकम्पेनेत्यादि तदर्थं भूमिकां कृत्वा तदिदानीमुदाहरति **ये यथोक्तेति** । नित्याभियुक्तानामनवरतं भगवत्यैकाग्र्यसंपन्नानामित्यर्थः । पुत्रादिलोकत्रयहेत्वर्थित्वेन वा गर्भदासत्वेन वा प्रत्यहं जीवनोपायसिद्धये वा भजनमिति शङ्कित्वा दूषयति **किमित्यादिना** । प्रागुक्तां ज्ञानाख्यां भक्तिं स्नेहेन कुर्वतामित्यर्थः । तेभ्योऽहं तत्त्वज्ञानं प्रयच्छामीत्याह **ददामीति** । उक्तबुद्धिसंबन्धस्य फलमाह **येनेति** ॥ १० ॥

प० टी० । एवंभूतानां ज्ञानप्रदोऽहमेवेत्याह **तेषामिति** । तेषां पूर्वोक्तानां सततयुक्तानां मय्यासक्तानां प्रीतिपूर्वकं भजतां च तं बुद्धियोगं ददामि । येन ज्ञानयोगेन ते मामुपयान्ति ॥ १० ॥

**तेषामेवानुकम्पार्थमहमज्ञानजं तमः ॥**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥**

के ते ये मच्चित्तादिप्रकारैर्मां भजन्ते किमर्थं कस्य वा तत्प्राप्तिप्रतिबन्धहेतोर्नाशकं बुद्धियोगं तेषां त्वद्भक्तानां ददासीत्याकाङ्क्षायामाह तेषामिति। तेषामेव कथं नाम श्रेयः स्यादित्यनुकम्पार्थं दयाहेतोरहमज्ञानजमविवेकतो जातं मिथ्याप्रत्ययलक्षणं मोहान्धकारं तमो नाशयाम्यात्मभावस्थ आत्मनो भावोऽन्तःकरणाशयस्तस्मिन्नेव स्थितः सन् ज्ञानदीपेन विवेकप्रत्ययरूपेण भक्तिप्रसादस्नेहाभिषिक्तेन मद्भावनाभिनिवेशवातेरितेन ब्रह्मचर्यादिसाधनसंस्कारवत्प्रज्ञावर्तिनापि विरक्तान्तःकरणाधारेण विषयव्यावृत्तचित्तरागद्वेषाकलुषितनिवातापवारकस्थेन नित्यप्रवृत्तैकाग्र्यध्यानजनितसम्यग्दर्शनभास्वता ज्ञानदीपेनेत्यर्थः॥११॥

आ० टी० । ध्यानजन्यप्रकर्षकाष्ठागतान्तःकरणपरिणामे निरस्ताशेषविशेषभगवद्रूपप्राप्तिहेतौ बुद्धियोगे प्रश्नपूर्वकं भक्तानधिकारिणो दर्शयति **के त इति** । भगवत्प्राप्तेर्बुद्धिसाध्यत्वे सत्यनित्यत्वापत्तेस्त्वं भक्तेभ्यो बुद्धियोगं ददासीत्ययुक्तमिति शङ्कते **किमर्थमिति** । तेषां बुद्धियोगं किमर्थं ददासीति संबन्धः । भगवत्प्राप्तिप्रतिबन्धकनाशको बुद्धियोगस्तेन नास्ति तत्प्राप्तेरनित्यत्वमित्याशङ्क्याह **कस्येति** । भक्तानां तत्प्राप्तिप्रतिबन्धकं विविच्य दर्शयति **इत्याकाङ्क्षायामिति** । अविवेकोऽनाद्यज्ञानं ततो जातं मिथ्याज्ञानं तदुभयमेकीकृत्य तमो विवक्ष्यते । न च तन्नाशकत्वं जडस्य कस्य चित्तदन्तर्भूतस्य युक्तं तेनाहं नाशयामीत्युक्तं केवलचैतन्यस्य जडबुद्धिवृत्तेरिवाज्ञानाद्यनाशकत्वमाशङ्क्य विशिनष्टि **आत्मेति** । तस्याशयस्तन्निष्ठो वृत्तिविशेषो वाक्योत्थबुद्धिवृत्त्यभिव्यक्तश्चिदात्मा सहायसामर्थ्यादज्ञानादिनिवृत्तिहेतुरित्यर्थः । बुद्धित्वबोधस्याज्ञानादिनिवर्तकत्वमुक्त्वाबोधेद्धबुद्धेस्तन्निवर्तकत्वमिति पक्षान्तरमाह **ज्ञानेति** । देहाद्यव्यक्तान्तानात्मवर्गातिरिक्तवस्तुगोचरत्वमाह **विवेकेति** । भगवति सदा विहितया भक्त्या तस्य प्रसादोऽनुग्रहः स एव स्नेहस्तेनासेचनद्वारा स्वोत्पत्तिमाह **भक्तीति** । मय्येव भावनायामभिनिवेशो वातस्तेन प्रेरितोऽयं जायते, न हि वातप्रेरणमन्तरेणादौ दीपस्योत्पत्तिरित्याह **मद्भावनेति** । ब्रह्मचर्यमष्टाङ्गमादिशब्देन शमादिग्रहः । तेन हेतुनाहितसंस्कारवती या प्रज्ञा तथाविधवर्तिनिष्ठश्चायं न हि वर्त्यतिरेकेण दीपो निर्वर्त्यते तदाह **ब्रह्मचर्येति** । न चाधाराद्दते दीपस्योत्पत्तिरदृष्टत्वादित्याह **विरक्तेति** । यद्विषयेभ्यो व्यावृत्तं चित्तं रागाद्यकलुषितं तदेव निवातमपकारकं तत्र स्थितत्वमस्य दर्शयति **विषयेति** । भास्वतेति विशेषणं विशदयति **नित्येति** । सदातनं चित्तैकाग्र्यं तत्पूर्वं ध्यानं तेन जनितं सम्यग्दर्शनफलं तदेव भास्तद्वता तत्पर्यन्तेनेत्यर्थः । तेनाज्ञाने सकार्ये निवृत्ते भगवद्भावः स्वयमेव प्रकाशीभवतीति मत्वा व्याख्यातमेव पदमनुवदति **ज्ञानेति** ॥ ११ ॥

प० टी० । ननु ज्ञानदातृत्वमुपदेशाद्भवति स च साक्षाद्दर्शनाभावात्कथं युज्यत इत्याह **तेषामिति** । तेषां प्रीतिपूर्वकं भजतामनुकम्पया कृपया ज्ञानाज्जातं तमः संसाराख्यमहमेव नाशयामि ।

कुतः, स्थित आत्मभावस्थो बुद्धौ वर्तमानः केन भास्वता प्रकाशवता ज्ञानदीपेन अत्र श्रुतिरप्यथ-वैवल्लीषु "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्त-स्यैष आत्मा विवृणुते तनूं स्वाम्" इति । भाष्यम्—अयमात्मा प्रवचनेन प्रकृष्टं वचनं प्रवचनमुपदे-शस्तेन लभ्यो न मेधया युक्त्या लभ्यो नापि बहुना श्रुतेन शास्त्रश्रवणेन । किंत्वेष आत्मा यं पुरुषं वृणुतेऽनुकम्प्यत्वेन गणयति तस्यैष आत्मा स्वां तनूं स्वस्वरूपं विवृणुते सत्वान्तःकरणवृत्तिस्थितो विवरयति प्रकाशयति । तदुक्तं वासिष्ठे—'न शास्त्रैर्नापि गुरुणा दृश्यते परमेश्वरः । दृश्यते स्वात्म-नैवात्मा स्वया सत्त्वस्थया धिया' इति । टिप्पणिकासु—'आदर्शे प्रतिरूपदर्शकमयी शक्तिर्निसर्गस्थि-ता, द्रष्टा तत्र मलापकर्षणविधिं संपाद्यते केवलम् । तद्वच्चित्परिणामरूपमनसः शाबल्यसंशोधने, सत्कर्मेश्वरभक्तितः स्वत इहैवात्मप्रकाशो भवेत्' इति । ऋग्वेदेऽपि—"यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति। यदीं शृणोति न हि प्रवेद सुकृतस्य पन्थाम्" इति । रावणभाष्यम्—अत्र सचिशब्दः सखिवाची। सचीन् सखीन् परमप्रेमास्पदं विषयान् वेत्तीति सचिवित्तमुपकारकम् । अत एव सखायं परमात्मानं यः पुरुषस्तित्याज त्यक्तवान् आत्मबहिर्मुख इत्यर्थः । तस्य पठनात्मिकायामपि वाचि सत्यत्वभागो नास्ति किं पुनर्जल्पनायाम्। तथा ईमित्यव्ययम्। बहिर्मुखं यच्छृणोति शास्त्रश्रवणं करोति तदलकमलीकमसत्यम् । हियस्मात्कारणात् सुकृतस्य सत्यस्य ब्रह्मणः पन्थां पन्थानं मार्गं न वेद न जानाति । तथा "मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु" इति । भाष्यम्—जनासो जना अभितः सर्वप्रकारेण मुह्यन्तु मोहं प्राप्नुवन्तु परंत्विह शरीरेऽस्माकं मुमुक्षूणामिन्द्रापरपर्यायः परमात्मा सूरिरुपदेष्टास्तु ॥ ११ ॥

## अर्जुन उवाच ।

**परं ब्रह्म परं धाम पवित्रं परमं भवान् ॥**
**पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२ ॥**

यथोक्तां भगवतो विभूतिं योगं च श्रुत्वार्जुन उवाच परमिति । परं ब्रह्म परमात्मा परं धाम परं तेजः पवित्रं पावनं परमं प्रकृष्टं भवान् पुरुषं शाश्वतं नित्यं दिव्यं दिवि भवमादिदेवं सर्वदेवानामादौ भवं देवमजं विभुं विभवनशीलम् ॥ १२ ॥

आ० टी० । निरस्ताशेषविशेषं निरुपाधिकं सोपाधिकं च सर्वात्मत्वादि भगवतो रूपं तद्वि-फलं च श्रुत्वा निरुपाधिकरूपस्य प्राकृतबुद्ध्यनवगाह्योक्तिपूर्वकं मन्दानुग्रहार्थं सर्वदा सर्वबुद्धिग्राह्यं सोपाधिकं रूपं विस्तरेण श्रोतुमिच्छन् पृच्छतीत्याह **यथोक्तामिति** । परं ब्रह्म भवानिति लक्ष्य-निर्देशः, तस्य लक्षणार्थं परं धामेत्यादिविशेषणत्रयम् । धामशब्दस्य स्थानवाचित्वं व्यावर्तयन् व्याचष्टे **तेज इति** । तस्य चैतन्यस्य परमत्वं जन्मादिराहित्येन कौटस्थ्यं प्रकृष्टं पावनमत्यन्तशुद्ध-त्वमुच्यते यदेवं लक्षणं परमं ब्रह्म तद्भवानेव नान्य इत्यर्थः । कुतस्त्वमेवमज्ञासीरित्याशङ्क्याप्तवाक्या-दित्याह **पुरुषमिति** । दिवि परमे व्योम्नि भवतीति दिव्यस्तं सर्वप्रपञ्चातीतं दीव्यति द्योतत इति देवः स चादिः सर्वमूलत्वादत एवाजस्तं त्वां सर्वगतमाहुरिति संबन्धः ॥ १२ ॥

प० टी० । एवं भगवदुक्तमवधार्यार्जुनः प्राह **परं ब्रह्मेति सप्तभिः** ॥ १२ ॥

**आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ॥**
**असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥ १३ ॥**

ईदृशमाहुः कथयन्ति त्वामृषयो वसिष्ठादयः सर्वे देवर्षिर्नारदस्तथासितो देवलोऽप्येवमाह व्यासश्च, स्वयं चैव त्वं चैव ब्रवीषि मे मह्यम् ॥ १३ ॥

आ० टी० । उक्तविशेषणं त्वामृषयः सर्वे यस्मादाहुस्तस्मात्तद्वचनात्त्वयोक्तं ब्रह्मत्वं युक्तमित्याह **ईदृशमिति** । ऋषिग्रहणेन गृहीतानामपि नारदादीनां विशिष्टत्वात् पृथग्ग्रहणम् । असितो देवलस्य पिता । किमन्यैस्त्वं स्वयमेवात्मा मुक्तरूपं मह्यमुक्तवानित्याह **स्वयं चेति** ॥ १३ ॥

प० टी० । परं ब्रह्मादिभिर्नवभिर्विशेषणैरुपेतं त्वां सर्वे ऋषय आहुस्तेषु विशेषतो नारदो देवर्षिराह असितो देवलश्चाहं ततोऽपि विशेषेण व्यासः प्राह तथा नेमे विदुः सुरगणा इत्यादिवाक्यैर्मां प्रति स्वयमपि ब्रवीषि ॥ १३ ॥

**सर्वमेतदृतं मन्ये यन्मां वदसि केशव ॥**
**न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥ १४ ॥**

सर्वमिति । सर्वमेतद् यथोक्तमृषिभिस्त्वया चैतदृतं सत्यमेव मन्ये यन्मां प्रति वदसि भाषसे हे केशव न हि ते तव भगवन् व्यक्तिं प्रभवं विदुर्न देवा न दानवाः ॥ १४ ॥

आ० टी० । ऋषिभिस्त्वया चोक्तत्वादुक्तं सर्वं सत्यमेवेति मम मनीषेत्याह **सर्वमिति** । किं तदित्याशङ्क्यात्मरूपमित्याह **यन्मामिति** । देवादिभिः सर्वैरुच्यमानतया तद्रूपे विशिष्टवक्तृग्रहणमनर्थकमित्याशङ्क्याह **न हीति** । प्रभवो निरुपाधिकस्वभावः, यदा देवादीनामपि दुर्विज्ञेयं तव रूपं तदा का कथा मनुष्याणामित्यर्थः ॥ १४ ॥

प० टी० । एवं यद्वदसि तत्सर्वमृतं सत्यं मन्ये । तत्किम्, भो भगवंस्ते व्यक्तिं स्वरूपं देवा दानवाश्च हीति निश्चयबुद्ध्या न विदुरिति ॥ १४ ॥

**स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ॥**
**भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥**

यतस्त्वं देवादीनामादिरतः स्वयमिति । स्वयमेवात्मनात्मानं वेत्थ जानासि त्वं, कथंभूतं निरतिशयज्ञानैश्वर्यबलादिशक्तिमन्तमीश्वरं पुरुषोत्तमं भूतानि भावयतीति भूतभावनस्तत्संबुद्धौ हे भूतभावन भूतेश भूतानामीश हे देवदेव जगत्पते ॥ १५ ॥

आ० टी० । कश्चिदेव महता कष्टेनानेकजन्मसंसिद्धो जानाति त्वदनुगृहीतस्तद्रूपमित्याभिप्रेत्याह **यत इति** । स्वयमेवोपदेशमन्तरेणेत्यर्थः, आत्मना प्रत्यक्षेणाविषयतयेति यावत् । आत्मानं

निरुपाधिकं रूपम् । न च तव सोपाधिकमपि रूपमन्यस्य गोचरे तिष्ठतीत्याह **निरतिशयेति ।** पुरुषश्चासावुत्तमश्चेति क्षराक्षरातीतपूर्णचैतन्यरूपत्वं संबोधनेन बोध्यते । सर्वप्रकृतित्वं सर्वकर्तृत्वं च कथयति **भूतानीति ।** सर्वेश्वरत्वमाह **भूतानामिति ।** उक्तं ते सोपाधिकं रूपं देवादीनामाराध्यतामधिगच्छतीत्याह **देवेति ।** जगतः सर्वस्य स्वामित्वेन पालयितृत्वमाह **जगदिति ॥ १५ ॥**

**प० टी० ।** किं तु स्वयमेवात्मना स्वरूपेण प्रमाणान्तरागोचरमात्मानं वेत्थ जानासि । अत एव पुरुषोत्तमेतिसंबुद्धिः । श्रुतिरपि—"एतावानस्य महिमातो ज्यायांश्च पूरुषः" इति । भूतानि भाव्यन्ते कल्प्यन्ते यस्मिन्निति भूतभावन भूतेश पृथिव्यादिमहाभूतस्वामिन् ॥ १५ ॥

## वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ॥
## याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥

वक्तुमिति । वक्तुं कथयितुमर्हस्यशेषेण दिव्या ह्यात्मविभूतय आत्मनो विभूतयो यास्ता वक्तुमर्हसि याभिर्विभूतिभिरात्मनो माहात्म्यविस्तरैरिमाँल्लोकांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥

**आ० टी० ।** यस्मादस्मदृशामगोचरस्तवात्मा जिज्ञासितश्च तस्मात्त्वयैव तद्रूपं वक्तव्यमित्याह **वक्तुमिति ।** दिव्यत्वमप्राकृतत्वम् । संप्रत्यन्वयमन्वाचष्टे **आत्मन इति ।** वक्तव्या विभूतीर्विशिनष्टि **याभिरिति ।** यद्द्वारा लोकान् पूरयित्वा वर्तसे ता विभूतीरशेषेण वक्तुमर्हसीत्यर्थः ॥ १६ ॥

**प० टी० ।** दिव्या देवरूपाण्य आत्मविभूतयोऽशेषेण विस्तरेण वक्तुमर्हसि । याभिर्विभूतिभिरिमाँल्लोकान् भूर्भुवःस्वरादीन् व्याप्य तिष्ठसि ॥ १६ ॥

## कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ॥
## केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १७ ॥

कथमिति । कथं वियां विजानीयामहं हे योगिंस्त्वां सदा परिचिन्तयन् केषु केषु च भावेषु वस्तुषु चिन्त्योऽसि ध्येयोऽसि भगवन् मया ॥ १७ ॥

**आ० टी० ।** किमर्थं विभूतीः श्रोतुमिच्छसीत्याशङ्क्याह ध्यानसौकर्यप्रकारप्रश्नेन फलं कथयति **कथमिति ।** योगो नामैश्वर्यं तदस्यास्तीति योगी तस्य संबुद्धौ हे योगिन्नहं स्थविष्ठमतिस्त्वां केन प्रकारेण सततमनुसंदधानो विशुद्धबुद्धिर्भूत्वा निरुपाधिकं त्वां विजानीयामिति प्रश्नः । प्रश्नान्तरं प्रस्तौति **केषु केष्विति ।** चेतनाचेतनभेदादुपाधिबहुत्वाच्च बहुवचनम् ॥ १७ ॥

**प० टी० ।** भो योगिन्नचिन्त्यैश्वर्य त्वां व्यष्टिरूपेण स्थितमहं केन कथं प्रकारेण विद्यां विजानीयां, केषु केषु भावेषु स्वकीयावासस्थलेषु मया चिन्त्योऽसि, तत्तद्भावदर्शनेन तव स्मरणं भविष्यतीत्यर्थः ॥ १७ ॥

## विस्तरेणात्मनो योगं विभूतिं च जनार्दन ॥
## भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥

विस्तरेणेति । विस्तरेणात्मनो योगं योगैश्वर्यशक्तिविशेषं विभूतिं च विस्तरं ध्येयपदार्थानां हे जनार्दन अर्दतेर्गतिकर्मणोरूपम् । असुराणां देवप्रतिपक्षभूतानां जनानां नरकादिगमयितृत्वाज्जनार्दन अभ्युदयनिःश्रेयसपुरुषार्थप्रयोजनं सर्वैर्जनैर्याच्यत इति वा, भूयः पूर्वमुक्तमपि कथय तृप्तिर्हि परितोषो यस्मान्नास्ति मे मम शृण्वतस्त्वन्मुखनिःसृतवाक्यामृतम् ॥ १८ ॥

आ० टी० । प्रकृतप्रश्नमुपसंहरति **विस्तरेणेति** । अर्दतेर्गतिकर्मणो जनार्दनेति रूपं तद्व्युत्पादयति **असुराणामिति** । प्रकारान्तरेण शब्दार्थं व्युत्पादयति **अभ्युदयेति** । ननु पूर्वमेव सप्तमे नवमे च विभूतिरैश्वर्यं चेश्वरस्य दर्शितं तत् किमिति श्रोतुमिष्यते तत्राह **भूय इति** । अमृतममृतप्रख्यमित्यर्थः ॥ १८ ॥

प० टी० । पूर्वं सप्तमादिषु सामान्यतः कथिता एव परं तु भूयो विस्तरेण कथयतस्ते वचनामृतं शृण्वतो मे तृप्तिर्नास्ति ॥ १८ ॥

## श्रीभगवानुवाच ।

**हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ॥**
**प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥१९॥**

हन्त त इति । हन्तेदानीं ते तव दिव्या दिवि भवा आत्मविभूतय आत्मनो मम विभूतयो यास्ताः कथयिष्यामीत्येतत् प्राधान्यतो यत्र यत्र प्रधाना या या विभूतिस्तां तां प्रधानां प्राधान्यतः कथयिष्याम्यहं कुरुश्रेष्ठ अशेषतस्तु वर्षशतेनापि न शक्यते वक्तुं यतो नास्त्यन्तो विस्तरस्य मे विभूतीनामित्यर्थः ॥ १९ ॥

आ० टी० । प्रष्टारं विश्रम्भयितुं भगवानुक्तवानित्याह **श्रीभगवानिति** । हन्तेत्यनुमतिं व्यावर्त्य जिज्ञासावच्छिन्नं कालं दर्शयति **इदानीमिति** । दिवि भवत्वमप्राकृतत्वमस्मद्गोचरत्वं । वाक्यान्वयं द्योतयति **यास्ता इति** । सर्वविभूतीनां वक्तव्यत्वप्राप्तावुक्तं **यत्रेति** । किमित्यनवशेषतो विभूतयो नोच्यन्ते तत्राह **अशेषतस्त्विति** । तत्र हेतुर्यत इति ॥ १९ ॥

प० टी० । ततः श्रीभगवान् वक्तुमुपक्रमते **हन्तेति** । हन्तेत्यादरेण ते तुभ्यं दिव्या आत्मविभूतयः प्राधान्यतो मुख्यत्वेन कथयिष्यामि हि यस्मात् कारणाद्धो कुरुश्रेष्ठ मे विस्तरस्यान्तो नास्ति ॥ १९ ॥

**अहमात्मा गुडाकेश सर्वभूताशयस्थितः ॥**
**अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २० ॥**

तत्र प्रथममेव तावच्छृणु अहमिति । अहमात्मा प्रत्यगात्मा गुडाकेश गुडाका निद्रा तस्या ईशो गुडाकेशो जितनिद्र इत्यर्थः, घनकेश इति वा स-

**र्वेषां भूतानामाशयेऽन्तर्हृदि स्थितोऽहमात्मा प्रत्यगात्मा नित्यं ध्येयस्तदशक्तेन चोत्तरेषु भावेषु चिन्त्योऽहं चिन्तयितुं शक्यो यस्मादहमेवादिर्भूतानां कारणं तथा मध्यं च स्थितिरन्तः प्रलयश्चैवं च ध्येयोऽहम् ॥ २० ॥**

**आ० टी०** । विभूतिप्रदर्शने प्रस्तुते सत्यादावेव पारमार्थिकं पारमेश्वरं रूपं दर्शयितुं श्रोतुरर्जुनस्य मनःसमाधानार्थमर्थयते **तत्रेति** । सोपाधिकमपि काल्पनिकं परस्य रूपं पश्चाद्वक्ष्यमाणं श्रोतुश्चित्तसमाधानं च कर्तव्यमेवेत्याह **तावदिति** । आशेरतेऽस्मिन् विद्याकर्मपूर्वप्रज्ञा इत्याशयो हृदयं सर्वेषां भूतानां हृदयेऽन्तः स्थितो यः प्रत्यगात्मा सोऽहमेवेति वाक्यार्थमाह **सर्वेषामिति** । यस्तु मन्दो मध्यमो वा परमात्मानमात्मत्वेन ध्यातुं नालं तं प्रत्याह **तदशक्तेनेति** । वक्ष्यमाणादित्यादिषु परस्य न ध्येयत्वमन्यदेव कारणं किंचित्तत्र तत्र ध्येयमित्याशङ्क्याह **यस्मादिति** । सर्वकारणत्वेन सर्वज्ञत्वेन सर्वेश्वरत्वेन च परस्य ध्येयत्वमत्रेप्सितं नान्यस्य कस्यचित् कारणस्यादित्यादिषु ध्येयतेत्यर्थः । उक्तध्यानाशक्तेभ्यो वक्तव्यं विभूतियोगमुपदिशति **एवं चेति** । तत्र तत्र प्रधानत्वेन परस्य ध्येयत्वम् ॥ २० ॥

**प० टी०** । अथ विभूतिनिरूपणे तावत्स्वकीयं मूलभूतस्वरूपमाह **अहमिति** सपादेन । भो गुडाकेश जितनिद्र अतति व्याप्नोतीत्यहमात्मा हिरण्यगर्भः । किं भूतः, सर्वभूताशयस्थितः सर्वाणि महाभूतानि विद्यन्ते यस्मिन्निति सर्वभूतो विराट् तत्राशयत्वेन लिङ्गरूपेण स्थितः "अजस्य नाभावध्येकमर्पितम्" इत्यादिश्रुतयः प्राङ्निरूपिता एव । अथ तदेवाह **अहमेव** भूतानामादिर्मध्यं चान्तश्च । मय्येव भूतानां जन्मस्थितिलयाः सलिले तरङ्गाणामिव भवन्ति । चपरमादित्यानां देवानामपि 'अदित्या ऋभवोऽस्वप्ना' इत्यमरोक्तेः । यतोऽहं विष्णुर्व्यापनशीलो मयैव समष्टिरूपेण कृत्वा देवा अपि व्यवहरन्तीत्यर्थः । यद्वा । सर्वादिषु त्यशब्दोऽमूर्तवाची श्रुतिसिद्धस्तेन सर्वेषामादिभूतानि त्यान्यमूर्तानि महदादीनि तेषामादित्यानां व्यापनशीलो विष्णुर्वैकुण्ठवास्यहमस्मीति स्वकीयं सगुणं रूपान्तरं प्रकटीकृतम् । पुंस्याकारो द्विवचने क्लीबे भूम्नीति, यथा द्वावित्यत्र द्वा विश्वानीत्यत्र विश्वा योऽसावादित्ये पुरुषः । श्रुतिश्च "अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः । अहं मित्रावरुणो भाबिभर्म्यहमग्निमहमश्विनोभाम्" इति । भाष्यम्—अत्रसर्वानुक्रमस्तावत् अहमित्येकर्चं सूक्तं अम्भृणस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्म विदुषी स्वात्मानमस्तौषीत् । अतः सा ऋषिः सच्चित्सुखात्मकः सर्वगतः परमात्मा देवतानेन ह्येषा तादात्म्यमनुभवन्ती सर्वस्याधिष्ठानत्वेन स्वात्मानं स्तौति । तत्र प्रथमाहं रुद्रेभिरिति । अहं ब्रह्मरूपा रुद्रेभीरुद्रैरेकादशभिश्चरामि, तथा वसुभिरष्टभिश्चरामि, इत्थंभूते तृतीया, तदात्मना चरामि । तथादित्यैर्द्वादशभिर्विश्वेदेवैश्चान्तर्यामित्वेनापि चरामीत्याह अहमिति । मित्रावरुणा मित्रं वरुणं चेति 'द्विवचनस्या वा छन्दसि' इति द्वितीयाया आकारः । परिभाषास्वपि—"पुंस्याकारो द्विवचने क्लीबे भूम्नीति यथा द्वावित्यत्र द्वा, विश्वानीत्यत्र विश्वा-योऽसावादित्ये पुरुषः सोसावहम्" इतिश्रुतेः उभौ उभौ मित्रावश्विनौ देवौ च बिभर्मि ॥ २० ॥

**आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ॥**
**मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥**

आदित्यानामिति । आदित्यानां द्वादशानां विष्णुर्नामादित्योऽहं ज्योतिषां रविरंशुमान् प्रकाशयितॄणामंशुमान् रश्मिमान् मरीचिर्नाम मरुतां मरुद्देवताभेदानामस्मि नक्षत्राणामहं शशी चन्द्रमाः ॥ २१ ॥

आ० टी० । एवंशब्दार्थमेव दर्शयति आदित्यानामित्यादिना ॥ २१ ॥

प० टी० । अथ विभूतीर्वर्णयन् प्रत्यक्षदेवरूपिणीं विभूतिं दर्शयति ज्योतिषामिति । ज्योतिषां तैजसपदार्थानामग्न्यादीनां मध्येंऽशुमान् स्वकरप्रसरेण त्रिलोकीप्रकाशको रविः सूर्योऽहम्, मरुतां मरुद्गणानां देववैश्यानां मध्ये मरीचिरहम्, तथा नक्षत्राणां तारकाणां मध्ये शशी चन्द्रोऽहम् ॥ २१ ॥

**वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ॥**
**इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥**
**रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ॥**
**वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥**

वेदानामिति । वेदानां मध्ये सामवेदोऽस्मि देवानां रुद्रादित्यादीनां वासव इन्द्रोऽस्मि इन्द्रियाणामेकादशानां मनश्चास्मि चक्षुरादीनां संकल्पविकल्पात्मकं मनश्चास्मि भूतानामस्मि चेतना कार्यकरणसंघातेऽभिव्यक्ता बुद्धेर्वृत्तिश्चेतना ॥ २२ ॥

रुद्राणामिति । रुद्राणामेकादशानां शंकरश्चास्मि वित्तेशः कुबेरो यक्षरक्षसां यक्षाणां रक्षसां च वसूनामष्टानां पावकश्चास्म्यग्निर्मेरुः शिखरिणां शिखरवतामहम् ॥ २३ ॥

आ० टी० । मन्त्रब्राह्मणसमुदायानामृगादीनां मध्ये सामवेदोऽस्मीति । ध्यानान्तरमुदाहरति वेदानामिति । संघाते जीवाधिष्ठिते यावत् पञ्चत्वं सर्वत्र व्यापिनी चैतन्याभिव्यञ्जिकेति शेषः ॥ २२ ॥ ॥ २३ ॥

प० टी० । वेदानामिति । ऋगादिचतुर्णां वेदानां मध्ये सामवेदोऽस्मि । सामात्मकः सामवेदः सा चामश्चेति विग्रहात् सा ऋक् अमो गीतरूपः स्वरस्तयोर्मिथुनं साम । ब्राह्मणं च—"सैव नाम ऋगासीदमो नाम साम सा वा ऋक्सामोपावदन्मिथुनं संभवाव प्रजात्या इति नेत्यब्रवीत्साम ज्यायान्वा अतो मम महिमा" इति । भाष्यम्—साचामश्चेतिऋागिमौ द्वौ पदार्थौ तत्र सेति तच्छब्देन ऋगेव प्रोक्ता अमश्च गीतिरूपः स्वरस्तत्र कण्वा अपि । तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य वै स्वर एव स्वमिति । एतं सा ऋक् सामोपसमीपं गत्वा इत्यवदत् । इति किम् अवां प्रजात्यै प्रजायै मिथुनं दाम्पत्यं संभवावेति । ततः साम नेत्यब्रवीन्निषेधं चकार । यतः साम ज्यायानादिभूतम् अतो मम महिमा मत्सामर्थ्यमाधिकं वर्तते किमेकया ऋचा । अतस्ते द्वे ऋचौ भूत्वा उपावदतामित्यादि । एवं ऋगाद्यपेक्षया साम्न उपजीव्यत्वेनाधिकत्वमित्युक्तम् । यद्वा सामसंबन्धिन्यो यास्ताः सर्वा ईश्वरस्तावकत्वेन पावमान्यो भवन्ति । अथातः पावमानामोह इति श्रुतेः । एवं ताः पठनमात्रेण पापहन्त्र्यो भवन्ति । तत्पावमानीभिरहं पुनामीति परिशिष्टोक्तेस्तेनापि सामवेदस्य विभूतित्वम् । तथा देवानां मध्ये वासव इन्द्रोऽहम् । तथा इन्द्रियाणामेकादशानां मध्ये मनोऽहम् । भूतानां संबन्धिनी चेतना ज्ञानशक्तिरहम् ॥ २२ ॥

प० टी० । रुद्राणामेकादशानां मध्ये शंकरोऽहमस्मि । तथा यक्षरक्षसामतिक्रूराणां मध्ये

वित्तेशः कुबेरोऽहम् । तथा वसूनां मध्ये पावकोऽग्निनामाहम् । तथा शिखरिणां पर्वतानां मध्ये मेरुरहम् ॥ २३ ॥

**पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ॥**
**सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ २४ ॥**

पुरोधसामिति । पुरोधसां राजपुरोहितानां मुख्यं प्रधानं मां विद्धि जानीहि हे पार्थ बृहस्पतिं स हीन्द्रस्येति मुख्यः स्यात् पुरोधाः सेनानीनां सेनापतीनामहं स्कन्दो देवसेनापतिः सरसां यानि देवखातानि सरांसि तेषां सरसां सागरोऽस्मि भवामि ॥ २४ ॥

आ० टी० । पुरोहितेषु बृहस्पतेर्मुख्यत्वे हेतुमाह **स हीति** ॥ २४ ॥

प० टी० । **पुरोधसामिति** । पुरोधसां देवपुरोहितानां मध्ये मां बृहस्पतिं मुख्यं विद्धि, तथा सेनानीनां देवसेनाधिपतीनां मध्ये स्कन्दोऽहम्, तथा सरसां जलाशयानां मध्ये सागरोऽहम् ॥२४॥

**महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ॥**
**यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥**

महर्षीणामिति । महर्षीणां भृगुरहं गिरां वाचां पदलक्षणानामेकमक्षरमोङ्कारोऽस्मि । यज्ञानामिति । यज्ञानां जपयज्ञोऽस्मि, स्थावराणां स्थितिमतां हिमालयः ॥ २५ ॥

आ० टी० । एकमित्योङ्कारस्य ब्रह्मप्रतीकत्वेन तदभिधानत्वेन च प्रधानत्वमुच्यते । जपयज्ञस्य यज्ञान्तरेभ्यो हिंसादिराहित्येन प्राधान्यमुपेत्याह **यज्ञानामिति** । शिखरवतामुच्छ्रितानां पर्वतानां मध्ये मेरुरहमित्युक्तेऽपि स्थितिशीलानां तेषामेव हिमवान् पर्वतराजोऽस्मीत्यर्थभेदं गृहीत्वाह **स्थितिमतामिति** ॥ २५ ॥

प०**टी०** । तथा महर्षीणां सप्तानां मध्ये भृगुरस्मि । गिरां चतुर्विधवाणीनां मध्ये एकमक्षरमोङ्कारोऽहम् । यज्ञानां ज्योतिष्टोमानां मध्ये जपयज्ञोऽहं स्थावराणां मध्ये हिमालयोऽहम् ॥ २५ ॥

**अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ॥**
**गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥**
**उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ॥**
**ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥**

अश्वत्थ इति । अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदो देवा एव सन्त ऋषित्वं प्राप्ता मन्त्रदर्शित्वादेते देवर्षयस्तेषां नारदोऽस्मि गन्धर्वाणां चि-

त्ररथो नाम गन्धर्वोऽस्मि सिद्धानां जन्मनैव धर्मज्ञानवैराग्यैश्वर्यातिशयं प्राप्तानां कपिलो मुनिः ॥ २६ ॥

उच्चैरिति। उच्चैःश्रवसमश्वानां उच्चैःश्रवा नामाश्वस्तं मां विद्धि जानीह्यमृतोद्भवममृतनिमित्तमथनोद्भवम् । ऐरावतमिरावत्या अपत्यं गजेन्द्राणां हस्तीश्वराणां तं मां विद्धीत्यनुवर्तते । नराणां मनुष्याणां च नराधिपं राजानं मां विद्धि जानीहि ॥ २७ ॥

आ० टी० । सर्ववृक्षाणामित्यत्र सर्वशब्देन वनस्पतयो गृह्यन्ते ॥ २६ ॥ २७ ॥

प० टी० । अश्वत्थ इति । सर्ववृक्षाणां मध्येऽश्वत्थः पिप्पलो मद्विभूतिः, देवाः सन्तो यऋषयस्तेषु नारदोऽहम्, गन्धर्वाणां मध्ये चित्ररथः, उत्पत्तित एवाधिगतपरमार्थानां सिद्धानां कपिलोऽहम् ॥ २६ ॥

प० टी० । उच्चैःश्रवसमिति । अमृतोद्भवं क्षीरोदमथनोद्भूतमुच्चैःश्रवसं सप्तमुखमश्वं मद्विभूतिं विद्धि । गजेन्द्राणां मध्ये चतुर्दन्तमैरावतं मद्विभूतिं विद्धि ॥ २७ ॥

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ॥
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥
अनन्तश्चास्मि नागानां वरुणो यादसामहम् ॥
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥ २९ ॥
प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ॥
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥

आयुधानामिति । आयुधानामहं वज्रं दधीच्यस्थिसंभवं मां विद्धि धेनूनां दोग्ध्रीणामस्मि कामधुक् वसिष्ठस्य सर्वकामानां दोग्ध्री सामान्या वा कामधुक् । प्रजनः प्रजनयितास्मि कन्दर्पः कामश्चास्मि, सर्पाणां सर्पभेदानामस्मि वासुकिः सर्पराजः ॥ २८ ॥

अनन्त इति । अनन्तश्चास्मि नागानां नागविशेषाणां नागराजः, वरुणो यादसामहमब्देवतानां राजाहं, पितॄणामर्यमा नाम पितृराजश्चास्मि, यमः संयमतां संयमनं कुर्वतामहम् ॥ २९ ॥

प्रह्लाद इति । प्रह्लादो नाम चास्मि दैत्यानां दितिवंश्यानां, कालः कलयतां कलनं गणनं कुर्वतामहं, मृगाणां च मृगेन्द्रः सिंहो व्याघ्रो वाहं, वैनतेयश्च गरुत्मान् विनतासुतः पक्षिणां पतत्रिणाम् ॥ ३० ॥

आ० टी० । प्रजनयतीति व्युत्पत्तिमाश्रित्याह प्रजनयितेति सर्पा नागाश्च जातिभेदाद्भिद्यन्ते ॥ २८ ॥ २९ ॥ ३० ॥

प० टी० । आयुधानामिति । आयुधानां शस्त्राणां मध्ये वज्रमहम्, धेनूनां मध्ये समुत्पन्नां कामधेनुं मद्विभूतिं विद्धि, प्रजनो विधिवत्प्रजोत्पत्तिहेतुः कन्दर्पोऽहमस्मि । सर्पाणां सविषाणां मध्ये वासुकिरस्मि ॥ २८ ॥

प० टी० । नागानां निर्विषाणां मध्येऽनन्तो मद्विभूतिः, यादसां जलाधिवासिनां वरुणोहम्, पितॄणां मध्येऽर्यमास्मि ॥ २९ ॥

प० टी० । प्रह्लाद इति । दैत्यानां मध्ये प्रह्लादो मद्विभूतिः कलयतामाक्रमवतां वस्तूनां मध्ये कालोऽहम् । मृगाणां श्वापदानां मध्ये मृगेन्द्रः सिंहोऽहम् । पक्षिणां मध्ये वैनतेयो विनतासुतो गरुडोऽहम् ॥ ३० ॥

**पवनः पवतामस्मि रामः शस्त्रभृतामहम् ॥**
**झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥**
**सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ॥**
**अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥**

पवनइति । पवनो वायुः पवतां पावयितॄणामस्मि, रामः शस्त्रभृतामहं शस्त्राणां धारयितॄणां दाशरथीरामोऽहं, झषाणां मत्स्यादीनां मकरो नाम जातिविशेषोऽहं, स्रोतसां स्रवन्तीनामस्मि जाह्नवी गङ्गा ॥ ३१ ॥

सर्गाणामिति । सर्गाणां सृष्टीनामादिरन्तश्च मध्यं चैवाहमुत्पत्तिस्थितिलयानामहमर्जुन भूतानां जीवाधिष्ठितानामेवादिरन्तश्चेत्याद्युक्तमुपक्रम इह तु सर्वस्यैव सर्गमात्रस्येति विशेषः, अध्यात्मविद्या विद्यानां मोक्षार्थत्वात् प्रधानमस्मि, वादोऽर्थनिर्णयहेतुत्वात् प्रवदतां प्रधानमतः सोऽहमस्मि प्रवक्तृद्वारेण वदनभेदानामेव वादजल्पवितण्डानामिह ग्रहणं प्रवदतामिति ॥ ३२ ॥

आ० टी० । अहमादिश्चेत्यादावुक्तमेव पुनरिहोच्यते तथा च पुनरुक्तिरित्याशङ्क्याह भूतानामिति । सर्गशब्देन सृज्यन्त इति सर्वाणि कार्याणि गृह्यन्ते । अध्यात्मविद्येति । आत्मन्यन्तःकरणपरिणतिरविद्यानिवर्तिका गृहीता, प्रवदतां संबन्धी वादो वीतरागकथा तत्त्वनिर्णयावसाना । यदा प्रवदतामिति लक्षणया कथाभेदोपादानं तदा निर्धारणे षष्ठीत्याह प्रवक्त्रिति ॥ ३१ ॥ ३२ ॥

प० टी० । पवन इति । प्लवतां वेगवतां मध्ये पवनः शस्त्रभृतां वीराणां मध्ये रामो दाशरथिरहम् । झषाणां मत्स्यानां मध्ये मकरो यादोविशेषः । स्रोतसां प्रवाहाणां मध्ये जाह्नवी मद्विभूतिः ॥ ३१ ॥

प० टी० । सर्गाणामिति । सृज्यन्त इति सर्गा आकाशादयस्तेषामादिर्मूलमन्तः पर्यन्तो मध्यं स्थितिरहमेव । विद्यानां चतुर्दशानां मध्ये आत्मप्रतिपादिकाध्यात्मविद्याहम् । अन्यासां तु स्वस्वमताभिनिवेशेन मत्सरादिजनकत्वात् । उक्तं च—'रे रे मत्सर जीव वत्सरशतं येन त्वया निर्जितं, शास्त्राणामिदमूर्जितं प्रयततां त्वद्वंशविच्छित्तये । यस्मात्तद्गुरुतामपास्य च कृथाः स्वान्यायुधान्यन्यथा,

स्वीयं स्थापयितुं मतं परमतच्छेदं कथं कुर्वते ' इति । अत एवाह **वादः प्रवदतामिति** । प्रवदतां परस्परं विवादजल्पवितण्डरूपाः कथाः कुर्वतां मध्ये तत्त्वबुभुत्सोः कथारूपो वादोऽहम् ॥ ३२ ॥

**अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ॥**
**अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥ ३३ ॥**
**मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ॥**
**कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥**

अक्षराणामिति । अक्षराणां वर्णानामकारो वर्णोऽस्मि द्वन्द्वः समासोऽस्मि सामासिकस्य समाससमूहस्य । किं चाहमेवाक्षयोऽक्षीणः कालः प्रसिद्धः क्षणलवाख्यः, अथवा परमेश्वरः कालस्यापि कालोऽस्मि धाताहं कर्मफलस्य विधाता सर्वजगतो विश्वतोमुखः सर्वतोमुखः ॥ ३३ ॥

मृत्युरिति । मृत्युर्द्विविधो धनादिहरः प्राणहरश्च तत्र यः प्राणहरः सर्वहरः स उच्यते सोऽहमित्यर्थोऽथवा पर ईश्वरः प्रलये सर्वहरणात् सर्वहरः सोऽहमुद्भव उत्कर्षोऽभ्युदयस्तत्प्राप्तिहेतुश्चाहं, केषां भविष्यतां भाविकल्याणानामुत्कर्षप्राप्तियोग्यानामित्यर्थः, कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमेत्येता उत्तमाः स्त्रीणामहमस्मि यासामाभासमात्रसंबन्धेनापि लोकाः कृतार्थमात्मानं मन्यन्ते ॥ ३४ ॥

आ० टी० । सर्वहरशब्दस्य मुख्यमर्थान्तरमाह **अथवेति** । भाविकल्याणानामित्युक्तमेव स्पष्टयति **उत्कर्षेति** । कीर्तिर्धार्मिकत्वनिमित्ता ख्यातिः, श्रीर्लक्ष्मीः, कान्तिः शोभा, वाग्वाणी सर्वस्य प्रकाशिका स्मृतिश्चिरानुभूतस्मरणशक्तिः, मेधा ग्रन्थधारणशक्तिः, धृतिर्धैर्यं, क्षमा मानापमानयोरविकृतचित्तता । स्त्रीषु कीर्त्यादीनामुत्तमत्वमुपपादयति **यासामिति** ॥ ३३ ॥ ॥ ३४ ॥

प० टी० । अक्षराणां स्वरवर्णानां मध्येऽकारः प्रथमः स्वरस्तस्य सर्वत्रानुस्यूतत्वात् स चाहम् । सामासिकस्य तत्पुरुषादिसमाससमूहस्य द्वन्द्वो रामकृष्णावित्युभयपदप्रधानोऽहम् । अक्षयोऽनाद्यन्तः कालोऽहमेव । विश्वतोमुखो विराड् धाता कर्मफलदाता ॥ ३३ ॥

प० टी० । **मृत्युरिति** । सर्वहरः सर्वसंहारको मृत्युरहम्, भविष्यतां भाविनां प्राणिनामुद्भवो वर्तमानकल्पानन्तरमागामिकल्पे प्राण्युद्भवकर्ताहमेव, नारीणां स्त्रीलिङ्गवाचकानां मध्ये कीर्त्यादयः सप्तदेवता यदर्जनेन लोकः श्लाघ्यो भवति ता मद्विभूतयः । तत्र कीर्तिर्नाम सद्भिर्या गीयते न नटविटादिभिः । श्रीः शोभा वाग्वाणी यया सर्वप्राणिनां व्यवहारश्चलति सा चतुर्विधा परा पश्यन्ती मध्यमा वैखरी च चत्वारि वाक्परिमिता पदानीति श्रुतेः । तासां पृथक् स्वरूपं तु बृहस्पतेः प्रथमं वाचो अग्रमिति श्रुत्या दर्शितं मंडलब्राह्मणेऽपि सैषा त्रय्येव विद्या तपतीति वाग्वै तत्पश्यन्ती वदतीति । एवं ताल्वोष्ठपुटसंयोगाज्जाता वैखरी । तदुक्तं शतश्लोके–'यो वर्णोच्चारहेतोर्घटयति रसनामिति । साद्वेधा । राष्ट्री मन्द्रा च । तत्र राष्ट्रसंबन्धाज्जाता राष्ट्री देशभाषेत्यर्थः । मन्द्रा मननगम्या वेद-

वाणी यद्वाग्वदन्त्यविचेतनानीति श्रुतेः । एवं साम निश्वासरूपत्वान्मद्विभूतिरित्यर्थः । एताः श्रुतयः शतश्लोकभाष्येऽस्माभिः सम्यग्व्याख्याता इह तु विस्तरभयान्न लिखिताः ॥ ३४ ॥

**बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ॥**
**मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५ ॥**

बृहत्सामेति । बृहत्साम तथा साम्नां मोक्षप्रतिपादकसामवेदविशेषः प्रधानमस्मि, गायत्री छन्दसामहं गायत्र्यादिच्छन्दोविशिष्टानामृचां गायत्री ऋगहमित्यर्थः । मासानामिति । मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरो वसन्तः ॥ ३५ ॥

आ० टी० । वेदानां सामवेदोऽस्मीत्युक्तं तत्रावान्तरविशेषमाह **बृहदिति** । छन्दसां मध्ये गायत्री नाम यच्छन्दस्तदहमित्ययुक्तं छन्दसामृग्भ्योऽतिरेकेण स्वरूपाभावादित्याशङ्क्याह **गायत्र्यादीति** । द्विजातेर्द्वितीयजन्मजननीयत्वादित्यर्थः । मार्गशीर्षो मृगशीर्षेण युक्ता पौर्णमास्यस्मिन्निति मार्गशीर्षो मासः सोऽहं पक्वसस्याढ्यत्वादित्याह **मासानामिति** । वसन्तो रमणीयत्वादिति शेषः ॥ ३५ ॥

प० टी० । **बृहदिति** । साम्नां चतुर्दशाधिकाष्टसहस्रसंमितानां मध्ये ईश्वरस्तावकानि कानि त्रित्पावमान्यानि रथन्तरादीनि सन्ति तेषु बृहत्साम मद्विभूतिः । एतदग्रिमाध्याये स्पष्टं निरूपयिष्यामः । तथा छन्दसामुष्णिगादीनां मध्ये गायत्री प्रथमा । गायन्तं त्रायते सा गायत्री चतुर्विंशत्यक्षरा ततश्चतुरक्षरवृद्ध्योष्णिगादिच्छन्दसां निष्पत्तिः सापि परमेश्वरप्रतिपादिकेति मद्विभूतिरुक्ता । तथा हि, "तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । अत्र कण्वसंहिताभाष्यकारस्तु तत्सवितुरिति विश्वामित्रः सावित्रीगायत्रीति षष्ठ्या परिणाम्यते, तस्य सवितुः सर्वस्य प्रसवदातुरादित्यान्तर्गतपुरुषस्य योऽसावादित्ये पुरुष इति श्रुतेः । देवस्य द्योतमानस्य हिरण्यगर्भोपाध्यवच्छिन्नस्य विज्ञानानन्दस्वभावस्य ब्रह्मणो वरेण्यं सर्वोत्कृष्टं भर्गस्तेजो धीमहि ध्यै चिन्तायाम्, अस्य छान्दसं संप्रसारणं ध्यायामश्चिन्तयामः । यद्वा किंभूतं भर्गः, सवितुः सूर्यस्यापि वरेण्यमुपजीव्यं 'यदादित्यगतं तेज' इत्युक्तत्वात् । तस्य कस्य, यो नोऽस्माकं धियो धीः प्रचोदयात् । चुद्प्रेरणे प्रकर्षेण प्रेरयति । तस्य सवितुः संबन्धि वरेण्यं वीर्यं तेजो ध्यायाम इति संबन्धः । अत्रैतदुक्तं भवति । सत्यज्ञानानन्दात्मकः सविता सर्वजगदुपादानाश्रयतया जगत्कर्ता सर्वोपाधिभिश्चिक्रीडिषुवुस्तत्तदुपाधिधर्मान् विजिगीषुः स्वकमनीयत्वादिमहिम्नो दिदर्शयिषुः स्वयं वशीकृतमायः सर्वात्मनामात्मभूतोऽन्तर्यामी देवोऽस्माकं धियो धीः प्रचोदयात् 'ददामि बुद्धियोगं तम्' इति भगवदुक्तेः । तस्य सवितुर्देवस्यात्मभूतं वरेण्यं ध्यातॄणां संसारक्लेशमूलभर्जकं भर्गस्तेजः परं ज्योतिः सततं ध्यायाम इत्यर्थः । तथा मासानां द्वादशानां मध्ये मार्गशीर्षोऽहं । मासास्तावच्चान्द्रमानेन भवन्ति चन्द्रनक्षत्रनामकाश्च यथा यस्यां पौर्णिमास्यां चित्रानक्षत्रं स चैत्रमासः । तद्वद्विशाखाद्यैर्वैशाखादयः प्रकृते तु मृगशिरःसंबन्धान्मार्गशीर्षे एवं मृगशिरःस्वामी चन्द्रस्तथा स्वनामनक्षत्रसमाननाथा मासा इत्युक्तत्वान्मासेशोपि स एव पूर्णिमास्वामी च स एव । एवं मासनक्षत्रतिथीनामैकदैवतत्वेन पुण्यतमत्वमतो मद्विभूतिरित्यर्थः । यद्वा मृगशिरः पूर्णिमासंबन्धेन वर्षादिरभिहितस्तस्मिन्नेवाग्रहायणीत्यभिधानात्, आग्रहायणं यस्यां साग्रहायणीत्यर्थः । अत एवाग्रहायणिक इति मार्गशीर्षनाम, अतो

ऽस्य मासस्य मुख्यत्वाद्विभूतित्वम् । तथा शिशिरादिषण्णामृतूनां मध्ये कुसुमाकरो वसन्तोऽस्मि सर्वेषामानन्दकरत्वाद्विषुवाश्रयत्वाच्च ॥ ३५ ॥

**द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ॥**
**जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥३६॥**
**वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनंजयः ॥**
**मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३७ ॥**

द्यूतमिति । द्यूतमक्षदेवनादिलक्षणं छलयतां छलस्य कर्तॄणामस्मि, तेजस्विनां तेजोऽहं, जयोऽस्मि जेतॄणां, व्यवसायोऽस्मि व्यवसायिनां, सत्त्वं सत्त्ववतां सात्त्विकानामहम् ॥ ३६ ॥

वृष्णीनामिति । वृष्णीनां यादवानां वासुदेवोऽस्म्ययमेवाहं त्वत्सखा, पाण्डवानां धनंजयस्त्वमेव मुनीनां मननशीलानां सर्वपदार्थज्ञानिनामप्यहं व्यासः, कवीनां क्रान्तदर्शिनामुशना कविरस्मि ॥ ३७ ॥

आ० टी० । द्यूतमुक्तलक्षणं सर्वस्वापहारकारणमन्यायापदेशेन पराभिप्रेतं निघ्नतां स्वाभिप्रेतं वा संपादयतामित्याह छलस्येति । तेजोऽप्रतिहताज्ञा, उत्कर्षो जयः, व्यवसायः फलहेतुरुद्यमः, धर्मज्ञानवैराग्यादि सत्त्वकार्यं सत्त्वम्, उशना शुक्रः, कविशब्दोऽत्र यौगिको न रूढः पौनरुक्त्यात् ॥ ३६ ॥ ॥ ३७ ॥

प० टी० । द्यूतमिति । छलयतामन्योन्यवञ्चनपराणामुत्कृष्टमोहकशक्तिरूपं द्यूतम् । येन धर्मादयोऽपि मोहिताः सन्तः किंचिन्न विदुः सा मद्विभूतिः । जेतॄणां जयोऽस्मि । व्यवसायिनामुद्यमवतां व्यवसायोऽहम् । सात्त्विकानां सत्त्वगुणोऽहम् ॥ ३६ ॥

प० टी० । वृष्णीनामिति । यादवानां मध्ये वसुदेवस्यापत्यं वासुदेवो बलभद्रोऽस्मि । अन्यथैकस्यैव मुख्यत्वं विभूतित्वं च नोपपद्यते । पाण्डवानां मध्ये धनंजयस्त्वं मद्विभूतिः, मुनीनां वेदार्थमननशीलानां मध्ये वेदव्यासोऽस्मि । कवीनां क्रान्तदर्शिनां मध्ये उशना भृगुपुत्रः कविः शुक्रः ॥ ३७ ॥

**दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ॥**
**मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥**

दण्ड इति । दण्डो दमयतां दमयितॄणामस्म्यदान्तानां दमनकारणं, नीतिरस्मि जिगीषतां जेतुमिच्छतां, मौनं चैवास्मि गुह्यानां गोप्यानां, ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥

आ० टी० । अदान्तानुत्पथान् पथि प्रवर्तयतां दण्डोऽनुत्पथप्रवृत्तौ निग्रहे हेतुरित्यर्थः, नीतिर्न्यायो धर्मस्य जयः पापस्य प्रणाशकः मौनं वाचः संयमत्वमुत्तमा वा चतुर्थाश्रमवृत्तिः श्रवणादिद्वारा परिपक्वसमाधिजन्यं सम्यग्ज्ञानं ज्ञानम् ॥ ३८ ॥

प० टी० । दण्ड इति । दमनकर्तॄणा संबन्धी दण्डोऽस्मि । येनासंयताः संयता भवन्ति । जेतुमिच्छतां संबन्धिनी नीतिरस्मि । गुह्यानां गोपनीयानां मौनमवचनमस्मि तथा ज्ञानवतां ज्ञानमस्मि ॥ ३८ ॥

**यच्चापि सर्वभूतानां बीजं तदहमर्जुन ॥**
**न तदस्ति विना यत् स्यान्मया भूतं चराचरम् ॥ ३९ ॥**

यच्चापीति । यच्चापि सर्वभूतानां बीजं प्ररोहकारणं तदहमर्जुन, प्रकरणोपसंहारार्थं विभूतिसंक्षेपमाह न तदस्ति भूतं चराचरं चरमचरं वा मया विना यत् स्याद्भवेन्मयापकृष्टं परित्यक्तं निरात्मकं शून्यं हि तत् स्यादतो मदात्मकं सर्वमित्यर्थः ॥ ३९ ॥

आ० टी० । जाड्यमात्रप्रतिबिम्बितं चैतन्यं बीजं किमिति स्थावरं जङ्गमं वा त्वदतिरेकेण न भवति तत्राह **मयेति** । तस्यापि स्वरूपेण सत्त्वमाशङ्क्योक्तं **शून्यं हीति** । आत्मनोपऽकर्षादित्यर्थः । मयैव सच्चिदानन्दस्वरूपेण सर्वस्य सिद्धेरित्यतःशब्दार्थः ॥ ३९ ॥

प० टी० । **यच्चेति** । सर्वभूतानां बीजं प्ररोहकारणं तदहमस्मि । तदेव द्रढयति । चराचरं न तदस्ति यन्मया विना स्यान्मद्व्यतिरेकेण भवति । यतोऽन्नरूपोऽहमन्नाद्रेतो रेतसः सर्वम् ॥ ३९ ॥

**नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ॥**
**एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥**

नान्तोऽस्तीति । नान्तोऽस्ति मम दिव्यानां विभूतीनां विस्तराणां परन्तप न हीश्वरस्य सर्वात्मनो दिव्यानां विभूतीनामियत्ता शक्या वक्तुं ज्ञातुं वा केन चित् । एष तूद्देशत एकदेशेन प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥

आ० टी० । दिव्यानां विभूतीनां परिमितत्वशङ्कां वारयति **नेत्यादिना** । तदेवोपपादयति **न हीति** । कथं तर्हि विभूतेर्विस्तरो दर्शितस्तत्राह **एषत्विति** ॥ ४० ॥

प० टी० । इदानीमुपसंहरन्नाह **नान्त इति** । भो परंतप मम दिव्यानां विभूतीनामन्तो नास्ति किं त्वेष विभूतीनां विस्तरो मयोद्देशतः संक्षेपतः प्रोक्तः ॥ ४० ॥

**यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा ॥**
**तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥ ४१ ॥**

यद्यदिति । यद्यल्लोके विभूतिमद्विभूतियुक्तं सत्त्वं वस्तुजातं श्रीमदूर्जितमेव वा श्रीर्लक्ष्मीस्तया सहितमुत्साहोपेतं वा तत्तदेवावगच्छ त्वं जानीहि ममेश्वरस्य तेजोंऽशसंभवं तेजसोंऽश एकदेशः संभवो यस्य तत्तेजोंऽशसंभवमित्यवगच्छ त्वं जानीहि ॥ ४१ ॥

आ० टी० । अनुक्ता अपि परस्य विभूतीः संग्रहीतुं लक्षणमाह **यद्यदिति** । वस्तु प्राणिजातं श्रीमत् समृद्धिमद्वा शोभावद्वा कान्तिमद्वा सप्राणं बलवदूर्जितं तदाह **उत्साहेति** । संभवत्यस्मादिति संभवस्तेजसश्चैतन्यस्येश्वरशक्तेर्वांशस्तेजोंऽशः संभवोऽस्येति तेजोंऽशसंभवं तदाह **तेजस इति** ॥ ४१ ॥

प० टी० । अथ विभूतीनां साधारणलक्षणमाह **यदिति** । यद्यद्विभूतिमदैश्वर्ययुक्तं सत्त्वं प्राणिविशेषः श्रीमच्छोभातिशयशाल्यूर्जितं केनापि भावेनातिशयितं तत्तन्मम तेजोंऽशसंभवमवगच्छ ॥ ४१ ॥

**अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ॥**
**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४२ ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥

अथवेति । अथ वा बहुनैतेनैवमादिना किं ज्ञातेन तवार्जुन स्यात् सावशेषेण शेषतस्त्वमिममुच्यमानमर्थं शृणु विष्टभ्य विशेषतः स्तम्भनं दृढं कृत्वेदं कृत्स्नं जगदेकांशेनैकावयवेनैकपादेन सर्वभूतस्वरूपेणेत्येतत्तथा च मन्त्रवर्णः "पादोऽस्य सर्वा भूतानि" इति स्थितोऽहम् इति ॥ ४२ ॥

इति श्रीभगवद्गीताभाष्ये शंकरभगवतः कृतौ विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥

आ० टी० । सर्वेषां सुगमत्वायावयवस्य विभूतिमुक्त्वा भक्तानुग्रहार्थं साकल्येन तामाह **अथवेति** । पक्षान्तरपरिग्रहार्थमथवेत्युक्तम् । बहुना विस्तीर्णेनैतेन संज्ञातेन सावशेषेण तव शक्तस्य न किं चित् फलं स्यादित्याह **बहुनेति** । न हि विभूतियुक्तासु ज्ञातासु सर्वं ज्ञायते कासां चिदेव विभूतीनामुक्तत्वादित्यर्थः । तर्हि केनोपदेशेनाल्पाक्षरेण सर्वार्थो ज्ञातुं शक्यते तत्राह **अशेषत इति** । विशेषतः स्तंभनं विधरणं सर्वभूतस्वरूपेण सर्वप्रपञ्चोपादानशक्त्युपाधिकेनैकेन पादेन कृत्स्नं जगद् विधृत्य स्थितोऽस्मीति संबन्धः । तत्रैव श्रुतिं प्रमाणयति **तथा चेति** । तदनेन भगवतो नानाविधविभूतीर्ध्येयत्वेन ज्ञेयत्वेन चोपादिश्यन्ते, सर्वप्रपञ्चात्मकं ध्येयं रूपं दर्शयित्वा "त्रिपादस्यामृतं दिवि" इति प्रपञ्चाधिकं निरुपाधिकं तत्त्वमुपादिशता परिपूर्णः सच्चिदानन्दैकतानस्तत्पदलक्ष्योऽर्थो निर्धारितः॥४२॥

इति दशमोऽध्यायः ॥ १० ॥

प० टी० । अथ किमनेन परिच्छिन्नदर्शनेन वृक्षन्यायेन समष्टिव्यष्ट्यात्मकोऽहमेवेत्याह **अथवेति** । अथवा बहुना पृथक्त्वेन ज्ञातेन तव किं कार्यम् । किं त्विदं कृत्स्नं समग्रं जगच्चराचरं एकांशेनैकदेशमात्रेण विष्टभ्याभिव्याप्य स्थितोऽहमेवास्मि । पादोऽस्य विश्वाभूतानीति श्रुतेः । ऋग्वेदे च–" किं

१ ग्रन्थेन संज्ञातेन पा० ।

स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छतेव तद्यदध्यतिष्ठद्भुवनानि धारयन्'' भाष्यम्—पूर्वस्यामृच्युक्तं ब्रह्मैव भूम्यादिकारणमिति तदेवानयोः प्रश्नकथनव्याजेनोच्यते । लोको हि प्रौढं प्रासादं निर्म्यमाणः कस्मिंश्चित्प्रौढवने कंचिन्महान्तं वृक्षं छित्त्वा तक्षणादिना स्तंभादिकं संपादयति । इह तु परमेश्वरः प्रेरयिता । जगत्स्रष्टारो यतोऽस्माद्वनाद्यं वृक्षमादाय द्यावापृथिवी निष्टतक्षुः द्यावापृथिव्यौ निष्पादितवन्तस्तद्वनं किं स्वित्किनामकं स्यात् तथा उ इति निर्धारणे कः स वृक्ष आस कस्तादृशो महान् वृक्षोऽभूत् । हे मनीषिणो मनस ईश्वरास्तदुभयं मनसा जिज्ञासायुक्तेन पृच्छतेव पृच्छतैव किंचेश्वरो भुवनानि धारयन् यत्स्थानमध्यतिष्ठदपि पृच्छत एतस्य सर्वस्याप्युत्तरं ब्रह्म-वनं ब्रह्मवृक्षः समष्टिव्यष्टिरूपेण ब्रह्मैवासीदित्यादिकम् । अनेनाग्रिमाध्यायसंगतिरपि दर्शिता ॥४२॥

अथाध्यायतात्पर्यम् । अत्यन्तोत्कर्षशाली ननु सततमिहामुत्रसर्वोत्तमोऽहं त्वेकैकोत्कर्षभाजः सुरमुनिमनुजश्वापदाद्यास्त एते । व्यष्टीरूपा मदंशा इति खलु भवता पूजनीयाः क्रमेण तेन द्रक्षस्यथो मामिह मयि दशमे प्राह पार्थं परात्मा ॥ १० ॥

इति श्रीमद्दै० पर० प्रपा० विभूतियो० दशमाध्यायः ॥ १० ॥

इति दशमाध्यायः ॥ १० ॥

# अथ
# एकादशाध्यायः ।
## अर्जुन उवाच ।

**मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ॥**
**यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥**

भगवतो विभूतय उक्तास्तत्र च 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति भगवताभिहितं श्रुत्वा यज्जगदात्मरूपमाद्यमैश्वरं तत् साक्षात् कर्तुमिच्छन्नर्जुन उवाच । मदनुग्रहार्थं परमं निरतिशयं गुह्यं गोप्यमध्यात्मसंज्ञितमात्मानात्मविवेकविषयं निरतिशयं यत्त्वयोक्तं वचो वाक्यं तेन वचसा मोहोऽयं विगतो ममाविवेकबुद्धिरपगतेत्यर्थः ॥ १ ॥

आ० टी० । तेन तेनात्मना भगवदनुसंधानार्थमुक्त्वा विभूतीरनुवदति **भगवत इति** । परस्य सोपाधिकं निरुपाधिकं च चिद्रूपं ध्येयत्वेन ज्ञेयत्वेन चोक्तमित्यर्थः । सोपाधिकमैश्वरं रूपमशेषजगदात्मकं विश्वरूपाख्यमधिकृत्याध्यायान्तरमवतारयन्ननन्तरप्रश्नोपयोगित्वेन वृत्तं कीर्तयति **तत्र चेति**। यदेतदशेषप्रपञ्चात्मकमखिलस्यैतस्य जगतः कारणं सर्वज्ञं सर्वैश्वर्यवद्रूपमुक्तं तदिदं श्रुत्वा तस्य साक्षात्कारं धियाचयिपुरादौ पृष्टवानित्याह **श्रुत्वेति** । मयि करुणां निमित्तीकृत्योपकारोऽनुग्रहस्तदर्थमिति वचसो विशेषणम् । निरतिशयत्वं परमपुरुषार्थसाधनत्वम् । अशोच्यानित्यादित्वंपदार्थप्रधानवाक्यं मोहस्यायमित्यात्मसाक्षिकत्वं दर्शयति । अविवेकबुद्धिरज्ञानविपर्यासात्मिका ॥ १ ॥

प० टी० । पूर्वाध्यायान्ते विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदित्युक्तं तर्हि तादृग्रूपं कीदृग्भविष्यतीति द्रष्टुमपेक्षमाणोऽर्जुनः प्रार्थयन् पृच्छति **मदनुग्रहायेति** चतुर्भिः । ममानुग्रहाय

शोकनिवृत्तये परमं रहस्यं गुह्यं गोप्यमध्यात्मसंज्ञितमात्मानात्मविवेकरूपं देही नित्यमवध्योऽयमिति तथाव्यक्तं व्यक्तिमापन्नमिति तथा मया ततमिदं विश्वमिति तथा समोऽहं सर्वभूतेष्वित्यादि यद्वच उक्तं तेन मे मोहो विगतो निःशेषो गतः ॥ १ ॥

**भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ॥**
**त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥**

किंच भवेति । भव उत्पत्तिरप्ययः प्रलयो भूतानां तौ भवाप्ययौ श्रुतौ विस्तरशो मया न संक्षेपतस्त्वत्तः त्वत्सकाशात् कमलपत्राक्ष कमलस्य पत्रं कमलपत्रं तद्वदक्षिणी यस्य तव स त्वं कमलपत्राक्षः हे कमलपत्राक्ष माहात्म्यमपि चाव्ययमक्षयं श्रुतमित्यनुवर्तते ॥ २ ॥

आ० टी० । सप्तमादारभ्य तत्पदार्थनिर्णयार्थमपि भगवदुक्तं वचो मया श्रुतमित्याह **किंचेति** । तौ भूतानामुत्पत्तिप्रलयौ त्वत्तः श्रुताविव्याभ्यां संबध्यते, महात्मनस्तव भावो माहात्म्यं पारमार्थिकं सोपाधिकं वा सर्वात्मत्वादिरूपं श्रुतमिति परिणम्यानुवृत्तिं द्योतयितुमपि चेत्युक्तम् ॥ २ ॥

प० टी० । **भवाप्ययाविति** । ततस्त्वत्तः सकाशाद्भूतानां भवाप्ययावुत्पत्तिप्रलयौ 'अहं कृत्स्नस्य जगतः प्रभवः प्रलय' इत्यादिवाक्यैर्विस्तरशो विस्तरेण मया श्रुतौ । अव्ययमविनाशि माहात्म्यं सामर्थ्यमपि श्रुतम् । विश्वसृष्ट्यादिकर्तृत्वेऽप्यकर्तृत्वं सर्वनियन्तृत्वेऽप्यसंगत्वं विचित्रफलदातृत्वेऽप्युदासीनत्वलक्षणं माहात्म्यमित्यर्थः ॥ २ ॥

**एवमेतद् यथात्थ त्वमात्मानं परमेश्वर ॥**
**द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥**

एवमिति । एवमेतन्नान्यथा यथा येन प्रकारेणात्थ कथयसि त्वमात्मानं परमेश्वरं तथापि द्रष्टुमिच्छामि ते तव ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः संपन्नमैश्वरं वैष्णवं रूपं पुरुषोत्तम ॥ ३ ॥

आ० टी० । त्वदुक्तेऽर्थे विश्वासाभावान्न तस्मिन् दिदृक्षा किं तु कृतार्थीबुभूषयेत्याह **एवमेतदिति** । येन प्रकारेण सोपाधिकेन निरुपाधिकेन चेत्यर्थः । यदि ममाप्तत्वं निश्चित्य मद्वाक्यं ते मानं तर्हि किमिति मदुक्तं दिदृक्षते कृतार्थीबुभूषयेत्युक्तं मत्वाह **तथापीति** । चतुर्भुजादिरूपनिवृत्त्यर्थमाह **ऐश्वरमिति** । तद्व्याचष्टे **ज्ञानेत्यादिना** ॥ ३ ॥

प० टी० । **एवमिति** । विष्टभ्याहमिदं कृत्स्नमितीदानीमात्मानं त्वं यदात्थ यद्वक्ष्यसि । एतत्ते ऐश्वरं ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः संपन्नं रूपं द्रष्टुमिच्छामि । पुरुषोत्तमेति संबुद्ध्या अलौकिकदर्शनकौतूहलदिदृक्षास्तीति सूचितम् । श्रुतिरपि वामदेव्येन साम्नोपदिशति—"कया नश्चित्र आ भुवदूती सदा वृधः सखा । कया शचिष्ठया वृता" इति । भाष्यम्—वामदेवः सदा वृधः सदा वर्धमानः समष्टिरूपः परमात्मा चित्रश्चायनीयः पूजनीयः । यद्वा विचित्राकृतिमयः सखा मित्रभूतः परमात्मा कया

ऊती ऊत्या संतर्पणेन कर्मणा वा नो अस्मानानुभवत् आभिमुख्येनाभवत् । अनुभवगोचरो भवेत्यादिवाक्यैरेतादृग्रूपदर्शने वेदोऽपि वामदेवस्य मनोरथं प्रकटीकरोति किं पुनरहमित्यर्थः । तदुक्तं हरिवंशे—'भाण्डीरे सुखमासीनं विहरन्तं जनार्दनम् । वामदेवभरद्वाजौ द्रष्टुं प्राप्तौ जगन्मयम् । तथा यान्तौ समालोक्य विज्ञाय च तदीप्सितम् । उभयोर्दर्शयामास विश्वरूपं स्ववर्ष्मणि । ततस्तावूचतुः कृष्णं सर्वदेवात्मकं विभुम् । त्वमादिः सर्वभूतानां मध्यमन्तस्तथा भवान् । यान्येव वस्तुजातानि लोकजातानि माधव । तव गात्रेषु पश्यामस्त्रिमूर्तीः सर्वदेवताः । जितषड्वैरिणः शान्ता दान्ता योगेश्वरेश्वराः । त्वामीदृशं ते पश्यन्ति नान्य इत्येव विद्महे, इति । अथ वामदेवस्य साम्नः प्रवृत्तिरापस्तम्बशाखायां विश्वेभिर्देवैः पृतना जयामि जागृतेन छन्दसा सप्तदशेन स्तोमेन वामदेव्येन साम्ना वषट्कारेण वज्रेणेति । अत्र सामगायने स्तोमस्तोमादिलक्षणमस्माभिः सामभाष्ये प्रोक्तम् । तत्रैव भरद्वाजोऽपि कर्मणां फलदाता च फलदः कर्म कुर्वताम् । निषेद्धा दुष्टसत्त्वानां ग्रहदैत्योग्ररक्षसाम्' इति । श्रुतिरपि रक्षोहणमिति सूक्तेन एतदप्यग्रे निरूप्यते ॥ ३ ॥

**मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ॥**
**योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥**

मन्यस इति । मन्यसे चिन्तयसि यदि मयार्जुनेन तच्छक्यं द्रष्टुमिति प्रभो स्वामिन् योगेश्वर योगिनो योगास्तेषामीश्वरो योगेश्वरः हे योगेश्वर यस्मादहमतीवार्थी द्रष्टुं ततस्तस्मान्मे मम मदर्थं दर्शय त्वमात्मानमव्ययम् ॥४॥

आ० टी० । द्रष्टुमयोग्ये कुतो दिदृक्षेत्याशङ्क्याह **मन्यस इति** । प्रभवति सृष्टिस्थितिसंहारप्रवेशप्रशासनेभ्य इति प्रभुः । लक्षणया योगशब्दार्थमाह **योगिन इति** । तत इत्यादि व्याचष्टे **यस्मादिति** ॥ ४ ॥

प० टी० । अथैतद्रूपदर्शनं केवलमनुग्रहैकलभ्यमित्याह **मन्यस इति** । योगेश्वर योगिन एव योगास्तेषामीश्वरस्ततस्तर्ह्यात्मानं दर्शय ॥ ४ ॥

**श्रीभगवानुवाच ।**
**पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ॥**
**नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥**

एवं चोदितोऽर्जुनेन भगवानुवाच पश्य म इति । पश्य मे मम पार्थ रूपाणि शतशोऽथ सहस्रशोऽनेकश इत्यर्थः, तानि च नानाविधान्यनेकप्रकाराणि दिवि भवानि दिव्यान्यप्राकृतानि च नानावर्णाकृतीनि च नानानीलपीतादिप्रकारा वर्णा विलक्षणास्तथाकृतयोऽवयवसंस्थानविशेषा येषां रूपाणां तानि नानावर्णाकृतीनि च ॥ ५ ॥

आ० टी० । अर्जुनमतिभक्तं सखायं प्रार्थितप्रतिश्रवणेनाश्वासयितुमाह **एवमिति** ॥ ५ ॥

प० टी० । अथ भगवानप्यलौकिकं रूपं दिदृक्षन्तमर्जुनं संमुखीकरोति **पश्येत्यादिचतुर्भिः** । भो पार्थ मे शतशः सहस्रशश्च रूपाणि पश्य । शतशो मुख्यविभूतिरूपाणि सहस्रशोऽवा-

न्तररूपाणि । सहस्रशब्दोऽनन्तसंख्यावाची वा । नानाविधानि नानाप्रकाराणि । तदेवाह । नानावर्णाः शुक्लादयो नानाकृतय आकारा येषां तानि ॥ ५ ॥

**पश्यादित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा ॥**
**बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६ ॥**

पश्यादित्यानिति । पश्यादित्यान् द्वादश वसूनष्टौ रुद्रानेकादशाश्विनौ द्वौ मरुतः सप्तसप्तगणान् एतांस्तथा च 'बहून्यन्यान्यप्यदृष्टपूर्वाणि मनुष्यलोके त्वया त्वत्तोऽन्येन वा केनचित् पश्याश्चर्याणि रूपाण्यद्भुतानि भारत ॥ ६ ॥

आ० टी० । दिव्यानि रूपाणि पश्येत्युक्तं तान्येव लेशतोऽनुक्रामति **पश्यादित्यानिति** । तान् मरुतस्तथा पश्येति संबन्धः । नानाविधानीत्युक्तं तदेव स्फुटयति **बहूनीति** । अदृष्टपूर्वाणि पूर्वमदृष्टानि । नानावर्णाकृतीनीत्युक्तं व्यनक्ति **आश्चर्याणीति** ॥ ६ ॥

प० टी० । अथ तान्येवाह **पश्येति** । द्वादशादित्यानष्टवसून् । द्वावश्विनौ । एकोनपञ्चाशन्मरुतस्तथान्यान्यदृष्टपूर्वाणि पूर्वमदृष्टान्यत एवाश्चर्यजनकानि । मे रूपाणीति पूर्वमुक्तं तर्हि मत्तः पृथङ् न तिष्ठन्तीति तान्यन्वेष्टुं देशतः कालतो वा प्रयासो नास्तीत्याह ॥ ६ ॥

**इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम् ॥**
**मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥**

न केवलमेतावदेव इहैकस्थमिति । इहैकस्थमेकस्मिन् स्थितं जगत् कृत्स्नं समस्तं पश्याद्येदानीं सचराचरं सह चरेणाचरेण वर्तते मम देहे गुडाकेश यच्चान्यज्जयपराजयादि यच्छङ्कसे 'यद्वा जयेम यदि वा नो जयेयुः' इति यदवोचस्तदपि द्रष्टुं यदीच्छसि ॥ ७ ॥

आ० टी० । न केवलमादित्यवस्वाद्येव मद्रूपं त्वया द्रष्टुं शक्यं किं तु समस्तं जगदपि मद्देहस्थं द्रष्टुमर्हसीत्याह **नेत्यादिना** । सप्तमीद्वयं मिथः संबध्यते समासान्तर्गतापि सप्तमी तत्रैवानीता यदीच्छसि तर्हीहैव पश्येति संबन्धः ॥ ७ ॥

प० टी० । **इहैकस्थमिति** । इह पुरोवर्तिनि बीजं मां सर्वभूतानामित्युक्तत्वात् सकलबीजभूते मनुष्याकृतिके मम देहे कृत्स्नं सर्वं जगदेकस्थमेकत्रस्थितमद्याधुनैव पश्य । तदुक्तम्–'पार्थो रथस्थं द्विभुजस्वरूपं ददर्श देहं खलु विश्वरूपम् । न विश्वरूपे ददृशे रथस्थं यद्विश्वरूपस्य निदानमेतद्'इति । यतः पूर्वं स्वशरीरान्तर्मार्कण्डेयमुनयेऽनन्तरं शरीरैकदेशे जनन्यै विश्वरूपं दर्शितवान् । तदुक्तमारण्यके पर्वणि काम्यकवनोपविष्टं कृष्णसहितं युधिष्ठिरं प्रति मार्कण्डेयेन–'ततः कदाचित्पश्यामि तस्मिन् सलिलविप्लवे। न्यग्रोधं सुमहान्तं वै तच्छाखायां नराधिप । उपविष्टं तु पर्यङ्के पूर्णेन्दुसदृशाननम् । फुल्लपद्मविशालाक्षं बालं श्रीवत्सलाञ्छनम् । ततो बालेन तेन स्वं सहसा विवृतं मुखम् । तस्याहमवशोवक्त्रं दैवयोगात्प्रवेशितः । तत्र प्रविष्टस्तत्कुक्षावपश्यन्निखिलं जगत् । यः स देवो मया दृष्टः पुरा पद्मनिभेक्षणः । स एष पुरुषव्याघ्र संबन्धी ते जनार्दनः । अस्यैव वर-

दानेन स्मृतिर्न प्रजहाति माम् । दीर्घमायुश्च कौन्तेय स्वच्छन्दमरणं च वै । स एष कृष्णो वार्ष्णेयः पुराणः पुरुषोत्तमः । आस्ते हरिरचिन्त्यात्मा क्रीडन्निव महाभुजः । भागवतेऽपि—'सा तत्र ददृशे विश्वं जगत्स्थास्नु च खं दिशः । साद्रिद्वीपाब्धिभूगोलं सवाय्वग्नीन्दुतारकम्' इति । एवं सति किं पुनः सकलदेह इत्यर्थः । अथ किं पुनर्भूते जातमित्याह यच्चेति । यच्चान्यत्कारणीभूतं ब्रह्मादिदेवताविशेषादिकं वा द्रष्टुमिच्छसि तदपि पश्येत्यर्थः। अथ शतशोऽथ सहस्रश इत्यत्र श्रुतिरपि-"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम्" इति । भाष्यम्—सहस्रशीर्षेति षोडशर्चं सूक्तं, नारायणो नाम ऋषिः, अन्त्या त्रिष्टुप्, शेषा अनुष्टुभः, अव्यक्तादिमहदादिचेतनो यः पुरुषः स देवतेति सर्वानुक्रमस्तत्र प्रथमा सहस्रशीर्षेति । सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यो यः पुरुषः सोऽयं सहस्रशीर्षाः सहस्रशब्दस्योपलक्षणत्वात् । अनन्तैः शीर्षैः शिरोभिर्युक्त इत्यर्थः। यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सहस्रशीर्षत्वम्, एवं सहस्राक्षत्वं सहस्रपादत्वं च । स पुरुषो भूमिं ब्रह्माण्डगोलरूपां विश्वतः सर्वतो वृत्वा परिवेष्ट्य दशाङ्गुलपरिमितं देशमत्यतिष्ठत् अतिक्रम्य व्यवस्थितः । दशाङ्गुलमित्युपलक्षणं तेन ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः । यद्वा ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यं ॐतत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ॐमापो ज्योतीरसोऽमृतं ब्रह्मभूर्भुवः सुवरोमिति दशप्रणवात्मकगायत्र्युपदिष्टप्रदेशं दशाङ्गुलमत्यतिष्ठदिति केचित् ॥ ७ ॥

**न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ॥**
**दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥**

किं तु न तु मामिति । न तु मां विश्वरूपधरं शक्यसे द्रष्टुमनेन प्राकृतेन स्वचक्षुषा स्वकीयेन चक्षुषा येन तु शक्यसे द्रष्टुं दिव्येन तद्दिव्यं ददामि ते तुभ्यं चक्षुस्तेन पश्य मे मम योगमैश्वरमीश्वरस्य ममैश्वरं योगं योगशक्त्यतिशयमित्यर्थः ॥ ८ ॥

आ० टी० । मन्यसे यदीत्युक्तमनुवदति **किं त्विति** । सप्रपञ्चमनवच्छिन्नं मां स्वचक्षुषा न शक्नोषि द्रष्टुमित्याह **न त्विति** । कथं तर्हि त्वां द्रष्टुं शक्नुयामित्याशङ्क्याह **येनेति** । दिव्यस्य चक्षुषो वक्ष्यमाणयोगशक्त्यतिशयदर्शने विनियोगं दर्शयति **तेनेति** ॥ ८ ॥

प० टी० । अथैतादृगद्भुतरूपदर्शनं चर्मचक्षुषा कथं स्यादित्याह **नत्विति** ।अनेन वर्तमानेनैव स्वचक्षुषा मे ऐश्वरमलौकिकं योगं द्रष्टुं न शक्यसे तर्हि तुभ्यमहमन्तर्यामी दिव्यं सत्त्वाकारान्तःकरणवृत्तिसहकृतं ज्ञानात्मकं चक्षुर्ददामि, ततः पश्य, यथाञ्जनसंस्कारेणातीन्द्रियमपि निधानं दृश्यते तथैवेत्यर्थः । दैवात्मकृष्णाञ्जनदिव्यदृष्टिरितिपूर्वमेवोक्तम् । टिप्पणिकास्वपि—'देवकीतनय सेवकीकृतं यैर्मनागपि मनो विनोदतः। अञ्जनीभवति कञ्जलोचनस्तादृशो गतिनिधानसाधने' इति । एवमेवान्यैरपि दिव्यदृष्टिदानपूर्वकं कृष्णदेहावयवेषु विश्वरूपं दृष्टमित्युद्योगपर्वणि पाण्डवदौत्येन कौरवसभां प्रति भगवद्याने प्रोक्तम्—'विदुरेणैवमुक्त तु केशवः परवीरहा । दुर्योधनं धार्तराष्ट्रमभ्यभाषत वीर्यवान् । एकोऽहमिति यन्मोहान्मन्यसे मां सुयोधन । परिभूय तु दुर्बुद्धे गृहीतुं मां चिकीर्षसि । इहैव पाण्डवाः सर्वे तथैवान्धकवृष्णयः । इहादित्याश्च रुद्राश्च तथैव च महर्षयः । एवमुक्त्वा जहासोच्चैः केशवः परवीरहा । तस्यास्यात्स्मयतः शौरेर्विद्युद्रूपा महात्मनः । अङ्गुष्ठमात्रास्त्रिदशा मुमुचुः पावकार्चिषः । तस्य ब्रह्मा ललाटस्थो रुद्रो वक्षसि चाभवत् । प्रादुरास्तां तथा दोर्भ्यां संकर्षणधन-

क्षयौ । भीमो युधिष्ठिरश्चैव माद्रीपुत्रौ च पृष्ठतः । अन्धका वृष्णयश्चैव प्रद्युम्नप्रमुखास्तथा । आविर्बभूवुः कृष्णाङ्गात्समुद्यतमहायुधाः। शङ्खचक्रगदाशक्तीः शार्ङ्गलाङ्गलनन्दकम्। अदृश्यान्युद्यतान्येव सर्वप्रहरणानि च। नानाबाहुषु कृष्णस्य दीप्यमानानि सर्वशः । नेत्राभ्यां वक्षसश्चैव श्रोत्राभ्यां च समन्ततः । प्रादुरासन् महारौद्राः सधूमाः पावकार्चिषः । रोमकूपेषु च तथा सूर्यस्येव मरीचयः। तं दृष्ट्वा महदाश्चर्यं केशवस्य महात्मनः । न्यमीलयन्त नेत्राणि राजानस्त्रस्तचेतसः । ऋते भीष्मं च द्रोणं च विदुरं सञ्जयं तथा । प्रादात्तेषां स भगवान् दिव्यं चक्षुर्जनार्दनः । तदृष्ट्वा महदाश्चर्यं माधवस्य सभातले । देवदुन्दुभयो नेदुः पुष्पवर्षं पपात च' इति ॥ ८ ॥

## सञ्जय उवाच ।

**एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ॥**
**दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥**

एवं तं यथोक्तप्रकारेणोक्त्वा ततोऽनन्तरं राजन् धृतराष्ट्र महांश्चासौ योगेश्वरश्च महायोगेश्वरो हरिर्नारायणो दर्शयामास दर्शितवान् पार्थाय पृथासुताय परमं रूपं विश्वरूपमैश्वरम् ॥ ९ ॥

आ० टी० । इमं वृत्तान्तं धृतराष्ट्राय सञ्जयो निवेदितवानित्याह सञ्जय इति । मदीयं विश्वरूपाख्यं रूपं न प्राकृतेन चक्षुषा निरीक्षितुं क्षमं किंतु दिव्येनेत्यादि, यथोक्तप्रकारः, अनन्तरं दिव्यचक्षुः प्रदानादिति शेषः । हरत्यविद्यां सकार्यामिति हरिः । यदीश्वरस्य मायोपहितस्य परममुत्कृष्टं रूपं तद्दर्शयाम्बभूवेत्याह **परममिति** ॥ ९ ॥

प० टी० । अथ प्रकृतमनुसरामः । एवमुक्त्वा भगवानर्जुनाय रूपं दर्शितवान् तच्च रूपं दृष्ट्वाऽर्जुनः श्रीकृष्णं विज्ञापितवानितीमं वृत्तान्तं धृतराष्ट्रं प्रति सञ्जय उवाच एवमुक्त्वेति षड्भिः । श्लोकैः । भो राजन् धृतराष्ट्र महायोगेश्वरो हरिः महान्तश्च ते योगेश्वराश्च महायोगेश्वराः । योगो हि जीवब्रह्मैक्यं तत्रेश्वराः समर्थाः शुकवामदेवयाज्ञवल्क्यप्रभृतयस्तेषामपीश्वरः कृष्णः पार्थाय परमं पारमार्थिकं रूपमैश्वरमघटितघटनापटीयो दर्शयामास ॥ ९ ॥

**अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ॥**
**अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥**
**दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ॥**
**सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥**

अनेकेति । अनेकवक्त्रनयनम् अनेकानि वक्त्राणि नयनानि च यस्मिन् रूपे तदनेकवक्त्रनयनम् अनेकाद्भुतदर्शनम् अनेकान्यद्भुतानि विस्मापकानि दर्शनानि यस्मिन् रूपे तदनेकाद्भुतदर्शनं रूपं तथानेकदिव्याभरणम् अनेकानि दिव्याभरणानि यस्मिंस्तदनेकदिव्याभरणं तथा दिव्यानेकोद्यतायुधं

दिव्यान्यनेकान्युद्यतान्यायुधानि[1] यस्मिंस्तद्दिव्यानेकोद्यतायुधं दर्शयामासेति पूर्वेण संबन्धः ॥ १० ॥

किं च दिव्येति । दिव्यमाल्याम्बरधरं दिव्यानि माल्यानि पुष्पाण्यम्बराणि वस्त्राणि च ध्रियन्ते येनेश्वरेण तं दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनं दिव्यगन्धा अनुलेपनं सर्वाश्चर्यमयं सर्वाश्चर्यप्रायं देवमनन्तं नास्यान्तोऽस्तीत्यनन्तस्तं विश्वतोमुखं सर्वभूतात्मत्वात् तं दर्शयामासार्जुनो ददर्शेति वाध्याह्रियते ॥ ११ ॥

आ० टी० । तदेव रूपं विशिनष्टि अनेकेति । दिव्यान्याभरणादीनि हारकेयूरादीनि भूषणान्युद्यतान्युच्छ्रितानि ॥ १० ॥

आ० टी० । उक्तरूपवन्तं भगवन्तं प्रकारान्तरेण विशिनष्टि किंचेति । अध्याहारोऽपि पदसंघटनासंभवात् ॥ ११ ॥

प० टी० । ततोऽनेकवक्त्रनयनमित्यादितः श्लोकद्वयं रूपवर्णनार्थं स्पष्टार्थम् । अथ वैश्वरूपतेजसो दृष्टान्ताभावं दर्शयति ॥ १० ॥ ११ ॥

**दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ॥**
**यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२ ॥**

या पुनर्भगवतो विश्वरूपस्य भास्तस्या उपमोच्यते दिवीति । दिव्यन्तरिक्षे तृतीयस्यां वा दिवि सूर्याणां सहस्रं सूर्यसहस्रं तस्य युगपदुत्थितस्य युगपदुत्थिता भाः सा यदि सदृशी स्यात् तस्य महात्मनो विश्वरूपस्य भासो यदि वा न स्यात् ततोऽपि विश्वरूपस्यैव भा अतिरिच्यत इत्यभिप्रायः ॥ १२ ॥

आ० टी० । ननु प्रकृतस्य भगवतो रूपस्य दीप्तिरस्ति न वा न चेत् काष्ठादिसाम्यं यद्यस्ति कीदृशी सेत्याशङ्क्याह या पुनरिति । सा यदि स्यात्तद्भासः सदृशी सेति योजना असंभाविताभ्युपगमार्थो यदिशब्दः, स्याच्छब्दो निश्चयार्थः । सा कथं सदृशी संभवति न तु भवत्येवेति विवक्षित्वाह यदि वेति ॥ १२ ॥

प० टी० । दिवीति । तस्य महात्मनो विश्वरूपस्य भासो दीप्तेः सदृशी समाना भा दीप्तिस्तर्ह्येव स्यात् । तर्हि कथम्, यदि दिव्याकाशे सूर्यसहस्रस्य युगपदेकवारमुत्थिता उदिता स्यादित्यभूतोपमालंकारः ॥ १२ ॥

**तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा ॥**
**अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥**

किं च तत्रैकस्थमिति । तत्र तस्मिन् विश्वरूपे एकस्मिन् स्थितमेक-

---

1 आयुधान्यस्यादीनि—पा. लि. पु.

स्थं जगत् कृत्स्नं प्रविभक्तमनेकधा देवपितृमनुष्यादिभेदैरपश्यद् दृष्टवान् देवदेवस्य हरेः शरीरे पाण्डवोऽर्जुनस्तदा ॥ १३ ॥

आ० टी० । न केवलमुक्तमेवार्जुनो दृष्टवान् किं तु तत्रैव विश्वरूपे सर्वं जगदेकस्मिन्नवस्थितम नुभूतवानित्याह किं चेति । तदा विश्वरूपस्य भगवद्रूपस्य दर्शनं दर्शयामीत्यर्थः ॥ १३ ॥

प० टी० । तत्रेति । तत्र देवदेवस्य शरीरेऽनेकधा प्रविभक्तं भिन्नभिन्ननामरूपकर्मात्मकं कृत्स्नं समग्रं जगदेकस्थमेकाश्रयं तदा तस्मिन्नवसरे पाण्डवोऽर्जुनोऽपश्यत् ॥ १३ ॥

**ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ॥**
**प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥**

तत इति । ततस्तं दृष्ट्वा स विस्मयेनाविष्टो विस्मयाविष्टो हृष्टानि रोमाण्यस्य सोऽयं हृष्टरोमा चाभवद्धनञ्जयः प्रणम्य प्रकर्षेण नमनं कृत्वा प्रह्वीभूतः सन् शिरसा देवं विश्वरूपधरं कृताञ्जलिर्नमस्कारार्थं संपुटीकृतहस्तः सन्नभाषतोक्तवान् ॥ १४ ॥

आ० टी० । विश्वरूपधरस्य भगवतस्तास्मिन्नेकीभूतजगतश्चोक्तविशेषणस्य दर्शनानन्तरं किमकरोदित्यपेक्षायामाह तत इति । आश्चर्यबुद्धिर्विस्मयो रोम्णां हृष्टत्वं पुलकितत्वं, प्रकर्षो भक्तिश्रद्धयोरतिशयः ॥ १४ ॥

प० टी० । ततः किमासीदित्याह तत इति । ततो दर्शनानन्तरं धनञ्जयोऽर्जुनोऽद्भुतदर्शनोत्पन्नेन विस्मयेनाविष्टो व्याप्तः । एवमद्भुतरसाविर्भावेन हृदयरोमाञ्चाङ्कितः सन् देवं कृष्णं शिरसा प्रणम्य कृताञ्जलिः सन्नभाषत ॥ १४ ॥

## अर्जुनउवाच ।

**पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसङ्घान् ॥**
**ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥**

कथं यत्त्वया दर्शितं विश्वरूपं तदहं पश्यामीति स्वानुभवमाविष्कुर्वन्नर्जुन उवाच पश्यामीति । पश्याम्युपलभे हे देव तव देहे देवान् सर्वांस्तथा भूतविशेषसङ्घान् भूतविशेषाणां स्थावरजङ्गमानां नानासंस्थानविशेषाणां सङ्घा भूतविशेषसङ्घास्तान् किं च ब्रह्माणं चतुर्मुखमीशमीशितारं प्रजानां कमलासनस्थं पृथिवीपद्ममध्ये मेरुकर्णिकासनस्थमित्यर्थः । ऋषींश्च वशिष्ठादीन्, सर्वांनुरगांश्च वासुकिप्रभृतीन् दिव्यान् दिवि भवान् ॥ १५ ॥

आ० टी० । कथं भगवन्तं प्रत्यर्जुनो भाषितवानिति पृच्छति कथमिति । तत्प्रश्नमपेक्षितं पूरयन्नवतारयति यत्त्वयेति । भूतविशेषसङ्घातेषु देवतानामन्तर्भावेऽपि पृथक्करणमुत्कृष्टाद् ब्रह्मणः

सर्वदेवतात्मत्वेऽपि तेभ्यो भेदकथनं तदुत्पादकत्वादिति मत्वाह **किंचेति** । ऋषीणामुरगाणां च किंचिद्वैषम्यात् पृथक्त्वं, दिव्यानित्युभयेषां विशेषणम् ॥ १५ ॥

प० टी० । किमभाषतेत्याह **पश्यामीति सप्तदशभिः** । भो देव दीप्यमान तव देहे स्वर्गस्थान् देवान् पश्यामि । तथा भूमिस्थान् सर्वान् भूतविशेषाणां जरायुजाण्डजादीनां सङ्घान् समूहांस्तथा दिव्यन्तरिक्षवर्तमानानृषीन् पुलस्त्यक्रत्वादींस्तथा पाताले स्थितानुरगांश्च पश्यामि । किं च । सत्यलोकनिवासिनं ब्रह्माणं तथा कैलासनिवासिनमीश्वरं पश्यामि । किं च कमलया लक्ष्म्या सहासने गरुडासने स्थितो विष्णुस्तमपि वैकुण्ठवासिनं पश्यामीति दिव्यदृष्टिदानस्य फलमुक्तम् । (अत्र शोधपर्ण नास्ति) ॥ १५ ॥

**अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वा सर्वतोऽनन्तरूपम् ॥**
**नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप ॥१६॥**

किं च अनेकेति । अनेकबाहूदरवक्त्रनेत्रम् अनेके बाहव उदराणि वक्त्राणि नेत्राणि च यस्य तव स त्वमनेकबाहूदरवक्त्रनेत्रस्तमनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वा त्वां सर्वतः सर्वत्रानन्तरूपमनन्तानि रूपाण्यस्येत्यनन्तरूपस्तमनन्तरूपं नान्तमन्तोऽवसानं न मध्यं मध्यं नाम द्वयोः कोट्योरन्तरं न पुनस्तवादिं तव देवस्य नान्तं पश्यामि न मध्यं पश्यामि न पुनरादिं पश्यामि हे विश्वेश्वर हे विश्वरूप ॥ १६ ॥

आ० टी० । यत्र भगवद्देहे सर्वमिदं दृष्टं तमेव विशिनष्टि **अनेकेति** । आदिशब्देन मूलमुच्यते । नान्तं न मध्यमित्यत्रापि पश्यामीत्यस्य प्रत्येकं संबन्धं सूचयति **नान्तं पश्यामीति** ॥ १६ ॥

प० टी० । अथ विश्वरूपं वर्णयति **अनेकेति द्वाभ्याम्** । भो विश्वेश्वर ते विश्वरूपं विश्वात्मकं रूपं यद्वा 'विश्वं विष्णुर्वषट्कार' इत्यादिना विश्वं विष्णुस्वरूपं रूपे शरीरे यस्य तथाविधं ते इति त्वां पश्यामि । किं भूतम्, अनेकबाहूदरवक्त्रनेत्रम् अनेकेषां बाहूदरवक्त्रनेत्राण्येव बाहूदरवक्त्रनेत्राणि यस्य । सर्वतः समन्ततोऽनन्तरूपमसंख्यातरूपमेव सर्वं पश्यामि । परं त्वेतत्त्रितयं न पश्यामि । तत्किम्, ते अन्तं पर्यवसानं मध्यं स्थितिमवसानमादिमाविर्भावं पूर्वं कमलासनस्थमिति पदेन सामान्यतो विष्णोः स्वरूपं यद्दृष्टमित्युक्तं तदेव गदाचक्राद्यायुधोपलक्षणं यथा पुराणेषु श्रुतमभूत्तथा "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्" इति श्रुतिप्रतिपादितं त्रिविक्रमाकारेण दृष्टमित्याह ॥ १६ ॥

**किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् ॥**
**पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् ॥१७॥**

किं च किरीटिनमिति । किरीटिनं किरीटं नाम शिरोभूषणविशेषस्तद् यस्यास्तीति स किरीटी तं किरीटिनं तथा गदिनं गदा यस्य विद्यत इति गदी तं गदिनं तथा चक्रिणं चक्रमस्यास्तीति चक्री तं चक्रिणं च तेजोराशिं तेजःपुञ्जं

सर्वतोदीप्तिमन्तं सर्वतो दीप्तिर्यस्यास्तीति सर्वतोदीप्तिमांस्तं सर्वतोदीप्तिमन्तं पश्यामि त्वां दुर्निरीक्ष्यं दुःखेन निरीक्ष्यो दुर्निरीक्ष्यस्तं समन्ततः सर्वत्र दीप्तानलार्कद्युतिमनलश्चार्कश्चानलार्कौ दीप्तावनलार्कौ दीप्तानलार्कौ[1] तयोर्दीप्तानलार्कयोर्द्युतिरिव द्युतिस्तेजो यस्य तव स त्वं दीप्तानलार्कद्युतिस्तं त्वां दीप्तानलार्कद्युतिम् अप्रमेयं न प्रमेयमप्रमेयमशक्यपरिच्छेदमित्यर्थः ॥ १७ ॥

आ० टी० । विश्वरूपवन्तं भगवन्तमेव प्रकारान्तरेण प्रपञ्चयति **किंचेति** । परिच्छिन्नत्वं व्यावर्तयति **सर्वत इति** । दुर्निरीक्ष्यं पश्यामीत्यधिकारिभेदादविरुद्धम् । पुरतो वा पृष्ठतो वा पार्श्वतो वा नास्य दर्शनं किं तु सर्वत्रेत्याह **समन्तत इति**। दीप्तिमन्तं दृष्टान्तेन स्पष्टयति **दीप्तेति**॥१७॥

प० टी० । **किरीटिनमिति** । किरीटिनं मुकुटवन्तं गदिनं गदाहस्तं चक्रिणं सुदर्शनवन्तं पश्यामि । अनेनोर्ध्वहस्ताभ्यां क्रमेण गदाचक्रे तथाधरहस्ताभ्यां पद्मशङ्खौ बिभ्राणमेवं चतुर्भुजं त्रिविक्रमरूपं पश्यामीत्युक्तम्। तथा त्वां सर्वतस्तेजोराशिं तेजःसमूहरूपदीप्तिमन्तम् प्रसरप्रकाशं समन्ताद्दुर्निरीक्ष्यं द्रष्टुमशक्यं दीप्तानलार्कद्युतिं ज्वलदग्निसूर्ययोर्दीप्तिर्यस्य । अप्रमेयं मनसाप्यतर्क्यम् । अयमर्थः–त्रिविक्रमस्वरूपं तु स्वरूपेणैव चरणविक्षेपमात्रव्याप्तब्रह्माण्डकटाहं तादृशमपि तव देहे पश्यामि किं पुनरन्यत् । एतदेव मनसि निधाय महापुराणेऽप्युक्तम्–'क्वाहं तमोमहदहंखचराग्निवार्भूःसंवेष्टिताण्डघटसप्तवितस्तिकायः' इत्यादि ॥ १७ ॥

**त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ॥**
**त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥१८॥**

इत एव ते योगशक्तिदर्शनादनुमिनोमि त्वमिति । त्वमक्षरं न क्षरतीति परमं परं ब्रह्म वेदितव्यं ज्ञातव्यं मुमुक्षुभिस्त्वमस्य विश्वस्य समस्तस्य जगतः परं प्रकृष्टं निधानं निधीयतेऽस्मिन्निति निधानं परमाश्रय इत्यर्थः । किं च त्वमव्ययो न च तव व्ययो विद्यत इत्यव्ययः शाश्वतधर्मगोप्ता शश्वद्भवः शाश्वतो नित्यो धर्मस्तस्य गोप्ता शाश्वतधर्मगोप्ता सनातनश्चिरंतनस्त्वं पुरुषः परो मतोऽभिप्रेतो मे मम ॥ १८ ॥

आ० टी० । सप्रपञ्चे भगवद्रूपे प्रकृते प्रकरणविरुद्धत्वमक्षरमित्यादिनिरुपाधिकवचनमित्याशङ्क्याह **इत एवेति** । योगशक्तिरैश्वर्यातिशयः, न क्षरतीति निष्प्रपञ्चत्वमुच्यते, परमपुरुषार्थत्वात् परमार्थत्वाच्च ज्ञातव्यत्वम् । यस्मिन् द्यौः पृथिवीत्यादौ प्रपञ्चायतनस्यैव ततो निकृष्टस्य ज्ञातव्यत्वश्रवणात् कुतो ब्रह्मणो ज्ञातव्यत्वं तत्राह **त्वमस्येति** । निष्प्रपञ्चस्य ब्रह्मणो ज्ञेयत्वे हेत्वन्तरमाह **किंचेति** । अविनाशित्वात्तवैव ज्ञातव्यतातिरिक्तस्य नाशित्वेन हेयत्वादित्यर्थः । ज्ञानकर्मात्मनो धर्मस्य नित्यत्वं वेदप्रमाणकत्वं धर्मस्यापनयनार्थाय संभवामीत्युक्तत्वाद् गोप्ता रक्षिता ॥ १८ ॥

प० टी० । अथाप्रमेयत्वमेवाह **त्वमक्षरमिति** । नक्षरतीत्यक्षरं परं ब्रह्म त्वमेव परममात्यन्तिकं वेदितव्यं मुमुक्षुभिर्ज्ञातव्यं यस्मिन् ज्ञाते सर्वमिदं विज्ञातं भवतीत्यर्थः । त्वमस्य दृश्यमान-

---

१ दीप्तौचतावनलार्कौचदीप्तानलार्कौ—पा.

स्य विश्वस्य परमुत्कृष्टं निधानं निधीयते यस्मिन् प्रकृष्ट आश्रयः । अव्ययो नित्यः शाश्वता ये मोक्षप्रापका धर्मास्तेषां गोप्ता रक्षिता निर्वाहकः सनातनः पुराणः । एवंविधस्त्वं पुरुषः पुरुषोत्तमो मे मतः ॥ १८ ॥

**अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम् ॥**
**पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ॥१९॥**

किं च अनादीति । अनादिमध्यान्तमादिश्च मध्यं चान्तश्च न विद्यते यस्य सोऽयमनादिमध्यान्तस्तं त्वामनादिमध्यान्तमनन्तवीर्यं न तव वीर्यस्यान्तोऽस्तीत्यनन्तवीर्यस्तं त्वामनन्तवीर्यं तथानन्तबाहुमनन्ता बाहवो यस्य तव स त्वमनन्तबाहुस्तं त्वामनन्तबाहुं शशिसूर्यनेत्रं शशिसूर्यौ नेत्रे यस्य तव स त्वं शशिसूर्यनेत्रस्तं त्वां शशिसूर्यनेत्रं चन्द्रादित्यनयनं पश्यामि त्वां दीप्तहुताशवक्त्रं दीप्तश्चासौ हुताशश्च तद्वत् वक्त्रं यस्य तव स त्वं दीप्तहुताशवक्त्रस्तं त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वं समस्तमिदं तपन्तं संतापयन्तम् ॥ १९ ॥

आ० टी० । भगवतो रूपं विश्वरूपाख्यं रूपमेव पुनर्विवृणोति **किंचेति** । हुतमश्नातीति हुताशो वह्निः ॥ १९ ॥

प० टी० । किं च स्वजनमात्रहिंसाभयाद्रणान्निवृत्तेन कालरूपपरमेश्वरदर्शनप्रार्थनया त्रैलोक्यहिंसापि मयैव कारितेति मन्यमानः पश्चात्तापमनुवदन्नाह **अनादीति** । न विद्यन्ते आदिमध्यान्ता यस्य । अनन्तवीर्यमनन्तशक्तिम् । अनन्ता बाहवो यस्य । शशिसूर्यनेत्रं सांमुख्येन वर्तमानौ पूर्णचन्द्रसूर्यौ नेत्रे यस्य । यद्वा शशिसूर्ययोरपि नेत्रीभूतम् । दीप्तहुताशो ज्वलदग्निर्वक्त्रं मुखं यस्य । स्वतेजसा इदं विश्वं तपन्तं संतापयन्तम् । जगत्संहारं कर्तुमिव प्रवृत्तं पश्यामि ॥ १९ ॥

**द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ॥**
**दृष्ट्वाद्भुतं रूपमिदं तवोग्रं लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥**

द्यावापृथिव्योरिति । द्यावापृथिव्योरिदमन्तरं ह्यन्तरिक्षं व्याप्तं त्वयैकेन विश्वरूपधरेण दिशश्च सर्वा व्याप्ता दृष्ट्वोपलभ्याद्भुतं विस्मापकं रूपमिदं तवोग्रं क्रूरं लोकत्रयं लोकानां त्रयं लोकत्रयं प्रव्यथितं भीतं प्रचलितं वा हे महात्मन्नक्षुद्रस्वभाव ॥ २० ॥

आ० टी० । प्रकृतभगवद्रूपस्य व्याप्तिं व्यनक्ति **द्यावापृथिव्योरितीति** । तस्यैव भयंकरत्वमाचष्टे **दृष्ट्वेति** ॥ २० ॥

प० टी० । **द्यावापृथिव्योरिति** । द्यावापृथिव्योरन्तरमन्तरिक्षं त्वयैकेनैव व्याप्तम् । तथा स-

१ सवक्त्रं—पा० लि० पु० ।

र्वो दिशश्च व्याप्ताः । भो महात्मन् विश्वरूप एवमेतादृशमुग्रं तव रूपं दृष्ट्वा लोकत्रयं प्रव्यथितम् । प्रकर्षेण संहारं प्राप्तमिवेति पश्यामि । श्रुतिरपि वाजसनेयसंहितासु–"परीत्य भूतानि परीत्य लोकान् परीत्य सर्वाः प्रदिशो दिशश्च । उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेश" । भाष्यम्–ऋतस्य सत्यस्य परब्रह्मणः प्रथमजां प्रथमजातां शबलत्वेनोपस्थितां तनुमुपस्थायाधिष्ठाय आत्मना स्वरूपेण कृत्वात्मानमभितः संविवेश प्रविष्टवान् । किं कृत्वा, भूतानि पृथिव्यादीनि परीत्याभिव्याप्य लोकान् भूर्भुवः स्वरादीन् दिशश्च प्रदिशश्चेति तद्वत् ॥ २० ॥

**अमी हि त्वां सुरसङ्घा विशन्ति केचिद्भीताः प्राञ्जलयो गृणन्ति ॥**
**स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१ ॥**

अथाधुना पुरा यद्वा जयेम यदि वा नो जयेयुरित्यर्जुनस्य संशय आसीत् तन्निर्णयाय पाण्डवजयमैकान्तिकं दर्शयामीति प्रवृत्तो भगवांस्तं पश्यन्नाह अमी हीति । किं च अमी हि युध्यमाना योद्धारस्त्वां सुरसङ्घा येऽत्र भूभारावतारायावतीर्णा वस्वादिदेवसङ्घा मनुष्यसंस्थानास्त्वां विशन्ति प्रविशन्तो दृश्यन्ते तत्र केचिद्भीताः प्राञ्जलयः सन्तो गृणन्ति स्तुवन्ति त्वामन्ये पलायनेऽप्यशक्ताः सन्तो युद्धे प्रत्युपस्थिते उत्पातादिनिमित्तान्युपलक्ष्य स्वस्त्यस्तु जगत इत्युक्त्वा महर्षिसिद्धसङ्घा महर्षीणां च सिद्धानां च सङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः संपूर्णाभिः ॥ २१ ॥

आ० टी० । अमी हीत्यादि समनन्तरग्रन्थस्य तात्पर्यमाह **अथेति** । तं भगवन्तं पाण्डवजयमैकान्तिकं दर्शयन्तं पश्यन्नर्जुनो ब्रवीतीत्याह **तं पश्यन्निति** । विश्वरूपस्यैव प्रपञ्चनार्थमनन्तरग्रन्थजातमिति दर्शयति **किंचेति** । असुरसङ्घा इति पदं स्थित्वा भूभारभूता दुर्योधनादयस्त्वां विशन्तीत्यपि च वक्तव्यम् । उभयोरपि सेनयोरवस्थितेषु योद्धुकामेष्ववान्तरविशेषमाह **तत्रेति** । समरभूमौ समागतानां द्रष्टुकामानां नारदप्रभृतीनां विश्वविनाशमाशङ्कमानानां तं परिजिहीर्षतां स्तुतिपदेषु भगवद्विषयेषु प्रवृत्तिप्रकारं दर्शयति **युद्ध इति** ॥ २१ ॥

प० टी० । तदेवाह **अमीहीति** । सुरसङ्घा देवसमूहास्त्वामतिभीषणं दृष्ट्वेतः परं क्व गन्तव्यमिति व्याकुलचित्तास्त्वामेव प्रविशन्ति । तथा महर्षयश्च सिद्धसङ्घा गन्धर्वचारणादयस्त्वां त्रिलोकीप्रभुं मत्वा स्वस्तीत्याशीर्वचनमुक्त्वा त्वां पुष्कलाभिर्दीर्घाभिः स्तुतिभिः स्तुवन्ति । एतदर्थे नौधसं सामास्ति–"तं वोदस्समृषीषहं वसोर्मदानमन्धसः । अभिवत्सं न स स्वरेषु धेनव इन्द्रं गीर्भिर्न वाम" इति । भाष्यम्–नौधा ऋषिः इन्द्रं परमात्मानं स्तौति । हे ऋत्विग्यजमाना दस्मं दर्शनीयं ऋषीषहं ऋषीशा बाधकास्तेषामभिभवितारम् । पुनः कीदृशं, वसोर्दुःखस्य वासयितारमाच्छादकम् । तथान्धसः सोमलक्षणस्यान्नपानेन मदानं मोदमानं तादृशमिन्द्रं गीर्भिः स्तुतिलक्षणाभिर्वाग्भिरभिनवामहेऽभिष्टुमोऽभितः शब्दयामः । कुत्र सस्वरेषु दिवसेषु वयमभिष्टुमः, तत्र दृष्टान्तः वत्सं यथा नवप्रसूतिका धेनवः सस्वरेषु सुष्ठु अस्यन्ते प्रीयन्ते गावोऽत्रेति सस्वराणि गोष्ठानि तेषु वत्समभिलक्ष्य शब्दयन्ति तद्वत्परमप्रेमास्पदं त्वामित्यर्थः ॥ २१ ॥

**रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ॥**
**गन्धर्वयक्षासुरसिद्धसङ्घा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥**

किंचान्यत् रुद्रेति । रुद्रादित्या वसवो ये च साध्या रुद्रादयो गणाः विश्वेऽश्विनौ विश्वेदेवा अश्विनौ च देवौ मरुतश्च वायव ऊष्मपाश्च पितरो गन्धर्वयक्षासुरसिद्धसङ्घा गन्धर्वा हाहाहूहूप्रभृतयो यक्षाः कुबेरप्रभृतयोऽसुरा विरोचनप्रभृतयः सिद्धाः कपिलादयस्तेषां सङ्घा गन्धर्वयक्षासुरसिद्धसङ्घास्ते वीक्षन्ते पश्यन्ति त्वा त्वां विस्मिता विस्मयमापन्नाः सन्तस्तएव सर्वे॥ २२ ॥

आ० टी० । दृश्यमानस्य भगवद्रूपस्य विस्मयकरत्वे हेत्वन्तरमाह **किंचेति** । तत्र चोक्ता रुद्रादयः सर्वे विस्मयमापन्नास्त्वां पश्यन्तीति संबन्धः ॥ २२ ॥

प० टी० । अथ केऽप्यतिचकितत्वेन स्तोतुमशक्तास्तूष्णीं तस्थुरित्याह **रुद्रादित्या** इति। रुद्रा एकादश, आदित्या द्वादश, वसवोऽष्टौ, ये च साध्या विश्वेदेवा अश्विनौ मरुद्गणा ऊष्म पिबन्ति ते ऊष्मपाः पितरः, गन्धर्वयक्षास्तथासुरसिद्धसङ्घा अद्भुतदर्शनाद्विस्मिताः सन्तस्त्वां वीक्षन्ते तूष्णीमवलोक्य स्थिताः ॥ २२ ॥

**रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ॥**
**बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाहम्॥ २३ ॥**

यस्मात् रूपमिति । रूपं महदतिप्रमाणं ते तव बहुवक्त्रनेत्रं बहूनि वक्त्राणि मुखानि नेत्राणि चक्षूंषि च यस्मिंस्तद्रूपं बहुवक्त्रनेत्रं हे महाबाहो बहुबाहूरुपादं बहवो बाहव ऊरवः पादाश्च यस्मिन् रूपे तद्बहुबाहूरुपादं, किं च बहूदरं बहून्युदराणि यस्मिन्निति तद् बहूदरं बहुदंष्ट्राकरालं बह्वि-भिर्दंष्ट्राभिः करालं विकृतं तद् बहुदंष्ट्राकरालं दृष्ट्वा रूपमीदृशं लोका लौकिकाः प्राणिनः प्रव्यथिताः प्रचलिता भयेन तथाहमपि ॥ २३ ॥

आ० टी० । लोकत्रयं प्रव्यथितमित्युक्तमुपसंहरति **यस्मादिति** । ईदृशं यस्मात्ते रूपं तस्मा-त्त्वां **दृष्ट्वेति** योजना । भयेन लौकिकवदहमपि व्यथितो व्यथां पीडां देहेन्द्रियप्रचलनं प्राप्तोऽस्मी-त्याह **तथेति** ॥ २३ ॥

प० टी० । एवं स्थितिरूपेण विश्वरूपं दर्शयन्निदानीं संहाररूपेण पश्यति । अतिभयान-करूपदर्शनेन तदुदरवर्तिनां लोकानां स्वस्य च भयं नाटयति **रूपमिति** । ते तव रूपं करालमत्यु-ल्बणं **दृष्ट्वा** लोकाः कौरवसैनिकाश्चूर्णीकृतैरुत्तमाङ्गैरित्यादिवक्ष्यमाणवाक्यैः प्रथिता नाशं पर्यवसिता इति च दृष्ट्वा एते दैवान्नष्टा एव परं त मया क्षात्रधर्मप्रतिष्ठापकजगद्गुरुवाक्यमविगणय्य व्यर्थं संग्रा-मादुपरतमित्यहमपि प्रव्यथितोऽस्मीत्यर्थः ॥ २३ ॥

**नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ॥**
**दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो २४**

तत्रेदं कारणं नभःस्पृशमिति । नभःस्पृशं द्युस्पर्शमित्यर्थः, दीप्तं प्रज्वलितमनेकवर्णमनेकवर्णा भयंकरा नानासंस्थाना यस्मिंस्त्वयि तं त्वामनेकवर्णं व्यात्ताननं व्यात्तानि विवृतान्याननानि मुखानि यस्मिंस्त्वयि तं त्वां व्यात्ताननं दीप्तविशालनेत्रं दीप्तानि प्रज्वलितानि विशालानि विस्तीर्णानि नेत्राणि यस्मिंस्त्वयि तं त्वां दीप्तविशालनेत्रं दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा प्रव्यथितः प्रभीतोऽन्तरात्मा मनो यस्य मम सोऽहं प्रव्यथितान्तरात्मा सन् धृतिं धैर्यं न विन्दामि न लभे शमं चोपशमं मनस्तुष्टिं हे विष्णो ॥ २४ ॥

आ० टी० । अर्जुनस्य विश्वरूपदर्शनेन व्यथितत्वे हेतुमाह **तत्रेति** ॥ २४ ॥

प० टी० । किं च **नभ इति** । नभोऽन्तरिक्षं स्पृशतीति नभःस्पृक् तन्नभःस्पृशम् । दीप्तं प्रज्वलितमनेकवर्णम्, व्यात्तं प्रसारितमाननं यस्येति । दीप्तानि प्रज्वलितानि विशालानि नेत्राणि यस्य । विष्णो व्यापक एवंविधं त्वां दृष्ट्वा प्रव्यथितोऽन्तरात्मा मनो यस्यैवं विधोऽहं धृतिं धैर्यमुपशमं वा न विन्दामि ॥ २४ ॥

**दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसंनिभानि ॥**
**दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास॥२५॥**

कस्माद् दंष्ट्राकरालानीति । दंष्ट्राकरालानि दंष्ट्राभिः करालानि विकृतानि ते तव मुखानि दृष्ट्वैवोपलभ्य कालानलसंनिभानि प्रलयकाले लोकानां दाहकोऽग्निः कालानलस्तन्निभानि कालानलसदृशानि दृष्ट्वेत्येतद्दिशः पूर्वापरविवेकेन न जाने दिङ्मूढोऽस्म्यतो न लभे न चोपलभे च शर्म सुखमतः प्रसीद प्रसन्नो भव देवेश जगन्निवास ॥ २५ ॥

आ० टी० । दृश्यमानेऽपि भगवद्देहे परितोषाद्यभावे कारणान्तरं प्रश्नपूर्वकमाह **कस्मादिति** । दृष्ट्वैवेत्येवकारेण प्राप्तिर्व्यावर्त्यते ॥ २५ ॥

प० टी० । अथ भयातिशयेन स्वस्य कांदिशीकत्वमनुवदति **दंष्ट्रेति** । दंष्ट्राभिः करालानि भयानकानि । कालानलः संकर्षणमुखानलस्तत्सदृशानि ते मुखानि दृष्ट्वाहं दिशो न जाने प्रागपरादिभागेन दिशां ज्ञानं सूर्येण कृत्वा भवति सोऽपि तव नाभिभूतोऽस्तीत्यर्थः । तथैतः परं किं भवतीति व्याकुलचित्तत्वेन शर्म विश्रमं न लभे । अथ भयोपशमस्त्वयैव विधेय इत्याह **प्रसीदेति** । स्पष्टम् ॥ २५ ॥

**अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसङ्घैः ॥**
**भीष्मो द्रोणः सूतपुत्रस्तथासौ सहास्मदीयैरपि योधमुख्यैः॥२६॥**

येभ्यो मम पराजयशङ्का[1] प्रागेवासीत्  सा चापगता यतः अमी चेति। अमी च त्वां धृतराष्ट्रस्य पुत्रा दुर्योधनप्रभृतयस्त्वरमाणा विशन्तीति व्यवहितेन संबन्धः। सर्वे सहैव संहता अवनिपालसङ्घैरवनिं पृथ्वीं पालयन्तीत्यवनिपालास्तेषां सङ्घैः। किं च भीष्मो द्रोणः सूतपुत्रः कर्णस्तथासौ सहास्मदीयैरपि धृष्टद्युम्नप्रभृतिभिर्योधमुख्यैर्योधानां मुख्यैः प्रधानैः सह ॥ २६ ॥

आ० टी० । अस्माकं जयं परेषां पराजयं च दिदृक्षन्तं पश्यामीत्याह येभ्य इति । तत्र हेतुत्वेन श्लोकमवतारयति यत इति ॥ २६ ॥

प० टी० । अथान्यदपूर्वं पश्यामीत्याह अमीचेति पञ्चभिः । तत्र रणे मरिष्यमाणानां भक्तानां च भाविनीं दृश्यमानां गतिं प्रथमतो निरूपयामि। तत्र भीष्मो द्रोणः सूतपुत्रः कर्णस्ते धर्म्ययुद्धकर्तारो भगवद्भक्ताश्च तथाविधैरेवास्मदीयैर्योधमुख्यैः शिखण्डिधृष्टद्युम्नादिभिः सहापुनर्भवप्रदं त्वां विशन्ति ॥ २६ ॥

**वक्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि॥**
**केचिद्विलग्ना दशनान्तरेषु संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥२७॥**

किं च वक्राणीति। वक्राणि मुखानि ते तव त्वरमाणास्त्वरायुक्ताः सन्तो विशन्ति किं विशिष्टानि दंष्ट्राकरालानि मुखानि भयानकानि भयंकराणि। किं च केचिन्मुखानि प्रविष्टानां मध्ये विलग्ना दशनान्तरेषु दन्तान्तरेषु मांसमिव भक्षितं संदृश्यन्त उपलभ्यन्ते चूर्णितैश्चूर्णीकृतैरुत्तमाङ्गैः शिरोभिः॥२७॥

आ० टी० । न केवलं दुर्योधनादीनामेव पराजयः किं तु भीष्मादीनामपीत्याह किं चेति । भगवद्रूपस्योग्रत्वे हेत्वन्तरमाह किं चेति । प्रविष्टानां मध्ये केचिदिति सबन्धः ॥ २७ ॥

प० टी० । तथामी कूटकारित्वेनाततायित्वेनात्रैव प्रसिद्धा धृतराष्ट्रस्य पुत्रा दुर्योधनदुःशासनादय एकोत्तरशतं तथाविधैरेवावनिपालानां सङ्घैः सह त्वरमाणा यातनार्थं वेगवत्तरास्तव वक्राणि विशन्ति । किंभूतानि वक्राणि दंष्ट्राकरालान्यत एव भयानकानि तत्र केचिद्दुष्कृतिनश्चूर्णीकृतैरुत्तमाङ्गैः शिरोभिर्दशनान्तरेषु दन्तसन्धिषु विलग्नाः संश्लिष्टा दृश्यन्ते ॥ २७ ॥

**यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ॥**
**तथा तवामी नरलोकवीरा विशन्ति वक्राण्यभितो ज्वलन्ति॥२८॥**

---

१ शङ्कायासीत्—पा० लि० पु० ।

कथं प्रविशन्ति मुखानीत्याह यथा नदीनामिति । यथा नदीनां स्रवन्तीनां बहवोऽनेकेऽम्बूनां वेगाऽम्बुवेगास्त्वराविशेषाः समुद्रमेवाभिमुखाः प्रतिमुखा द्रवन्ति प्रविशन्ति तथा तद्वत्तवामी भीष्मादयो नरलोकवीरा मनुष्यलोकपाला विशन्ति वक्त्राण्यभितो ज्वलन्ति प्रकाशमानानि ॥ २८ ॥

आ० टी । उभयोरपि सेनयोरवस्थितानां राज्ञां भगवन्मुखप्रवेशनं निदर्शनेन विशदयति कथमित्यादिना ॥ २८ ॥

प० टी० । अथोभयत्र दृष्टान्तमाह यथेति । यथा बहवो नानामार्गप्रवृत्ता नदीनामम्बुवेगाः प्रवाहाः समुद्रमेव द्रवन्ति प्रविशन्ति प्रविश्य च समुद्राकारा भवन्ति तथा तवाभिमुखा अनुकूला नरलोकवीरा उत्साहशालिनो भीष्मद्रोणादयस्त्वां विशन्ति । तथा ये त्वाभिविज्वलन्ति अभितो जाज्वल्यमानानि वक्त्राणि विशन्ति ॥ २८ ॥

**यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ॥**
**तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥२९॥**

ते किमर्थं प्रविशन्ति कथं चेत्याह यथेति । यथा प्रदीप्तं ज्वलनमग्निं पतङ्गाः पक्षिणो विशन्ति नाशाय विनाशाय समृद्धवेगास्तथैव समृद्ध उद्भूतो वेगो गतिर्येषां ते समृद्धवेगास्तथैव नाशाय विशन्तो लोकाः प्राणिनस्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥

आ० टी० । प्रवेशप्रयोजनं तत्प्रकारविशेषं चोदाहरणान्तरेण स्फोरयति ते किमर्थमित्यादिना ॥ २९ ॥

प० टी० । ते तथा बुद्धिपूर्वकं, समृद्धो वेगो येषां ते शलभा नाशाय मृत्यवे प्रदीप्तं ज्वलनं विशन्ति तथैव लोकास्तदनुवर्तिनोऽपि तव वक्त्राणि विशन्ति ॥ २९ ॥

**लेलिह्यसे ग्रसमानः समन्ताल्लोकान् समग्रान् वदनैर्ज्वलद्भिः ॥**
**तेजोभिरापूर्य जगत् समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ॥३०॥**

त्वं पुनः लेलिह्यस इति । लेलिह्यसे आस्वादयसि ग्रसमानोऽन्तः प्रवेशयन् समन्तात् समन्ततो लोकान् समग्रान् समस्तान् वदनैर्वक्त्रैर्ज्वलद्भिर्दीप्यमानैस्तेजोभिरापूर्य संव्याप्य जगत् समग्रं सहाग्रेण समस्तमित्येतत् । किं च भासो दीप्तयस्तवोग्राः क्रूराः प्रतपन्ति प्रतापं कुर्वन्ति हे विष्णो व्यापनशील ॥ ३० ॥

आ० टी० । योद्धुकामानां राज्ञां भगवन्मुखप्रवेशप्रकारं प्रदर्श्य तस्यां दशायां भगवतस्तद्भासां च प्रवृत्तिप्रकारं प्रत्याययति त्वं पुनरिति । भगवत्प्रवृत्तिमेव प्रत्याय्य तदीयभासां प्रवृत्तिं प्रकटयति किं चेति ॥ ३० ॥

प० टी० । लेलिह्यस इति । समग्रान् लोकान् समन्ततो वदनैर्ज्वलद्भिर्ग्रसमानो गिलन् सन् पुनरतृप्तो लेलिह्यसे सृक्किणीः स्पृशसि भो विष्णो व्यापनशील तव भासो दीप्तयस्तेजोभिः स्फुरणैः समस्तं जगद्व्याप्य तीव्राः सत्यः प्रतपन्ति तापयन्ति । अत्र ऋग्वेदश्रुतिरपि—" रक्षोहणं वाजिनमाजिघर्मि मित्रं प्रतिष्ठमुपयामि शर्म । शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा सरिषः पातु नक्तम् ॥ १ ॥ अयोदंष्ट्रो अर्चिषा यातुधानानुपस्पृश जातवेदः समिद्धः । अजिव्हया मुरदेवान् रभस्व क्रव्यादो इक्त्यपिधत्स्वासन् " ॥ २ ॥ भाष्यं—रक्षोहणामिति पञ्चविंशत्यृचं सूक्तं भरद्वाजऋषिः अनुक्रान्तं च रक्षोहणं पञ्चाधिषविंशतिः संहाराभिहरणे परित्वाग्नेरित्येषा जप्येति सर्वानुक्रमः । तत्र प्रथमा रक्षोहणमिति । रक्षसां हन्तारं वाजिनं बलवन्तं चाग्निमाजिघर्मि अग्निं वैश्वानराख्यं विश्वरूपमीश्वरम् आजिघर्मि घृतेन जुहोमि प्रदीप्तं तीक्ष्णीकृतमित्यर्थः । शरणमुपयामि । सोऽयमग्निः शिशानो ज्वालाभिस्तीक्ष्णीभूतः क्रतुभिः कर्मपरैः पुरुषैः प्रज्वालितः । किं च सोऽग्निर्नोऽस्मान् दिवा-अहर्निशोहिंसकाद्रक्षसः सकाशात्पातु रक्षतु । अथ द्वितीया हि जातवेदः वैश्वानरेश्वरत्वं समिद्धः सम्यग्दीप्तः अयोदंष्ट्रः लोहशलाकावत्तीक्ष्णदंष्ट्रः सन् यातुधानानर्चिषा ज्वालयोपस्पृश दहेत्यर्थः । किं च त्वं मूरदेवान् मूलदेवान् राक्षसान् जिव्हया ज्वालया रभस्व मारयस्वेत्यर्थः । मारयित्वा च क्रव्यादो मांसभक्षकान् वृङ्क्ति छित्वा आसन् आस्ये पिधत्स्व आच्छादय ॥ ३० ॥

**आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद ॥**
**विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्तिम् ॥ ३१ ॥**

यत एवमुग्रस्वभावोऽतः आख्याहीति । आख्याहि कथय मे मह्यं को भवानेवमुग्ररूपोऽतिक्रूराकारो नमोऽस्तु ते तुभ्यं हे देववर देवानां प्रधान प्रसीद प्रसादं कुरु विज्ञातुं विशेषेण ज्ञातुमिच्छामि भवन्तमाद्यमादौ भवमाद्यं न हि यस्मात् प्रजानामि तव त्वदीयां प्रवृत्तिं चेष्टाम् ॥ ३१ ॥

आ० टी० । भगवद्रूपस्यार्जुनेन दृष्टपूर्वत्वात्तस्य तस्मिन्न जिज्ञासेत्याशङ्क्याह यत इति । उपदेशं शुश्रूषमाणेनोपदेशकर्तुः प्रह्वीभवनं कर्तव्यमिति सूचयति नमोऽस्त्विति । क्रौर्यत्यागं समर्थयते प्रसादमिति । त्वमेव मां जानीषे किमर्थमित्थमिदानीमर्थयसे मदीयां चेष्टां दृष्ट्वा तथैव प्रतिपद्यस्वेत्याशङ्क्याह न हीति ॥ ३१ ॥

प० टी० । अथ भविष्यदर्थदर्शनादाश्चर्यवान् पुनः पृच्छति आख्याहीति । उग्ररूपो भवान् क इति मे आख्याहि कथयस्व ते तुभ्यं नमोऽस्तु हे देववर प्रसन्नो भव भवन्तमाद्यं पुरुषविशेषेण ज्ञातुमिच्छामि । यतो दृष्टेऽपि रूपे तव प्रवृत्तिं किमर्थं प्रवृत्तोऽसीति तव चेष्टां न जानामि ॥ ३१ ॥

## श्रीभगवानुवाच ।

**कालोऽस्मि लोकक्षयकृत् प्रवृद्धो लोकान् समाहर्तुमिह प्रवृत्तः ॥**
**ऋतेऽपि त्वां न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ३२**

कालोऽस्मीति । कालोऽस्मि लोकक्षयकृत् लोकानां क्षयं करोतीति लोकक्षयकृत् प्रवृद्धो वृद्धिं गतो यदर्थं प्रवृद्धस्तच्छृणु लोकान् समाहर्तुं संह-

र्तुम् इहास्मिन् काले प्रवृत्त ऋतेऽपि विनापि त्वा त्वां न भविष्यन्ति भीष्मद्रोणकर्णप्रभृतयः सर्वे येभ्यस्तवाशङ्का येऽवस्थिताः प्रत्यनीकेष्वनीकमनीकं प्रति प्रत्यनीकेषु प्रतिपक्षभूतेष्वनीकेषु योधा एव योद्धारः ॥ ३२ ॥

आ० टी० । यदर्था च स्वप्रवृत्तिः तत् सर्वं भगवानुक्तवानित्याह **भगवानिति** । कालः क्रियाशक्त्युपहितः परमेश्वरः, अस्मिन्निति वर्तमानयुद्धोपलक्षितत्वं कालस्य विवक्षितम् । लोकसंहारार्थं त्वत्प्रवृत्तावपि नासावर्थवती प्रतिपक्षाणां भीष्मादीनां मत्प्रवृत्तिं विनापि संहर्तुमशक्यत्वादित्याशङ्क्याह **ऋतेऽपीति** ॥ ३२ ॥

प० टी० । एवं प्रार्थितः सन् भगवानाह **काल इति** । प्रकर्षेण वृद्धो वृद्धिं प्राप्तो लोकक्षयकृज्जगद्भक्षकः कालः सन् लोकान् समाहर्तुमेव प्रवृत्तोऽस्मि । तदेवाह ये प्रत्यनीकेषु अनीकान्यनीकानि प्रति प्रत्यनीकं भूयस्सेनासु येऽवस्थिताः संमुखीभूता योधाः सुभटास्ते सर्वे न भविष्यन्ति न जीविष्यन्ति तर्हि मम गतिः केत्याह **त्वा इति** । त्वामृते त्वां विना न मे भक्तः प्रणश्यतीत्युक्तत्वात् ॥ ३२ ॥

**तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम्॥**
**मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥**

यस्मादेवं तस्मात्त्वमिति । तस्मात्त्वमुत्तिष्ठ भीष्मद्रोणप्रभृतयोऽतिरथा अजेया देवैरप्यर्जुनेन जिता इति यशो लभस्व केवलं पुण्यैर्हि तत् प्राप्यते जित्वा शत्रून् दुर्योधनप्रभृतीन् भुङ्क्ष्व राज्यं समृद्धमसपत्नमकण्टकं मयैवैते निहता निश्चयेन हताः प्राणैर्वियोजिताः पूर्वमेव निमित्तमात्रं भव त्वं हे सव्यसाचिन् सव्येन वामेनापि हस्तेन शराणां क्षेपात् सव्यसाचीत्युच्यतेऽर्जुनः ॥ ३३ ॥

आ० टी० । तवौदासीन्येऽपि प्रतिकूलानीकस्था मत्प्रातिकूल्यादेव भविष्यन्तीत्येवं यस्मान्निश्चितं तस्मात्त्वदौदासीन्यमकिंचित्करमित्याह **यस्मादिति** । उत्तिष्ठ युद्धायोन्मुखो भवेत्यर्थः । यशोलाभमभिनयति **भीष्मेति** । किं तेनापुमर्थेनेत्याशङ्क्याह **पुण्यैरिति** । राज्यभोगेऽपेक्षिते किमनपेक्षितेनेत्याशङ्क्याह **जित्वेति** । भीष्मादिष्वतिरथेषु कुतो जयाशङ्का इत्याशङ्क्याह **मयैवैत इति** । तर्हि मृतमारणार्थं न मे प्रवृत्तिस्तत्राह **निमित्तेति** । सव्यसाचिपदं विभजते **वामेनेति** ॥ ३३ ॥

प० टी० । अत एवाह **तस्मादिति** । तस्मात्कारणात् त्वं युद्धायोत्तिष्ठ । तत्फलं देवैरपि दुर्जेया भीष्मद्रोणादयो ऽर्जुनेन निर्जिता इति यशो लभस्व । ततः शत्रून् जित्वा समृद्धं देशबलकोशदुर्गाद्युपेतं राज्यं भुङ्क्ष्व । अथ शत्रुजये एवमेवोद्दिश्य बृहत्सामापि परमेश्वरं स्तौतीत्याशयो नृहरेः तथा हि औ हो इत्वामिद्धिहवामहाएसातौवाजास्थाकारावाःतुवाऔहोवावृत्रायिषुवाइन्द्राःसप्ततिं नाात्वां काष्ठाऔहोवासूअर्वाताउहुवाहाउअसाअत्र तु औहोईति च संबुद्धौ विकल्पे हाउगद्यत इति ऊहग्रन्थोक्तेः । तथा अदीर्घे दीर्घवत्कुर्यादिति सामशिक्षासु गानक्रमो दर्शितः । अथ संहितापाठस्तु । त्वामिद्धि हवामहे सातौ वाजस्य कारवः । त्वां वृत्रेष्विन्द्रसत्पतिं नरस्त्वां काष्ठास्वर्वत इति । भाष्यंभो इन्द्र परमात्मन् वयं नरो मनुष्याः कारवस्तोतारोवाजस्य बलस्य सातौ लाभे काङ्क्षमाणे त्वामिच्छामेव हवामहे आहूयाम आकारयाम इत्यर्थः । तथा वृत्रेष्वावरकेषु उपस्थितेषु सत्सु त्वा-

मेवाव्हयामः। तथा अर्वतः संग्रामस्य काष्ठासु मर्यादासु व्यूहरचनया धर्म्ययुद्धेषु त्वामेव सत्पतिं भक्तपक्षपातिनं प्रभुमाव्हयामो नान्यमित्यर्थः। आपस्तम्बशाखायां च—"इन्द्रेण देवेन पृतना जयामि त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्ना वषट्कारेण सहजानिति। भाष्यम्—इन्द्रेण परमात्मना देवेन कृत्वा पृतनाः शत्रुसेना जयामि। तत्रानुष्ठानमाह बृहता साम्ना तदुपासनया। किं भूतेन त्रैष्टुभेन चतुश्चत्वारिंशदक्षरेण छन्दसा तथा पञ्चदशस्तोमेन। ब्राह्मणं च पञ्चभ्यो हि करोति स तिसृभिः स एकयेति। अयमर्थः। एकं सूक्तं त्रिरावर्तनीयं तत्र प्रथमावृत्तौ प्रथमाद्याऋचस्त्रिरभ्यासः द्वितीयावृत्तौ मध्यमायास्त्रितीयावृतादुत्तमायाः सोयं पञ्चदशस्तोमस्तेन एवमनयोपासनया वषट्कारो वज्रीभूय शत्रून् हिनस्ति। प्रकृते तु शत्रवः सहजास्तानित्यर्थः। सायनभाष्यकारैराधिदैविकाभिप्रायेण बाह्यसंग्रामविषयो दर्शितः। रावणभाष्ये तु अध्यात्मरीत्याभ्यन्तरसंग्रामविषयो दर्शितः। वोटभाष्ये तूभयमपि। अत्रार्थे ऋक्शाखायाः श्रुतिरपि—"संसृष्टं धनमुभयं समाकृतमस्मभ्यं दत्तां वरुणश्च मन्युः। भियं दधाना हृदयेषु शत्रवः पराजिता सो अपनिलयन्ताम्"। भाष्यम्—अस्मभ्यमस्मदर्थं परमेश्वरेण समाकृतं यथायोग्यमुभयं धनं संसृष्टं सम्यक्प्रकारेणानिर्मितमध्यात्मिकमधिदैवतं च। तयोर्दातारौ द्वौ। अध्यात्मिकस्य दाता वरुणः प्रकाशकः परमात्मा। अन्यस्य मन्युरिन्द्रो बृहस्पतिरिति श्रुतेरिन्द्र ऐश्वर्यवान् देवतासु इन्द्रः। अथोभयधनस्य फलमाह, भियमिति। येन धनेन हृदयेषु प्राणिनामन्तःकरणेषु शत्रवः षट् सपत्ना भियं दधानाः सन्तः स्वत एव युद्धं विनापि अपनिलयस्तां नाशं प्राप्नुवन्तीत्यध्यात्मपक्षे। अपरत्र तु हृदयेषु स्वान्तःकरणेषु भियं दधानाः सन्तः स्वत एव युद्धं विनापि अपनिलयन्तां नाशमायान्त्विवति। अथ प्रकृतमनुसरामः एवं शत्रुपराजये तव प्रयासो नास्ति। कुतः एते पूर्वं मयैव निहताः सन्तीति त्वयैव दृष्टम्। अतः परं भो सव्यसाचिन्नर्जुन त्वं निमित्तमात्रं भव। अत्रैतदुक्तं भवति। पूर्वमहं रुद्रं निमित्तमात्रं कृत्वा स्वनिर्मिते धनुषि कल्पान्तकालानलसमः स्वयंबाणो भूत्वा दुर्जयमपि त्रिपुरमधाक्षम्। संप्रति त्वां निमित्तमात्रं कृत्वा यतो जगत्सृष्टिप्रलयसमर्थसंकल्पानामस्माकं कुरुकुलदलने कियानायासोस्तीत्यर्थः। श्रुतिरपि—" अहं रुद्राय धनुरातनोमि ब्रह्मद्विषेशरवेहंतवाउ "—भाष्यम् अहं रुद्राय महादेवार्थं मेरुतुल्यमलौकिकं धनुरातनोमि विस्तारयामि किमुद्दिश्य। ब्रह्मद्विषे ब्रह्मद्वेष्टारं शत्रुं त्रिपुरं दैत्यं हन्तवे हन्तुं नाशयितुम्। तदुक्तम् 'रथःक्षोणी यन्ता' इत्यादि ॥ ३३ ॥

**द्रोणं च भीष्मं च जयद्रथं च कर्णं तथान्यानपि योधवीरान्॥**
**मयाहतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेतासि रणे सपत्नान्॥३४**

द्रोणं चेति। द्रोणं च येषु येषु योधेष्वर्जुनस्याशङ्कासीत् तांस्तान् सर्वान् व्यपदिशति भगवान् मया हतानिति, तत्र द्रोणभीष्मयोस्तावत् प्रसिद्धमाशङ्काकारणं द्रोणो धनुर्वेदाचार्यो दिव्यास्त्रसंपन्नः आत्मनश्च विशेषतो गुरुर्गरिष्ठो भीष्मः स्वच्छन्दमृत्युर्दिव्यास्त्रसंपन्नश्च परशुरामेण द्वन्द्वयुद्धमगमन्न च पराजितः तथा जयद्रथोऽपि यस्य पिता तपश्चरति मम पुत्रस्य शिरो भूमौ पातयिष्यति यस्तस्यापि शिरः पतिष्यतीति कर्णोऽपि वासवदत्तया शक्त्या त्वमोघया संपन्नः सूर्यपुत्रः कानीनो यतोऽतस्तन्नाम्नैव निर्देशः मया हतांस्त्वं जहि

**निमित्तमात्रेण मा व्यथिष्ठास्तेभ्यो भयं मा कार्षीर्युध्यस्व जेतासि दुर्योधनप्रभृतीन् रणे युद्धे सपत्नान् शत्रून् ॥ ३४ ॥**

**आ० टी०** । मयैवेत्यादिनोक्तं प्रपञ्चयति **द्रोणं चेति** । किमिति कतिचिदेवात्र द्रोणादयो गण्यन्ते तत्राह **येष्विति** । द्रोणादिषु कुतः शङ्केत्याशङ्क्य द्वयोः शङ्कानिमित्तत्वमाह **तत्रेत्यादिना**। जयद्रथेऽपि शङ्कानिमित्तत्वमाह **तथेति** । दिव्यास्त्रसंपन्न इति संबन्धः । तत्र शङ्कायां कारणान्तरमाह **यस्येति** । कर्णेऽपि तत्कारणत्वं कथयति **कर्णोऽपीति** । पूर्ववदेव संबन्धः । हेत्वन्तरमाह **वासवेति** । सा खल्वमोघा पुरुषमेकमत्यन्तसमर्थं घातयित्वैव निवर्तते । जन्मनापि तस्य शङ्कनीयत्वमाह **सूर्येति** । कुन्ती हि कन्यावस्थायां मन्त्रप्रभावं ज्ञातुमादित्यमाजुहाव ततस्तस्यामेवावस्थायामयमुद्बभूव तदाह **कानीन इति** । एतदेवाभिप्रेत्य कर्णग्रहणमित्याह **यत इति**। उक्तेष्वन्येषु च न त्वया शङ्कितव्यमित्याह **मयेति** ॥ ३४ ॥

**प० टी०** । **द्रोणं चेति** । द्रोणं भीष्मं जयद्रथं कर्णं च तथान्यानपि योधेषु वीरान् मया संहारकालरूपेण हतानपहृतशक्तीन् जहि मारय परं तु मा व्यथिष्ठा मा भैषीः । निर्भयः सन्युध्यस्व । रणे संग्रामे सपत्नान् शत्रून् जेसि जेतासि जेष्यसि ॥ ३४ ॥

## सञ्जय उवाच ।

**एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी ॥**
**नमस्कृत्य भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥३५॥**

एतच्छ्रुत्वेति । एतत् श्रुत्वा वचनं केशवस्य पूर्वोक्तं कृताञ्जलिः सन् वेपमानः कम्पमानः किरीटी नमस्कृत्य भूयः पुनरेवाहोक्तवान् कृष्णं सगद्गदं सह गद्गदया वाचा मन्दशब्देन भयाविष्टस्य दुःखाभिघातात् स्नेहाविष्टस्य च हर्षोद्भवाद् अश्रुपूर्णनेत्रत्वे सति श्लेष्मणा कण्ठावरोधः ततश्च वाचोऽपाटवं मन्दशब्दत्वं यत् स गद्गदस्तेन सह वर्तत इति सगद्गदं वचनमाहेति वचनक्रियाविशेषणमेतत्, भीतभीतः पुनर्भयाविष्टचेताः सन् प्रणम्य प्रह्वीभूत्वाहेति व्यवहितेन संबन्धः, अत्रावसरे संजयवचनं साभिप्रायं कथं द्रोणादिष्वर्जुनेन निहतेष्वजेयेषु चतुर्षु निराश्रयो दुर्योधनो निहत एवेति मत्वा धृतराष्ट्रो जयं प्रति निराशः सन् संधिं करिष्यतीति ततः शान्तिरुभयेषां भविष्यतीति तदपि नाश्रौषीत् धृतराष्ट्रो भवितव्यवशात् ॥ ३५ ॥

**आ० टी०** । पराजयाभावात् करिष्यति सन्धिमिति बुध्या सञ्जयो राज्ञे वृत्तान्तमुक्तवानित्याह **सञ्जय इति** । पूर्वोक्तवचनं कालोऽस्मीत्यादि विश्वरूपदर्शनदशायामर्जुनस्य भगवता संवादवचनं किमिति सञ्जयो राज्ञे व्यजिज्ञापयदित्याशङ्क्य तदुक्तेस्तात्पर्यमाह **तत्रेति** । तमेवाभिप्रायं प्रश्नद्वारा विशदयति **कथमित्यादिना** । तर्हि सञ्जयवचनं श्रुत्वा किमिति राजा सन्धिं न कारयामासेति तत्राह **तदपीति** ॥ ३५ ॥

प० टी० । अथ धृतराष्ट्रं प्रति सञ्जय उवाच । एतदिति । किरीटी अर्जुन एतत्केशवस्य वचनं श्रुत्वा वेपमानः कम्पमानः सन् कृताञ्जलिर्भूत्वा सगद्गदं कम्पितस्वरं यथा भवति तथा भीतभीतः सन् प्रणम्य दण्डवत्पतित्वा भूयः पूर्वोपन्यस्तं भक्ताभक्तकोटिद्वयगतिं कृष्णं प्रत्याह॥ ३५ ॥

## अर्जुन उवाच ।

**स्थाने हृषीकेश तव प्रकीर्त्या जगत् प्रहृष्यत्यनुरज्यते च ॥**
**रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः॥३६॥**

स्थान इति । स्थाने युक्तं किं, तव प्रकीर्त्या त्वन्माहात्म्यकीर्तनेन श्रुतेन हृषीकेश यज्जगत् प्रहृष्यति प्रहर्षमुपैति तत् स्थाने युक्तमित्यर्थः। अथवा विषयविशेषणं स्थान इति, युक्तो हर्षादिविषयो भगवान् यत ईश्वरः सर्वात्मा सर्वभूतसुहृच्चेति तथानुरज्यतेऽनुरागं चोपैति तच्च विषय इति व्याख्येयं, किं च रक्षांसि भीतानि भयाविष्टानि दिशो द्रवन्ति गच्छन्ति तच्च स्थाने विषये सर्वे नमस्यन्ति नमस्कुर्वन्ति च सिद्धसङ्घाः सिद्धानां समुदायाः कपिलादिनां तच्च स्थाने ॥ ३६ ॥

आ० टी० । किं तदर्जुनो भगवन्तं प्रति सगद्गदं वचनमुक्तवानिति तदाह अर्जुन इति । विषयविशेषणत्वमेव व्यनक्ति युक्त इति । भगवतो हर्षादिविषयत्वं युक्तमित्यत्र हेतुमाह यत इति । तव प्रकीर्त्या हर्षवदनुरागं च गच्छति जगदित्याह तथेति । तच्चेत्यनुरागगमनम् । रक्षःसु जगदेकदेशभूतेषु प्रतिपक्षेषु कुतो जगतो भगवति हर्षानुरागावित्याशङ्क्याह किं चेति । इतश्च जगतो भगवति हर्षादि युक्तमित्याह सर्व इति ॥ ३६ ॥

प० टी० । स्थान इति । तवाद्भुतसामर्थ्यं भक्तवात्सल्यरूपया कीर्त्या त्वदनुपथं जगत्प्रहृष्यति संतुष्टं भवति त्वद्विश्वासिनानुरज्यतेऽनुरागं प्राप्नोतीति स्थाने युक्तमेव । एतदुभयमवलोक्य सर्वे सिद्धसङ्घाः कपिलादयस्त्वां नमस्यन्तीति स्थाने युक्तमेव ॥ ३६ ॥

**कस्माच्च ते न नमेरन्महात्मन् गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ॥**
**अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥**

भगवतो हर्षादिविषयत्वे हेतुं दर्शयति कस्माच्चेति । कस्माच्च हेतोस्ते तुभ्यं न नमेरन् न नमस्कुर्युर्हे महात्मन् गरीयसे गुरुतराय यतो ब्रह्मणो हिरण्यगर्भस्याप्यादिकर्ता कारणमतस्तस्माद् आदिकर्त्रे कथमेव ते[1] न नमस्कुर्युरतो हर्षादीनां नमस्कारस्य च स्थानं त्वमर्हो विषय इत्यर्थः। हे अनन्त देवेश हे जगन्निवास त्वमक्षरं तत्परं यद्वेदान्तेषु श्रूयते किं तत् सदसत् यद् विद्यमानं

---

1 कथमेते—पा० लि०

तत् सदसच्च यन्नास्तीति बुद्धिस्ते उपधानभूते सदसती यस्याक्षरस्य यद्द्वारेण सदसदित्युपचर्यते परमार्थतस्तु सदसतः परं तद् यदक्षरं वेदविदो वदन्ति तत्त्वमेव नान्यदित्यभिप्रायः ॥ ३७ ॥

आ० टी० । उक्तेऽर्थे हेत्वर्थत्वेनोत्तरश्लोकमवतारयति **भगवत इति**। महात्मत्वमक्षुद्रचेतस्त्वम् । गुरुतरत्वान्नमस्कारादियोग्यत्वमाह **गुरुतरायेति**। तत्रैव हेत्वन्तरमाह **यत इति**। महात्मत्वादिहेतूनामुक्तानां फलमाह **अत इति**। तत्रैव हेत्वन्तराणि सूचयति हे **अनन्तेति** । अनवच्छिन्नत्वं सर्वदेवनियन्तृत्वं सर्वजगदाश्रयत्वं च तव नमस्कारादियोग्यत्वे कारणमित्यर्थः । तत्रैव हेत्वन्तरमाह **त्वमिति**। तत्र मानमाह **यदिति** । कथमेकस्यैव सदसद्रूपत्वं तत्राह **ते इति** । कथं सतोऽसतश्चाक्षरं प्रत्युपाधित्वं तदाह **यद्द्वारेणेति** । तत् परं यदित्येतद्व्याचष्टे **परमार्थतस्त्विति** । अनन्तत्वादिना भगवतो नमस्कारादियोग्यत्वमुक्तम् ॥ ३७ ॥

प० टी० । तत्र हेतुमाह । **कस्मादिति** । भो महात्मन् महाशब्दव्यपदेश्य भोऽनन्त देवेश जगन्निवास ते सिद्धाः कपिलादयस्ते तुभ्यं वा कस्माद्धेतोर्न नमेरन् नमस्कारं न कुर्युः । किंभूताय तुभ्यम् । ब्रह्मणो जगत्स्रष्टुरपि गरीयसे श्रेष्ठतमाय । आदिकर्त्रे च । किं पुनरन्यस्य । यद्यस्मात् कारणात् त्वमक्षरं ब्रह्म सद् व्यक्तम् असदव्यक्तम् ताभ्यां परं मूलकारणम् ॥३७॥

**त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् ॥**
**वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप ॥ ३८ ॥**

पुनरपि स्तौति त्वमिति । त्वमादिदेवो जगतः स्रष्टृत्वात्, पुरुषः पुरि शयनात् पुराणश्चिरन्तनस्त्वमेवास्य विश्वस्य परं प्रकृष्टं निधानं निधीयतेऽस्मिन् जगत् सर्वं महाप्रलयादाविति । किं च वेत्तासि वेदितासि सर्वस्यैव वेद्यजातस्य यच्च वेद्यं वेदनार्हं तच्चासि परं च धाम परमं पदं वैष्णवं व्याप्तं विश्वं समस्तं हेऽनन्तरूपान्तो न विद्यते तव रूपाणाम् ॥ ३८ ॥

आ० टी० । संप्रति जगत्स्रष्टृत्वादिनापि तद्योग्यत्वमस्तीति स्तुतिद्वारा दर्शयति **पुनरपीति**। जगतो द्रष्टा पुरुषो हिरण्यगर्भ इति पक्षं प्रत्याह **पुराण इति** । स्रष्टृत्वं निमित्तमेवेति तटस्थेश्वरवादिनस्तान् प्रत्युक्तं **त्वमेवेति** । महाप्रलयादावित्यादिपदमवान्तरप्रलयार्थम् । ईश्वरस्योभयथा कारणत्वं सर्वज्ञत्वेन साधयति **किं चेति** । वेद्यवेदितृभावेनाद्वैतानुपपत्तिमाशङ्क्याह **यच्चेति** । मुक्त्यालम्बनस्य ब्रह्मणोऽर्थान्तरत्वमाशङ्क्योक्तं **परं चेति** । यत् परमं पदं तदपि च त्वमेवेति संबन्धः । तस्य पूर्णत्वमाह **त्वयेति** । व्याप्यव्यापकत्वेन भेदं शङ्कित्वा कल्पितत्वात्तस्य मैवमित्याह **अनन्तेति** ॥३८॥

प० टी० । तदेवाह **त्वमिति** । आदिभूतो देवः स्थूलसूक्ष्मप्रपञ्चकारणीभूतः सूत्रात्मा त्वमेव स एव पुराणः पुरुषो हिरण्यगर्भस्त्वमेव । ततो विश्वस्य चराचरस्य निधानं लयस्थानं विराडाख्यं त्वमेव । ततो जीवरूपेण वेत्ता त्वमेवासि भोऽनन्तरूप समष्टिरूप परं धाम निवासस्थानं ब्रह्माण्डं त्वया ततं विस्तारितं तदपि त्वमेव एवमेक एव त्वं निरूपितप्रकारैर्वर्तसे इत्यर्थः । श्रुतिरपि—"यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा । यो देवानां नामधा एक एव तं सं-

प्रभु भुवना यन्त्यन्ये इति । भाष्यम्—यो नोऽस्माकं पिता बीजरूपः सूत्रसंज्ञो जनिता निर्मापकः सूक्ष्मभूतरूपो हिरण्यगर्भस्ततः स्थूलभूतैर्विदधातीति विधाता विराट् ततो विश्वा विश्वानि सर्वाणि धामानि शरीराणि भुवनानि भूर्भुवःस्वरादीनि जीवरूपेण यो वेदैवं यो देवानामुक्तस्वरूपाणां नामधा सूत्रादिनामप्रकारैरनेकोऽप्येक एव । तमेवंविधं भुवना भुवनानि चराचरादीनि प्रश्नयन्ति कीदृशः परमेश्वर इति प्रश्नं कुर्वन्तीत्यर्थः । अथोक्तार्थवैलोम्येन श्रुतिरेव प्रश्नोत्तरं वदति "एकपाद्भूयो द्विपदो विचक्रमे द्विपात्रिपादमभ्येति पश्चात् । चतुष्पादेति द्विपदामभिस्वरे संपश्यन् पङ्क्तीरुपतिष्ठमानः" इति । भाष्यम्—जीवो ब्रह्मैकपादमित्युक्तत्वादेकपाज्जीवो भूयोऽभ्यासादिना द्विपदो विराड्रूपं प्रचक्रमे प्राप्नोति । पश्चादनन्तरं द्विपादाद्वैराजं ब्रह्म मे पादं हिरण्यगर्भाख्यम् । 'त्रिपादूर्ध्वउदैद्' इति श्रुतेः । तदपि चतुष्पात्पूर्णं ब्रह्मेति । एवं द्विपदां मनुष्याणामभिस्वरे हृदयाकाशे एकपादादिपङ्क्तीः संपश्यन् साक्षित्वेन पश्यन्नुपतिष्ठमानोऽस्ति स एव परमेश्वर इत्यर्थः ॥३८॥

**वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च ॥**
**नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ३९**

किं च वायुरिति । वायुस्त्वं यमश्चाग्निर्वरुणोऽपां पतिः शशाङ्कश्चन्द्रमाः प्रजापतिस्त्वं कश्यपादिः प्रपितामहश्च पितामहस्यापि पिता प्रपितामहो ब्रह्मणोऽपि पितेत्यर्थः । नमो नमस्ते तुभ्यमस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते बहुशो नमस्कारक्रियाभ्यासावृत्तिगणनं कृत्वसुचोच्यते । पुनश्च भूयोऽपीति श्रद्धाभक्त्यतिशयादपरितोषमात्मनो दर्शयति ॥ ३९ ॥

आ० टी० । तस्य सर्वात्मत्वे हेत्वन्तरमाह **किं चेति** । कश्यपादिशब्देन विराड्दक्षादयो गृह्यन्ते । पितामहो ब्रह्मा तस्य पिता सूत्रात्मान्तर्यामी चेत्याह **ब्रह्मणोऽपीति** । सर्वदेवतास्त्वमेवेत्युक्तं फलितमाह **नम इति** । सहस्रकृत्व इति कृत्वसुचो विवक्षितमर्थमाह **बहुश इति** । पुनरुक्तितात्पर्यमाह **पुनश्चेति** । श्रद्धाभक्त्योरतिशयात् कृतेऽपि नमस्कारे परितोषाभावो बुद्धेरात्मनोऽलंप्रत्ययराहित्यं तद्दर्शनार्थं पुनरुक्तिरित्यर्थः ॥ ३९ ॥

पु० टी० । अथानन्तरूपत्वमेव प्रकटयति **वायुरिति** । वाय्वादिभिः सप्तभिः प्रकारैस्त्वमेवासि तस्मै ते तुभ्यं नमो नमोस्तु, आदरे वीप्सा । अथ किं पुनः सप्तरूपात्मने सहस्रकृत्वः सहस्रप्रकारात्मने भूयोऽपि नमो नमः ॥ ३९ ॥

**नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व ॥**
**अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥४०॥**

तथा नमः पुरस्तादिति । नमः पुरस्तात् पूर्वस्यां दिशि तुभ्यमथ पृष्ठतोऽपि च नमोऽस्तु ते सर्वत एव सर्वासु दिक्षु सर्वत्र स्थिताय हे सर्वानन्तवीर्यामितविक्रमः अनन्तं वीर्यमस्यामितो विक्रमो यस्य वीर्यं सामर्थ्यं विक्रमः पराक्रमः वीर्यवानपि कश्चित् शस्त्रादिविषये न पराक्रमते मन्दपरा-

१ शयापरितोष—पा० लि० ।

क्रमो वा त्वं त्वनन्तवीर्योऽमितविक्रमश्चेत्यनन्तवीर्यामितविक्रमः सर्वं समस्तं जगत् समाप्नोषि सम्यगेकेनात्मना व्याप्नोष्यतस्तस्मादसि भवसि सर्वस्त्वया विना भूतं न किंचिदस्तीत्यर्थः ॥ ४० ॥

आ० टी० । विधान्तरेण भगवन्तं स्तुत्या नमस्कुर्वन्नभिमुखीकरोति **तथेति** । यस्यां दिशि सवितोदेति सा पूर्वा दिगुच्यते तस्यां व्यवस्थितं सर्वं त्वमेव तस्मै ते तुभ्यं नमोऽस्त्वित्याह **नम इति** । अथशब्दः समुच्चये । पश्चादपि स्थितं सर्वं त्वमेव तस्मै ते तुभ्यं नमोऽस्त्वित्याह **अथेति** । किं बहुना यावन्तो दिशस्तत्र सर्वत्र यद्वर्तते तदशेषं त्वमेव तस्मै तुभ्यं प्रह्वीभावः स्यादित्याह **नमोऽस्त्विति** । फलितं सर्वात्मत्वं सूचयति **हे सर्वेति** । वीर्यविक्रमयोर्न पौनरुक्त्यमित्याह **वीर्यमित्यादिना** । वीर्यवतो विक्रमाव्यभिचारादर्थपौनरुक्त्यमाशङ्क्याह **वीर्यवानिति** । भगवति लोकतो विशेषमाह **त्वं त्विति** । उक्तं सर्वात्मत्वं प्रपञ्चयति **सर्वमिति** । सप्रपञ्चत्वं वारयति **त्वयेति** ॥ ४० ॥

प० टी० । अथापरिच्छिन्नायापि तुभ्यं नमस्कार इति रथन्तरसामाभिप्रायेण नमस्करोति **नम इति** । भो सर्वात्मक पुरस्तादग्रतः पृष्ठतश्च ते तुभ्यं नमः किं पुनः दिग्द्वयसंस्थिताय सर्वतः सर्वदिक्षु स्थिताय नमोऽस्तु । अथ न केवलं दृश्यमात्रत्वेन स्थितोऽसीत्याह भो स्वामिन्ननन्तवीर्यः सन्नमितविक्रमबलौज सा समेतः । श्रुतिश्च—"विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि" इति । भाष्यम्—नुकमिति निपातोऽवधारणार्थः तस्य विष्णोर्वीर्याणि प्रवोचं ब्रवीमि यः पृथिव्यन्तरिक्षसंबन्धीनि रजांसि लोकान् विममे निर्मितवान् एवं त्वं सर्वं समाप्नोषि अन्तर्बहिर्व्याप्नोषि ततस्तेन कारणेन सर्वोऽसि सर्वात्मकोऽसि । "तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः" इति श्रुतेः । तथा रथन्तरं सामापि "अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः" इति संहितापाठः । सामगानं च "अभित्वा शूरनो नुमो वाआदुग्धा इव धेनवः । ईशानमस्यजगतः सुवाद्दशाम् आईशानमायिद्रातास्थुषावहाउअस्' । भाष्यम्—भो इन्द्र परमात्मन् शूर शत्रुनिबर्हण वयं त्वामभि अभितः समन्ततो नुमः नमस्कुर्मः । कथं भूतं त्वाम् अस्य जगतो जंगमस्य तस्थुषः स्थावरस्यापीशानं नियामकम् । क इव वयम्, अदुग्धा अकृतदोहना धेनव इवाक्षीरेण पूर्णाः सत्यः वत्सानि विस्मृत्य त्वां यान्ति तथा वयमपि सर्वं विषयजातं विस्मृत्य त्वामेव सर्वगतं नमस्कुर्मः । स्वर्दृशं जगत्प्रकाशकमीशानमपि पादस्यावृत्तिरादरार्था । तथापस्तंबोऽपि "अग्निना देवेन पृतना जयामि गायत्रेण च्छन्दसा त्रिवृता स्तोमेन रथन्तरेण साम्ना वषट्कारेण वज्रेण पूर्वजान् भ्रातृव्यानधरान्पातयामि" इति । भाष्यम्—अग्निना विश्वरूपेण देवेन दीप्यमानेन कृत्वा पृतनाः शत्रुसेना जयामि गायत्रेण चतुर्विंशत्यक्षरेण त्रिवृता स्तोमेन ब्राह्मणातिसृभ्यो हिंकरोति स प्रथमया' इत्यादि । अयमर्थः । सूक्तत्रयगतानामृचां गानं त्रिभिः पर्यायैः कृतं तत्र प्रथमे पर्याये त्रिषु सूक्तेष्वाद्यास्तिस्र ऋचः, द्वितीये मध्यमतिसृभ्य इति तृतीयार्थे पञ्चमी हिंकरोति गायति शेषं स्पष्टम् ॥ ४० ॥

**सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति ॥**
**अजानता महिमानं तवेदं मया प्रमादात् प्रणयेन वापि ॥ ४१ ॥**

यतोऽहं त्वन्माहात्म्यापरिज्ञानादपराधाद्धेतोः सखेति[1] सखा समानवया इति मत्वा ज्ञात्वा विपरीतबुद्ध्या प्रसभमभिभूय प्रसह्य यदुक्तं हे कृष्ण हे

१ अपराद्धोऽतः सखेति—पा० लि० ।

यादव हे सखेति चाजानताज्ञानिना मूढेन किमजानतेत्याह महिमानं माहात्म्यं तवेदमीश्वरस्य विश्वरूपं तवेदं महिमानमजानतेति वैयधिकरण्येन संबन्धस्तवेदमिति पाठो यद्यस्ति तदा सामानाधिकरण्यमेव मया प्रमादाद् विक्षिप्तचित्ततया प्रणयेन वापि प्रणयो नाम स्नेहस्तन्निमित्तो विश्रम्भस्तेनापि कारणेन यदुक्तवानस्मि ॥ ४१ ॥

आ० टी० । अज्ञाननिमित्तमपराधं क्षमापयति यत इति । इदंशब्दार्थमाह विश्वरूपमिति । न हीदमित्यस्य महिमानमित्यस्य च सामानाधिकरण्यं लिङ्गव्यत्ययादित्याह तवेति । पाठान्तरसंभावनायां सामानाधिकरण्योपपत्तिमाह तवेत्यादिना । यदुक्तवानस्मि तदहं क्षामये त्वामिति संबन्धः ॥ ४१ ॥

प० टी० । इदानीं स्वापराधं क्षमापयन्नाह सखेति द्वाभ्याम् । त्वां प्राकृतः सखेति मया प्रसभं तिरस्कारेण यदुक्तं तत्कथम्, हे कृष्ण हे यादव हे सखे इत्येकवचनेन सखेति शिलोपे जाते सन्धिश्छान्दसः । किंभूतेन मया इदमनुभूयमानं तव महिमानमजानता अथ तिरस्कारप्रकारानाह प्रमादात्प्रश्रयेणानवधानेन वा प्रणयेन प्रीत्या वा ॥ ४१ ॥

**यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु ॥**
**एकोऽथवाप्यच्युत तत्समक्षं तत् क्षामये त्वामहमप्रमेयम् ॥४२॥**

यच्चेति । यच्चावहासार्थं परिहासप्रयोजनायासत्कृतः परिभूतोऽसि भवसि, क विहारशय्यासनभोजनेषु विहरणं विहारः पादव्यायामः शयनं शय्यासनमास्थायिका भोजनमदनमित्येतेषु विहारशय्यासनभोजनेष्वेकः परोक्षः सन् असत्कृतोऽसि परिभूतोऽस्यथवा हे ऽच्युत तत्समक्षं तच्छब्दः क्रियाविशेषणार्थः प्रत्यक्षं वासत्कृतोऽसि तत्सर्वमपराधजातं क्षामये क्षमां कारये त्वामहमप्रमेयं प्रमाणातीतम् ॥ ४२ ॥

आ० टी० । यदयुक्तमुक्तं तत् क्षन्तव्यमित्येव न किं तु यत्परिहासार्थं क्रीडादिषु त्वयि तिरस्करणं कृतं तदपि सोढव्यमित्याह यच्चेति । विहरणं क्रीडा व्यायामो वा शयनं तल्पादिकमासनमास्थायिका सिंहासनादेरुपलक्षणमेतेषु विषयभूतेष्विति यावत् । एकशब्दो रहसि स्थितमेकाकिनं कथयतीत्याह परोक्षः सन्निति । प्रत्यक्षं परोक्षं वा तदसत्करणं परिभवनं यथा स्यात्तथा यन्मया त्वमसत्कृतोऽसि तत् सर्वमिति योजनामङ्गीकृत्याह तच्छब्द इति । क्षमा कारयितव्येत्यत्रापरिमितत्वं हेतुमाह अप्रमेयमिति । वाचनिकं मदीयमपराधजातं त्वया क्षन्तव्यमित्युक्तमिदानीं मदीयोऽपराधो न त्वया गृहीतव्यो गृहीतोऽपि सोढव्य इत्याह यत इति ॥ ४२ ॥

प० टी० । यच्चेति । यद्यावहासार्थं परिहासनिमित्तं विहारे क्रीडायामेकत्र शयने सभासंनिवेशे भोजने च पङ्क्तावसत्कृतोऽस्यवज्ञातोऽसि । किं भूतस्त्वमथ वा एकलः रहसि स्थितस्तत्सर्वमपराधजातं त्वामप्रमेयमचिन्त्याप्रमेयप्रभावं क्षमापये क्षमां कारयामि । अयमर्थः । सामवेदे बृहद्रथन्तरादिपावमान्यस्तुतिभिः प्रसन्नाद्भगवतो यशो लभस्वेत्यादि नश्वरं फलं न-

वृणे किं त्वपराधमेव क्षमापये तेन पुनश्चतुर्भुजरूपदर्शनान्मुक्तिं प्राप्नुयां यतः कृतापराधस्यैव पुंसो नश्वरफलप्राप्तिरित्याशयोऽर्जुनस्य । श्रुतिरपि वाजसनेयारण्यके । " अथातः पवमानानामेवाभ्यारोहः स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात्तदेतानि जपेदसतो मा सद्गमय तमसो ज्योतिर्गमयमृत्योर्मामृतं गमयेति" । भाष्यम्—अथात ईश्वरस्य स्तावकवाक्योपक्रमात्पवमानानां पावमान्यश्रुतीनामभ्यारोह उत्कर्षः । वै यस्मात्स प्रस्तोता परमेश्वरस्य प्रकर्षेण स्तोता सन् सामरूपं परमेश्वरं स्तौति । स यत्र यदा प्रस्तुयात् स्तुतिं कुर्यात् तदैतानि त्रीणि यजूंषि जपेत् । तान्याह । असतो मा सद्गमय ॥ १ ॥ तमसो मा ज्योतिर्गमय ॥२॥ मृत्योर्मामृतं गमय ॥३॥ भाष्यम्—असतोऽसद्रूपात्प्रपञ्चान्मां सद्गमय ब्रह्म बोधय । तथा तमसोऽज्ञानान्मां ज्योतिः प्रकाशरूपं गमय । तथा मृत्योः संसारान्मामममृतं गमयेति । तैत्तिरीयकेऽपि—" यथा मध्ये समुद्रस्य प्लवमन्वर्जेयुस्तादृक् तदनुत्सर्गंबृहद्रथन्तराभ्यां मित्वा प्रतिष्ठां गच्छति" । यथा समुद्रस्य मध्ये पतिताः प्लवं नौकामन्वर्जेयुः श्रयन्ति तादृक्तदनुत्सर्गे तन्निर्विशेषं बृहद्रथन्तराभ्यामज्ञानाब्धिं मित्वा स्वल्पं ज्ञात्वा प्रतिष्ठां ब्रह्मणि स्थितिं गच्छन्ति । अथ नश्वरं फलमिन्द्रादिस्तुतिभिर्लभ्यते । श्रुतिरपि । "अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्तस्मात्तदुत्तेषु वरं वृणीत यं कामं कामयते तमागायदिति" । भाष्यम्—अथेत्यनन्तरं यानीतराणि पावमान्यश्रुत्यातिरिक्तानि स्तोत्राणि स्तुतिवाक्यानि तेष्वात्मने स्वात्मार्थमन्नाद्यं फलमागायेत् प्रार्थयेत् । तस्मात्प्रसन्नाद्देवताविशेषाद्यं कामं कामयते यद्वरं वृणीत तदा गायत् प्राप्नुयात् ॥ ४२ ॥

**पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ॥**
**न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्योलोकत्रयेऽप्यप्रतिमप्रभाव ४३**

यतस्त्वं पितासीति । पितासि जनयितासि लोकस्य प्राणिजातस्य चराचरस्य स्थावरजङ्गमस्य न केवलं त्वमस्य जगतः पिता पूज्यश्च पूजार्हो यतो गुरुर्गरीयान् गुरुतरः कस्माद्गुरुतरस्त्वमित्याह न च त्वत्समस्त्वत्तुल्योऽन्योऽस्ति न हीश्वराद्वरं संभवत्यनेकेश्वरत्वव्यवहारानुपपत्तेस्त्वत्समएव तावदन्यो न सम्भवति कुत एवान्योऽभ्यधिकः स्यात् कस्माल्लोकत्रयेऽपि सर्वस्मिन्नप्रतिमप्रभाव प्रतिमीयते यया सा प्रतिमा न विद्यते प्रतिमा यस्य तव प्रभावस्य स त्वमप्रतिमप्रभावः हे ऽप्रतिमप्रभाव निरतिशयप्रभाव इत्यर्थः ॥४३॥

आ० टी० । गुणाधिक्यात् पूजार्हत्वं धर्मात्मज्ञानसंप्रदायप्रवर्तकत्वेन शिक्षयितृत्वाद् गुरुत्वं गुरूणामपि सूत्रादीनां गुरुत्वाद्गरीयस्त्वं तदेव प्रश्नद्वारा साधयति **कस्मादिति** । ईश्वरान्तरं तुल्यं भविष्यतीत्याशङ्क्याह **न हीति** । ईश्वरभेदे प्रत्येकं स्वातन्त्र्यात्तदैकमत्ये हेत्वभावान्नानामतित्वे चैकस्य सिसृक्षायामन्यस्य संजिहीर्षासंभवाद्व्यवहारलोपादयुक्तमीश्वरनानात्वमित्यर्थः । अभ्यधिकासत्त्वं कैमुतिकन्यायेन दर्शयति **त्वत्सम इति** । तत्र हेतुमवतार्य व्याकरोति **अप्रतिमेत्यादिना** ॥४३॥

प० टी० । अथ क्षमापने बीजमाह **पितेति** । पितोत्पादकः पूज्यः पूजनीयः गुरुरुपदेष्टा ततोऽपि गरीयान् । दृष्टान्ताभावं कथयति । अप्रतिमप्रभावः । त्वत्सदृशोऽन्यः परमेश्वरो नास्ति कुतस्त्वत्तोऽधिकः । श्रुतिरपि । रथन्तरसामोत्तरा । "न त्वा वामन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते" इति । अत्र वामिति विना । शेषं स्पष्टार्थम् ॥ ४३ ॥

**तस्मात् प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम्॥**
**पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम्॥४४॥**

यत एवं तस्मादिति । तस्मात् प्रणम्य नमस्कृत्य प्रणिधाय प्रकर्षेण नीचैर्धृत्वा कायं शरीरं प्रसादये प्रसादं कारये त्वामहमीशमीशितारमीड्यं स्तुत्यं त्वं पुनः पुत्रस्यापराधं पिता यथा क्षमते सर्वं सखेव सख्युरपराधं यथा वा प्रियः प्रियाया अपराधं क्षमते एवमर्हसि हे देव सोढुं प्रसहितुं क्षन्तुमित्यर्थः ॥ ४४ ॥

आ० टी० । निरतिशयप्रभावत्वं हेतुं कृत्वाप्रतिमेत्यादिना प्रसादये प्रणामपूर्वकं त्वामित्याह **यत इति** । प्रसादनानन्तरं भगवता कर्तव्यं प्रार्थयते **त्वं पुनरिति** । प्रिय इव प्रियाया इतीवकारोऽनुपज्यते प्रियायार्हसीति छान्दसः सन्धिः । क्षन्तुं मदपराधजातमिति शेषः ॥ ४४ ॥

प० टी० । यद्येवं तस्मात्कायं प्रणिधाय दण्डवन्निपात्य त्वामहं प्रसादये प्रसन्नं करोमि किं भूतमीशं नियन्तारमीड्यं स्तुत्यम् । अनेन प्रकारेण त्वमप्यपराधं सोढुमर्हसि । कस्य क इव । पिता पुत्रस्येव । सख्युः सखेव प्रियः सुहृत् प्रियार्थं प्रियाय । अथ नश्वरफलार्थं श्रुतिः—"त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सूहवम्" इत्यादिः । अथ प्रमेयसंग्रहश्लोकश्च । युद्धानध्यवसायिनोऽपि भगवद्भूमानभिज्ञस्य मे तद्वाक्यास्तमितादरस्य नृहरिप्रोक्ता इमा आशिषः । युक्ता यन्मृतमारणाप्तयशसां साम्राज्यभोगश्रिरादास्तामित्यपराधजातमधुना श्लाघ्यं हरेर्दर्शनम् ॥१॥४४॥

**अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ॥**
**तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ॥ ४५ ॥**

अदृष्टपूर्वमिति । अदृष्टपूर्वं न कदाचिदपि दृष्टपूर्वमिदं विश्वरूपं तव मयान्यैर्वा तदहं दृष्ट्वा हृषितोऽस्मि भयेन च प्रव्यथितं मनो मेऽतस्तदेव मे मम दर्शय हे देव रूपं यन्मत्सुखं प्रसीद देवेश जगन्निवास जगतो निवासो जगन्निवासो हे जगन्निवास ॥ ४५ ॥

आ० टी० । हेतूक्तिपूर्वकं विश्वरूपोपसंहारं प्रार्थयते **अदृष्टेति** । हृषितो हृष्टस्तुष्ट इति यावत् । भयेन तद्धेतुविकृतदर्शनेनेत्यर्थः ॥ ४५ ॥

प० टी० । अथ क्षमाप्य प्रार्थयते । **अदृष्टपूर्वमिति** द्वाभ्याम् । पूर्वं जन्म जन्मान्तरेऽपि न दृष्टमित्यदृष्टपूर्वं विश्वरूपान्तश्चतुर्भुजं रूपं दृष्ट्वा मादृशानामयमलभ्यलाभ इति हृषितोऽस्मि । अनन्तरं दंष्ट्राकरालानि रूपाणि दृष्ट्वा भयेन मे मनः प्रव्यथितम् । अतः परं भो देवेश जगन्निवास प्रसीद प्रसन्नो भव । प्रसादे किं याचनीयमित्याह । तदेव प्रथममुपलब्धं हर्षजनकं चतुर्भुजं रूपं मे इति मां दर्शय । तावतैव कृतार्थः स्यामित्यर्थः ॥ ४५ ॥

**किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव ॥**
**तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥**

किंच किरीटिनमिति । किरीटवन्तं तथा गदिनं गदावन्तं चक्रहस्तमिच्छामि त्वां प्रार्थये त्वां द्रष्टुमहं तथैव पूर्ववदित्यर्थः । यत एवं तस्मात्तेनैव रूपेण वसुदेवपुत्ररूपेण चतुर्भुजेन सहस्रबाहो वार्तमानिकेन विश्वरूपेण भव विश्वमूर्ते उपसंहृत्य विश्वरूपं तेनैव रूपेण वसुदेवपुत्ररूपेण[1] भवेत्यर्थः ॥४६॥

आ० टी० । तदेव दर्शयेत्युक्तं किं तदित्यपेक्षायामाह **किरीटिनमितीति** । चक्रं हस्ते यस्य तमिति व्युत्पत्तिं गृहीत्वाह **चक्रेति** । मदीयेच्छाफलपर्यन्ता कर्तव्येत्याह **यत इति** । चतुर्भुजत्वे कथं सहस्रबाहुत्वं तत्राह **वार्तमानिकेनेति** । सति विश्वरूपे कथं पूर्वरूपभाक्त्वं तत्राह **उपसंहृत्येति** ॥ ४६ ॥

प० टी० । अथोपक्रमे दृष्टपूर्वं कीदृशमित्याह **किरीटिनमिति** । मुकुटवन्तं गदिनं चक्रिणं चेत्युपलक्षणं तेन सर्वायुधयुतमिति ज्ञेयम् । अत्रायमर्थः । विश्वरूपदर्शनोपक्रमे दिव्यदृष्ट्या यच्चतुर्भुजं तेजोरूपमिति मनोरमं रूपं दृष्टं तद्वैकुण्ठं विना नान्यत्रानुभवगोचरं भवतीति पूर्वं पुराणादिभ्यः श्रुतमासीत्तदप्रयासतो मयात्र दृष्टमिति हर्षजनकं तथानन्तरं दंष्ट्राकरालमन्युग्रं यत्तद्भयजनकमतस्तदेव किरीटाद्युपस्कृतं रूपं द्रष्टुमिच्छामि न तु भयजनकम् तस्माद्भो विश्वमूर्ते सहस्रबाहो तेनैव चतुर्भुजेन रूपेण भवाविर्भव । अथ विश्वरूपदर्शनात् प्राक् निरन्तरमर्जुनश्चतुर्भुजमेव रूपं दृष्टवानिति चेत्तर्हि 'पश्यामि देवांस्तव देव देहे' इत्यत्र किरीटिनं गदिनं चक्रिणं चेति पुनर्वक्तुं न युज्यते किं च चतुर्भुजं रूपं हि दैवं न मानुषं तथा च प्रथमतो दैवरूपप्रतीतौ 'यच्चावहासार्थमसत्कृतोऽसी' ति न युज्यते किं च अवजानन्ति मां मूढा मानुषीं तनुमाश्रितं तथा दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दनेत्युपक्रमोपसंहाराभ्यां सर्वमनुष्यसाधारणस्य द्विभुजरूपस्यैव निर्देशात् ॥४६॥

## श्रीभगवानुवाच ।

## मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ॥
## तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥

अर्जुनं भीतमुपलभ्योपसंहृत्य विश्वरूपं प्रियवचनेनाश्वासयन् श्रीभगवानुवाच मयेति । मया प्रसन्नेन प्रसादो नाम त्वय्यनुग्रहबुद्धिस्तद्वता प्रसन्नेन मया तव हेऽर्जुन इदं परं रूपं विश्वरूपं दर्शितमात्मयोगादात्मन ऐश्वर्यस्य सामर्थ्यात्तेजोमयं तेजःप्रायं विश्वं समस्तमनन्तमन्तरहितमादौ भवमाद्यं यद्रूपं मे मम त्वदन्येन त्वत्तोऽन्येन केनचिन्न दृष्टपूर्वम् ॥ ४७ ॥

आ० टी० । अर्जुनेन स्थाने हृषीकेशेत्यादिनोक्तस्य भगवतो वचनमवतारयति **अर्जुनमिति**। भगवत्प्रसादैकोपायलभ्यं तद्दर्शनमित्याशयेनाह **मयेति** ॥ ४७ ॥

प० टी० । अथाश्वासयन् भगवानाह **मयेति** त्रिभिः । त्वया यदुक्तं प्रव्यथितान्तरात्मा धृतिं न विन्दामीति तर्ह्याकस्मिकाद्भुतभयानकरूपदर्शनेन भयमुत्पद्यते प्रकृते तु प्रसन्नेन मया

१ तेनैव पूर्वरूपेण—पा. लि. ।

दिव्यदृष्टिदानपूर्वकं तव तुभ्यमात्मयोगान्निजमायावैभवेन परमुत्कृष्टं रूपं दर्शितम् । अत एव चतुर्भिर्विशेषणैराह तेजोमयं विश्वमनन्तमाद्यं यत्त्वदन्येन केनाप्यदृष्टपूर्वम् ॥ ४७ ॥

**न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः ॥**
**एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥**

आत्मनो मम रूपदर्शनेन कृतार्थ एव त्वं संवृत्त इति ततः स्तौति न वेदेति । न वेदयज्ञाध्ययनैर्न दानैश्चतुर्णामपि वेदानामध्ययनैर्यथावद् यज्ञाध्ययनैश्च वेदाध्ययनैरेव यज्ञाध्ययनस्य सिद्धत्वात् पृथग् यज्ञाध्ययनग्रहणं यज्ञविज्ञानोपलक्षणार्थम्, तथा न दानैस्तुलापुरुषादिभिर्न च क्रियाभिरग्निहोत्रादिभिः श्रौतादिभिर्नापि तपोभिरुग्रैश्चान्द्रायणादिभिरुग्रैर्घोरैरेवंरूपो यथा दर्शितं विश्वरूपं यस्य सोऽहमेवंरूपः शक्यो न शक्योऽहं नृलोके मनुष्यलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥

आ० टी० । तच्छब्देन प्रकृतं दर्शनं परामृश्यते वेदाध्ययनात् पृथग् यज्ञाध्ययनग्रहणं पुनरुक्तेरयुक्तमित्याशङ्क्याह **न वेदेति** । न च वेदाध्ययनग्रहणादेव यज्ञविज्ञानमपि गृहीतमध्ययनस्यार्थावबोधान्तत्वादिति वाच्यं, तस्याक्षरग्रहणान्ततया वृद्धैः साधितत्वादिति भावः । श्लोकपूरणार्थमसंहितकरणं त्वत्तोऽन्येन मदनुग्रहविहीनेनेति शेषः ॥ ४८ ॥

प० टी० । अथास्य दुर्लभत्वमाह **न वेदयज्ञैरिति** । वेदा ऋगादयो यज्ञा अश्वमेधादयः अध्ययनं शास्त्रपठनं तैः, नापि तुलापुरुषादिदानैर्न[1] च क्रियाभिः श्रौतस्मार्तकर्मभिः तपोभिः कृच्छ्रचान्द्रायणादिभिः नृलोके मनुष्यलोके अर्जकभूमौ त्वदन्येन द्रष्टुमशक्यः कुरुप्रवीरेति निर्भयत्वेऽपि भयोत्पत्तिरयुक्तेति सूचितम् ॥ ४८ ॥

**मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ॥**
**व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥**

मा ते व्यथेति । मा ते व्यथा माभूत्ते भयं मा च विमूढभावो विमूढचित्तता दृष्ट्वोपलभ्य रूपं घोरमीदृग् यथावद्दर्शितं ममेदं व्यपेतभीर्विगतभयः प्रीतमनाश्च सन् पुनर्भूयस्त्वं तदेव चतुर्भुजं रूपं शङ्खचक्रगदाधरं तवेष्टं रूपमिदं प्रपश्य ॥ ४९ ॥

आ० टी० । विश्वरूपदर्शनमेवं स्तुत्वा यद्यस्माद् दृश्यमानाद् बिभेषि तर्हि तदुपसंहरामीत्याह **मा ते व्यथेति** । बहुतिथमनुभूतत्वमभिप्रेत्य तदेवेत्युक्तं इदमिति ॥ ४९ ॥

---

1 तुलापुरुषादिभिः—नास्ति लि. ।

प० टी० । अत एवाह मा ते व्यथेति । इदं घोरं भयानकं मे रूपं दृष्ट्वा ते व्यथा भयाभङ्गुरत्वं विमूढभावो भ्रान्तत्वं मास्तु । अतः परं व्यपेतभीः प्रीतमनाः सन् तदेव पूर्वानुभूतं पुनः पश्य ॥ ४९ ॥

## संजय उवाच ।

**इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः ॥**
**आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा॥५०॥**

इत्यर्जुनमिति । इत्येवमर्जुनं प्रति वासुदेवस्तथाभूतं वचनमुक्त्वा स्वकं वसुदेवगृहे जातं रूपं दर्शयामास दर्शितवान् । भूयः पुनराश्वासयामास चाश्वासितवान् भीतमेनं भूत्वा पुनः सौम्यवपुः प्रसन्नदेहो महात्मा ॥ ५० ॥

आ० टी०। प्रत्यक्षयोग्यत्वं तदिदं वृत्तं राज्ञे सूतो निवेदितवानित्याह सञ्जय इति । तथा भूतं वचनं मया प्रसन्नेनेत्यादिचतुर्भुजं रूपं किं तस्य रूपस्य परिचितपूर्वस्य प्रदर्शनेन प्रसन्नदेहत्वेन चार्जुनं प्रत्याश्वासनं भगवतो युक्तमित्यत्र हेतुमाह महात्मेति ॥ ५० ॥

प० टी० । पुनः सञ्जय आह इतीति । इत्युक्तप्रकारं वासुदेव उक्त्वा स्वकं रूपं चतुर्भुजं दर्शयामास । पुनरनन्तरं महात्मा विष्णुर्विश्वरूपः सौम्यवपुर्मनुष्याकृतिर्भूत्वा भीतमेनमर्जुनमाश्वासयामास ॥ ५० ॥

## अर्जुनउवाच ।

**दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ॥**
**इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥**

दृष्ट्वेदमिति । दृष्ट्वेदं मानुषं रूपं मत्सखं प्रसन्नं तव सौम्यं जनार्दन इदानीमधुनास्मि संवृत्तः संजातः किं सचेताः प्रसन्नचित्तः प्रकृतिं स्वभावं गतश्चास्मि ॥ ५१ ॥

आ० टी० । एवं भगवदाश्वासितः सन्नर्जुनस्तं प्रत्युक्तवानित्याह अर्जुन इति ॥ ५१ ॥

प० टी० । पुनरर्जुनः प्राह दृष्ट्वेदमिति । मानुषं मनुष्यैर्द्रष्टुं योग्यं सचेताः प्रसन्नचित्तः संवृत्तो जातोऽस्मि प्रकृतिं स्वास्थ्यं च गतोऽस्मि ॥ ५१ ॥

## श्रीभगवानुवाच ।

**सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ॥**
**देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५२ ॥**

सुदुर्दर्शमिति । सुदुर्दर्शं सुष्ठु दुःखेन दर्शनमस्येति सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम देवादयोऽप्यस्य मम रूपस्य नित्यं सर्वदा दर्शनकाङ्क्षिणो दर्शनेप्सवोऽपि न त्वमिव दृष्टवन्तो न द्रक्ष्यन्ति चेत्यभिप्रायः ॥ ५२ ॥

आ० टी० । उपास्यत्वाय विश्वरूपं स्तोतुं भगवदुक्तिमुत्थापयति भगवानिति । त्वद्व्यतिरिक्तानामिदं रूपं द्रष्टुमशक्यमित्येतद्विशदयति देवादय इति ॥ ५२ ॥

प० टी० । पुनर्भगवान् । सुदुर्दर्शं सुतरां दुःखेनापि द्रष्टुमशक्यं मम रूपं यद्दृष्टवानसि, अस्य रूपस्य देवा अपि नित्यं दर्शनमिच्छन्ति मनोरथमात्रं कुर्वन्ति परं तु न प्राप्नुवन्ति ॥ ५२ ॥

**नाहं वेदैर्न तपसा न दानेन न चेज्यया ॥**
**शक्य एवंविधो द्रष्टुं दृष्टवानसि यन्मम ॥ ५३ ॥**

कस्मान्नाहमिति । नाहं वेदैर्ऋग्यजुःसामाथर्ववेदैश्चतुर्भिरपि न तपसोग्रेण चान्द्रायणादिना न दानेन गोभूहिरण्यादिना न चेज्यया यज्ञेन पूजया वा शक्य एवंविधो यथादर्शितप्रकारो द्रष्टुमन्यैरशक्यो दृष्टवानसि मां यथा त्वम् ॥ ५३ ॥

आ० टी० । दर्शनोपायाभावाद् दुर्दर्शत्वमिति शङ्क्यते कस्मादिति । वेदादिषूपायेषु सत्स्वपि भगवानुक्तरूपो न शक्यो द्रष्टुमित्याह नाहमिति । तर्हि दर्शनायोग्यत्वं द्रष्टुमशक्यत्वमित्याशङ्क्याह दृष्टवानिति ॥ ५३ ॥

प० टी० । नाहं वेदैरिति । गतार्थम् ॥ ५३ ॥

**भक्त्या त्वनन्यया शक्यो ह्यहमेवंविधोऽर्जुन ॥**
**ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ ५४ ॥**

कथं पुनः शक्य इत्युच्यते भक्त्येति । भक्त्या तु किंविशिष्टयेत्याह अनन्ययापृथग्भूतया भगवतोऽन्यत्र पृथङ् न कदाचिदपि भवति सा त्वनन्या भक्तिः सर्वैरपि करणैर्वासुदेवादन्यन्न लभ्यते यया सानन्या भक्तिस्तया शक्योऽहमेवंविधो विश्वरूपप्रकारो हेऽर्जुन ज्ञातुं शास्त्रतो न केवलं ज्ञातुं शास्त्रतो द्रष्टुं च साक्षात् कर्तुं तत्त्वेन तत्त्वतः प्रवेष्टुं च मोक्षं च गन्तुं परन्तप ॥ ५४ ॥

आ० टी० । केनोपायेन तर्हि द्रष्टुं शक्यो भगवानिति पृच्छति कथमिति । शास्त्रीयज्ञानद्वारा तद्दर्शनं सफलं सिध्यतीत्याह उच्यत इति । न भक्तिमात्रं तत्र हेतुरिति तुशब्दार्थं स्फुटयति किमित्यादिना । अनन्यभक्तिमेव व्यनक्ति सर्वैरिति ॥ ५४ ॥

प० टी० । किं तु भोऽर्जुन एवंविधोऽहमनन्ययाव्यभिचारिण्या भक्त्या तत्त्वेन ज्ञातुं शास्त्रतः प्रत्यक्षतः प्रवेष्टुं तादात्म्येन शक्यो नान्यथा ॥ ५४ ॥

मत्कर्मकृन्मत्परमो मद्भक्तः संगवर्जितः ॥
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ५५ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुन-संवादे विश्वरूपदर्शनं नामैकादशोऽध्यायः ॥ ११ ॥

अधुना सर्वस्य गीताशास्त्रस्य सारभूतोऽर्थो निःश्रेयसार्थोऽनुष्ठेयत्वेन समुच्चित्योच्यते मत्कर्मकृदिति । मत्कर्मकृन्मदर्थं कर्म मत्कर्म तत् करोतीति मत्कर्मकृत् मत्परमः करोति भृत्यः स्वामिकर्म न त्वात्मनः परमा प्रेत्य गन्तव्या गतिरिति स्वामिनं प्रतिपद्यते, अयं तु मत्कर्मकृन्मामेव परमां गतिं प्रतिपद्यते इति मत्परमोऽहं परमः परा गतिर्यस्य सोऽयं मत्परमस्तथा मद्भक्तो मामेव सर्वप्रकारैः सर्वात्मना सर्वोत्साहेन भजत इति मद्भक्तः सङ्गवर्जितो धनमित्रपुत्रकलत्रबन्धुवर्गेषु सङ्गवर्जितः सङ्गः प्रीतिः स्नेहवर्जितो निर्वैरो निर्गतवैरोऽतः सर्वभूतेषु शत्रुभावरहित आत्मनोऽत्यन्तापकारप्रवृत्तेष्वपि य ईदृशो मद्भक्तः स मामेत्यहमेव तस्य परा गतिर्नान्या कदाचिद्भवतीत्ययं तवोपदेश इष्टो मयोपदिष्टो हे पाण्डवेति ॥ ५५ ॥

इति श्रीमद्भगवद्गीताभाष्ये शंकरभगवतः कृतौ विश्वरूपदर्शनं नामैकादशोऽध्यायः ॥ ११ ॥

आ० टी० । भक्त्या त्विति विशेषणादन्येषामहेतुत्वमाशङ्क्याह अधुनेति । समुच्चित्य संक्षिप्य पुञ्जीकृत्येति यावत् । मत्कर्मकृदित्युक्ते मत्परमत्वमार्थिकमिति पुनरुक्तिरित्याशङ्क्याह करोतीति । भगवानेव परमा गतिरिति निश्चयवतस्तत्रैव निष्ठा सिध्यतीत्याह तथेति । न तत्रैव सर्वप्रकारैर्भजनं धनादिस्नेहाकृष्टत्वादित्याशङ्क्याह संगेति । द्वेषपूर्वकानिष्टाचरणं वैरमनपकारिषु तद्भावेऽपि भवत्येवापकारिष्विति शङ्कित्वाह आत्मन इति । एतच्च सर्वं संक्षिप्यानुष्ठानार्थमुक्तमेवमनुतिष्ठतो भगवत्प्राप्तिरवश्यंभाविनीत्युपसंहरति अयमिति । तदेवं भगवतो विश्वरूपस्य सर्वात्मनः सर्वज्ञस्य सर्वेश्वरस्य मत्कर्मकृदित्यादिन्यायेन क्रममुक्तिफलमभिध्यानमभिवदता तत्पदवाच्योऽर्थो व्यवस्थापितः ॥ ५५ ॥ इत्यानन्दगिरिकृतटीकायामेकादशाध्यायः ॥ ११ ॥

प० टी० । अत्र रहस्यं शृण्वित्याह मत्कर्मकृदिति । मदर्थं कर्म करोतीति मत्कर्मकृत् । अहमेव परमः पुरुषार्थो यस्य । मयि भक्तो मदाश्रितः । पुत्रकलत्रादिषु संगवर्जितः । सर्वभूतेषु निर्वैरो भवति स मां प्राप्नोति नान्यः । तदुक्तमस्माभिर्भक्तिशते—'नानारङ्गैरनङ्गायुधमभिलिखताश्रीत्रिणाऽभ्यासलभ्यं सौरभ्यं नैव तस्मिन् न च सरथहयं मण्डलं चण्डरश्मेः । तीव्रं तेजस्त्रिलोकीतिमिरनिरसनं तद्वदानन्दसान्द्रं संन्यासाभ्यासभाजो न सुलभमपि तु श्रीयदूत्तंसभक्त्या ॥१॥५५॥

इति परमार्थप्रपायामेकादशाध्यायः ॥ ११ ॥

अथाध्यायतात्पर्यं तु—मानुष्यं मन्यसे चेन्माये तदिदमये भूर्भुवःस्वर्महोऽन्तःस्वीकारं वैभवं चाभयममृतगतिं द्रष्टुमिच्छास्ति ते चेत् । तत्पश्यारातिवर्गं निहतमिह मया दत्तया दिव्यदृष्ट्या ब्रह्मादीन् देवदेवानिति यदुपतिना प्रोक्तमेकादशेऽस्मिन् ॥ ११ ॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां परमार्थप्रपायां विश्वरूपाख्यमध्यमप्रमाणनिरूपणं नामैकादशोऽध्यायः ॥ ११ ॥

इत्येकादशाध्यायः ॥ ११ ॥

---

# द्वादशाध्यायः ।

## अर्जुनउवाच ।

**एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ॥**
**ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥**

द्वितीयप्रभृतिष्वध्यायेषु विभूत्यन्तेषु परमात्मनो ब्रह्मणोऽक्षरस्य विध्वस्तसर्वविशेषणस्योपासनमुक्तं सर्वयोगैश्वर्यसर्वज्ञानशक्तिमत्सत्त्वोपाधेरीश्वरस्य तव चोपासनं तत्र तत्रोक्तं विश्वरूपाध्याये त्वैश्वरमाद्यं समस्तजगदात्मरूपं विश्वरूपं त्वदीयं दर्शितमुपासनार्थमेव त्वया तच्च दर्शयित्वोक्तवानसि मत्कर्मकृदित्याद्यतोऽहमनयोरुभयोः पक्षयोर्विशिष्टतरबुभुत्सया त्वां पृच्छामीत्यर्जुन उवाच एवमिति । एवमित्यतीतानन्तरश्लोकेनोक्तमर्थं परामृशति । एवं सततयुक्तानैरन्तर्येण भगवत्कर्मादौ यथोक्तेऽर्थे समाहिताः सन्तः प्रवृत्ता इत्यर्थः । ये भक्ता अनन्यशरणाः सन्तस्त्वां यथादर्शितं विश्वरूपं पर्युपासते ध्यायन्ति ये चाप्यक्षरमिति ये चान्येऽपि त्यक्तसर्वैषणाः संन्यस्तसर्वकर्माणो यथाविशेषितं ब्रह्माक्षरं निरस्तसर्वोपाधित्वादव्यक्तमरणगोचरं यद्धि लोके करणगोचरं तद्व्यक्तमुच्यते अञ्जेर्धातोस्तत्कर्मकत्वादिदं त्वक्षरं तद्विपरीतं शिष्टैश्चोच्यमानैर्विशेषणैर्विशिष्टं तद् ये चापि पर्युपासते तेषामुभयेषां मध्ये के योगवित्तमाः केऽतिशयेन योगविद इत्यर्थः ॥ १ ॥

आ० टी० । अशोच्यानित्यादिषु विभूत्यध्यायावसानेष्वध्यायेषु निरुपाधिकस्य ब्रह्मणो ज्ञेयत्वेनानुसंधानमुक्तमिति वृत्तं कीर्तयति द्वितीयेति । अतिक्रान्तेषु तत्तदध्यायेषु सोपाधिकस्य ब्रह्मणो ध्येयत्वेन प्रतिपादनं कृतमित्याह सर्वेति । सर्वस्यापि प्रपञ्चस्य योगो घटना जन्मस्थितिभङ्गप्रवेशनियमनाख्या तत्रैश्वर्यं सामर्थ्यं तेन सर्वत्र ज्ञेये प्रतिबन्धाविधुरया ज्ञानशक्त्या विशिष्टस्य सत्त्वाद्युपहितस्य भगवतो ध्यानं तत्र तत्र प्रसङ्गमापाद्य मन्दमध्यमयोरनुग्रहार्थमुक्तमित्यर्थः । एकादशे वृत्तमनुवदति विश्वरूपेति । अध्यायान्ते भगवदुपदेशमनुवदति तच्चेति । अतीतानन्तरश्लोकेनोक्त-

मर्थं परामृशति **मत्कर्मकृदिति**। यथाधिकारं तारतम्योपेतानि साधनानि नियन्तुमध्यायान्तरमवतारयन्नादौ प्रश्नमुत्थापयति **अत इति**। सोपाधिकध्यानस्य निरुपाधिकज्ञानस्य चोक्तत्वादित्यर्थः। एवं शब्दार्थमुक्त्वा तमनूद्य सततयुक्ता इति भागं विभजते **एवमिति**। ये भक्ता इत्यनूद्य व्याचष्टे **अनन्येनेति**। मन्दमध्यमाधिकारिणः सगुणशरणानुक्त्वा निर्गुणनिष्ठानुत्तमाधिकारिणो निर्दिशति **ये चेति**। यथा विशेषितमनिर्देश्यं सर्वत्रगमचिन्त्यं कूटस्थमित्यादिवक्ष्यमाणविशेषणविशिष्टमित्यर्थः, न क्षरत्यश्नुते वेत्यक्षरम्। अव्यक्तमित्येतद्व्याचष्टे **निरस्तेति**। करणागोचरत्वं व्यतिरेकद्वारा स्फोरयति **यद्धीति**। यथा विशेषितमित्युक्तं स्पष्टयति **शिष्टैश्चेति**। पूर्वार्धगतक्रियापदस्यानुषङ्गं सूचयति **तदिति**। सर्वे तावदेते योगं समाधिं विन्दन्तीति योगविदः। के पुनरातिशयेनैषां मध्ये योगविदो योगिन इति पृच्छति **के अतिशयेनेति**॥ १॥

प० टी०। पूर्वाध्यायान्ते मत्कर्मकृन्मत्परम इत्यनेन सर्वोपायैरगम्यस्य विश्वरूपस्वरूपस्य ज्ञाने दर्शने प्राप्तौ वा श्रेष्ठोऽधिकारी प्रोक्तः पूर्वं तु ज्ञानी त्वात्मैव मे मतं तथा स योगी परमो मतस्तथा ब्रह्मविदाप्नोति परमिति श्रुतेश्च योग–ज्ञानादिसंपदुपेतः श्रेष्ठ उक्तस्तयोर्मध्ये कस्य श्रेष्ठत्वमिति प्रश्नव्याजेन परं ब्रह्म जिज्ञासुरर्जुनः पृच्छति **एवमिति**। एवमुक्तप्रकारेण सर्वकर्मार्पणादिना सततयुक्तास्त्वन्निष्ठा ये भक्तास्त्वां विश्वरूपं सर्वज्ञं सर्वशक्तिं पर्युपासते ध्यायन्ति। येचाप्यक्षरं ब्रह्माव्यक्तं निर्विशेषमुपासते तेषामुभयेषां मध्ये योगवित्तमाः के इति प्रश्नः॥ १॥

**श्रीभगवानुवाच।**

**मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते॥**
**श्रद्धया परयोपेतास्ते मे युक्ततमा मताः॥ २॥**

श्रीभगवानुवाच। ये त्वक्षरोपासकाः सम्यग्दर्शिनो निवृत्तैषणास्ते तावत्तिष्ठन्तु तान् प्रति यद्वक्तव्यं तदुपरिष्टाद्वक्ष्यामः ये त्वितरे मयीति। मयि विश्वरूपे परमेश्वरे आवेश्य समाधाय मनो ये भक्ताः सन्तो मां सर्वयोगेश्वराणामधीश्वरं सर्वज्ञं विमुक्तरागादिक्लेशतिमिरदृष्टिं नित्ययुक्ता अतीतानन्तराध्यायान्तोक्तश्लोकार्थन्यायेन सततयुक्ताः सन्त उपासते श्रद्धया परया प्रकृष्टयोपेता मे मम मता अभिप्रेता युक्ततमा इति नैरन्तर्येण हि ते मच्चित्ततयाहोरात्रमतिवाहयन्त्यतो युक्तं तान् प्रति युक्ततमा इति वक्तुम्॥ २॥

आ० टी०। किमनयोर्योगयोर्मध्ये सुशक्यो योगो वा पृच्छाति किं वा साक्षान्मोक्षहेतुरिति विकल्प्य क्रमेणोत्तरं भगवानुक्तवानित्याह **श्रीभगवानिति**। यदि द्वितीयस्तथाविधयोगस्य वक्ष्यमाणत्वात् प्रष्टव्यतेत्याह **ये त्वक्षरेति**। यद्याद्यस्तत्राह **ये त्विति**। सर्वयोगेश्वराणां सर्वेषां योगमधितिष्ठतां योगिनामित्यर्थः। विमुक्ता त्यक्ता रागाद्याख्या क्लेशनिमित्तभूता तिमिरशब्दितानाद्यज्ञानकृता दृष्टिरविद्या मिथ्या धीर्यस्य तमिति विशिनष्टि **विमुक्तेति**। नित्ययुक्तत्वं साधयति **अतीतेति**। तत्रोक्तो योऽर्थो मत्कर्मकृदित्यादि तस्मिन्निश्चयेनापनयोगमनन्तस्य नियमेनानुष्ठानं तेनेत्यर्थः। उपासते मयि स्मृतिं सदा कुर्वन्तीत्यर्थः। उक्तोपासकानां युक्ततमत्वं व्यनक्ति **नैरन्तर्येणेति**। तदेव स्फुटयति **अहोरात्रमिति**। अह्नि च रात्रौ चातिमात्रमतिशयेन मामेव विषयान्तरविमुखाश्चिन्तयन्तीत्यर्थः॥ २॥

प० टी० । तत्र भगवानुत्तरयति मयीति द्वाभ्याम् । मयि परमेश्वरे सर्वज्ञादिगुणोपेते मन आवेश्यैकाग्रं कृत्वा नित्ययुक्ता मदर्थकर्मानुष्ठानादिना मन्निष्ठाः सन्तः परया श्रद्धयास्तिक्यबुद्ध्योपेतास्ते युक्ततमा इति मे मताः ॥ २ ॥

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ॥
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥
संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ॥
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥

किमितरे युक्ततमा न भवन्ति न किं तु तान् प्रति यद्वक्तव्यं तच्छृणु ये त्वक्षरमनिर्देश्यमव्यक्तमव्यक्तत्वादशब्दगोचरमिति न निर्देष्टुं शक्यतेऽतोऽनिर्देश्यमव्यक्तं न केनापि प्रमाणेन व्यज्यत इत्यव्यक्तं पर्युपासते परि समन्तादुपासत उपासनं नाम यथाशास्त्रमुपास्यस्यार्थस्य विषयीकरणेन सामीप्यमुपगम्य तैलधारावत् समानप्रत्ययप्रवाहेण दीर्घकालं यदासनं तदुपासनमाचक्षते । अक्षरस्य विशेषणमाह सर्वत्रगं व्योमवद्व्याप्यचिन्त्यं चाव्यक्तत्वादचिन्त्यं यद्धि करणगोचरं तन्मनसापि चिन्त्यं तद्विपरीतत्वादचिन्त्यमक्षरं कूटस्थं दृश्यमानगुणमन्तर्दोषं वस्तु कूटरूपं कूटसाक्ष्यमित्यादौ कूटशब्दः प्रसिद्धो लोके तथा चाविद्याद्यनेकसंसारबीजमन्तर्दोषं मायां प्रकृत्यादिशब्दवाच्यतया 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं' 'मम माया दुरत्यया' इत्यादौ प्रसिद्धं यत्तत् कूटं तस्मिन् कूटे स्थितं तदध्यक्षतयाथवा राशिरिव स्थितं कूटस्थमत एवाचलं यस्मादचलं तस्माद् ध्रुवं नित्यमित्यर्थः ॥ ३ ॥

संनियम्येति । संनियम्य सम्यङ् नियम्य संहृत्येन्द्रियग्राममिन्द्रियसमुदायं सर्वत्र सर्वस्मिन् काले समबुद्धयः समा तुल्या बुद्धिर्येषामिष्टानिष्टप्राप्तौ ते समबुद्धयस्ते य एवंविधास्ते प्राप्नुवन्ति मामेव सर्वभूतहिते रता न तेषां वक्तव्यं किंचिन् मां ते प्राप्नुवन्तीति ज्ञानी त्वात्मैव मे मतमित्युक्तत्वान्न हि भगवत्स्वरूपाणां सतां युक्ततमत्वमयुक्ततमत्वं वा वाच्यम् ॥ ४ ॥

आ० टी० । वक्ष्यामस्तदुपरिष्टादित्युक्तं प्रश्नपूर्वकं प्रकटयति किमित्यादिना । पूर्वेभ्यः फलतो विशेषार्थस्तुशब्दः । अव्यक्तत्वमनिर्देश्यत्वे हेतुरित्याह अव्यक्तत्वादिति । यतोऽव्यक्तमतोऽनिर्देश्यमिति योजना । निरुपाधिकेऽक्षरे कथमुपासनेति पृच्छति उपासनमिति । शास्त्रतोऽक्षरं ज्ञात्वा तदुपेत्यात्मत्वेनोपगम्योपासते तथैव तिष्ठन्ति पूर्णचिदेकतानमक्षरमात्मानमेव सदा भावयन्तीत्येतदिह विवक्षितमित्याह यथेति । अव्यक्तत्वमेवाचिन्त्यत्वेऽपि हेतुरित्याह यद्धीति । कूटस्थश-

ब्दस्योक्तार्थत्वं वृद्धप्रयोगतः साधयति **कूटरूपमिति** । आदिपदमनृतार्थम् । प्रकृते किं तदमृत कूटशब्दितमित्याह **तथाचेति** । उक्तरीत्या कूटशब्दस्यानृतार्थत्वे यदनेकस्य संसारस्य बीजं निरूप्यमाणं नानाविधदोषोपेतं तद्धेयं तदव्याकृतं मायां तु प्रकृतिं मम मायेत्यादौ मायाशब्दिततया प्रसिद्धमविद्यादि तदिह कूटशब्दितमित्यर्थः । तत्रावस्थानं केन रूपेणेत्याशङ्कायामाह **तदध्यक्षतयेति** । कूटस्थशब्दस्य निष्क्रियत्वमर्थान्तरमाह **अथवेति** । पूर्वमुपजीव्यानन्तरविशेषणद्वयप्रवृत्तिमाह **अत एवेति** ॥ ३ ॥

**आ० टी०** । कथमक्षरमुपासते तदुपासने वा किं स्यादिति तदाह **संनियम्येति** । तुल्या हर्षविषादरागद्वेषादिरहिता सम्यग्ज्ञानेनाज्ञानस्यापनीतत्वात् परंपरापेक्षयोरसंभवं विवक्षित्वाह **ते य इति** । सर्वेभ्यो भूतेभ्यो हिते रताः सर्वेभ्यो हितमेव चिन्तयन्तस्तदेवाचरान्ति ज्ञानवतां यथा ज्ञानं भगवत्प्राप्तेरर्थसिद्धत्वादनुवादमात्रमित्याह **नत्विति** । ज्ञानिनो भगवत्प्राप्तिः सिद्धैवेत्यत्र प्रमाणमाह **ज्ञानी त्विति**। ज्ञानवतां भगवत्प्राप्तौ तएव युक्ततमा वक्तव्याः । कथं सगुणब्रह्मोपासकान् युक्ततमानुक्तवानसीत्याशङ्क्याह **न हीति** ॥ ४ ॥

**प० टी०** । तर्हीतरे किं न श्रेष्ठा इत्याह **ये त्विति** । ये त्वनिर्देश्यं निर्देष्टुमशक्यमत एवाक्षरमव्यक्तं च सर्वत्रगं व्यापकमचिन्त्यं चिन्तयितुमशक्यम् । कूटे मायाप्रपञ्चेऽधिष्ठानत्वेन स्थितम् । अचलं वृध्यादिरहितं स्वरूपं सर्वत्र समदर्शिनः पुरुषा इन्द्रियग्रामं संनियम्य पर्युपासते ते मामेव प्राप्नुवन्ति । उभयोः फले विसंवादोऽस्तीत्यर्थः ॥ ३ ॥ ४ ॥

**क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ॥**
**अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥**

किं तु क्लेशोऽधिकतरो यद्यपि मत्कर्मादिपराणां क्लेशोऽधिकतरस्त्वक्षरात्मनां परमार्थदर्शिनां देहाभिमानपरित्यागनिमित्तोऽव्यक्तासक्तचेतसामव्यक्त आसक्तं चित्तं येषां तेऽव्यक्तासक्तचेतसस्तेषामव्यक्तासक्तचेतसामव्यक्ता हि यस्माद् या गतिरक्षरात्मिका दुःखं देहवद्भिर्देहाभिमानवद्भिरवाप्यतेऽतः क्लेशोऽधिकतरः ॥ ५ ॥

**आ० टी०** । सगुणोपासकेष्वपि कथमित्याह **किंत्विति** । अक्षरोपासनस्य दुष्करत्वादुपासनान्तरस्यसुकरत्वादित्यभिप्रेत्याह **क्लेश इति** । अधिक एवेतरेभ्यो द्वैतदर्शिभ्यः कामिभ्य इति शेषः । तेषां क्लेशस्याधिकत्वे हेतुं मत्वा विशिनष्टि **देहेति** । अव्यक्तमत्यन्तसूक्ष्मं निर्विशेषमक्षरं तस्मिन्नासक्तमभिनिविष्टं चेतो येषां तेषामिति यावत् । अक्षरोपासकानां क्लेशस्याधिकतरत्वे भगवानेव हेतुमाह **अव्यक्तेति** । दुःखं दुःखेन कृच्छ्रेणेति यावत्, अतो देहाभिमानत्यागादित्यर्थः ॥ ५ ॥

**प० टी०** । तत्रापि पूर्वः श्रेष्ठ इत्याह **क्लेश इति** । अव्यक्तेऽक्षरआसक्तं चेतो येषां तेषां क्लेशोऽधिकतरः, हि यस्मादव्यक्तविषया गतिर्देहवद्भिर्देहाभिमानिभिर्दुःखं यथा स्यात्तथा प्राप्यते ॥५॥

**ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ॥**
**अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥**

**तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ॥**
**भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥**

अक्षरोपासकानां यद्वर्तनं तदुपरिष्टाद्वक्ष्यामः ये त्विति । ये तु सर्वाणि कर्माणि मयीश्वरे संन्यस्य मत्परा अहं परो येषां ते मत्पराः सन्तोऽनन्येनैवाविद्यमानमन्यदालम्बनं विश्वरूपं देवमात्मानं मुक्त्वा यस्य सोऽनन्यस्तेनानन्येनैव केवलेन योगेन समाधिना मां ध्यायन्तश्चिन्तयन्त उपासते ॥ ६ ॥

तेषां किं, तेषामिति । तेषां मदुपासनैकपराणामहमीश्वरः समुद्धर्ता कुत इत्याह मृत्युसंसारसागरात् मृत्युयुक्तः संसारो मृत्युसंसारः स एव सागरवत् सागरो दुरुत्तरत्वात् तस्मान्मृत्युसंसारसागरादहं तेषां समुद्धर्ता भवामि न चिरात् किं तर्हि क्षिप्रमेव हे पार्थ मय्यावेशितचेतसां मयि विश्वरूपे आवेशितं समाहितं चेतो येषां ते मय्यावेशितचेतसस्तेषाम् ॥ ७ ॥

आ० टी० । ते कथं वर्तन्ते तत्राह अक्षरेति । यद्यक्षरोपासका मामेवाप्नुवन्तीति विशिष्यन्ते तत् किं सगुणोपासकास्त्वां नाप्नुवन्ति न तेषामपि क्रमेण मत्प्राप्तेरित्याह ये त्विति । तुशब्दः शङ्कानिवृत्त्यर्थः ॥ ६ ॥

आ० टी० । तेषां भगवद्ध्यायिनां किं फलतीति शङ्कामनुभाष्य फलमाह तेषामित्यादिना । समुद्धर्ता सम्यगूर्ध्वं नेता ज्ञानावष्टम्भदानेनेत्यर्थः । मृत्युरज्ञानं मरणाद्यनर्थहेतुत्वात्तेन कार्यतया युक्तः संसारः ॥ ७ ॥

प० टी० । मद्भक्तानां त्वप्रयासेन प्राप्तिर्भवतीत्याह येत्विति । तथा तेषामिति । मयि आवेशितं प्रवेशितं चित्तं यैस्तेषां पुरुषाणां मृत्युसंसारसागरादहमचिरेण समुद्धर्ता भवामि । मृत्युः संसरणं संसारो जन्म । एवं जन्ममरणरूपात्सागरात् । तेषां केषां, ये तु सर्वाणि कर्माणि मयि संन्यस्य समर्प्य मत्परा मदेकनिष्ठाः सन्तः न विद्यतेऽन्यो भजनीयो यस्मिन्नित्यनन्ययोगस्तेन मां ध्यायन्त उपासते उपासनां कुर्वते तेषामिति । अत्रायमर्थः—दुःसाध्यं कर्माश्रयं विना न सिध्यति । यथा तरणाभ्यासवतोऽपि बाहुभ्यां भागीरथीं तितीर्षोस्तुम्बिकाश्रयेण भवितव्यम्, अन्यथा श्रान्तहस्तपादःसन् मध्य एव निमज्जति । एवं कर्मयोगज्ञानवानपि मदाश्रयं विना ब्रह्मसायुज्यं न प्राप्नोति, यतः सिध्यादिविक्षेपशतैः पुनर्निवर्तते । तदुक्तं महापुराणे—'तथा न ते माधव तावकाः कचिद्भ्रश्यन्ति. मार्गात्त्वयि बद्धसौहृदाः । त्वयाभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्धसु प्रभो' इत्यादि ॥ ६ ॥ ७ ॥

**मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ॥**
**निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८ ॥**

यत एवं तस्मात् मय्येवेति । मय्येव विश्वरूप ईश्वरे मनः संकल्पविकल्पात्मकमाधत्स्व स्थापय मय्येव व्यवसायं कुर्वतीं बुद्धिमाधत्स्व निवेशय ततस्तेन किं

स्यादिति शृणु निवसिष्यसि निवत्स्यसि निश्चयेन मदात्मना मयि निवासं करिष्यस्येवातः शरीरपातादूर्ध्वं न संशयः संशयोऽत्र न कर्तव्यः ॥ ८ ॥

आ० टी० । भगवदुपासना विशिष्टफलेत्येवं यतः सिद्धमतो भगवन्निष्ठायां प्रयतितव्यमित्याह यत इति । असंहिताकरणं श्लोकपूरणार्थम् । मनोबुद्ध्योर्भगवत्यवस्थापने प्रश्नपूर्वकं फलमाह तत इति । भगवन्निष्ठस्य तत्प्राप्तौ प्रतिबन्धाभावं सूचयति संशयोऽत्रेति ॥ ८ ॥

प० टी० । यद्येवं तर्हि मय्येवेति । संकल्पविकल्पात्मकं मनो मय्येवाधत्स्व स्थिरीकुरु । तथा बुद्धिं व्यवसायात्मिकां मयि निवेशय प्रवेशय । अत ऊर्ध्वमतोऽनन्तरं मय्येव निवसिष्यसि मदाकारो भविष्यसि । तदुक्तम्–'चेतो मत्तमतंगजं मदभरभ्रान्तं भ्रमन्तं दिशो दुःसंकल्पविकल्पदन्तदलितप्रोद्दामधैर्यद्रुमम् । उद्यद्गाढतरप्रबोधनिगडं भूयः समाक्रामितुं धात्रा योजितमद्भुतं नरहरेरालानमङ्घ्रिद्वयम्' ॥ ८ ॥

**अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ॥**
**अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९ ॥**

अथेति । अथैवं यथावोचाम तथा मयि चित्तं समाधातुं स्थापयितुं स्थिरमचलं कर्तुं न शक्नोषि चेत्ततः पश्चादभ्यासयोगेन चित्तस्यैकस्मिन्नालम्बने सर्वतः समाहृत्य पुनः पुनः स्थापनमभ्यासस्तत्पूर्वको योगः समाधानलक्षणस्तेनाभ्यासयोगेन मां विश्वरूपमिच्छ प्रार्थयस्वाप्तुं प्राप्तुं हे धनंजय ॥ ९ ॥

आ० टी० । तत्प्रदर्शनपूर्वकं भगवत्प्राप्तावुपायान्तरमाह अथेत्यादिना ॥ ९ ॥

प० टी० । अथोक्तोपायाशक्तत्वे पुनरुपायान्तरमाह अथेति । अथ मयि चित्तं स्थिरं निश्चलं समाधातुं कर्तुं न शक्नोषि तर्हि मत्याहृत्य मदनुस्मरणरूपोऽभ्यासस्तेन मामाप्तुं प्राप्तुमिच्छ प्रयत्नं कुरु ॥ ९ ॥

**अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ॥**
**मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ १० ॥**

अभ्यासेऽपीति । अभ्यासेऽप्यसमर्थोऽस्यशक्तोऽसि तर्हि मत्कर्मपरमो भव मदर्थं कर्म मत्कर्म तत्परमो भव मत्कर्मप्रधान इत्यर्थः । अभ्यासेन विना मदर्थमपि कर्माणि केवलं कुर्वन् सिद्धिं सत्त्वशुद्धिं योगं ज्ञानप्राप्तिद्वारेणावाप्स्यसि ॥ १० ॥

आ० टी० । एकमालम्बनं स्थूलं प्रतिमादिसमाधानं ततोऽभ्यन्तरे विश्वरूपे चित्तैकाग्र्यं द्वैताभिनिवेशादभ्यासाधीने योगेऽपि सामर्थ्याभावे पुनरुपायान्तरमाह अभ्यासेऽपीति । अभ्यासयोगेन विना भगवदर्थं कर्माणि कुर्वाणस्य किं स्यादित्याशङ्क्याह अभ्यासेनेति । सिद्धिर्ब्रह्मभावः । अपिरिहावधिसूचनार्थः ॥ १० ॥

प० टी० । यदि पुनः अभ्यास इति । मदनुस्मरणरूपेऽभ्यासे यद्यसमर्थोऽसि तर्हि मदर्थं यानि कर्माणि तपोदानव्रतादीनि तान्येव परमं यस्य तदेकनिष्ठो भव । एवं विधानि कर्माणि मदर्थं कुर्वन्नपि सिद्धिं प्राप्स्यसि ॥ १० ॥

**अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ॥**
**सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥**

अथैतदिति । अथ पुनरेतदपि यदुक्तं मत्कर्मपरमत्वं तत् कर्तुमशक्तोऽसि मद्योगमास्थितो मयि क्रियमाणानि कर्माणि संन्यस्य यत्करणं तेषामनुष्ठानं मद्योगस्तमाश्रितः सन् सर्वकर्मफलत्यागं सर्वेषां कर्मणां फलसंन्यासं सर्वकर्मफलत्यागं ततोऽनन्तरं कुरु यतात्मवान् सन्नित्यर्थः[१] ॥ ११ ॥

आ० टी० । भगवत्कर्मपरत्वमप्यशक्यमिति शङ्कते अथेति । बहिर्विषयाकृष्टचेतस्त्वादित्यर्थः । तर्हि भगवत्प्राप्त्युपायत्वेन संयताचित्तो भूत्वा कर्मफलसंन्यासं कुर्वित्याह मद्योगमिति ॥ ११ ॥

प० टी० । यदि पुनः अथेति । यद्येतदपि कर्तुमशक्तोऽसि तर्हि मद्योगं मदेकशरणत्वमास्थित आश्रितः सन् सर्वेषामावश्यकानां कर्मणां फलानि नियतचित्तो भूत्वा परित्यज । अत्रैतदुक्तं भवति । मया तावदीश्वरप्रेरणया यथाशक्ति कर्माणि कर्तव्यानि फलं पुनर्दृष्टमदृष्टं वा परमेश्वराधीनोऽहमित्येवं मयि भारमारोप्य फलाभिलाषं परित्यज्य वर्तमानो मत्प्रसादात्कृतार्थो भविष्यसि ॥ ११ ॥

**श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ॥**
**ध्यानात् कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १२ ॥**

इदानीं सर्वकर्मफलत्यागं स्तौति श्रेयो हि प्रशस्यतरं ज्ञानं कस्मादविवेकपूर्वकादभ्यासात्तस्मादपि ज्ञानाज् ज्ञानपूर्वकं ध्यानं विशिष्यते ज्ञानवतो ध्यानादपि कर्मफलत्यागो विशिष्यत इत्यनुषज्यते । एवं कर्मफलत्यागात् पूर्वं विशेषणवतः शान्तिरुपशमः सहेतुकस्य संसारस्यानन्तरमेव स्यान्नतु कालान्तरमपेक्षतेऽज्ञस्य कर्मणि प्रवृत्तस्य पूर्वोपदिष्टोपायानुष्ठानाशक्तौ सर्वकर्मणां फलत्यागः श्रेयःसाधनमुपदिष्टं न प्रथममेवातश्च श्रेयो हि ज्ञानमभ्यासादुत्तरोत्तरविशिष्टत्वोपदेशेन सर्वकर्मफलत्यागः स्तूयते संपन्नसाधनानुष्ठानाशक्तावनुष्ठेयत्वेन श्रुतत्वात् केन साधर्म्येण स्तुतिः "यदा सर्वे प्रमुच्यन्ते" इति सर्वकामप्रहाणादमृतत्वमुक्तं तत्प्रसिद्धं कामाश्च सर्वे श्रौतस्मार्तसर्वकर्मणां फलानि तत्त्यागे च विदुषो ध्याननिष्ठस्यानन्तरैव शान्तिरिति सर्वकामत्यागसामान्यं

१ संयतचित्तः सन्नितीहार्थः—पा० लि० ।

सर्वकर्मफलत्यागस्यास्तीति तत्सामान्यात् सर्वकर्मफलत्यागस्तुतिरियं प्ररोचनार्था[1]। यथागस्त्येन ब्राह्मणेन समुद्रः पीत इदानींतना अपि ब्राह्मणा ब्राह्मणत्वसामान्यात् स्तूयन्ते एवं कर्मफलत्यागात् कर्मयोगस्य श्रेयःसाधनत्वमभिहितम्। अत्र चात्मेश्वरभेदमाश्रित्य विश्वरूप ईश्वरे चेतःसमाधानलक्षणो योग उक्त ईश्वरार्थं कर्मानुष्ठानादि च 'अथैतदप्यशक्तोऽसि' इत्यज्ञानकार्यसूचनान्नाभेददर्शिनोऽक्षरोपासकस्य कर्मयोग उपपद्यते इति दर्शयति, तथा कर्मयोगिनोऽक्षरोपासनानुपपत्तिं दर्शयति भगवान् 'ते प्राप्नुवन्ति मामेव' इत्यक्षरोपासकानां कैवल्यप्राप्तौ स्वातन्त्र्यमुक्त्वेतरेषां पारतन्त्र्यमीश्वराधीनतां दर्शितवांस्तेषामहं समुद्धर्तेति। यदि हीश्वरस्यात्मभूतास्ते मता अभेददर्शित्वादक्षररूपा एव ते इति समुद्धरणकर्मवचनं तान् प्रत्यपेशलं स्याद्यस्माच्चार्जुनस्यात्यन्तमेव हितैषी भगवांस्तस्य सम्यग्दर्शनान्वितं कर्मयोगं भेददृष्टिमन्तमेवोपदिशति न चात्मानमीश्वरं प्रमाणतो बुद्ध्वा कस्यचिद् गुणभावं जिगमिषति कश्चित् विरोधात्, तस्मादक्षरोपासकानां सम्यग्दर्शननिष्ठानां संन्यासिनां त्यक्तसर्वैषणानाम् 'अद्वेष्टा सर्वभूतानाम्' इत्यादिधर्मपूगं साक्षादमृतत्वकारणं वक्ष्यामीति प्रवर्तते॥ १२ ॥

**आ० टी०** । उत्तरश्लोकतात्पर्यमाह **इदानीमिति** । ज्ञानं शब्दयुक्तिभ्यामात्मनिश्चयः, अभ्यासो ज्ञानार्थश्रवणाभ्यासो निश्चयपूर्वको ध्यानाभ्यासो वा तस्य विशिष्यमाणत्वे साक्षात्कारो हेतुस्त्यागस्य विशिष्टत्वे हेतुमाह **एवमिति** । क्षीणात् भगवानिति तस्मिन् कर्मसंन्यासपूर्वकमित्यर्थः । पूर्वविशेषणवतो नियतचित्तस्य पुंसो यथोक्तत्यागादित्यर्थः । अनन्तरमेवेत्युक्तं व्यनक्ति **न त्विति** । न तु कर्मफलत्यागस्य सद्यः शान्तिकरत्वे सम्यग्धीरेव तथेति श्रुतिस्मृतिप्रसिद्धिर्विरुध्येत तत्राह **अज्ञस्येति** । दीर्घेण कालेनादरनैरन्तर्यानुष्ठिताद्ध्यानाद्वस्तुसाक्षात्कारद्वारा संसारदुःखोपशान्तेस्तथाविधाद्ध्यानात्त्यागस्य विशिष्टत्वोक्तेस्तदीयस्तुतिरत्रेष्टेत्याह **अतश्चेति** । तत्र हेतुमाह **संपन्नेति** । संपन्नानि प्राप्तानि साधनान्यक्षरोपासनादीनि तेषां मध्ये पूर्वपूर्वस्यानुष्ठानाशक्तावुत्तरोत्तरस्यानुष्ठेयत्वेनोपदेशात्त्यागे चोपदेशपर्यवसानादित्यर्थः । त्यागे विशिष्टत्ववचनस्य केन स्वधर्मेण तं प्रति स्तुतित्वमिति पृच्छति **केनेति** । उत्तरमाह **यदेति** । अमृतत्वमुक्तम् अथ मर्त्यो मृतो भवतीति शेषादिति शेषः । कामप्रहाणस्यामृतत्वार्थत्वमथाकामयमान इत्यादावपि सिद्धमित्याह **तदिति** । कामत्यागस्यामृतत्वहेतुत्वेऽपि कथं कर्मफलत्यागस्य तद्धेतुत्वमित्याशङ्क्याह **कामाश्चेति** । कर्मफलत्यागादेव शान्तिश्चेज् ज्ञाननिष्ठोपेक्षितेत्याशङ्क्याह **तत्त्यागे चेति** । तथापि कथमज्ञस्य कर्मफलत्यागस्तुतिरित्याशङ्क्याह **इति सर्वेति** । विद्यावतस्त्यागवदविद्वत्त्यागस्यापि त्यागत्वाविशेषाद्विशिष्टत्वोक्तिर्युक्तेति स्तुतिमुपसंहरति **इति तत्सामान्यादिति** । किमर्था स्तुतिरित्याशङ्क्य त्यागे रुचिमुत्पाद्य प्रवर्तयितुमित्याह **प्ररोचनार्थेति** । त्यागस्तुतिं दृष्टान्तेन स्पष्टयति **यथेति** । फलत्यागः श्रेयोहेतुश्चेत् कर्मत्यागादपि फलत्यागसिद्धेरलं कर्मानुष्ठानेनेत्याशङ्क्याह **एवं कर्मेति** । फलाभिलाषं त्यक्त्वा कर्मानुष्ठानस्यार्पितस्येश्वरे श्रेयोहेतुतया विवक्षितत्वान्नानुष्ठानानर्थक्यमित्यर्थः ।

---

१ बोधनार्था—पा० लि० ।

संप्रत्यद्वेष्टेत्याद्यवतारयितुं वृत्तं कीर्तयति **अत्र चेति** । तयोश्चेदात्यन्तिकोऽभेदो न तर्हीश्वरे मनःसमाधानरूपो योगोऽत्यन्ताभेदे ध्यातृध्येयत्वाभावात् न चात्यन्ताभेदे कर्मानुष्ठानं तत्फलत्यागो वा परस्परं तद्योगादित्यर्थः । भगवदुक्तिसामर्थ्यादपि कर्मयोगादिना भेददृष्टिमतो भवतीत्याह **अथेति** । अक्षरोपासकस्य कर्मयोगायोगवत् कर्मयोगिनोऽक्षरोपासनानुपपत्तिरपि दर्शितेत्याह **तथेति** । अक्षरोपासकाः सम्यग्धीनिष्ठा यथाज्ञानं भगवन्तमेवाप्नुवन्ति न तथा कर्मिणः साक्षात्तदाप्ता अपि ते तथा च कर्मिणो नाक्षरोपासनसिद्धिरित्यर्थः । इतश्चाक्षरोपासनं कर्मानुष्ठानं न चैकत्र युक्तमित्याह **अक्षरेति** । नन्वक्षरोपासकवदन्येषामपीश्वरात्मताविशेषात् कुतस्तदधीनत्वं तत्राह **यदीति** । कर्मयोगस्याक्षरोपास्तेश्च युगपदेकत्रायोगे हेत्वन्तरमाह **यस्माच्चेति** । कुरु कर्मैवेत्यादाविति शेषः । किंचाक्षरोपासको वाक्यादीश्वरमात्मानं चेति नासौ क्रियायां गुणत्वेन कर्तृत्वमनुभवति गुणत्वेश्वरत्वयोरेकत्र व्याघातादतोऽपि नाक्षरोपासनं कर्मानुष्ठानं चैकत्र युक्तमित्याह **न चेति** । अक्षरोपास्तिकर्मयोगयोरेकत्रायोगे फलितमाह **तस्मादिति** । अज्ञानां कर्मिणां वक्ष्यमाणधर्मजातस्य साकल्येनायोगादक्षरनिष्ठानामेवेदमुच्यतेऽविरुद्धांशस्य तु सर्वार्थत्वमिष्टमेवेत्यर्थः ॥ १२ ॥

**प० टी०** । अथ फलत्यागप्रशंसामाह **श्रेय इति** । केवलं करचरणव्यापाररूपादभ्यासात्सम्यग् ज्ञानं श्रेयः श्रेष्ठं तस्मादपि भक्तिपूर्वकं ध्यानं निर्विषयैकाग्र्यं विशिष्यते तस्मात्कर्मफलत्यागः स्वत एवोपरमात्कर्मफलराहित्यम् । तस्माच्छान्तिः सर्वोपरमतो मत्प्रसादात्परात्मसुखम् ॥ १२ ॥

## अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ॥
## निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥

अद्वेष्टेति । अद्वेष्टा सर्वभूतानां न द्वेष्टात्मनो दुःखहेतुमपि न किंचिद्द्वेष्टि सर्वाणि भूतान्यात्मत्वेन हि यस्मात्पश्यति मित्रभावो मैत्री मित्रतया वा वर्तते इति मैत्रः करुण एव च करुणा कृपा दुःखितेषु दया तद्वान् करुणः सर्वभूताभयप्रदः संन्यासीत्यर्थः । निर्ममो ममेति प्रत्ययवर्जितो निरहंकारो निर्गताहंप्रत्ययः । समदुःखेति । समदुःखसुखः समे दुःखसुखे द्वेषरागयोरप्रवर्तके यस्य समदुःखसुखः क्षमी क्षमावानाक्रुष्टोऽभिहतो वाविक्रिय एवास्ते ॥ १३ ॥

**आ० टी०** । सर्वेषां भूतानां मध्ये यो दुःखहेतुस्तं विद्वानपि द्वेष्टयेवेत्याशङ्क्याह **आत्मन इति** । तत्र हेतुः **सर्वाणीति** । सर्वभूतानामित्युभयतः संबध्यते, ममप्रत्ययवर्जितो देहेऽपीति शेषः, व्रतस्वाध्यायकृताहंकारः । निष्क्रान्तत्वमाह **निर्गतेति** ॥ १३ ॥

**प० टी०** । अथ प्रसादजनकान् धर्मानाह **अद्वेष्टेत्यष्टभिः** । तत्रापि प्रथमं युग्मम् । सर्वभूतानामद्वेष्टा द्वेषशून्यस्तर्ह्युदासीनः स्यादित्याह **मैत्र इति** । तत्रोत्तमानामतिपूज्यत्वेनाप्रसक्तेः समेषु मैत्रः अपकृष्टेषु करुणः एवं सति तेषु निर्ममो ममताशून्यः तथा सत्यहङ्कारशून्यः किं च समे सुखदुःखे यस्य क्षमी क्षमावान् ॥ १३ ॥

## संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ॥
## मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४ ॥

संतुष्ट इति । संतुष्टः सततं नित्यं देहस्थितिकारणस्य लाभे चोत्पन्नालंप्रत्ययस्तथा गुणवल्लाभे विपर्यये च संतुष्टः सततं योगी समाहितचित्तो यतात्मा संयतस्वभावो दृढनिश्चयो दृढः स्थिरो निश्चयोऽध्यवसायो यस्यात्मतत्त्वविषये स दृढनिश्चयो मय्यर्पितमनोबुद्धिः संकल्पात्मकं मनोऽध्यवसायलक्षणा बुद्धिस्ते मय्येवार्पिते स्थापिते मनोबुद्धी यस्य संन्यासिनः स मय्यर्पितमनोबुद्धिर्य ईदृशो मद्भक्तः स मे प्रियः ॥ १४ ॥

आ० टी० । अक्षरोपासकस्याज्ञानतो विशेषणान्तराण्याह **संतुष्ट इति** । सततमिति सर्वत्र संबध्यते, कार्यकरणसङ्घातः स्वभावशब्दार्थः, स्थिरत्वं कुतर्कादिनानभिभवनीयत्वं, मद्भक्तो मद्भजनपरो ज्ञानवानिति यावत् ॥ १४ ॥

प० टी० । **संतुष्ट इति** । सततं निरन्तरं लाभेऽलाभे वा संतुष्टः प्रसन्नचित्तः योगी अप्रमत्तो यतात्मा संयतचित्तः दृढः अचलः मद्विषयो निश्चयो यस्य मयि अर्पिते मनोबुद्धी यस्य एवंविधो यो मद्भक्तः स मे प्रियः सखा ॥ १४ ॥

**यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ॥**
**हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥**

प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय इति सप्तमेऽध्याये सूचितं तदिह प्रपञ्च्यते यस्मादिति । यस्मात् संन्यासिनो नोद्विजते नोद्वेगं गच्छति न संतप्यते न संक्षुभ्यते लोको लोकान्नोद्विजते च यः हर्षामर्षभयोद्वेगैः हर्षश्चामर्षश्च भयं चोद्वेगश्च तैर्हर्षामर्षभयोद्वेगैर्मुक्तो हर्षः प्रियलाभेऽन्तःकरणस्योत्कर्षो रोमाञ्चनाश्रुपातादिलिङ्गः, तथामर्षोऽभिलषितप्रतिघातेऽ[1]सहिष्णुता भयं त्रास उद्वेग उद्विग्नता तैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥

आ० टी० । ज्ञानवतो भगवत्प्रियत्वे प्रमाणमाह **प्रियो हीति** । किमर्थं तर्हि पुनरुच्यते तत्राह **तदिति** । उद्वेगादिराहित्यमपि ज्ञानवतो विशेषणमित्याह **यस्मादिति** । न केवलमुद्वेगं प्रत्यपादानत्वमेव संन्यासिनो नानुपपन्नं किं तु तत्कर्तृत्वमपीत्याह **तथेति** । असहिष्णुता परकीयप्रकर्षस्येति शेषः । त्रासस्तस्करादिदर्शनाधीनः, उद्विग्नत्वमचेतनाचेतनाधीनस्य लोकादिति यावत् ॥ १५ ॥

प० टी० । किं च **यस्मादिति** । स मे प्रिय इत्युक्ते स कः यस्माल्लोको नोद्विजते सर्वभूतेष्वीश्वराधिष्ठानान्वीक्षणात् तदुक्तम्–'नोन्मत्तात्पिशुनाज्जनाद्विरमते सर्वात्मभूतः पुमांस्तस्मात्सर्वसुहृत्तमादपि जनो नाशङ्कते कश्चन । अत्युग्रैर्जलजन्तुभिर्जलनिधिर्नैवाधिमेतिक्षणं नो यादांसि भजन्ति भीतिमुदधेरत्युर्जितात्सर्वतः' इति । किं च हर्षामर्षभयोद्वेगैर्यो मुक्तः हर्षः स्वार्थलाभ उत्साहः, अमर्षः परलाभे असहमानत्वम्, भयं त्रासः उद्वेगो भयादिनिमित्तचित्तक्षोभः ॥ १५ ॥

---

१ अभिलषितप्रतिघाते, लि. पु. नास्ति.

प्रपञ्चयति **कथमित्यादिना** । संभवः सत्ताप्रापको हेतुः । प्रकृतेरनादित्वे विकाराणां गुणानां च तत्कार्यत्वादात्मनो निर्विकारत्वं निर्गुणत्वं च सिध्यतीति भावः ॥ १९ ॥

**प० टी०** । तदेवं क्षेत्रं यच्चयादृक्चेत्येतावत्प्रपञ्चितमिदानीं यद्विकारि यतश्च यत् स च यो यत्प्रभावश्चैवं पूर्वप्रतिज्ञातमेव प्रकृतिपुरुषयोः संसारहेतुत्वकथनेन प्रपञ्चयति **प्रकृतिमिति** । संसारहेतुभूतयोः प्रकृतिपुरुषयोः सादित्वेन तयोरपि प्रकृत्यन्तरेण भाव्यमित्यनवस्थापत्तिः स्यादतस्तावुभावप्यनादी विद्धि । तयोः सादित्वं कल्पशतैरपि वक्तुं न शक्यते । "आनीतवातं स्वधया तदेकमि" त्यादिश्रुतिभिर्भूतार्थस्यैवोक्तत्वात् । अथ जगत्प्रादुर्भावहेतुत्वं प्रकटयति **विकारानिति** । विकारान् देहेन्द्रियादीन् गुणांश्च सत्त्वादिपरिणामान् सुखदुःखमोहादीन् प्रकृतेः संभूतान् विद्धि ॥१९॥

**कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते ॥**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥**

के पुनस्ते विकारा गुणाश्च प्रकृतिसंभवाः कार्येति । कार्यकरणकर्तृत्वे कार्यं शरीरं करणानि तत्स्थानि त्रयोदशदेहस्यारम्भकाणि भूतानि विषयाश्च प्रकृतिसंभवा विकाराः पूर्वोक्ता इह कार्यग्रहणेन गृह्यन्ते गुणाश्च प्रकृतिसंभवाः सुखदुःखमोहात्मकाः करणाश्रयत्वात् करणग्रहणेन गृह्यन्ते तेषां कार्यकरणानां कर्तृत्वमुत्पादकत्वं यत्तत्कार्यकरणकर्तृत्वं तस्मिन् कार्यकरणकर्तृत्वे हेतुः कारणमारम्भकत्वेन प्रकृतिरुच्यते एवं कार्यकरणकर्तृत्वेन संसारस्य करणं प्रकृतिः, कार्यकारण कर्तृत्व इत्यस्मिन्नपि पाठे कार्यं यद्यस्य विपरिणामस्तस्य कार्यं विकारो विकारि कारणं तयोर्विकारविकारिणोः कार्यकारणयोः कर्तृत्व इति तान्येव कार्यकारणान्युच्यन्ते, अथवा षोडशविकाराः कार्यं सप्त प्रकृतिविकृतयः कारणं तान्येव कार्यकारणान्युच्यन्ते तेषां कर्तृत्वे हेतुः प्रकृतिरुच्यते आरम्भकत्वेनैव पुरुषश्च संसारस्य कारणं यथा स्यात्तदुच्यते पुरुषो जीवः क्षेत्रज्ञो भोक्तेति पर्यायः सुखदुःखानां भोग्यानां भोक्तृत्वे उपलब्धृत्वे हेतुरुच्यते, कथं पुनरनेन कार्यकारणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च प्रकृतिपुरुषयोः संसारकारणत्वमुच्यते इत्यत्रोच्यते कार्यकारणसुखदुःखरूपेण हेतुफलात्मना प्रकृतेः परिणामाभावे पुरुषस्य चैतन्यस्यासति तदुपलब्धृत्वे कुतः संसारः स्याद् यदा पुनः कार्यकारणहेतुफलात्मना परिणतया तया प्रकृत्या भोग्यया पुरुषस्य तद्विपरीतस्य भोक्तृत्वेनाविद्यारूपः संयोगः स्यात्तदा संसारः स्यादित्यतो यत् प्रकृतिपुरुषयोः कार्यकारणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च संसारकारणत्वमुक्तं तद्युक्तमुक्तम् । कः पुनरयं संसारो नाम, सुखदुःखसंभोगः संसारः पुरुषस्य च सुखदुःखानां संभोक्तृत्वं संसारित्वमिति ॥ २० ॥

आ० टी० । विकाराणां गुणानां प्रकृतेश्च स्वरूपमाकाङ्क्षाद्वारा निर्णेतुमुत्तरश्लोकपूर्वार्धं पातयति **के पुनरिति** । पुरुषस्यानादित्वकृतबन्धहेतुत्वमाह **पुरुष इति** । पूर्वार्धं व्याचष्टे **कार्यमित्यादिना** । ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं मनो बुद्धिरहङ्कारश्चेति त्रयोदशकरणानि । तथापि भूतानां विषयाणां च ग्रहणात् कथं तेषां प्रकृतिकार्यतेत्याशङ्क्याह **देहेति** । तथापि गुणानामिहाग्रहणान्न प्रकृतिकार्यत्वं तत्राह **गुणाश्चेति** । उक्तरीत्या निष्पन्नमर्थमाह **एवमिति** । पाठान्तरमनूद्य व्याख्यापूर्वकमर्थभेदमाह **कार्येत्यादिना** । व्याख्यान्तरमाह **अथवेति** । एकादशेन्द्रियाणि पञ्च विषया इति षोडशसंख्यकविकारोऽत्र कार्यशब्दार्थः महदहङ्कारो भूततन्मात्राणीति प्रकृतिविकृतयः सप्त कारणं, तेषामारम्भकत्वेन कर्तृत्वेन हेतुराश्रयो मूलप्रकृतिरित्यर्थः । उत्तरार्धस्य तात्पर्यमाह **पुरुषश्चेति** । तस्य परमात्मत्वं व्यवच्छिनत्ति **जीव इति** । तस्य प्राणधारणनिमित्तस्य तदर्थश्चेतनमाह **क्षेत्रज्ञ इति** । तस्यानौपाधिकत्वं वारयति **भोक्तेति** । तयोः संसारकारणत्वमुपपादयितुं **शङ्कते कथमिति** । अन्वयव्यतिरेकाभ्यां तयोस्तथात्वमित्याह **अतेति** । तत्र व्यतिरेकं दर्शयति **कार्येति** । न हि नित्यमुक्तस्यात्मनः स्वतः संसारोऽस्तीत्यर्थः । इदानीमन्वयमाह **यदेति** । अन्वयादिफलमुपसंहरति **अत इति** । आत्मनोऽविक्रियस्य संसरणं नोचितमित्याक्षिपति **कः पुनरिति** । सुखदुःखान्यतरसाक्षात्कारो भोगः स चाविक्रियस्यैव द्रष्टुः संसारस्तथाविधं भोक्तृत्वमस्य संसारित्वमित्युत्तरमाह **सुखेति** । श्लोकव्याख्यासमाप्तावितिशब्दः ॥ २० ॥

प० टी० । अथ पुरुषस्यापि तथात्वं दर्शयति **कार्यकारणेति** । पुरुषो जीवस्तत्कृतसुखदुःखादिकार्यं शरीरं कारणानि सुखदुःखानि साधनानीन्द्रियाणि तेषां कर्तृत्वे तदाकारपरिणामे प्रकृतिर्हेतुः पुरुषस्तुसुखदुःखानां भोक्तृत्वे हेतुः । अयं भावः । यद्यप्यचेतनायाः प्रकृतेः स्वतः कर्तृत्वं न संभवति तथा पुरुषस्याप्यविकारिणो भोक्तृत्वं न संभवति तथा कर्तृत्वं नाम क्रियानिर्वर्तकत्वं तच्चचेतनस्यापि चेतनादृष्टवशात्संभवति । यथाग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्प्लवनं वत्सादृष्टात्स्तन्यपयसः क्षरणमित्यादि । अतः पुरुषसंनिधानात् प्रकृतेः कर्तृत्वमुच्यते भोक्तृत्वं सुखदुःखसंवेदनं तच्च चेतनाधर्म एवेति प्रकृतिसंनिधानात् पुरुषस्य भोक्तृत्वमिति ॥ २० ॥

## पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ॥
## कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥

यत् पुरुषस्य सुखदुःखानां भोक्तृत्वं संसारित्वमित्युक्तं तस्य तत् किंनिमित्तमित्युच्यते पुरुष इति । पुरुषो भोक्ता प्रकृतिस्थः प्रकृतावविद्यालक्षणायां कार्यकारणरूपेण परिणतायां स्थितः प्रकृतिस्थः प्रकृतिमात्मत्वेन गत इत्येवं हि यस्मात् तस्माद् भुङ्क्ते उपलभत इत्यर्थः। प्रकृतिजान् प्रकृतितो जातान् सुखदुःखमोहाकाराभिव्यक्तान् गुणान् सुखी दुःखी मूढः पण्डितोऽहमित्येवं सत्यामप्यविद्यायां सुखदुःखमोहेषु गुणेषु भुज्यमानेषु यः सङ्ग आत्मभावः संसारस्य स प्रधानकारणं जन्मनः“ स यथा कामो भवति तत्क्रतुर्भवति” इत्यादिश्रुतेस्तदेतदाह कारणं हेतुर्गुणसंगो गुणेषु सङ्गोऽस्य भोक्तुः, सदसद्योनिजन्मसु सत-

---

१ संख्याको विकारोऽत्र--पा० क्वचित् ।

श्चासतश्च योनयः सदसद्योनयस्तासु सदसद्योनिषु जन्मानि तानि सदसद्योनिजन्मानि तेषु सदसद्योनिजन्मसु विषयभूतेषु कारणं गुणसङ्गोऽथ वा सदसद्योनिजन्मस्वस्य संसारस्य कारणं गुणसङ्ग इति संसारपदमध्याहार्यम्। सद्योनयो देवादियोनयोऽसद्योनयः पश्वादियोनयः सामर्थ्यात् सदसद्योनयो मनुष्ययोनयोऽप्यविरुद्धा द्रष्टव्याः। एतदुक्तं भवति प्रकृतिस्थत्वाख्याविद्यागुणेषु च सङ्गः कामः संसारस्य कारणमिति, तच्च परिवर्जनायोच्यते, अस्य च निवृत्तिकारणं ज्ञानवैराग्ये ससंन्यासे गीताशास्त्रे प्रसिद्धं तच्च ज्ञानं पुरस्तादुपन्यस्तं क्षेत्रक्षेत्रज्ञविषयं यज् ज्ञात्वामृतमश्नुत इत्युक्तं चान्यापोहेनातद्धर्माध्यारोपेण च ॥ २१ ॥

आ० टी०। श्लोकान्तरं प्रश्नोत्तरत्वेनावतारयति **यदिति**। निमित्तं वक्तुमादौ संसारित्वमस्याविद्यैक्याध्यासादित्याह **पुरुष इति**। यस्मात् प्रकृतिमात्मत्वेन गतस्तस्माद्भुङ्क्त इति योजना। गुणविषयं भोगमभिनयति **सुखीति**। अविद्याया भोगहेतुत्वात् किं कारणान्वेषणयेत्याशङ्क्याह **सत्यामपीति**। सङ्गस्य जन्मादौ संसारे प्रधानहेतुत्वे मानमाह **स यथेति**। उक्तेऽर्थे द्वितीयार्धमवतार्य व्याचष्टे **तदेतदित्यादिना**। साध्याहारं योजनान्तरमाह **अथवेति**। सदसद्योनीर्विविच्य व्याचष्टे **सद्योनय इति**। योनिद्वयनिर्देशान्मध्यवर्तिन्यो मनुष्ययोनयोऽपि ध्वनिता इत्याह **सामर्थ्यादिति**। सङ्गस्य संसारकारणत्वे नाविद्यायास्तत्कारणत्वमेकस्मादेव हेतोस्तदुपपत्तेरित्याशङ्क्याह **एतदिति**। अविद्योपादानं सङ्गो निमित्तमित्युभयोरपि कारणत्वं सिध्यतीत्यर्थः। द्विविधहेतूक्तेर्विवक्षितं फलमाह **तच्चेति**। साङ्गस्याज्ञानस्य स्वतोनिवृत्तेस्तन्निवर्तकं वाच्यमित्याशङ्क्याह **अस्येति**। वैराग्ये सति संन्यासस्तत्पूर्वकं च ज्ञानं साङ्गज्ञाननिवर्तकमित्यर्थः। उक्ते ज्ञाने मानमाह **गीतेति**। अध्यायादौ चोक्तं ज्ञानमुदाहृतमित्याह **तच्चेति**। तदेव ज्ञानं यज्ज्ञात्वेत्यादिना न सत्तन्नासदित्यन्तेनान्यनिषेधेन सर्वतः पाणिपादमित्यादिना चातद्धर्माध्यासेनोक्तमित्याह **यज् ज्ञात्वेति**॥२१॥

प० टी०। तथाप्यकारणं जन्मरहितस्य भोक्तृत्वं कथमित्याह **पुरुष इति**। हि यस्मात् कारणात् प्रकृतिस्थस्तत्कार्ये देहे स्थितोऽतस्तज्जनितान् सुखदुःखादीन् भुङ्क्ते। अस्य च पुरुषस्य सतीषु देवयोनिष्वसतीषु तिर्यगादियोनिषु यानि जन्मानि तेषु गुणसङ्गः शुभाशुभकर्मकारिभिरिन्द्रियैः सङ्गः कारणमित्यर्थः॥ २१ ॥

**उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः॥**
**परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः॥२२॥**

तस्यैव पुनः साक्षान्निर्देशः क्रियते उपद्रष्टेति। उपद्रष्टा समीपस्थः सन् द्रष्टा स्वयमव्यापृतो यथा ऋत्विग्यजमानेषु यज्ञकर्मव्यापृतेषु तटस्थोऽन्योऽव्यापृ-

१ कारणगवेषणया—पा० लि० पु०

तो यज्ञविद्याकुशलः ऋत्विग्यजमानव्यापारगुणदोषाणामीक्षिता तद्वत् कार्यकारणव्यापारेष्वव्यापृतोऽन्यो विलक्षणस्तेषां कार्यकारणानां सव्यापाराणां सामीप्येन द्रष्टृत्वादुपद्रष्टा, अथवा देहचक्षुर्मनोबुद्ध्यात्मानो द्रष्टारस्तेषां बाह्यो द्रष्टा देहस्तत आरभ्यान्तरतमश्च प्रत्यक् समीपे आत्मा द्रष्टा यतः परोऽन्तरो नास्ति द्रष्टा सोऽतिशयसामीप्येन द्रष्टृत्वादुपद्रष्टा स्यात्, यज्ञोपद्रष्टृवद्वा सर्वविषयीकरणादुपद्रष्टानुमन्ता चानुमोदनमनुमननं कुर्वत्सु तत्क्रियासु परितोषस्तत्कर्तानुमन्ता चाथवानुमन्ता कार्यकरणप्रवृत्तिषु स्वयमप्रवृत्तोऽपि प्रवृत्त इव तदनुकूलो विभाव्यते तेनानुमन्ताथवा प्रवृत्तान् स्वव्यापारेषु तत्साक्षिभूतः कदाचिदपि न निवारयतीत्यनुमन्ता, भर्ता भरणं नाम देहेन्द्रियमनोबुद्धीनां संहतानां चैतन्यात्मपरार्थेन निमित्तभूतेन चैतन्याभासानां यत् स्वरूपावधारणं तच्चैतन्यात्मकृतमेवेति भर्तात्मेत्युच्यते भोक्ताग्न्युष्णवन्नित्यचैतन्यस्वरूपेण बुद्धेः सुखदुःखमोहात्मकाः प्रत्ययाः सर्वविषयविषयाश्चैतन्यात्मग्रस्ता इव जायमाना विभक्ता विभाव्यन्त इति भोक्तात्मोच्यते महेश्वरः सर्वात्मत्वाच्च स्वतन्त्रत्वाच्च महान् ईश्वरश्चेति महेश्वरः परमात्मा देहादीनां बुद्ध्यन्तानां प्रत्यगात्मत्वेन कल्पितानामविद्यया परम उपद्रष्टृत्वादिलक्षण आत्मेति परमात्मा सोऽन्तः परमात्मेत्यनेन शब्देन चाप्युक्तः कथितः श्रुतौ, क्वासावस्मिन् देहे पुरुषः परोऽव्यक्तादुत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत इति यो वक्ष्यमाणः 'क्षेत्रज्ञं चापि मां विद्धि' इत्युपन्यस्तो व्याख्यायोपसंहृतश्च तमेतं यथोक्तलक्षणमात्मानम् ॥ २२॥

आ॰ टी॰ । प्रकृतस्यैव मोक्षहेतोर्ज्ञानस्य साक्षान्निर्देशायोत्तरश्लोकमुत्थापयति **तस्येति** । कार्यकारणानां व्यापारवतां समीपे स्थितं संनिधिमात्रेण तेषां साक्षीत्येवमर्थत्वेनोपद्रष्टेति पदं व्याचष्टे **समीपस्थ इति** । लौकिकस्यैव द्रष्टुरस्यापि स्वव्यापाराविष्टतया निष्क्रियत्वविरोधमाशङ्क्याह **स्वयमिति** । स्वव्यापारादृते संनिधिरेव द्रष्टृत्वं **दृष्टान्तेन** स्पष्टयति **यथेति** । उपद्रष्टेत्यस्यार्थान्तरमाह **अथवेति** । बहूनां द्रष्टृत्वेऽपि कस्योपद्रष्टृत्वं तत्राह **तेषामिति** । उपोपसर्गस्य सामीप्यार्थत्वेन प्रत्यगर्थत्वात्तत्रैव सामीप्यावसानात् प्रत्यगात्मा च द्रष्टा चेत्युपद्रष्टा सर्वसाक्षी प्रत्यगात्मेत्यर्थः । उक्तमेव व्यनक्ति **यत इति** । यथा यजमानस्य ऋत्विजां च यज्ञकर्मणि गुणं वा दोषं वा सर्वयज्ञाभिज्ञः सन्नुपद्रष्टा विषयीकरोति तथायमात्मा चिन्मात्रस्वभावः सर्वं गोचरयतीत्युपद्रष्टेति पक्षान्तरमाह **यज्ञेति** । अनुमन्ता चेत्येतद् व्याकरोति **अनुमन्तेति** । ये स्वयं कुर्वन्तो व्यापारयन्तो यावन्ति तेषु कुर्वत्सु सत्सु या तेषां क्रियास्तासु पार्श्वस्थस्य परितोषोऽनुमननं तच्चानुमोदनं तस्य संनिधिमात्रेण कर्ता यः सोऽनुमन्तेत्यर्थः । व्याख्यान्तरमाह **अथवेति** । तदेव स्फुटयति **कार्येति** । अर्थान्तरमाह **अथवेत्यादिना** । भर्तेति पदमादाय भरणं किं नामेति पृच्छति **भर्तेति** । तद्रूपं निरूपयन्नात्मनो भर्तृत्वं साधयति **देहेति** । भोक्तेत्युक्ते क्रियावत्त्वे प्राप्ते भोगश्चिदवसानेति न्यायेन विभजते **अग्नीति** । विशेषणान्तरमादाय व्याचष्टे **महेश्वर इति** । परमात्मत्वमुपपादयति **देहादी-**

नामिति। अविद्यया कल्पितानामिति संबन्धः, परमत्वं प्रकृष्टत्वं, सः पूर्वोक्तविशेषणवानिति यावत्। परमात्मशब्दस्य प्रकृतात्मविषयत्वे श्रुतिमनुकूलयति अत इति। तस्य ताटस्थ्यं प्रश्नद्वारा प्रत्याचष्टे केति। कस्मात् परत्वं तदाह अव्यक्तादिति। तत्रैव वाक्यशेषानुकूल्यमाह उत्तम इति। सोऽस्मिन् देहे परः पुरुष इति संबन्धः। शोधितार्थयोरैक्यज्ञानं प्रागुक्तं फलोक्त्या स्तौति क्षेत्रज्ञं चेति॥ २२॥

प० टी०। तदनेन प्रकारेण प्रकृत्यविवेकादेव पुरुषस्य संसारो न तु स्वरूपत इत्याशयेनाह उपद्रष्टेति। अस्मिन् प्रकृतिकार्ये देहे वर्तमानेऽपि पुरुषः परो भिन्न एव न तद्गुणैर्युज्यत इत्यर्थः। तथानुमन्तानुमोदितैव सन्निधिमात्रेणानुग्राहकः। तथा ऐश्वरेण रूपेण भर्ता विधारक इति चोक्तः। भोक्ता पालक इति च। अत्र शातपथी श्रुतिः–"अदृष्टो द्रष्टाऽश्रुतः श्रोतामतो मन्ताविज्ञातो विज्ञाता नान्योऽस्ति द्रष्टा नान्योऽस्ति श्रोता नान्योऽस्ति मन्ता नान्योऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतोतोन्यदार्तमि"ति। भाष्यम्–अदृष्टो दर्शनायोग्यः सन् द्रष्टा विश्वसाक्षी एवं सर्वत्रतदपेक्षयाऽन्यो द्रष्टा नास्ति नापि श्रोता मन्ता विज्ञातापि एवंविध एषोन्तर्यामी आत्माऽमृतो नित्यमुक्तः अत आत्मनः सकाशादन्यदार्तम्। अन्यदात्मनोविलक्षणं दृश्यजातमार्तं बाधितम्। शुक्तिकारजतवदित्यर्थः। किंभूतो महेश्वरः। महांश्चासावीश्वरश्च ब्रह्मादीनामधिपतिः परमआत्मान्तर्यामी चोक्तः। श्रुतिरपि–"एष भूताधिपतिरेष लोकेश्वर एष लोकपालः" इति। अत्राधिपतिरीश्वर ईश्वरो नियन्ता लोकपालो भर्ता॥२२॥

**य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह॥**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते॥२३॥**

य एवमिति। य एवं यथोक्तप्रकारेण वेत्ति पुरुषं साक्षादात्मभावेनायमहमिति प्रकृतिं च यथोक्तामविद्यालक्षणां गुणैः स्वविकारैः सह निवर्तितामभावमापादितां विद्यया सर्वथा सर्वप्रकारेण वर्तमानोऽपि स भूयः पुनः पतितेऽस्मिन् विद्वच्छरीरे देहान्तराय नाभिजायते नोत्पद्यते देहान्तरं न गृह्णातीत्यर्थः। अपि शब्दात् किमु वक्तव्यं स्ववृत्तस्थो न जायत इत्यभिप्रायः। ननु यद्यपि ज्ञानोत्पत्त्यनन्तरं पुनर्जन्माभाव उक्तस्तथापि प्राग् ज्ञानोत्पत्तेः कृतानां कर्मणामुत्तरकालभाविनां च यानि चातिक्रान्तान्यनेकजन्मकृतानि तेषां फलमदत्त्वा नाशो न युक्त इति स्युस्त्रीणि जन्मानि कृतविप्रनाशो हि न युक्त इति यथा फले प्रवृत्तानामारब्धजन्मनां कर्मणां, न च कर्मणां विशेषोऽवगम्यते तस्मात् त्रिप्रकाराण्यपि कर्माणि त्रीणि जन्मान्यारभेरन् संहतानि वा सर्वाण्येकं जन्मारभेरन् अन्यथा कृतविनाशे सति सर्वत्रानाश्वासप्रसंगः शास्त्रानर्थक्यं च स्यादित्यत इदमयुक्तमुक्तं न स भूयोऽभिजायत इति, न, "क्षीयन्ते चास्य कर्माणि" "ब्रह्म विद् ब्रह्मैव भवति" "तस्य तावदेव चिरमिषीकातूलवत् सर्वकर्माणि प्रदूयन्ते" इत्यादिश्रुतिशतेभ्य उक्तो विदुषः सर्वकर्मदाहः, इहापि चोक्तो यथैधांसीत्यादिना

१ शोधितार्थयोस्तत्त्वंपदार्थयोरैक्यज्ञानं—पा० लि० पु०।

सर्वकर्मदाहो वक्ष्यति चोपपत्तेश्चाविद्याकर्मक्लेशबीजनिमित्तानि हि कर्माणि फलारम्भकाणि जन्मान्तराङ्कुरमारभन्त इहापि च साहङ्काराभिसन्धीनि कर्माणि फलारम्भकाणि नेतराणीति तत्र तत्र भगवतोक्तं 'बीजान्यग्न्युपदग्धानि-न रोहन्ति यथा पुनः। ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः' इति। अस्तु तावज् ज्ञानोत्पत्तेरुत्तरकालकृतानां कर्मणां ज्ञानेन दाहो ज्ञानसहभावित्वात् न त्विह जन्मनि ज्ञानोत्पत्तेः प्राक् कृतानां ज्ञानेन दाहो न त्वतीतानामनेकजन्मान्तर-कृतानां दाहो युक्तः, न सर्वकर्माणीतिविशेषणात्, ज्ञानोत्तरकालभाविनामेव सर्वकर्मणामिति चेन्न, सङ्कोचत्वे कारणानुपपत्तेः, यत्तूक्तं यथा वर्तमानशरीरज-न्मारम्भकाणि कर्माणि न क्षीयन्ते फलदानाय प्रवृत्तान्येव सत्यपि ज्ञाने तथानारब्धफलानामपि कर्मणां क्षयो न युक्त इति तदसत्, कथं तेषां मुक्तेषुवत् प्रवृत्तफलत्वात् यथा पूर्वं लक्ष्यवेधाय मुक्त इषुर्धनुषो लक्ष्यवेधोत्तरकालम-प्यारब्धवेगक्षयात् पतनेनैव निवर्तत एवं शरीरारम्भकं कर्म शरीरस्थितिप्रयोजने निवृत्तेऽप्यासंस्कारवेगक्षयात् पूर्ववद्वर्तत एव यथा स एवेषुः प्रवृत्तिनिमित्तानारब्धवेगस्त्वमुक्तो धनुषि प्रयुक्तोऽप्युपसंह्रियते तथानारब्धफलानि स्वाश्रयस्थान्येव ज्ञानेन निर्बीजीक्रियन्त इति पतितेऽस्मिन् विद्वच्छरीरे 'न स भूयोऽभिजायत' इति युक्तमेवोक्तमिति सिद्धम् ॥ २३ ॥

आ० टी० । **यथोक्तप्रकारेण**, जीवेश्वरादिसर्वकल्पनाधिष्ठानत्वेनेत्यर्थः । साक्षादपरोक्षत्वेनेति यावत्, यथोक्तामनाद्यनिर्वाच्यां सर्वामर्थोपाधिभूतामित्यर्थः। विद्यया प्रागुक्तैकत्वगोचरया प्रकृतिमविद्यारूपां सकार्यामभावमापादितां यो वेत्तीति संबन्धः। सर्वप्रकारेण विहितेव निषेधेन चेत्यर्थः । पुनर्नकारोऽन्वयार्थः । निपातसूचितं न्यायमाह **अपीति** । न स भूयोऽभिजायत इत्युक्तमाक्षिपति **नन्विति** । ज्ञानोत्पत्त्यनन्तरं जन्माभावस्योक्तत्वात् पुनर्देहारम्भमुपेत्य नाक्षेपः स्यादित्याशङ्क्याह **यद्यपीति**। तथापि स्युस्त्रीणि जन्मानीतिसंबन्धः। वर्तमानेदेहे ज्ञानात् पूर्वोत्तरकालीनानां कर्मणां फलमदत्त्वा नाशायोगाज्जन्मद्वयमावश्यकमतीतानेकदेहेष्वपि कृतकर्मणां 'नाभुक्तं क्षीयते कर्म' इत्येव स्मृतेरदत्त्वा फलमनाशादस्ति तृतीयमपि जन्मेत्याह **प्रागिति** । फलदानं विनापि कर्मनाशे दोषमाह **कृतेति** । न युक्त इति कृत्वा फलमदत्त्वा कर्मनाशो नेति शेषः, विमतानि कर्माणि फलमदत्त्वा न क्षीयन्ते वैदिककर्म त्वादारब्धकर्मवदिति मत्वाह **यथेति** । नाशो न ज्ञानादिति शेषः। नन्वनारब्धकर्मणां ज्ञानान्नाशो युक्तोऽप्रवृत्तफलवत्त्वादारब्धकर्मणां तु प्रवृत्तफलवत्त्वेन बलवत्त्वान्न ज्ञानात् तन्निवृत्तिरित्याह **न चेति** । अज्ञानोत्थत्वेन ज्ञानविरोधित्वाविशेषात् प्रवृत्ताप्रवृत्तफलत्वमनुपयुक्तमिति भावः । कर्मणां फलमदत्त्वा नाशाभावे फलितमाह **तस्मादिति** । ननु कर्मणां बहुत्वात्तत्फलेषु जन्मसु कुतस्त्रित्वमारम्भकर्मणां त्रिःप्रकारत्वादिति चेन्नानारब्धत्वेनैकप्रकारत्वसम्भवात् तत्राह **संहतानीति** । नास्ति ज्ञानस्यैकान्तिकफलत्वमिति शेषः । उक्तकर्मणां जन्मानारम्भकत्वे प्रागुक्तं दोषमनुभाष्य तस्यातिप्रसञ्जकत्वमाह **अन्यथेति** । सर्वत्रेत्यारब्धकर्मस्वपीति यावत् । फलजनकत्वानिश्चयोऽनाश्वासः कर्मणा

जन्मानारम्भकत्वे कर्मकाण्डानर्थक्यं दोषान्तरमाह **शास्त्रेति** । अनारब्धकर्मणां सत्यपि ज्ञाने जन्मान्तरारम्भकत्वध्रौव्ये फलितमाह **इत्यत** इति । श्रुत्यवष्टम्भेन परिहरति **नेत्यादिना** । ज्ञानादनारब्धकर्मदाहे भगवतोऽपि संमतिमाह **इहापीति** । ज्ञानाधीनसर्वकर्मदाहे सर्वधर्मान् परित्यज्येति वाक्यशेषोऽपि प्रमाणीभवतीत्याह **वक्ष्यति चेति** । ज्ञानादनारब्धाशेषकर्मक्षये युक्तिरपि वक्तुं शक्येत्याह **उपपत्तेश्चेति** । तामेव विवृणोति **अविद्येति** । अज्ञस्याविद्यास्मितारागद्वेषाभिनिवेशाख्यक्लेशात्मकानि सर्वानर्थबीजानि तानि निमित्तीकृत्य यानि धर्माधर्मकर्माणि तानि जन्मान्तरा[1]रम्भकाणि यानि तु विदुषो विद्यादग्धक्लेशबीजस्य प्रतीतिमात्रशरीराणि कर्माणि न तानि शरीरारम्भकाणि दग्धपटवदर्थक्रियासामर्थ्याभावादित्यर्थः । प्रतीतिमात्रदेहानां कर्माभासानां न फलारम्भकता तस्मिन्नर्थे भगवतोऽपि संमतिमाह **इहापीति** । तत्त्वज्ञानादूर्ध्वं प्रातीतिकक्लेशानां कर्मद्वारा देहानारम्भकत्वे वाक्यान्तरमपि प्रमाणयति **बीजानीति** । ज्ञानानन्तरभाविकर्मणां ज्ञानेन दाहमङ्गीकरोति **अस्त्विति** । विरोधिग्रस्तानामेवोत्पत्तिरिति हेतुमाह **ज्ञानेति** । अस्मिन् जन्मनि जन्मान्तरे वा ज्ञानात् पूर्वभाविकर्मणां न ततो दाहो विरोधिनं विना प्रवृत्तिरित्याह **नत्विति** । श्रुतिस्मृतिविरोधान्नैवमिति परिहरति **नेत्यादिना** । सर्वशब्दश्रुतेः संकोचं शङ्कते **ज्ञानेति** । प्रकरणादिसङ्कोचकाभावान्नैवमित्याह **नेति** । आक्षेपदशायामुक्तमनुमानमनुवदति **यत्त्विति** । आभासत्वादिदमसाधकमिति दूषयति **तदसदिति** । व्याप्त्यादिमत्त्वे कथमाभासत्वमिति पृच्छति **कथमिति** । प्रवृत्तफलत्वोपाधिना हेतोर्व्याप्तिभङ्गादाभासत्वधीरित्याह **तेषामिति** । तदेव प्रपञ्चयति **यथेत्यादिना** । धनुषः सकाशादिषुर्मुक्तो बलवत्प्रतिबन्धकाभावे मध्ये न पतति तथा प्रबलप्रतिबन्धकं विना प्रवृत्तफलानां कर्मणां भोगादृते न क्षयो न च तत्त्वज्ञानं तादृक् प्रतिबन्धकमुत्पत्तावेव पूर्वप्रवृत्तेन कर्मणा प्रतिबन्धकशक्तित्वादित्यर्थः । यत्र ज्ञानेनादाह्यत्वं तत्र प्रवृत्तफलत्वमित्यन्वयेऽपि यत्राप्रवृत्तफलत्वं तत्र ज्ञानदाह्यत्वमिति न व्यतिरेकसिद्धिरित्याशङ्क्याह **स एवेति** । प्रवृत्तौ निमित्तभूतो नारब्धो वेगोऽनेनेति विग्रहः । स्वाश्रयस्थानि साभासान्तःकरणनिष्ठानीति यावत् । विमतानि तत्त्वधीनिमित्तनिवृत्तीनि तत्कृतकारणनिवृत्तत्वाद्रज्जुसर्पादिवदिति व्यतिरेकसिद्धिरिति भावः । विदुषोवर्तमानदेहपाते देहान्तरे हेत्वभावात्तत्त्वधीरैकान्तिकफलेत्युपसंहरति **पतित** इति ॥ २३ ॥

**प० टी०** । एवं प्रकृतिपुरुषज्ञानिनं स्तौति **यएवमिति** । एवमुपद्रष्टृत्वादिरूपेण यः पुरुषं वेत्ति तथा गुणैः सह सुखदुःखादिपरिणामसहितां प्रकृतिं चेति स पुरुषो विधिमति लङ्घ्य वर्तमानोऽपि पुनर्नाभिजायते मुच्यत इत्यर्थः ॥ २३ ॥

**ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ॥**
**अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २४ ॥**

अत्रात्मदर्शने उपायविकल्पा इमे ध्यानादय उच्यन्ते ध्यानेनेति । ध्यानेन ध्यानं नाम शब्दादिभ्यो विषयेभ्यः श्रोत्रादीनि करणानि मनस्युपसंहृत्य मनश्च प्रत्यक्चेतयितर्येकाग्रतया यच्चिन्तनं तत्, तथा ध्यायतीव कः ध्यायतीव पृथिवी ध्यायन्तीव पर्वताइत्युपमोपादानात् तैलधारावत् संततोऽविच्छिन्नप्रत्ययो ध्यानं तेन ध्यानेनात्मनि बुद्धौ पश्यन्त्यात्मानं प्रत्यक्चेतनमात्म-

---

१ जन्मारम्भकाणि—पा० लि० पु०
२ प्रतिभास—पा० लि० पु०

ना ध्यानसंस्कृतेनान्तःकरणेन केचिद् योगिनः, अन्ये सांख्येन योगेन सांख्यं नाम इमे सत्त्वरजस्तमांसि गुणा मया दृश्या अहं तेभ्योऽन्यस्तद्व्यापारस्य साक्षिभूतो नित्यो गुणविलक्षण आत्मेति चिन्तनमेष सांख्यो योगस्तेन पश्यन्त्यात्मानमात्मनेति वर्तते, कर्मयोगेन कर्मैव योग ईश्वरार्पणबुद्ध्यानुष्ठीयमानं घटनरूपत्वं योगार्थाद् योग उच्यते गुणतस्तेन सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेण चापरे॥२४॥

आ० टी० । ज्ञेयं यत्तदित्यादिना तत्पदार्थस्त्वंपदार्थश्चानन्तरमेव बोधितौ तयोरैक्यं च 'क्षेत्रज्ञं चापि मां विद्धि' इत्युक्तमिदानीं तद्दृष्टिहेतून्यथाधिकारं कथयति अत्रेति । ध्यानाख्यसाधनं किंरूपमिति पृच्छति ध्यानं नामेति । तद्रूपं वदन्नुत्तरमाह शब्दादिभ्य इति । एकाग्रतयोपसंहृत्येति संबन्धः । यच्चिन्तनं प्रत्यक्चेतयितरीति पूर्वेणान्वयः । किं तच्चिन्तनमित्युक्ते दृष्टान्तद्वारा श्रुत्यवष्टम्भेन ध्यानं प्रपञ्चयति तथेति । विवक्षितध्यानानुरोधेनेति यावत्, आत्मानं पश्यन्ति परमात्मतयेति शेषः । केचिदित्युत्तमाधिकारिणो गृह्यन्ते । मध्यमाधिकारिणो निर्दिशति अन्य इति । सांख्यशब्दितं साधनं किं नामेत्युक्ते विचारजन्यं ज्ञानं तदेव ज्ञानहेतुतयोगतुल्यत्वाद्योगशब्दितं हेतोरनेन गौण्या वृत्त्या योगशब्दितं कर्मेत्याह सांख्यमिति । अधमानधिकारिणः संगिरते कर्मेति । चित्तैकाग्र्यं योगस्तादर्थ्यं कर्मणः शुद्धिहेतोरस्ति तेन गौण्या वृत्त्या योगशब्दितं कर्मेत्याह गुणत इति । अपरे पश्यन्त्यात्मानमात्मनेति पूर्ववदनुषङ्गमङ्गीकृत्याह तेनेति ॥ २४ ॥

प० टी० । अथैवंविधविवेकेनात्मज्ञाने साधनविकल्पानाह ध्यानेनेति द्वाभ्याम् । ध्यानेनाकारप्रकृत्यात्मनि देह एवात्मना मनसैवात्मानं केचित्पश्यन्ति । श्रुतिरपि—"श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्यति सर्वस्यात्मा भवति" इति । स्पष्टोऽर्थः । तथान्येऽधिकारिणः सांख्येन योगेन प्रकृतिपुरुषवैलक्षण्यालोचनेन पश्यन्ति । श्रुतिरपि ऋग्वेदे—"पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः । समुद्रे अन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः" इति । भाष्यम्—असुरस्य बलवतः परमेश्वरस्य माययाक्तं व्याप्तमत एव पतङ्गमनेकदेहपतनशीलं क्षेत्रज्ञं विपश्चितो ज्ञानवन्तः प्रथमसंकल्पात्मकेन मनसानन्तरं हृदा निश्चयात्मकबुद्धिरूपेणैवमात्मनैवात्मानं पश्यन्तीत्यर्थः । तमेव कवयः क्रान्तदर्शिनोऽन्तः समुद्रे विचक्षते । समुद्रयति व्याप्नोतीति समुद्रः प्रपञ्चस्तस्मिन् पश्यन्ति क्षीरान्तर्घृतमिवेत्यर्थः । तत्र वेधसो हिरण्यगर्भस्य मरीचीनां प्रकाशानां पदं स्थानमिच्छन्ति पदार्थप्रतीतिरूपेण गवेषयन्ति । अपरे कर्मयोगेन चित्तशुद्धिद्वारा पश्यन्ति, एवं यथाधिकारं विकल्पोक्तिः ॥ २४ ॥

**अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ॥**
**तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥**

अन्ये त्विति । अन्ये त्वेतेषु विकल्पेष्वन्यतरेणाप्येवं यथोक्तमात्मानमजानन्तोऽन्येभ्य आचार्येभ्यः श्रुत्वेदमेव चिन्तयतेत्युक्ता उपासते श्रद्दधानाः सन्तश्चिन्तयन्ति तेऽपि चातितरन्त्येवातिक्रामन्त्येव मृत्युं मृत्युयुक्तं संसारमित्येतच्छ्रुतिपरायणाः श्रुतिः श्रवणं परमयनं गमनं मोक्षमार्गप्रवृत्तौ परं साधनं येषां ते श्रुतिपरायणाः केवलपरोपदेशप्रमाणाः स्वयं विवेकरहिता इत्यभिप्रायः ।

किमु वक्तव्यं प्रमाणं प्रति स्वतन्त्रा विवेकिनो मृत्युमतितरन्तीत्यभिप्रायः॥२५॥

आ० टी०। अधमतमानधिकारिणो मोक्षमार्गे प्रवृत्तिं प्रति लम्भयति अन्ये त्विति। आचार्याधीनां श्रुतिमेवाभिनयति इदमिति। उपासनमेव विवृणोति श्रद्दधाना इति। परोपदेशात् प्रवृत्तानामपि प्रवृत्तेः साफल्यमाह तेऽपीति। तेषां मुख्याधिकारित्वं व्यावर्तयति श्रुतीति। तेऽपीत्यादिना सूचितमर्थमाह किमिति॥२५॥

प० टी०। अथातिमन्दाधिकारिणां निस्तारोपायमाह अन्ये त्विति। अन्ये सांख्ययोगादिमार्गेणैवंभूतमुपद्रष्टेत्यादिलक्षणमात्मानं साक्षात्कर्तुमजानन्तस्तेऽन्येभ्य आचार्येभ्य उपदेशतः श्रुत्वोपासते ध्यायन्ति। तेऽपि श्रुतिपरायणा आचार्योपदेशश्रवणसादरा मृत्युमतितरन्त्येव॥२५॥

**यावत् संजायते किंचित् सत्त्वं स्थावरजङ्गमम्॥**
**क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ॥२६॥**

अत्र क्षेत्रज्ञेश्वरैकत्वविषयं ज्ञानं मोक्षसाधनं यज् ज्ञात्वामृतमश्नुत इत्युक्तं तत् कस्माद्धेतोरिति तद्धेतुप्रदर्शनार्थं श्लोक आरभ्यते यावदिति। यावद् यत् किंचित् संजायते समुत्पद्यते सत्त्वं वस्तु किमविशेषेणेत्याह स्थावरं जङ्गमं च क्षेत्रक्षेत्रज्ञसंयोगात् तज्जायत इत्येवं विद्धि जानीहि हे भरतर्षभ। कः पुनरयं क्षेत्रक्षेत्रज्ञयोः संयोगोऽभिप्रेतो न तावद् रज्ज्वेव घटस्यावयवसंश्लेषद्वारकः संबन्धविशेषः संयोगः क्षेत्रेण क्षेत्रज्ञस्य संभवत्याकाशवन्निरवयवत्वान्नापि समवायलक्षणस्तन्तुपटयोरिव क्षेत्रक्षेत्रज्ञयोरितरेतरकार्यकारणभावानभ्युपगमादित्युच्यते क्षेत्रक्षेत्रज्ञयोर्विषयविषयिणोर्भिन्नस्वरूपयोरितरेतरतद्धर्माध्यासलक्षणः संयोगः क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबन्धनो रज्जुशुक्तिकादीनां तद्विवेकज्ञानाभावादध्यारोपितसर्परजतादिसंयोगवत् सोऽयमध्यासस्वरूपः क्षेत्रक्षेत्रज्ञसंयोगो मिथ्याज्ञानलक्षणो यथाशास्त्रं क्षेत्रक्षेत्रज्ञलक्षणभेदपरिज्ञानपूर्वकं प्राग् दर्शितरूपात् क्षेत्रान्मुञ्जादिवेषीकां यथोक्तलक्षणं क्षेत्रज्ञं प्रविभज्य न सत्तन्नासदुच्यत इत्यनेन निरस्तसर्वोपाधिविशेषं ज्ञेयं ब्रह्म स्वरूपेण यः पश्यति क्षेत्रं च मायानिर्मितहस्तिस्वप्नदृष्टवस्तुगन्धर्वनगरादिवदसदेव सदिवावभासत इति। एवं निश्चितविज्ञानो यस्तस्य यथोक्तसम्यग्दर्शनविरोधादवगच्छति मिथ्याज्ञानं तस्य जन्महेतोरपगमात्। 'य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह' इत्यनेन विद्वान् भूयो नाभिजायत इति सम्यग्दर्शनफलमविद्याया निवर्तकं सम्यग्दर्शनं फलमविद्यादिसंसारबीजनिवृत्तिद्वारेण जन्माभाव उक्तः, जन्मकारणं चाविद्यानिमित्तकः क्षेत्रक्षेत्रज्ञसंयोग उक्तः॥२६॥

आ० टी०। ऐक्यधीर्मुक्तिहेतुरिति प्रागुक्तमनूद्य प्रश्नपूर्वकं जिज्ञासितहेतुपरत्वेन श्लोकमवतारयति अत्र क्षेत्रेति। सर्वस्य प्राणिजातस्य क्षेत्रक्षेत्रज्ञसंबन्धाधीना यस्मादुत्पत्तिस्तस्मात् क्षेत्रज्ञा-

त्मकपरमात्मातिरेकेण प्राणिनिकायस्याभावादैक्यज्ञानादेव मुक्तिरित्याह **कस्मादिति** । क्षेत्रक्षेत्रज्ञसंबन्धमुक्तमाक्षिपति **कः पुनरिति** । क्षेत्रज्ञस्य क्षेत्रेण संबन्धः संयोगो वा समवायो वेति विकल्प्याद्यं दूषयति **न तावदिति** । द्वितीयं निरस्यति **नापीति** । वास्तवसंबन्धाभावेऽपि तयोरध्यासस्वरूपः सोऽस्तीति परिहरति **उच्यत इति** । भिन्नस्वभावत्वे हेतुमाह **विषमेति** । इतरेतरत्र क्षेत्रे क्षेत्रज्ञे वा तद्धर्मस्य क्षेत्रानधिकरणस्य क्षेत्रज्ञगतस्य चैतन्यस्य क्षेत्रज्ञानाधारस्य च क्षेत्रनिष्ठस्य जाड्यादेरारोपरूपो योगस्तयोरित्याह **इतरेति** । तत्र निमित्तमाह **क्षेत्रेति** । अविवेकादारोपितसंयोगे दृष्टान्तमाह **रज्ज्विति** । उक्तं संबन्धं निगमयति **सोऽयमिति** । तस्य निवृत्तियोग्यत्वं सूचयति **मिथ्येति** । कथं तर्हि मिथ्याज्ञानस्य निवृत्तिरित्याशङ्क्याह **यथेति** । योऽयं विज्ञानमयः प्राणेष्वित्यादि त्वंपदार्थविषयं शास्त्रमनुसृत्य विवेकज्ञानमापाद्य महाभूतादिष्वव्यन्तात् क्षेत्रादुपद्रष्टृत्वादिलक्षणं प्रागुक्तं क्षेत्रज्ञं मुञ्जेषीकान्यायेन विविच्य सर्वोपाधिविनिर्मुक्तब्रह्मस्वरूपेण ज्ञेयं योऽनुभवति तस्य मिथ्याज्ञानमपगच्छतीति संबन्धः । कथमस्य निर्विशेषत्वं क्षेत्रज्ञस्य सविशेषत्वहेतोः सत्त्वादित्याशङ्क्याह **क्षेत्रं चेति** । बहुदृष्टान्तोक्तेर्बहुविधत्वं क्षेत्रस्य द्योत्यते । उक्तज्ञानान्मिथ्याज्ञानापगमे हेतुमाह **यथोक्तेति** । तथापि कथं पुरुषार्थसिद्धिः कालान्तरे तुल्यजातीयमिथ्याज्ञानोदयसंभवादित्याशङ्क्याह **तस्येति** । सम्यग्ज्ञानादज्ञानतत्कार्यनिवृत्त्या मुक्तिरिति स्थिते फलितमाह **य एवमिति** । उत्तरग्रन्थमवतारयितुं व्यवहितं वृत्तं कीर्तयति **नेत्यादिना** । अविद्यानाद्यनिर्वाच्यमज्ञानं मिथ्याज्ञानं तत्संस्कारश्चादिशब्दार्थः । व्यवहितमनूद्याव्यवहितमनुवदति **जन्मेति** ॥ २६ ॥

**प०टी०** । अथान्ये सांख्येन योगेन ध्यायन्तीति पूर्वमुक्तं तदेव प्रकटयन्नाह **यावदिति** । यावत्किंचित्सत्त्वं वस्तुमात्रं स्थावरं जङ्गमं वा समुत्पद्यते तत्सर्वं क्षेत्रक्षेत्रज्ञयोर्योगादविवेककृतादात्माध्यासाद्भवतीति जानीहि प्रकृतिपुरुषयोगाद्धुद्धितत्त्वमित्यादि ॥ २६ ॥

**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ॥**
**विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७ ॥**

अतस्तस्या अविद्याया निवर्तकं सम्यग्दर्शनमुक्तमपि पुनः शब्दान्तरेणोच्यते समं सर्वेष्वित्यादि । सममिति । समं निर्विशेषं तिष्ठन्तं स्थितिं कुर्वन्तं सर्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु प्राणिषु कं परमेश्वरं देहेन्द्रियमनोबुद्ध्यव्यक्तात्मनोऽपेक्ष्य परं परमश्चासावीश्वरश्चेशनशीलश्चेति परमेश्वरस्तं सर्वेषु भूतेषु समं तिष्ठन्तम् । तानि विशिनष्टि विनश्यत्स्विति । तं च परमेश्वरमविनश्यन्तमिति भूतानां परमेश्वरस्य चात्यन्तवैलक्षण्यप्रदर्शनार्थम् । कथं सर्वेषां हि भावविकाराणां जनिलक्षणो भावविकारो मूलं जन्मोत्तरभाविनोऽन्ये सर्वे भावविकारा विनाशान्ता विनाशात् परो न कश्चिदस्ति भावविकारो भावाभावात् सति हि धर्मिणि धर्मा भवन्त्यतोऽन्त्यभावविकारानुवादिनः पूर्वभाविनः सर्वे भावविकाराः प्रतिषिद्धा भवन्ति सह कार्यैस्तस्मात् सर्वभूतैर्वैलक्षण्यमत्यन्तमेव परमेश्वरस्य सिद्धं निर्विशेषत्वमेकत्वं च कथं च य एवं यथोक्तं परमेश्वरं पश्यति स पश्यति । ननु सर्वोऽपि लोकः पश्यति किं विशेषेणेति, सत्यं पश्यति किंतु विप-

रीतं पश्यत्यतो विशिनष्टि स एव पश्यतीति । यथा तिमिरदृष्टिरनेकं चन्द्रं पश्यति तमपेक्ष्यैकचन्द्रदर्शी विशिष्यते स एव पश्यतीति तथैवेहाप्येकमविभक्तं यथोक्तमात्मानं यः पश्यति स विभक्तानेकात्मविपरीतदर्शिभ्यो विशिष्यते स एव पश्यतीतीतरे पश्यन्तोऽपि न पश्यन्ति विपरीतदर्शित्वादनेकचन्द्रदर्शिवदित्यर्थः ॥२७॥

**आ० टी०** । व्यवधानाव्यवधानाभ्यां सर्वार्थमूलत्वादज्ञानस्य तन्निवर्तकं सम्यग्ज्ञानं वक्तव्यमित्याह **अत इति** । तस्यासकृदुक्तत्वात् तदुक्तार्थप्रवृत्तिर्वृथेत्याशङ्क्यातिसूक्ष्मार्थस्य शब्दभेदेन पुनःपुनर्वचनमधिकारिभेदानुग्रहार्थेति मत्वाह **उक्तमिति** । सर्वत्र परस्यैकत्वात् नोत्कर्षापकर्षवत्त्वमित्याह **सममिति** । परमत्वमीश्वरत्वं चोपपादयति **देहेति** । आत्मा जीवस्तमित्यादिनान्वयोक्तिः । आश्रयनाशादाश्रितस्यापि नाशमाशङ्क्याह **स चेति** । अविनश्यन्तमिति विशिनष्टीति संबन्धः । उभयत्र विशेषणद्वयस्य तात्पर्यमाह **भूतानामिति** । नाशानाशाभ्यां वैलक्षण्येऽपि कथमत्यन्तवैलक्षण्यं सविशेषत्वाभिन्नत्वयोस्तुल्यत्वादिति शङ्कते **कथमिति** । भूतानां सविशेषत्वादिभावेऽपि परस्य तदभावादत्यन्तवैलक्षण्यमिति वक्तुं जन्मनो भावविकारे सादित्वमाह **सर्वेषामिति** । तत्र हेतुमाह **जन्मेति** । न हि जन्मान्तरेणोत्तरे विकारा युज्यन्ते जन्मवतस्तदुपलम्भादित्यर्थः । विनाशानन्तरभाविनोऽपि विकारस्य कस्य चिदुपपत्तेर्न तस्यान्त्यविकारत्वमित्याशङ्क्याह **विनाशादिति** । तस्यान्त्यविकारत्वे सिद्धे फलितमाह **अत इति** । तेषां जन्मादीनां कार्याणि कादाचित्कमस्त्वानि तदधिकरणानि तैः सहेति यावत् । परमेश्वरस्य भूतेभ्योऽत्यन्तवैलक्षण्यमुक्तमुपसंहरति **तस्मादिति** । निर्विशेषत्वं सर्वभावविकारविरहितत्वं कूटस्थत्वमेकत्वमद्वितीयत्वम् । यः पश्यतीत्यादि व्याचष्टे **य एवमिति** । उक्तविशेषणमीश्वरं पश्यन्नेव पश्यतीत्युक्तमाक्षिपति **नन्विति** । ईश्वरपराङ्मुखस्यानात्मनिष्ठस्य तद्दर्शित्वेऽपि विपरीतदर्शित्वादीश्वरप्रवणस्यैव सम्यग्दर्शित्वमिति विवक्षित्वा विशेषणमिति परिहरति **सत्यमिति** । उक्तमेव दृष्टान्तेन विवृणोति **यथेत्यादिना** । यः पश्यतीत्यादेरर्थमुपसंहरति **इतर इति** । परवस्तुनिष्ठेभ्यो व्यतिरिक्ता इत्यर्थः ॥ २७ ॥

**प० टी०** । एवमविवेकात् कृतं संसारोद्भवमुक्त्वा तन्निवृत्तये विविक्तात्मविषयं सम्यग्दर्शनमाह **सममिति** । सर्वेषु स्थावरजङ्गमेषु भूतेषु समं सद्रूपेण वर्तमानमीश्वरं यः पश्यति स एव पश्यति नान्यः । श्रुतिरपि शातपथी–"यद्वेव समः प्लुषिणा समो मशकेन समो नागेन एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्मादेव सामाश्नुते साम्नः सायुज्यꣳसलोकतां जयति य एवं वेद" इति । भाष्यम्– पूर्वं साचामश्नोति व्युत्पत्त्या सामस्वरूपमुक्तमिदानीं यद्वेति विकल्पेन समत्वमेव सामेत्याह । तत्र प्लुषिणेतिसूक्ष्मजीवेन समः समो मशकेनेत्यादि य एवं वेद स साम्नः परमेश्वरस्य सायुज्यं जयति । अथ किंभूतेषु विनश्यत्सु । किंभूतमीश्वरमविनश्यन्तम् । यथा घटादिषु नष्टेषु तदन्तर्गत आकाशो न नश्यति। अत्र "अपश्यमस्य महतो महित्वम्" इत्यादिश्रुतयः पूर्वं व्याख्याताः ॥ २७ ॥

## समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ॥
## न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥२८॥

यथोक्तस्य सम्यग्दर्शनस्य फलवचनेन स्तुतिः कर्तव्येति श्लोक आरभ्यते समं पश्यन्निति । समं पश्यन्नुपलभमानो हि यस्मात् सर्वत्र सर्वभूतेषु समवस्थितं तुल्यतयावस्थितमीश्वरम् अतीतानन्तरश्लोकोक्तलक्षणमित्यर्थः । समं

पश्यन् किं न हिनस्ति हिंसां न करोत्यात्मना स्वेनैव स्वमात्मानं ततस्तस्मादहिंसनाद् याति परां प्रकृष्टां गतिं मोक्षाख्याम् । ननु नैव कश्चित् प्राणी स्वयं स्वमात्मानं हिनस्ति कथमुच्यतेऽप्राप्तं न हिनस्तीति यथा न पृथिव्यामग्निश्चेतव्यो नान्तरिक्ष इत्यादि, नैष दोषः, अज्ञानामात्मतिरस्करणोपपत्तेः । सर्वो ह्यज्ञोऽत्यन्तप्रसिद्धं साक्षादपरोक्षादात्मानं तिरस्कृत्यानात्मानमात्मत्वेन परिगृह्य तमपि धर्माधर्मैः कृत्वोपात्तमात्मानं हत्वान्यमात्मानमुपादत्ते नवं तं चैव हत्वान्यमेवं तमपि हत्वान्यमित्येवं नवमुपात्तमुपात्तमात्मानं हन्तीत्यात्महा सर्वोऽज्ञो यस्तु परमार्थात्मासावपि सर्वदाविद्यया हत इव विद्यमानफलाभावादिति सर्वे आत्महना एवाविद्वांसो यस्त्वितरो यथोक्तात्मदर्शी स तूभयथात्मनात्मानं न हिनस्ति ततो याति परां गतिं यथोक्तं फलं तस्य भवतीत्यर्थः ॥ २८ ॥

आ० टी० । प्रकृतसम्यग्ज्ञानेन किमित्यपेक्षायां तत्फलोक्त्या तस्यैव स्तुत्या तद्धेतौ पुरुषं प्रवर्तयितुं श्लोकान्तरमित्याह **यथोक्तस्येति** । यस्मादित्यस्य ततःशब्देन संबन्धः । सर्वभूतेषु तुल्यतयावस्थितं पूर्वोक्तलक्षणमीश्वरं निर्विशेषं पश्यन्नात्मानमात्मना यस्मान्न हिनस्ति ततस्तस्मान्मोक्षाख्यां परां गतिं यातीति योजना । तत्र पादत्रयेण ज्ञानादज्ञानध्वस्त्या ध्वस्तिरनर्थस्योक्तज्ञानमिथ्याज्ञानयोरावरणयोर्नाशे सर्वोत्कृष्टां गतिं परमपुरुषार्थं परमानन्दमनुभवति विद्वानिति चतुर्थपादार्थः । न हिनस्त्यात्मनात्मानमिति यथाश्रुतमादाय चोदयति **नन्विति** । न पृथिव्यामिति प्राप्तिद्वारा निषेधवन्नान्तरिक्षे न दिवीति प्राप्त्यभावाच्च यन्निषेधो मुख्यो नेष्यते तथहापि प्राप्तिं विना निषेधो न युक्तिमानित्याह **यथेति** । अज्ञानामात्मनैवात्महिंसासंभवाद्विदुषां तद्भावोक्तिर्युक्तेति समाधत्ते **नैष दोष इति** । संग्रहवाक्यं विवृणोति **सर्वो हीति** । अनात्मशब्दो देहादिविषयः । अविदुषामारोपितात्महन्तृत्वं निगमयति **इत्यात्महेति** । तथापि पारमार्थिकस्यात्मनो हननाभावान्न तेषां सर्वेषामात्महन्तृत्वमित्याशङ्क्याह **यस्त्विति** । उक्तरीत्या सर्वेषामविदुषामात्महन्तृत्वं सिद्धमित्युपसंहरति **सर्व** इति । आत्मनैवात्महननमविदुषां दृष्टं तदिह विद्वद्विषये शक्यं निषेद्धुमित्याह **यस्त्वितर इति** । **उभयथापीति** । आरोपानारोपाभ्यामित्यर्थः । ज्ञानादनर्थभ्रमभ्रंशे पूर्वोक्तपरमानन्दप्राप्त्या परितृप्तत्वं युक्तमित्याह **तत** इति ॥ २८ ॥

प० टी० । अथ पूर्वोक्तप्रकारस्य प्रयोजनमाह **सममिति** । सर्वत्र सर्वभूतेषु समवस्थितमीश्वरं **समं** स्वसदृशं पश्यन् तारतम्यवर्जितं वा पश्यन्नात्मना सर्वात्मना मनोवाक्कायैरात्मानं न हिनस्ति हिंसां **न** करोति ततस्तेनानुष्ठानेन परां गतिं याति । श्रुतिरपि– " यदैतमनुपश्यत्यात्मानं देवमञ्जसा । ईशानं भूतभव्यस्य न तदा विचिकित्सति " इति । भाष्यम्–यदैतमनुभवसिद्धं यतो देवं द्योतमानं भूतस्यातिक्रान्तस्य भव्यस्य भविष्यतो वा भूतजातस्येशानं नियामकमञ्जसा साक्षात्पश्यति तदा न विचिकित्सति हिंसावज्ञानिन्दारूपां विचिकित्सां न करोति ॥ २८ ॥

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ॥**
**यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ २९ ॥**

सर्वभूतस्थमीशं समं पश्यन्न हिनस्त्यात्मनात्मानमित्युक्तं तदनुपपन्नं

सगुणकर्मवैलक्षण्यभेदभिन्नेष्वात्मस्वित्येतदाशङ्क्याह प्रकृत्यैवेति। प्रकृत्या प्रकृतिर्भगवतो माया त्रिगुणात्मिका, मायां तु प्रकृतिं विद्यादिति मन्त्रवर्णस्तया प्रकृत्यैव च नान्येन महदादिकार्यकारणाकारपरिणतया तान्येव कर्माणि वाङ्मनःकायारभ्याणि क्रियमाणानि निर्वर्त्यमानानि सर्वशः सर्वप्रकारैर्यः पश्यत्युपलभते तथात्मानं क्षेत्रज्ञमकर्तारं सर्वोपाधिविवर्जितं पश्यति स परमार्थदर्शीत्यभिप्रायः। निर्गुणस्याकर्तुर्निर्विशेषस्याकाशस्येव भेदे प्रमाणानुपपत्तिरित्यर्थः॥ २९॥

आ॰ टी॰। श्लोकान्तरं शङ्कोत्तरत्वेनावतारयितुमनुवदति सर्वेति। प्रतिदेहं धर्माधर्मादिमत्त्वेनात्मनो भेदभानान्न सम्यग् दर्शनमिति शङ्कते तदिति। स्वगुणैः सुखदुःखादिभिः स्वकर्मभिश्च धर्माधर्माख्यैर्वैलक्षण्यात् प्रतिदेहं भेदे तद्विशिष्टेष्वात्मसु कथं साम्येन दर्शनमित्येतदाशङ्क्य परिहरतीत्याह एतदिति। प्रकृतिशब्दस्य स्वभाववाचित्वं व्यावर्तयति प्रकृतिरिति। मायाशब्दस्य संवित्पर्यायत्वं प्रत्याह त्रिगुणेति। उक्ता परस्य शक्तिर्मायेत्यत्र श्रुतिसंमतिमाह मायां त्विति। अन्येन केन चित् क्रियमाणानि न भवन्ति कर्माणीत्येवकारार्थमाह नान्येति। किं तदन्यन्निषेध्यमित्युक्ते सांख्याभिप्रेता प्रधानाख्या प्रकृतिरित्याह महादादीति। सर्वप्रकारत्वं काम्यत्वनिषिद्धत्वादिना प्रकारबाहुल्यमात्मानमुक्तविशेषणं यः पश्यतीति पूर्वेण संबन्धः। स पश्यतीत्ययुक्तं पुनरुक्तेरित्याशङ्क्याह स परमार्थेति। आत्मनां प्रतिदेहं भिन्नत्वे तेषु समदर्शनमयुक्तमित्युक्तस्य कः समाधिरित्याशङ्क्याह निर्गुणस्येति॥ २९॥

प॰ टी॰। प्रथमोपायस्य फलमाह प्रकृत्येति। सर्वशः सर्वप्रकारैः कर्माणि देहेन्द्रियादिरूपेण परिणतया प्रकृत्यैव क्रियमाणानीति यः पश्यति स एवात्मानमकर्तारं कर्तृत्वाभिमानशून्यं पश्यति॥२९॥

**यदा भूतपृथग्भावमेकस्थमनुपश्यति॥**
**तत एव च विस्तारं ब्रह्म संपद्यते तदा॥ ३०॥**

पुनरपि तदेव सम्यग्दर्शनं शब्दान्तरेण प्रपञ्चयति यदेति। यदा यस्मिन् काले भूतपृथग्भावं भूतानां पृथग्भावं पृथक्त्वमेकस्मिन्नात्मनि स्थितमेकस्थमनुपश्यति शास्त्राचार्योपदेशतो मत्वात्मानं प्रत्यक्षत्वेन पश्यत्यात्मैवेदं सर्वमिति, तत एव च तस्मादेव च विस्तारमुत्पत्तिमनुपश्यत्यात्मनः प्राण आत्मन आशात्मनः स्वर आत्मन आकाश आत्मनस्तेज आत्मन आप आत्मन आविर्भावतिरोभावावात्मनो भूरात्मनोऽन्नमित्येवमादिप्रकारैर्विस्तारं यदा पश्यति तदा ब्रह्म संपद्यते ब्रह्मैव भवति तदा तस्मिन् काल इत्यर्थः॥ ३०॥

आ॰ टी॰। प्रकृतेर्विकाराणां च सांख्यवत् पुरुषादन्यत्वप्रसक्तौ प्रत्याह पुनरपीति। उपदेशजनितं प्रत्यक्षदर्शनमनुवदति आत्मेति। भूतानां विकाराणां नानात्वं प्रकृत्या सहात्ममात्रतया प्रलीनं पश्यति न हि भूतपृथक्त्वं सत्यां प्रकृतौ केवले परस्मिन्विलापयितुं शक्यत इत्यर्थः। परिपूर्णादात्मन एव प्रकृत्यादेर्विशेषान्तस्य स्वरूपलाभमुपलभ्य तन्मात्रतां पश्यतीत्याह तत एवेति। उक्तमेव विस्तारं श्रुत्यवष्टम्भेन स्पष्टयति आत्मन इति। ब्रह्मसंपत्तिर्नाम पूर्णत्वेनाभिव्यक्तिरपूर्णत्वहेतोः सर्वस्यात्मसात्कृतत्वादित्याह ब्रह्मैवेति। ज्ञानसमानकाले मुक्तिरिति सूचयति तदेति॥३०॥

प० टी० । एवं समत्वात्कर्तृदर्शनेन ब्रह्मप्राप्तिमुक्त्वाधुना जगत एकत्वदर्शनादाह यदेति । यदा नानानामरूपवतां भूतानां पृथग्भावं पृथगवस्थानमेकस्थमेकस्मिन् समष्टिरूपेण तिष्ठतीत्येकस्थमनुवेलं पश्यति । एकस्मिन् सूत्रे नानामणीनामिवेत्यर्थः । ततस्तेनैकरूपेण परमेश्वरेण सह विस्तारं पश्यति जलेन तरङ्गाणामिव तदा ब्रह्म संपद्यते ब्रह्मैव भवति ॥ ३० ॥

**अनादित्वान्निर्गुणत्वात् परमात्मायमव्ययः ॥**
**शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३१ ॥**

एकस्यात्मनः सर्वदेहात्मत्वे तद्दोषसंबन्धे प्राप्तमिदमुच्यते अनादीति । अनादित्वादनादेर्भावोऽनादित्वमादिकारणं तद्यस्य नास्ति तदनादि यद्ध्यादिमत् तत् स्वेनात्मना व्येत्ययं त्वनादित्वान्निरवयव इति कृत्वा न व्येति तथा निर्गुणत्वात् सगुणो हि गुणव्ययाद् व्येत्ययं तु निर्गुणत्वाच्च न व्येतीति परमात्मायमव्ययो नास्य व्ययो विद्यत इत्यव्ययो यत एवमतः शरीरस्थोऽपि शरीरेष्वात्मन उपलब्धिर्भवतीति शरीरस्थ उच्यते तथापि न करोति तदकरणादेव तत्फलेन न लिप्यते यो हि कर्ता स कर्मफलेन लिप्यतेऽयं त्वकर्तातो न फलेन लिप्यत इत्यर्थः । कः पुनर्देहेषु करोति लिप्यते च यदि तावदन्यः परमात्मनो देही करोति लिप्यते च तत इदमनुपपन्नमुक्तं क्षेत्रज्ञेश्वरैकत्वं क्षेत्रज्ञं चापि मां विद्धीत्याद्यथ नास्तीश्वरादन्यो देही कः करोति लिप्यते चेति वाच्यं परो वा नास्तीति सर्वथा दुर्विज्ञेयं दुर्वोध्यं चेति भगवत्प्रोक्तमौपनिषदं दर्शनं परित्यक्तं वैशेषिकैः सांख्यार्हतबौद्धैश्च तत्रायं परिहारो भगवता स्वेनैवोक्तः 'स्वभावस्तु प्रवर्तते' इत्यविद्यामात्रं स्वभावो हि करोति लिप्यत इति व्यवहारो भवति न तु परमार्थत एकस्मिन् परमात्मनि तदस्त्यत एकस्मिन् परमार्थसांख्यदर्शने स्थितानां ज्ञाननिष्ठानां परमहंसपरिव्राजकानां तिरस्कृताविद्याव्यवहाराणां कर्माधिकारो नास्तीति तत्र तत्र दर्शितं भगवता ॥ ३१ ॥

आ० टी० । परिपूर्णत्वेन सर्वात्मत्वे प्राप्तमात्मनो देहादि न तेन कर्तृत्वादिना तद्वत्त्वं दृष्टं हि पवित्रस्यापि पञ्चगव्यादेरपवित्रसंसर्गात् तद्दोषेण दुष्टत्वमित्याशङ्कामनूद्योत्तरत्वेन श्लोकमवतारयति **एकस्येति** । अनादित्वमेव साधयति **आदिरिति** । तथापि किं स्यादित्याशङ्क्य कार्यत्वकृतव्ययाभावः सिध्यतीत्याह **यद्धीति** । तथापि गुणापकर्षद्वारको व्ययो भविष्यति नेत्याह **तथेति** । निरवयवत्वादेव सावयवद्वारकस्य निर्गुणत्वाद् गुणद्वारकस्य च व्ययस्याभावेऽपि स्वभावतो व्ययः स्यादित्याशङ्क्याह **परमात्मेति** । परमात्मनः स्वतः परतो वा व्ययाभावे फलितमाह **यत इति** । स्वमहिम्नि प्रतिष्ठस्य कथं शरीरस्थत्वं तत्राह **शरीरेष्विति** । सर्वगतत्वेन सर्वात्मत्वेन च देहादौ स्थितोऽपि स्वतो देहाद्यात्मना वा न करोति कूटस्थत्वाद्देहादेश्च कल्पितत्वादित्यर्थः । कर्तृत्वाभावेऽपि भोक्तृत्वं स्यादित्याशङ्क्याह **तदकरणादिति** । तदेवोपपादयति **यो हीति** । परस्य कर्तृत्वादेरभावे कस्य तदिष्टमिति पृच्छति **कः पुनरिति** । परस्मादन्यस्य कस्य चिज्जीवस्य कर्तृत्वादीत्याशङ्कामनुवदति **यदीति** ।

तस्मिन् पक्षे प्रक्रमभङ्गः स्यादिति दूषयति तत इति । ईश्वरातिरिक्तजीवानङ्गीकारान्नोपक्रमविरोधोऽस्तीति शङ्कते अथेति । तर्हि प्रतीतकर्तृत्वादेरधिकरणं वक्तव्यमिति पूर्ववाद्याह क इति । परस्यैव कर्तृत्वाद्याधारत्वान्नास्ति वक्तव्यमित्याशङ्क्याह परो वेति । नास्तीति वाच्यमिति पूर्वेण संबन्धः। न हि कर्तृत्वादिभाक्त्वे परस्यास्मदादिवदीश्वरत्वमिति भावः । परस्यान्यस्य वा कर्तृत्वादावविशिष्टे शरीरस्थोऽपीत्यादि श्रुतिमूलमपि ज्ञातुं वक्तुं चाशक्यत्वात् त्याज्यमेवेति परीक्षकसंमत्योपसंहरति सर्वथेति । परस्य वस्तुनोऽकर्तुरभोक्तुश्चाविद्यया तदारोपादादेयमेव भगवन्मतमिति परिहरति तत्रेति । तमेव परिहारं प्रपञ्चयति अविद्येति । व्यावहारिके कर्तृत्वादावविशिष्टे पारमार्थिकमेव किं नेष्यते तत्राह न त्विति। वास्तवकर्तृत्वाद्यभावे लिङ्गमुपन्यस्यति अत इति ॥ ३१ ॥

प० टी० । अथ समत्वदर्शनेऽपि संसारावस्थायां देहसंबन्धनिमित्तैः कर्मभिस्तत्फलैश्च सुखदुःखादिभिर्वैषम्यं दुष्परिहरमित्याह अनादित्वादिति । अयं परमात्मा शरीरस्थोपि न करोत्यकर्तैवास्ति । न तत्फलैर्लिप्यते कुतोऽनादित्वान्निर्गुणत्वाच्च । यदुत्पत्तिमन्नश्यति तथा यद्गुणवत्तद्गुणक्षय उपक्षीणं भवति परमात्मा त्वनादिर्निर्गुणश्चातोऽव्ययोऽविकारोऽतो न लिप्यते ॥ ३१ ॥

**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ॥**
**सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२॥**

किमिव न करोति न लिप्यत इत्यत्र दृष्टान्तमाह यथा सर्वगतमिति। यथा सर्वगतं सर्वव्याप्यपि सत् सौक्ष्म्यात् सूक्ष्मभावादाकाशं खं नोपलिप्यते न संबध्यते सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२ ॥

आ० टी० । सूक्ष्मभावाद् अप्रतिहतस्वभावत्वादित्यर्थः । न संबध्यते पङ्कादिभिरिति शेषः ॥ ३२ ॥

प० टी० । अत्र दृष्टान्तमाह यथेति यथा । सर्वत्र पङ्कादिस्थितमाकाशं सौक्ष्म्यादसंगत्वात्पङ्कादिभिर्नोपलिप्यते तथा सर्वत्रोत्तमेऽधमे वा देहेऽवस्थितोऽप्यात्मा दैहिकैर्गुणैर्दोषैर्वा न लिप्यते न युज्यत इत्यर्थः ॥ ३२ ॥

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ॥**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥**

किं च यथा प्रकाशयतीति । यथा प्रकाशयत्यवभासयत्येकः कृत्स्नं लोकमिमं रविः सवितादित्यस्तथा तद्वन्महाभूतादिधृत्यन्तं क्षेत्रमेकः सन् प्रकाशयति कः क्षेत्री परमात्मेत्यर्थः। रविदृष्टान्तोऽत्रात्मन उभयार्थोऽपि भवति रविवत् सर्वक्षेत्रेष्वेक आत्मालेपकश्चेति ॥ ३३ ॥

आ० टी० । न करोति न लिप्यते चेत्यत्र द्रष्टृत्वेन दृश्यधर्मशून्यत्वं हेतुमाह किं चेति । दृष्टान्तेन विवक्षितमर्थं दर्शयति रवीति । उभयविधमर्थमेव स्फुटयति रविवदिति ॥ ३३ ॥

प० टी० । एवमसंगत्वाल्लेपो नास्तीत्याकाशदृष्टान्तेनोक्तं प्रकाशकत्वाच्च प्रकाश्यधर्मैर्न युज्यत इति दृष्टान्तेनाह यथेति । स्पष्टम् । उक्तं च–'यद्वत्सवितर्युदिते करोति कर्माणि जीवलोकोऽयम्। न च तानि करोति रविर्न कारयति तद्वदात्मापि' इति ॥ ३३ ॥

**क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ॥**
**भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३४ ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे प्रकृतिपुरुषविवेकयोगो नाम त्रयोदशोऽध्यायः॥१३॥

समस्ताध्यायार्थोपसंहारार्थोऽयं श्लोकः क्षेत्रक्षेत्रज्ञयोरिति । क्षेत्रक्षेत्रज्ञयोर्यथाव्याख्यातयोरेवं यथाप्रदर्शितप्रकारेणान्तरमितरेतरवैलक्षण्यविशेषं ज्ञानचक्षुषा शास्त्राचार्योपदेशजनितमात्मप्रत्यायिकं ज्ञानं चक्षुस्तेन ज्ञानचक्षुषा भूतप्रकृतिमोक्षं च भूतानां प्रकृतिरविद्यालक्षणाव्यक्ताख्या तस्या भूतप्रकृतेर्मोक्षणमभावगमनं च ये विदुर्विजानन्ति यान्ति गच्छन्ति ते परं परमार्थतत्त्वं ब्रह्म न पुनर्देहमाददतीत्यर्थः ॥ ३४ ॥

इति श्रीमत्पूज्यपादशंकरभगवतः कृतौ गीताभाष्ये त्रयोदशोऽध्यायः॥ १३ ॥

**आ० टी०** । अध्यायार्थं सफलमुपसंहरति **समस्तेति** । विशेपकौटस्थ्यपरिणामादिलक्षणं तदेवममानित्वादिनिष्ठतया क्षेत्रक्षेत्रज्ञयाथात्म्यविज्ञानवतः सर्वानर्थनिवृत्त्या परिपूर्णपरमानन्दाविर्भावलक्षणपुरुषार्थसिद्धिरिति सिद्धम्॥३४॥ **इत्यानन्दगिरिकृतगीताभाष्यटीकायां त्रयोदशोऽध्यायः** ॥१३॥

**प० टी०** । अध्यायार्थमुपसंहरति **क्षेत्रेति** । एवमुक्तप्रकारेण क्षेत्रक्षेत्रज्ञयोरन्तरं परस्परवैलक्षण्यं ज्ञानलक्षणेन चक्षुपा ये विदुस्तथा भूतानां प्रकृतिस्तस्याः सकाशान्मोक्षोपायं ध्यानादिकं च ये विदुस्ते परं पदं यान्ति ॥ ३४ ॥

अध्यायतात्पर्यं तु—क्षेत्रक्षेत्रज्ञयोगे प्रकृतिपुरुषयोरन्तरं ज्ञानहेतोस्तत्त्वान्युक्तान्यथाद्या गुणविकृतिमयी कर्तृकार्यत्वहेतुः । भोक्तृत्वे हेतुरात्मा सुखतदितरयोरेक एवाखिलेषु क्षेत्री भास्वानिवैवं त्रिसहितदशमे पुंप्रकृत्योर्विचारः ॥ १ ॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां परमार्थप्रपायां प्रकृतिपुरुषविवेको नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

## अथ

# चतुर्दशोऽध्यायः ।

## श्रीभगवानुवाच ।

**परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ॥**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥**

सर्वमुत्पद्यमानं क्षेत्रक्षेत्रज्ञसंयोगादुत्पद्यत इत्युक्तं तत् कथमिति तत्प्रदर्शनार्थं 'परं भूयः' इत्यादिरध्याय आरभ्यते, अथवेश्वरपरतन्त्रयोः क्षेत्रक्षेत्रज्ञयोर्जगत्कारणत्वं न तु सांख्यानामिव स्वतन्त्रयोरित्येवमर्थं प्रकृतिस्थत्वं गुणेषु च सङ्गः संसारकारणमित्युक्तं कस्मिन् गुणे कथं संगः के वा गुणाः कथं वा बध्नन्तीति गुणेभ्यश्च मोक्षणं कथं स्यान्मुक्तस्य च लक्षणं वक्तव्यमित्येवमर्थं च श्रीभगवानुवाच परमिति । परं ज्ञानमिति व्यवहितेन संबन्धः । भूयः पुनः पूर्वेषु सर्वेष्वध्यायेष्वसकृदुक्तमपि प्रवक्ष्यामि तच्च परं परवस्तुविषयत्वात्, किं तत्, ज्ञानं सर्वेषां ज्ञानानामुत्तममुत्तमफलत्वाज् ज्ञानानामिति, नामानित्वादीनां किं तर्हि यज्ञादिज्ञेयवस्तुविषयाणामिति तानि न मोक्षायेदं तु मोक्षायेति परोत्तमशब्दाभ्यां स्तौति श्रोतृबुद्धिरुच्युत्पादनार्थम् । यज् ज्ञात्वा यज् ज्ञानं ज्ञात्वा प्राप्य मुनयः संन्यासिनो मननशीलाः सर्वे परां सिद्धिं मोक्षाख्यामितोऽस्माद्देहबन्धनादूर्ध्वं गताः प्राप्ताः ॥ १ ॥

आ० टी० । क्षेत्रक्षेत्रज्ञसंयोगस्य सर्वोत्पत्तिनिमित्तत्वमज्ञातं ज्ञापयितुमध्यायान्तरमवतारयन्नध्याययोरुत्थाप्योत्थापकत्वरूपां सङ्गतिमाह **सर्वमिति** । विधान्तरेणाध्यायारम्भं सूचयति **अथवेति** । तदेव वक्तुमुक्तमनुवदति **ईश्वरेति** । प्रकृतिस्थत्वं पुरुषस्य प्रकृत्या सहैक्याध्यासस्तस्यैव गुणेषु सङ्गोऽभिनिवेशः । पञ्चविधामाकाङ्क्षां निक्षिप्य तदुत्तरत्वेनाध्यायारम्भे पूर्ववदेव पूर्वाध्यायसंबन्धसिद्धिरित्याह **कस्मिन्निति** । पूर्वोक्तेनार्थेनास्याध्यायस्य समुच्चयार्थश्चकारः । परमित्यस्य भाविकालार्थत्वं व्यावर्तयितुं सङ्गतिमाह **परमिति** । भूयःशब्दस्याधिकार्थत्वमिह नास्तीत्याह **पुनरिति** । पुनःशब्दार्थमेव विवृणोति **पूर्वेष्विति** । पुनरुक्तिस्तर्हीत्याशङ्क्य सूक्ष्मत्वेन दुर्बोधत्वात् पुनर्वचनमर्थवदित्याह **तच्चेति** । विशेष्यं प्रश्नद्वारा निर्दिशति **किं तदिति** । निर्धारणार्थां षष्ठीमादाय तस्य प्रकर्षं दर्शयति **सर्वेषामिति** । परमुत्तममिति पुनरुक्तिमाशङ्क्य विषयफलभेदान्मैवमित्याह **उत्तमेति** । ज्ञानं ज्ञेयमित्यादौ ज्ञानशब्देनामानित्वादीनामुक्तत्वात्तन्मध्ये च ज्ञानस्य साध्यत्वेनोत्तमत्वान्न तस्य वक्तव्यतेत्याशङ्क्याह **ज्ञानानामिति** । नामानित्वादीनां ग्रहणमिति शेषः । इतिशब्दादूर्ध्वं पूर्ववदेव शेषो द्रष्टव्यः । यथोक्तज्ञानापेक्षया कुतस्तज्ज्ञानस्य प्रकर्षस्तत्राह **तानीति** । स्तुतिफलमाह **श्रोतृबुद्धीति** । ज्ञानं ज्ञात्वा ज्ञानस्य ज्ञेयत्वोपगमादनवस्थेत्याशङ्क्याह **प्राप्येति** । मुनिशब्दस्य चतुर्थाश्रमविषयत्वे तन्मात्रादेव ज्ञानायोगात् कुतस्तेषां मुक्तिरित्याशङ्क्याह **मननेति** । सिद्धेर्ज्ञानत्वं परामिति विशेषणाद्व्यावर्त्य मुक्तित्वमाह **मोक्षाख्यामिति** । देहाख्यस्य बन्धनस्याध्यक्षत्वमाह **अस्मादिति** ॥ १ ॥

प० टी० । पूर्वाध्याये 'महाभूतान्यहंकारः' इत्यादिवाक्यैः क्षेत्रस्वरूपमेवोक्तं नोत्पत्तिस्तथा क्षेत्रस्य विकारत्वमेव दर्शितं न तु वैचित्र्यकारणं तथा क्षेत्रज्ञानां सूक्ष्मव्यष्टिरूपेण निरूपणं न समष्टिरूपेणातस्तत्सर्वं चतुर्दशे वक्तुं भगवानुपक्रमते **परं भूय इति द्वाभ्याम्** । परं परमार्थसाधकं ज्ञायतेऽनेनेति ज्ञानमुपदेशरूपं पूर्वं सूत्रप्रायं प्रोक्तमपि भूयः प्रवक्ष्यामि । किंभूतं ज्ञानानां तपःकर्मादिविषयाणां मध्ये उत्तमं मोक्षहेतुत्वात्, तदेवाह **यदिति** । यज्ज्ञात्वा सर्वे मुनयो मननशीला याज्ञवल्क्यवामदेवाद्याः परमामात्यन्तिकीं सिद्धिं गताः ॥ १ ॥

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥**

अस्याश्च सिद्धेरैकान्तिकत्वं दर्शयति इदमिति । इदं ज्ञानं यथोक्तमुपाश्रित्य ज्ञानसाधनमनुष्ठायेत्येतन्मम परमेश्वरस्य साधर्म्यं मत्स्वरूपतामागताः प्राप्ता इत्यर्थो न तु समानधर्मतां साधर्म्यं क्षेत्रज्ञेश्वरयोर्भेदानभ्युपगमाद् गीताशास्त्रे फलवादश्चायं स्तुत्यर्थमुच्यते, सर्गेऽपि सृष्टिकालेऽपि नोपजायन्ते नोत्पद्यन्ते प्रलये ब्रह्मणोऽपि विनाशकाले न व्यथन्ति च व्यथां नापद्यन्ते न च्यवन्तीत्यर्थः ॥ २ ॥

आ० टी० । ज्ञानफलस्य कर्मफलवैलक्षण्यमाह **तस्याश्चेति** । कथं ज्ञानाश्रयणं तद्धेतुश्रवणादिसामग्रीसंपत्तिद्वारेत्याह **ज्ञानेति** । साधर्म्ये गोगवययोरिव विद्वदीश्वरयोरपि भेदः स्यादित्याशङ्क्याह **मत्स्वरूपतामिति** । साधर्म्यस्य मुख्यत्वे भेदध्रौव्याद्गीताशास्त्रविरोधः स्यादित्याह **न त्विति** । ज्ञानस्तुतये तत्फलस्य विवक्षितत्वाच्च नात्र सारूप्यमिष्टमित्याह **फलेति** । सारूप्ये धीफलं हित्वा ध्यानफलमप्रस्तुतं प्रसज्येतेत्यर्थः । ईश्वरात्मतां गतानामेवावान्तरसर्गादौ जन्माद्यभावेऽपि महासर्गादौ तद्भविष्यतीत्याशङ्क्याह **सर्गेऽपीति** ॥ २ ॥

प० टी० । ज्ञानफलमाह **इदमिति** । इदं वक्ष्यमाणं ज्ञानमुपाश्रित्यानुष्ठाय मम साधर्म्यं सारूप्यं प्राप्ताः सन्तः सर्गे आदिसर्गे ब्रह्मादिषूत्पद्यमानेष्वपि नोपजायन्ते नोत्पद्यन्ते । महाप्रलयेपि न व्यथन्ति प्रलयदुःखानि नानुभवन्ति ॥ २ ॥

**मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ॥**
**संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥**

क्षेत्रक्षेत्रज्ञसंयोग ईदृशो भूतकारणमित्याह ममेति । मम स्वभूता मदीया माया त्रिगुणात्मिका प्रकृतिर्योनिः सर्वभूतानां सर्वकार्येभ्यो महत्वाद् भरणाच्च स्वविकाराणां महद् ब्रह्मेति योनिरेव विशिष्यते तस्मिन् महति ब्रह्मणि योनौ गर्भं हिरण्यगर्भस्य जन्मनो बीजं सर्वभूतजन्मकारणं बीजं दधामि निक्षिपामि क्षेत्रक्षेत्रज्ञप्रकृतिद्वयशक्तिमानीश्वरोऽहमविद्याकामकर्मोपाधिस्वरूपानुविधायिनं क्षेत्रज्ञं क्षेत्रेण तं संयोजयामीत्यर्थः । संभव उत्पत्तिः सर्वभूतानां हिरण्यगर्भोत्पत्तिद्वारेण तन्मूलकारणात् ततस्तस्माद् योनेर्मूलकारणाद् गर्भाधानाद्भवति ॥ ३ ॥

आ० टी० । ज्ञानस्तुत्या तदभिमुखायाव्यवहितचेतसे विवक्षितमर्थमाह **क्षेत्रेति** । स्वरूपत्वेन स्वभूतत्वं वारयति **मदीयेति** । ईश्वरीं चिच्छक्तिं व्यावर्तयति **त्रिगुणात्मिकेति** । सांख्ययप्रकृतिरपि मदीयेति व्यावर्तिता । योनिशब्देन सर्वाणि भवनयोग्यानि कार्याणि प्रत्युपादानत्वमभिप्रेतमित्याह **सर्वभूतानामिति** । प्रकृतेर्महत्त्वं साधयति **सर्वेति** । सर्वकार्यव्याप्तिमादाय योनावेव

ब्रह्मशब्दो न लिङ्गवैषम्यान्महद् ब्रह्मेत्यर्थान्तरं किं चिदित्याशङ्क्याह **योनिरिति** । तस्मिन्नित्यादि व्याचष्टे **तस्मिन्निति** । ईदृशस्य क्षेत्रक्षेत्रज्ञसंयोगस्य भूतकारणत्वमिति वक्तुमुपक्रम्य किमिदमन्यदादर्शितमित्याशङ्क्याह **क्षेत्रेति** । गर्भशब्देनोक्तसंयोगस्य फलं दर्शयति **संभव इति** । 'आदिकर्ता स भूतानाम्' इति स्मृत्या हिरण्यगर्भकार्यत्वावगमाद् भूतानां कथं यथोक्तगर्भाधाननिमित्तत्वमित्याशङ्क्याह **हिरण्यगर्भेति** ॥ ३ ॥

**प० टी०** । तदेवं श्रोतारमभिमुखीकृत्य परमेश्वराधीनप्रकृतिपुरुषयोः सर्वभूतोत्पत्तिहेतुत्वं न तु स्वतन्त्रयोरिति विवक्षितमर्थं कथयति **ममेति** । मम योनिर्गर्भस्थानं महद्ब्रह्म देशतः कालतश्चापरिच्छिन्नं महद्बृंहणात् स्वकार्याणां वृद्धिहेतुभूतं ब्रह्मैवंविधं मायाख्यं तस्मिन् गर्भं हिरण्यगर्भरूपं दधामि । ततो गर्भाधानात् सकाशात् सर्वभूतानां ब्रह्मादीनां संभवो भवति ॥ ३ ॥

**सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ॥**
**तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥**

सर्वयोनिष्विति । देवपितृमनुष्यपशुमृगादिसर्वयोनिषु कौन्तेय मूर्तयो देहसंस्थानलक्षणा मूर्छिताङ्गावयवा मूर्तयः संभवन्ति यास्तासां मूर्तीनां ब्रह्म सर्वावस्थं योनिः कारणमहमीशो बीजप्रदो गर्भाधानस्य कर्ता पिता ॥ ४ ॥

**आ० टी०** । ननु कथमुक्तकारणानुरोधेन हिरण्यगर्भोद्भवमभ्युपेत्य भूतानामुत्पत्तिरुच्यते देवादिजातिविशेषेषु देहविशेषाणां कारणान्तरस्य संभवात्तत्राह **सर्वयोनिष्विति** । तत्र तत्र हेत्वन्तरप्रतिभासे कुतोऽस्य हेतुत्वमित्याशङ्क्य न तद्रूपेणास्यैवावस्थानादित्याह **सर्वावस्थमिति** ॥४॥

**प० टी०** । न केवलं सृष्ट्युपक्रममधिष्ठिताभ्यां प्रकृतिपुरुषाभ्यामयं भूतोत्पत्तिप्रकारोऽपि तु सर्वदैवेत्याह **सर्वयोनिष्विति** । सर्वयोनिषु मनुष्यपशुपक्ष्यादिषु याः स्थावरजङ्गमात्मिका मूर्तय उत्पद्यन्ते तासां महद्ब्रह्म योनिरुत्पत्तिस्थानं मातृस्थानीयमित्यर्थः । अहं बीजप्रदो गर्भाधानकर्तातएव पिता निषेक्ता । श्रुतिरपि—"सहैतावानास यथा स्त्रीपुमांसौ संपरिष्वक्तौ संमीलितौ स इममेवात्मानं द्वेधा पातयतः पतिश्च पत्नी चाभवताम्" इत्यादि । भाष्यम्—सृष्टिक्रमे पूर्वं द्वितीयमैच्छदित्युक्तं स तेन सहैतावानेतादृगासीत् । एतावान् कथं यथा स्त्रीपुमांसौ संपरिष्वक्तौ संमीलितावनन्तरं सृष्ट्यर्थमात्मा इममेव मायासंवलितमात्मानं द्वेधा द्विःप्रकारमपातयद् अपकृष्टमकरोत् । ततः पतिश्च पत्नी चाभवतां मिथुनमभूदित्यर्थः । " मिथुनं संभवाव प्रजात्या " इति ब्राह्मणमपि ॥ ४ ॥

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ॥**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥**

के गुणाः कथं निबध्नन्तीत्युच्यते सत्त्वमिति । सत्त्वं रजस्तम इत्येवंनामानो, गुणा इति पारिभाषिकः शब्दो न रूपादिवद् द्रव्याश्रिता न च गुणगुणिनोरन्यत्वमत्र विवक्षितं तस्माद् गुणा इव नित्यपरतन्त्राः क्षेत्रज्ञं प्रत्यविद्यात्मकत्वात् क्षेत्रज्ञं निबध्नन्तीव तमास्पदीकृत्यात्मानं प्रतिलभन्त इति निबध्नन्तीत्युच्यते[1] । तेऽत्र प्रकृतिसंभवा भगवन्मायासंभवा निबध्नन्तीव हे महाबाहो म-

---

१ निबध्नन्तीत्युपचर्यते—पा० लि० पु० ।

हान्तौ समर्थतरावाजानुप्रलम्बौ बाहू यस्य स महाबाहुः हे महाबाहो देहे शरीरे देहिनं देहवन्तमव्ययमव्ययत्वं चोक्तमनादित्वादिश्लोके । ननु न देही लिप्यते इत्युक्तं तत् कथमिह निबध्नन्तीत्यन्यथोच्यते, परिहृतमस्माभिरिवशब्देन निबध्नन्तीवेति ॥ ५ ॥

आ० टी० । एवं क्षेत्रक्षेत्रज्ञसंयोगाज्जगदुत्पत्तिं दर्शयता ब्रह्मैवाविद्यया संसरतीत्युक्तमिदानीमध्यायादावुक्तमाकाङ्क्षाद्वयं पूर्वमनूद्यानन्तरश्लोकेनोत्तरमाह **के गुणा इति** । सत्त्वादिषु कथं गुणशब्दप्रवृत्तिरित्याशङ्क्य परतन्त्रत्वादित्याह **गुणा इति** । रूपादिष्विव गुणशब्दः सत्त्वादिषु द्रव्याश्रितत्वं निमित्तीकृत्य किं न स्यादित्याशङ्क्य प्रकृत्यात्मकानां तेषां सर्वाश्रयत्वान्नैवमित्याह **न रूपादिवदिति** । गुणानां प्रकृतेश्च पृथगुक्तेरन्यत्वे कुतस्तेषां प्रकृत्यात्मत्वमित्याशङ्क्याह **न च गुणेति** । अत्यन्तभेदे गवाश्ववत्तद्भावासंभवादित्यर्थः । भेदाभेदे च तद्भावासंभवाद्विशेषात् कुतस्तेषु गुणपरिभाषेत्याशङ्क्याह **तस्मादिति** । क्षेत्रज्ञं प्रति नित्यपारतन्त्र्ये हेतुमाह **अविद्येति** । के गुणा इत्यस्योत्तरमुक्तं कथं बध्नन्तीत्यस्योत्तरमाह **क्षेत्रज्ञमिति** । तदेवोपपादयति **तमास्पदीकृत्येति** । संभवत्यस्मादिति संभवः प्रकृतिः संभवो येषां ते तथेति । प्राकृतानां गुणानां प्रकृत्यात्मकत्वमाह **ते चेति**। सांख्येयां प्रकृतिं प्रधानाख्यां व्यावर्तयति **भगवदिति** । इवकारानुबन्धेन नितरां बध्नन्ति स्वविकारवत्तयोपदर्शयन्तीति । क्रियापदं व्याख्याय महाबाहुशब्दं व्याचष्टे **महान्ताविति** । देहवन्तं देहमात्मानं मन्यमानं देहस्वामिनमित्यर्थः । कूटस्थस्य कथं बध्यमानत्वमित्याशङ्क्य कुर्यान्मेरावणुधियमितिन्यायेन मायामाहात्म्यमिदमित्याह **अव्ययमिति** । स्वतो धर्मतो वा व्ययराहित्यमित्यपेक्षायामाह **अव्ययत्वं चेति** । लिप्यते न स पापेनेत्यनेन विरुद्धमिदं निबध्नन्तीति वचनमिति शङ्कते **नन्विति** । इवकारानुबन्धेन क्रियापदं व्याचक्षाणैरस्माभिरस्य चोद्यस्य परिहृतत्वान्नैवमित्याह **परिहृतमिति** ॥५॥

प० टी० । इदानीं प्रकृतिसंयोगेन पुरुषस्य संसारं प्रपञ्चयति **सत्त्वमित्यादितश्चतुर्भिः** । सत्त्वं रजस्तम इति त्रयो गुणाः प्रकृतिसंभवा गुणानां साम्यावस्था प्रकृतिस्तस्याः सकाशात्पृथक्त्वेन गुणानामभिव्यक्तिरेव संभवशब्दार्थः । एवं ते प्रकृतिकार्ये देहतादात्म्येन स्थितं देहिनं चिदंशं वस्तुतोऽव्ययं निर्विकारमप्यहंकाराभिमानान्निबध्नन्ति स्वकार्यसुखदुःखादिभिः सह योजयन्ति । श्रुतिरपि तैत्तिरीयके "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति । भाष्यम्-नन्वेकस्माज्जगदुपादानतः कथं कार्यवैचित्र्यमित्याशङ्क्य कारणमपि तथैवास्तीत्याह **अजामिति** । अजामनादिमेकामेव गुणत्रयरूपिणीं यतो लोहितशुक्लकृष्णां रजःसत्त्वतमोमयीमतो विचित्रत्वाद्बह्वीं पृथङ्नामरूपकर्मात्मिकां प्रजां जनयन्तीं सरूपां यथाकर्म समानरूपाम् । अथ तच्छबलत्वशुद्धत्वभावेन क्षेत्रज्ञपरमात्मनोः स्वरूपमाह **अज इति**। एवंविधां तामनुलक्षीकृत्य तत्कार्याणि विषयान् जुषमाणो भुञ्जानोऽजो जीवः शेते निद्रित इव व्यामूढदशां प्राप्नोति, अथान्यस्तद्विलक्षणोऽज एनामुक्तलक्षणां भुक्ता भोगा यया सा भुक्तभोगा तामजां जहाति त्यजति न स्पृशति यथा कश्चिद्विप्रः स्वप्ने शूद्रत्वं प्राप्तः पुनर्जाग्रद्दशायां स्वकीयं शुद्धस्वरूपं प्राप्नोति तद्वदित्यर्थः ॥ ५ ॥

**तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् ॥**
**सुखसङ्गेन बध्नाति ज्ञानसंगेन चानघ ॥ ६ ॥**

तत्र सत्त्वमिति । तत्र सत्त्वादीनां सत्त्वस्यैव तावल्लक्षणमुच्यते निर्मल-

त्वात् स्फटिक इव मणिः प्रकाशकमनामयं निरुपद्रवं सत्त्वं तन्निबध्नाति, कथं सुखसङ्गेन सुख्यहमिति विषयभूतस्य सुखस्य विषयिण्यात्मनि संश्लेषापादानं मृषैव सुखेन संजननमिति, सैषाविद्या न हि विषयधर्मो विषयिणो भवतीच्छादि च धृत्यन्तं क्षेत्रस्यैव विषयस्य धर्म इत्युक्तं भगवताऽविद्ययैव स्वकीयधर्मभूतया विषयविषय्यविवेकलक्षणयाऽस्वात्मभूते सुखे संजयतीवासक्तमिव करोत्यसुखिनं सुखिनमिव तथा ज्ञानसंगेन च देहिनं ज्ञानमिति सुखसाहचर्यात् क्षेत्रस्यैवान्तःकरणस्य धर्मो नात्मन आत्मधर्मत्वे संगानुपपत्तेर्बन्धानुपपत्तेश्च सुख इव ज्ञानादौ संगो मन्तव्योऽनघाव्यसन ॥ ६ ॥

आ० टी०। किंलक्षणो गुणः केन बध्नातीत्यपेक्षायामाह **तत्रेति** । निर्धारणार्थतया सप्तमीं व्याचष्टे **तत्र सत्त्वादीनामिति** । पुनस्तत्रेत्यनुवादमात्रं निर्मलत्वं स्वच्छत्वमावरणवारणक्षमत्वं तस्मात् प्रकाशकं चैतन्याभिव्यञ्जकं निरुपद्रवमिति निर्मलं सत् सुखस्याभिव्यञ्जकमित्यर्थः । केन द्वारेण तदात्मानं निबध्नातीति पृच्छति **कथमिति** । सुखसङ्गेन बध्नातीत्युत्तरं तदेव विवृणोति **सुख्यहमित्यादिना** । सुखस्याभिव्यञ्जकसत्त्वपरिणामोऽत्र विषयभूतं सुखमुच्यते । संश्लेषापादनमेव विशदयति **मृषैवेति** । किमिति मृषैवेति विशेषणं सङ्गस्य वस्तुत्वसंभवादित्याशङ्क्याह **सैषेति** । नन्विच्छासंगोऽभिनिवेशश्चेत्येकोऽर्थस्तत्रेच्छादेरात्मधर्मत्वात् किमविद्ययेत्याशङ्क्य मनोधर्मत्वादिच्छादेर्नात्मधर्मतेत्याह **न हीति** । इच्छादेरनात्मधर्मत्वे किं प्रमाणमित्याशङ्क्याह **इच्छादि चेति** । तस्यात्मधर्मत्वासंभवे फलितमाह **अत इति** । संजयतीव सत्त्वमिति शेषः । इवकारप्रयोगे हेतुमाह **अविद्ययेति** । तस्या वस्तुतो नात्मसंबन्धस्तथापि संबन्धान्तराभावादस्वातन्त्र्याच्चात्मधर्मत्वमापाद्येष्टत्वमाचष्टे **स्वकीयेति** । वृत्तिमदन्तःकरणस्य विषयत्वादात्मनः साधकत्वेन तद्विषयत्वेऽपि तदविवेकरूपाविद्येति तत्स्वरूपमाह **विषयेति** । यथोक्तविद्यामाहात्म्यमिदं यदस्वरूपे तद्धर्मे च शक्तिसंपादनमित्याह **अस्वेति** । तदेव स्फुटयति **आसक्तमिवेति** । प्रकारान्तरेण सत्त्वस्य निबन्धनत्वमाह **तथेति** । ज्ञायतेऽनेनेति सत्त्वपरिणामो ज्ञानं तेन ज्ञान्यहमिति विपरीताभिमानेन सत्त्वमात्मानं निबध्नातीत्याह **ज्ञानमित्यादिना** । विपक्षे दोषमाह **आत्मेति** । स्वाभाविकत्वेन प्राप्तत्वात्तत्र स्वतः संयोगात्तद्द्वारा बन्धे च तन्निवृत्त्यनुपपत्तेर्नात्मधर्मत्वमित्यर्थः । ज्ञानैश्वर्यादावपि क्षेत्रधर्मे सङ्गस्य पूर्ववदाविद्यकत्वं सूचयति **सुख इवेति** । पापादिदोषहीनस्यैवात्र शास्त्रेऽधिकार इति द्योतयति **अनघेति** ॥ ६ ॥

प० टी०। अथ सत्त्वस्य लक्षणं बन्धकत्वं प्रकाशकत्वं चाह **तत्रेति** । तत्र तेषां गुणानां मध्ये सत्त्वं स्फटिकशिलावन्निर्मलत्वात्प्रकाशकम् । अनामयं शान्तोपद्रवम् । अत एव स्वकार्येण सुखेन यः संगस्तेन प्रकाशकत्वाज् ज्ञानसंगस्तेन च देहिनं बध्नाति अहं सुखी ज्ञानी चेत्यभिमानिनं करोति ॥ ६ ॥

**रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ॥**
**तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥**

रजो रागात्मकमिति । रजो रागात्मकं रञ्जनाद्रागो गैरिकादिवद्रागात्मकं विद्धि जानीहि तृष्णासङ्गसमुद्भवं तृष्णा प्राप्ताभिलाष आसङ्गः प्राप्ते विषये

मनसः प्रीतिलक्षणः संश्लेषः तृष्णासङ्गसमुद्भवं तृष्णासंगयोः समुद्भवं तृष्णासंगसमुद्भवं तन्निबध्नाति तद्रजः कौन्तेय कर्मसंगेन दृष्टादृष्टार्थेषु कर्मसु संजननं तत्परता कर्मसंगस्तेन निबध्नाति रजो देहिनम् ॥ ७ ॥

आ० टी० । रजस्तर्हि किंलक्षणं वा पुरुषं निबध्नातीत्याशङ्क्याह **रज इति** । रज्यते संसृज्यतेऽनेन पुरुषो दृश्यैरिति रागोऽसावात्मास्येति रागात्मकं रजो जानीहीत्याह **रञ्जनादिति** । समुद्भवत्यस्मादिति समुद्भवस्तृष्णा चासङ्गश्च तृष्णासङ्गौ तयोः समुद्भवस्तमिति विग्रहं गृहीत्वा कार्यद्वारा रजो विवक्षुस्तृष्णासङ्गयोरर्थभेदमाह **तृष्णेत्यादिना** । रजसो लक्षणमुक्त्वा निबन्धनप्रकारमाह **तद्रज इति** । कर्मसङ्गं विभजते **दृष्टेति** । अकर्तारमेव पुरुषं करोमीत्यभिमानेन प्रवर्तयतीत्यर्थः ॥ ७ ॥

प० टी० । रजः स्वभावमाह **रजइति** । रजो रागात्मकं रञ्जनरूपं विद्धि जानीहि । किंभूतं तृष्णासंगसमुद्भवमप्राप्ताभिलाषस्तृष्णा प्राप्तप्रीतिः सगस्तयोस्तृष्णासंगयोः समुद्भवो यस्मात्तद्रजो देहिनं दृष्टादृष्टार्थेषु कर्मसु संगेनासक्त्या नितरां बध्नाति ॥ ७ ॥

## तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ॥
## प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥

तमस्त्विति । तमस्तृतीयो गुणोऽज्ञानजमज्ञानाज्जातमज्ञानजं विद्धि मोहनं मोहकरमविवेककरं सर्वदेहिनां सर्वेषां देहवतां प्रमादालस्यनिद्राभिः प्रमादश्चालस्यं च निद्रा च प्रमादालस्यनिद्रास्ताभिस्तत्तमो निबध्नाति भारत ॥८॥

आ० टी० । तमस्तर्हि किंलक्षणं कथं वा पुरुषं निबध्नाति तत्राह **तमस्त्विति** । गुणानां प्रकृतिसंभवस्तत्त्वाविशेषेऽपि तमसोऽज्ञानजत्वविशेषणं तद्विपरीतस्वभावानापत्तेरिति मत्वाह **अज्ञानादिति** । मुह्यति हिताहितेना विविच्यैत्यनेनेति मोहनं विवेकप्रतिबन्धकमिति । कार्यद्वारा तमो निर्दिशति **मोहनमित्यादिना** । लक्षणमुक्त्वा तमसो बन्धनकरत्वं दर्शयति **प्रमादेति** । कार्यान्तरासक्ततया चिकीर्षितस्य कर्तव्यस्याकरणं प्रमादः, निरीहतयोत्साहप्रतिबन्धस्त्वालस्यं, स्वापो निद्रा ताभिरात्मानमविकारमेव तमोऽपि विकारयतीत्यर्थः ॥ ८ ॥

प० टी० । तमोलक्षणमाह **तम इति** । तमोऽज्ञानाज्जातमावरकस्य शक्तिप्रधानात्प्रकृत्यंशाज्जातं विद्ध्यतः सर्वेषां देहिनां मोहनं मोहजनकम् । अतएव प्रमादालस्यनिद्राभिर्बध्नाति । तत्र प्रमादोऽनवधानता । आलस्यमनुद्यमः । निद्रा चित्तस्यावसादो लयस्तैः ॥ ८ ॥

## सत्त्वं सुखे संजयति रजः कर्मणि भारत ॥
## ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥ ९ ॥

पुनर्गुणानां व्यापारः संक्षेपत उच्यते सत्त्वमिति । सत्त्वं सुखे संजयति संश्लेषयति रजः कर्मणि हे भारत संजयतीति वर्तते ज्ञानं स्वकृतं विवेकमावृत्याच्छाद्य तु तमः स्वेनावरणात्मना प्रमादे संजयत्युत प्रमादो नाम प्राप्तकर्तव्याकरणम् ॥ ९ ॥

आ० टी० । उक्तानां मध्ये कस्मिन् कार्ये कस्य गुणस्योत्कर्षस्तत्राह **पुनरिति** । सुखसाध्ये

विषये समुत्कृष्यते सत्त्वमित्याह **सत्त्वमिति**। सञ्जयतीत्यस्यार्थमाह **संश्लेषयतीति**। कर्मणि साध्ये रजः समुत्कृष्यत इत्याह **रज इति**। प्रमादे प्राधान्यं तमसो दर्शयति **ज्ञानमिति**॥ ९॥

**प० टी०**। अथ सत्त्वादीनामेव स्वस्वकार्यकरणे सामर्थ्यातिशयमाह **सत्त्वमिति**। दुःखशोकादिकारणे सत्यपि सत्त्वं सुखे संजयति संश्लेषयति देहिनं सुखाभिमुखमेव करोति। तथैव दुःखादिकारणे सत्यपि रजः कर्मण्येव संजयति। तमस्तु तत्संगेऽपि ज्ञानमावृत्य प्रमादे संजयत्यनवधानं करोति॥ ९॥

**रजस्तमश्चाभिभूय सत्त्वं भवति भारत॥**
**रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा॥ १०॥**

उक्तं कार्यं कदा कुर्वन्ति गुणा इत्युच्यते रज इति। रजस्तमश्चोभावप्यभिभूय सत्त्वं भवत्युद्भवति वर्धते यदा तदा लब्धात्मकं सत्त्वं स्वकार्यं ज्ञानसुखाद्यारभते हे भारत तत् तथा रजोगुणः सत्त्वं तमश्चैवोभावप्यभिभूय वर्धते यदा तदा कर्मतृष्णादि स्वकार्यमारभते तम आख्यो गुणः सत्त्वं रजश्चोभावप्यभिभूय तथैव वर्धते यदा तदा ज्ञानावरणादि स्वकार्यमारभते॥ १०॥

**आ० टी०**। इतरेतराविरोधेन वा सत्त्वादयो गुणा युगपदुत्कृष्यन्ते विरोधेन वा क्रमेण वेति संदेहात् पृच्छति **उक्तमिति**। सत्त्वोत्कर्षार्थिनामितराभिभवार्थं क्रमपक्षमाश्रित्योत्तरमाह **उच्यत इति**। सत्त्वाभिवृद्धिमेव विवृणोति **तदेति**। रजस्तमसोस्तिरोधानदशायामिति यावत्। रजसो वृद्धिप्रकारं तत्कार्यं च कथयति **तथेति**। तमसोऽपि वृद्धिं तत्कार्यं च निर्दिशति **तम इति**॥१०॥

**प० टी०**। अथ द्वयोरुपरमे एकस्योत्कर्षमाह **रजस्तम इति**। रजस्तमश्चाभिभूय पराभूय सत्त्वं भवत्यदृष्टवशादुद्रिक्तं भवत्यतः स्वकार्ये सुखादौ संजयतीत्यर्थः। एवं रजोऽपि सत्त्वं तमश्चेति गुणद्वयमभिभूयोद्भवति। अतः स्वकार्ये तृष्णासंगादौ संजयति। एवं तमोऽपि सत्त्वं रजश्चोभावपि गुणावभिभूयोद्भवति। अतः स्वकार्ये प्रमादालस्यादौ संजयतीत्यर्थः॥ १०॥

**सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते॥**
**ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत॥ ११॥**

यदा यो गुणः समुद्भूतो भवति तदा तस्य किं लिङ्गमुच्यते सर्वद्वारेष्विति। सर्वद्वारेष्वात्मन उपलब्धिद्वाराणि श्रोत्रादीनि सर्वाणि करणानि तेषु द्वारेष्वन्तःकरणस्य बुद्धेर्वृत्तिः प्रकाशो देहेऽस्मिन् प्रकाशशब्दवाच्यः सर्वद्वारेषूपजायते तदेव ज्ञानं यदैवं प्रकाशो ज्ञानाख्य उपजायते तदा ज्ञानप्रकाशेन लिङ्गेन विद्याद्विवृद्धमुद्भूतं सत्त्वमित्युतापि॥ ११

**आ० टी०**। उत्तरश्लोकत्रयस्याकाङ्क्षां दर्शयति **यदेति**। सत्त्वोद्भवलिङ्गदर्शनार्थमनन्तरं श्लोकमुत्थापयति **उच्यत इति**। सर्वद्वारेष्वित्यादि सप्तमी निमित्ते नेतव्या, उतशब्दोऽपिशब्दपर्यायोऽप्यतिशयार्थः॥ ११॥

**प० टी०**। अथ सत्त्वादीनामुपलब्धिप्रकारमाह **सर्वद्वारेष्विति**। अस्मिन्नात्मनो भोगायतने

शरीरे सर्वद्वारेषु श्रोत्रादिषु शब्दादिप्रकाशे सति यदा ज्ञानं स्वरूपस्फुरणमुत्पद्यते तदा सत्त्वं विवृद्धं वृद्धिं प्राप्तमिति विद्यात् ॥ ११ ॥

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ॥
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥

रजस उद्भूतस्येदं चिन्हं, लोभ इति । लोभः परद्रव्यादिष्विच्छा, प्रवृत्तिः प्रवर्तनं सामान्यचेष्टा, आरम्भ उद्यमः कस्य कर्मणामशमोऽनुपशमः, हर्षरागादिप्रवृत्तिः स्पृहा सर्वसामान्यवस्तुविषया तृष्णा, रजसि गुणे विवृद्ध एतानि लिङ्गानि जायन्ते हे भरतर्षभ ॥ १२ ॥

आ० टी० । अतिशयेनोद्भूतस्य रजसो लिङ्गमाह रजस इति । उपक्रमपर्यायस्यारम्भस्य विषयं पृच्छति कस्येति । काम्यानि निषिद्धानि च लौकिकानि कर्माणि विषयत्वेन निर्दिशति कर्मणामिति । अनुपशमो बाह्यान्तःकरणानामिति शेषः । लोभाद्युपलम्भाद्रजोवृद्धिर्बोद्धव्येतिभावः ॥ १२ ॥

प० टी० । अथ रजोवृद्धेरुपलब्धिमाह लोभ इति । बहुधा धनागमे जायमानेऽपि पुनः पुनर्वर्धमानोऽभिलाषो लोभः, प्रवृत्तिस्तु क्रियमाणेच्छा, कर्मणामारम्भश्च, अशम इदं कृत्वेदं करिष्यामीति संकल्पविकल्पानामनुपरमः, दृष्टमात्रेषूच्चावचेषु वस्तुषु जिघृक्षा स्पृहा । एतानि लिङ्गानि रजसि प्रवृद्धे सति संभवन्ति ॥ १२ ॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ॥
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥

अप्रकाश इति । अप्रकाशोऽविवेकोऽत्यन्तमप्रवृत्तिश्च प्रवृत्त्यभावस्तत्कार्यं प्रमादो मोह एव चाविवेको मूढतेत्यर्थः । तमसि गुणे विवृद्ध एतानि लिङ्गानि जायन्ते हे कुरुनन्दन ॥ १३ ॥

आ० टी० । उद्भूतस्य तमसो लिङ्गमाह अप्रकाश इति । सर्वथैव ज्ञानकर्मणोरभावो विशेषणाभ्यामुक्तस्तत्कार्यमिति तच्छब्दो दर्शिताविवेकार्थः । प्रमादो व्याख्यातः मोहो वेदितव्यस्यान्यथावेदनम् । तस्यैव मौढ्यान्तरत्वमाह अविवेक इति । अविवेकातिशयादिना प्रवृद्धं तमो ज्ञेयमिति भावः ॥ १३ ॥

प० टी० । अथ तमोलिङ्गमाह अप्रकाश इति । अप्रकाशो विवेकभ्रंशः, अप्रवृत्तिरनुद्यमः, प्रमादः कर्तव्यार्थानुसंधानराहित्यम्, मोहो मिथ्याभिनिवेशस्तमसि विवृद्ध एतानि लिङ्गानि जायन्ते १३

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ॥
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥ १४ ॥

मरणद्वारेणापि यत् फलं प्राप्यते तदपि सङ्गरागहेतुकं सर्वं गौणमेवेति दर्शयन्नाह यदेति । यदा सत्त्वे प्रवृद्धे उद्भूते तु प्रलयं मरणं याति प्रतिपद्यते

देहभृदात्मा तदोत्तमविदां महदादितत्त्वविदामित्येतल्लोकानमलान् मलरहितान् प्रतिपद्यते प्राप्नोतीत्येतत् ॥ १४ ॥

आ० टी० । सात्त्विकादीनां भावानां पारलौकिकं फलविभागमुदाहरति **मरणेति** । संगः सक्ती रागस्तृष्णा तद्बलादनुष्ठानद्वारा लभ्यमानमित्यर्थः । गौणं सत्त्वादिगुणप्रयुक्तमिति यावत् । तत्र सत्त्वगुणवृद्धिकृतफलविशेषमाह **यदेति** । मलरहितान् रजस्तमसोरन्यतरस्योद्भवो मलं तेन रहितानागमसिद्धान् ब्रह्मलोकादीनित्यर्थः ॥ १४ ॥

प० टी० । अथ मरणसमये विवृद्धानां सत्त्वादीनां फलविशेषमाह **यदेति** । सत्त्वे प्रवृद्धे सति यदा जीवः प्रलयं मृत्युं प्राप्नोति तदोत्तमविदामुत्तमं मुख्यप्राणं हिरण्यगर्भं विदन्त्युपासते त उत्तमविदस्तेषां लोकान् सिद्ध्याविर्भावसुखानि प्राप्नुयात् ॥१४॥

**रजसि प्रलयं गत्वा कर्मसंगिषु जायते ॥**
**तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥**

रजसि गुणे विवृद्धे प्रलयं मरणं गत्वा प्राप्य कर्मसङ्गिषु स कर्मासक्तियुक्तेषु मनुष्येषु जायते तथा तद्वदेव प्रलीनो मृतस्तमसि विवृद्धे मूढयोनिषु पश्वादियोनिषु जायते ॥ १५ ॥

आ० टी० । रजःसमुद्रेके मृतस्य फलविशेषं दर्शयति **रजसीति** । जायते शरीरं गृह्णातीत्यर्थः । यथा सत्त्वे रजसि च प्रवृद्धे मृतो ब्रह्मलोकादिषु मनुष्यलोके च देवादिषु मनुष्येषु च जायते तथैवेत्याह **तद्वदिति** ॥ १५ ॥

प० टी० । **रजसीति** । रजोगुणवृद्धौ सत्यां प्रलयं मृत्युं प्राप्य कर्मासक्तेषु मनुष्येषु जायते । तथा तमसि प्रवृद्धे सति प्रलीनो मृतः सन् मूढयोनिषु पश्वादिषु जायते ॥ १५ ॥

**कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ॥**
**रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥**

अतीतश्लोकार्थस्यैव संक्षेप उच्यते कर्मणः सुकृतस्य सात्त्विकस्येत्यर्थः । आहुः शिष्टाः, सात्त्विकमेव निर्मलं फलमिति रजसस्तु फलं दुःखं राजसस्य कर्मण इत्यर्थः । कर्माधिकारात् फलमपि दुःखमेव कारणानुरूप्याद्राजसमेव तथाज्ञानं तमसस्तामसस्य कर्मणोऽधर्मस्य पूर्ववत् ॥ १६ ॥

आ० टी० । भावानां फलमुक्त्वा सात्त्विकादीनां कर्मणां फलमाह **अतीतेति** । सुकृतस्य शोभनस्य कृतस्य पुण्यस्येत्यर्थः । सात्त्विकस्याशुद्धिरहितस्येति यावत्, सात्त्विकं सत्त्वेन निर्वृत्तं निर्मलं रजस्तमःसमुद्भवान्मलान्निष्क्रान्तम् । रजश्शब्दस्य राजसे कर्मणि कुतो वृत्तिस्तत्राह **कर्मेति** । दुःखमेव दुःखबहुलं सुखमेवेत्यर्थः । कथमित्थं व्याख्यायते तत्राह **कारणेति** । पापमिश्रस्य पुण्यस्य रजो निमित्तं यथोक्तं युक्तमित्यर्थः । अज्ञानमविवेकप्रायं दुःखं तामसाधर्मफलमित्याह **तथेति** ॥१६॥

प० टी० । इदानीं सत्त्वादीनां स्वानुरूपकर्मद्वारेण विचित्रफलहेतुत्वमाह **कर्मण इति** । सुकृतस्य सात्त्विकस्य कर्मणः फलं सात्त्विकं सत्त्वप्रधानं सुखं तथा निर्मलं प्रकाशबहुलं फलमाहुः । शेषं स्पष्टम् ॥ १६ ॥

**सत्त्वात् संजायते ज्ञानं रजसो लोभ एव च ॥**
**प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७॥**

किं च गुणेभ्यो भवति सत्त्वादिति । सत्त्वाल्लब्धात्मकात् संजायते समुत्पद्यते ज्ञानं रजसो लोभ एव च प्रमादमोहौ चोभौ तमसो भवतोऽज्ञानमेव भवति ॥ १७ ॥

आ० टी० । विहितप्रतिषिद्धज्ञानकर्माणि सत्त्वादीनां लक्षणानि संक्षिप्य दर्शयति किं चेति । ज्ञानं सर्वकरणद्वारकमज्ञानं विवेकाभावः ॥ १७ ॥

प० टी० । सत्त्वादिति । स्पष्टम् ॥१७॥

**ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ॥**
**जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः ॥ १८ ॥**

किं च ऊर्ध्वमिति । उर्ध्वं गच्छन्ति देवलोकादिषूत्पद्यन्ते सत्त्वस्थाः सत्त्वगुणवृत्तस्था, मध्ये तिष्ठन्ति मनुष्येषूत्पद्यन्ते राजसाः, जघन्यगुणवृत्तस्था जघन्यश्चासौ गुणश्च जघन्यगुणस्तमस्तस्य वृत्तं निद्रालस्यादि तस्मिन् स्थिता जघन्यगुणवृत्तस्था मूढा अधो गच्छन्ति पश्वादिषूत्पद्यन्ते तामसाः ॥ १८ ॥

आ० टी० । सात्त्विकादिज्ञानकर्मफलान्युक्त्वानुक्तसंग्रहार्थं सामान्येनोपसंहरति किं चेति । वक्ष्यमाणफलद्वारापि सत्त्वादिषु ज्ञानमित्यर्थः। सत्त्वगुणस्य वृत्तं शोभनं ज्ञानं कर्म वा तत्र तिष्ठन्तीति तथा राजसा रजोगुणनिमित्ते ज्ञाने कर्मणि वा निरताः ॥ १८ ॥

प० टी० । अथ सत्त्वादिवृत्तिशीलानां फलभेदानाह ऊर्ध्वमिति । सत्त्वेऽविरतं तिष्ठन्ति ते सत्त्वस्थाः सत्त्वप्रधाना ऊर्ध्वं गच्छन्ति । उत्तरोत्तरं शतगुणानन्दान्मनुष्यपितृदेवलोकान् गच्छन्ति । राजसास्तृष्णाकुला मध्ये मनुष्यलोक एव तिष्ठन्ति । जघन्यो निन्द्यगुणस्तमस्तद्वृत्तस्थास्तामसा अधोऽन्धतामिस्रासु योनिषूत्पद्यन्ते ॥ १८ ॥

**नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ॥**
**गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥**

पुरुषस्य प्रकृतिस्थत्वस्वरूपेण मिथ्याज्ञानेन युक्तस्य भोग्येषु गुणेषु सुखदुःखमोहात्मकेषु सुखी दुःखी मूढोऽहमस्मीत्येवंरूपो यः सङ्गस्तत्कारणं पुरुषस्य सदसद्योनिजन्मप्राप्तिलक्षणस्य संसारस्येति समासेन पूर्वाध्याये यदुक्तं तदिह सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवा इत्यत आरभ्य गुणस्वरूपं गुणवृत्तत्वं स्ववृत्तेन च गुणानां बन्धकत्वं गुणवृत्तनिबद्धस्य च पुरुषस्य या गतिरित्येतत् सर्वं मिथ्याज्ञानमज्ञानमूलं च बन्धकारणं विस्तरेणोक्तमधुना सम्यग्दर्शनान् मोक्षो वक्तव्य इत्याह भगवान् नान्यमिति । नान्यं कार्यकारणविष-

याकारपरिणतेभ्यो गुणेभ्यः कर्तारमन्यं यदा द्रष्टा विद्वान् सन्नानुपश्यति गुणा एव सर्वावस्थाः सर्वकर्मणां कर्तार इत्येवं पश्यति गुणेभ्यश्च परं गुणव्यापारसाक्षिभूतं च निर्गुणं वेत्ति मद्भावं मम भावं वासुदेवत्वं वासुदेवः सर्वमित्येवं पश्यन् स द्रष्टाधिगच्छति ॥ १९ ॥

**आ० टी०** । कस्मिन् गुणे कथमित्यादिप्रश्नान् प्रत्याख्याय गुणेभ्यो मोक्षणं कथमिति प्रत्याख्यानार्थं वृत्तानुवादपूर्वकं मिथ्याज्ञाननिवर्तकं सम्यग्ज्ञानं प्रस्तौति **पुरुषस्येत्यादिना** । पुरुषस्य या गतिः सा चेति शेषः । मोक्षो गुणेभ्यो विश्लेषपूर्वको ब्रह्मभावः । सम्यग्ज्ञानोक्तिपरं श्लोकं व्याख्यातुं प्रतीकमादत्ते **नान्यमिति** । सत्त्वादिकार्यविषयस्य गुणशब्दस्य विवक्षितमर्थमाह **कार्येति** । विद्यानन्तर्यमनुशब्दार्थः । अक्षरार्थमुक्त्वा पूर्वार्धस्यार्थिकमर्थमाह **गुणा एवेति** । सर्वावस्थास्तत्कार्यकरणाकारपरिणता इति यावत्, सर्वकर्मणां कायिकवाचिकमानसानां विहितप्रतिषिद्धानामित्यर्थः । परं व्यतिरिक्तम् । व्यतिरेकमेव स्फोरयति **गुणेति** । निर्गुणं ब्रह्मात्मानमित्यर्थः । मद्भावं ब्रह्मतामसौ प्राप्नोति ब्रह्मभावोऽस्याभिव्यज्यत इत्यर्थः ॥ १९ ॥

**प० टी०** । एवं गुणप्रवाहरूपं संसारं व्यावर्ण्येदानीम् 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' इति पूर्वं प्रतिज्ञातमनुस्मरन् मोक्षप्रापकज्ञानोपायमाह **नान्यमिति द्वाभ्याम्** । यदा द्रष्टा विवेकी भूत्वा बुद्ध्याद्याकारेण परिणतेभ्यो गुणेभ्यः सकाशादन्यं कर्तारं न पश्यत्यपि तु गुणा एव कर्माणि कुर्वन्तीति पश्यति तथा गुणेभ्यः परं व्यतिरिक्तं तत्साक्षिणमात्मानं वेत्ति स तु मद्भावं ब्रह्माधिगच्छति ॥ १९ ॥

गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ॥
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

कथमधिगच्छतीत्युच्यते गुणेति । गुणानेतान् यथोक्तानतीत्य जीवन्नेवातिक्रम्य मायोपाधिभूतांस्त्रीन् देही देहसमुद्भवान् देहोत्पत्तिबीजभूतान्, जन्ममृत्युजरादुःखैः, जन्म च मृत्युश्च जरा च दुःखानि च तैर्जीवन्नेव मुक्तः सन् विद्वानमृतमश्नुते एवं मद्भावमधिगच्छतीत्यर्थः ॥ २० ॥

**आ० टी०** । अनर्थव्रातरूपमपोह्य विद्वान् ब्रह्मत्वं प्राप्नोत्येतत्प्रश्नद्वारा विवृणोति **कथमित्यादिना** । यथोक्तानित्येतदेव व्याचष्टे **मायेति** । मायैवोपाधिस्तद्भूतान् तदात्मनः सत्त्वादीननर्थरूपानित्यर्थः । समुद्भवन्तीति समुद्भवा देहस्य समुद्भवा देहसमुद्भवास्तानिति व्युत्पत्तिं गृहीत्वा **व्याचष्टे देहोत्पत्तीति** । यो विद्वानविद्यामयान् गुणान् जीवन्नेवातिक्रम्य स्थितस्तमेव विशिनष्टि **जन्मेति** । पुरस्ताद्विस्तरेणोक्तस्य प्रसङ्गादत्र संक्षिप्तस्य सम्यग् ज्ञानस्य फलमुपसंहरति **एवमिति** ॥ २० ॥

**प० टी०** । ततश्च गुणकृतसर्वानर्थनिवृत्त्या कृतकृत्यो भवतीत्याह **गुणानिति** । देहाकारः समुद्भवः परिणामो येषां ते देहसमुद्भवास्तानेतांस्त्रीन् गुणानतीत्याक्रम्य जन्ममृत्युजरादुःखैर्विमुक्तः **सन्नमृतं** मोक्षमश्नुते ॥ २० ॥

## अर्जुन उवाच ।

**कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो ॥**
**किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते ॥२१॥**

जीवन्नेव गुणानतीत्यामृतमश्नुत इति प्रश्नबीजं प्रतिलभ्यार्जुन उवाच कैरिति । कैर्लिङ्गैश्चिह्नैस्त्रीनेतान् व्याख्यातान् गुणानतीतोऽतिक्रान्तो भवति प्रभो किमाचारः कोऽस्याचार इति किमाचारः कथं केन च प्रकारेण एतांस्त्रीन् गुणानतिवर्तते ॥ २१ ॥

**आ॰ टी॰** । सम्यग्धीफलं गुणातिक्रमणपूर्वकममृतत्वमुक्तं श्रुत्वा मुक्तस्य लक्षणं वक्तव्यमिति प्रकृतं विवक्षितत्वात् प्रश्नमुत्थापयति **जीवन्नेवेति** । ये व्याख्याताः सत्त्वादयो गुणास्तत्परिणामभूतानध्यासानतिक्रान्तः सन् कैर्लिङ्गैर्ज्ञातो भवतीति तानि वक्तव्यानि सिद्धयर्थं पूर्वमनुष्ठेयानि पश्चादयत्नलभ्यानि लिङ्गानि, कानि तानीति पृच्छति **कैरिति** । यथेष्टचेष्टाव्यावृत्यर्थं प्रश्नान्तरं **किमाचार इति** । ज्ञानस्य गुणात्ययोपायस्योक्तत्वादुपायप्रकारजिज्ञासया प्रश्नान्तरं **कथमिति** ॥२१॥

**प॰ टी॰** । एवमेतच्छ्रुत्वा गुणातीतस्य लक्षणं गुणात्ययोपायं च जिज्ञासुरर्जुनः पृच्छति **कैरिति** । भो प्रभो एतानुक्तप्रकारांस्त्रीन् गुणान् कैरात्मन्युत्पन्नैर्लिङ्गैश्चिह्नैरतीतो भवति तथाविधः किमाचारः कीदृश आचारो यस्येति किमाचारः कथं वर्तत इत्यर्थः । कथं च केनोपायेन तांस्त्रीन् गुणानतीतोऽतीत्य वर्तत इति प्रश्नः ॥ २१ ॥

## श्रीभगवानुवाच ।

**प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ॥**
**न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥**

गुणातीतस्य लक्षणं गुणातीतत्वोपायश्चार्जुनेन पृष्टोऽस्मिन् श्लोके प्रश्नद्वयार्थं प्रतिवचनं भगवान् यत्तावत् कैर्लिङ्गैर्युक्तो गुणातीतो भवति तच्छृणु प्रकाशमिति । प्रकाशं च सत्कार्यं प्रवृत्तिं च रजःकार्यं मोहमेव च तमःकार्यमित्येतानि न द्वेष्टि संप्रवृत्तानि सम्यग्विषयभावेनोद्भूतानि मम तामसः प्रत्ययो जातस्तेनाहं मूढस्तथा राजसी प्रवृत्तिर्ममोत्पन्ना दुःखात्मिका तेनाहं रजसा प्रवर्तितः प्रचलितः स्वरूपात् कष्टं मम वर्तते योऽयं मत्स्वरूपावस्थानाद् भ्रंशस्तथा सात्त्विको गुणः प्रकाशात्मा मां विवेकित्वमापादयन् सुखेन च संजनयन् मां बध्नातीति तानि द्वेष्टाऽसम्यग्दर्शित्वेन तदेवं गुणातीतो न द्वेष्टि संप्रवृत्तानि यथा च सात्त्विकादिपुरुषः सात्त्विकादिकार्याण्यात्मानं प्रति प्रकाश्य निवृत्तानि काङ्क्षति न तथा गुणातीतो निवृत्तानि काङ्क्षतीत्यर्थः । एतन्न

परप्रत्यक्षं लिङ्गं किं तर्हि स्वात्मप्रत्यक्षत्वादात्मविषयमेवैतल्लक्षणं न हि स्वात्मविषयं द्वेषाकाङ्क्षां चापरः पश्यति ॥ २२ ॥

आ० टी० । प्रश्नस्वरूपमनूद्य तदुत्तरं दर्शयति **गुणातीतस्येति** । पृष्टो भगवानिति संबन्धः, किं वृत्तस्य त्रिधा प्रयोगदर्शनात् प्रश्नद्वयार्थमित्युपलक्षणं प्रश्नत्रयार्थमिति द्रष्टव्यम् । उत्तरमवतार्यानन्तरश्लोकतात्पर्यमाह **यत्तावदिति** । तानि सम्यग्दर्शी न द्वेष्टीत्युक्तमेव स्पष्टयितुं निषेध्यमसम्यग्दर्शिनो द्वेषं तेषु प्रकटयति **ममेत्यादिना** । सम्यग्दर्शिनः संप्रवृत्तेषु प्रकाशादिषु द्वेषाभावमुपसंहरति **तदेवमिति** । न निवृत्तानीत्यादि व्याचष्टे **यथा चेति** । तेषामनात्मीयत्वं सम्यक्पश्यन्नात्मानुकूलप्रतिकूलतारोपणेन नोद्विजते तेभ्यश्च न स्पृहयतीत्यर्थः । स्वानुभवसिद्धं गुणातीतस्य लक्षणमुक्तमित्याह **एतन्नेति** । परप्रत्यक्षत्वाभावं प्रपञ्चयति **न हीति** । **आश्रयो** विषयः ॥ २२ ॥

प०टी०।तत्रोत्तरं भगवानाह **प्रकाशं चेति सप्तभिः**।तत्र प्रथममेकेन गुणातीतस्य लक्षणमाह **प्रकाशं चेति**। सर्वद्वारेषु देहेऽस्मिन्निति पूर्वोक्तं सत्त्वकार्यं प्रवृत्तिश्च रजःकार्यं मोहस्तमःकार्यमित्युपलक्षणार्थमेतत् । सत्त्वादीनां सर्वाण्यपि कार्याणि यथायथं संप्रवृत्तानि स्वतःप्राप्तानि सन्ति दुःखबुद्ध्या न द्वेष्टि निवृत्तानि च सन्ति च न काङ्क्षति गुणातीतः स उच्यत इति चतुर्थेनान्वयः ॥ २२ ॥

**उदासीनवदासीनो गुणैर्यो न विचाल्यते ॥**
**गुणा वर्तन्त इत्येवं योऽवतिष्ठति नेङ्गते ॥ २३ ॥**

अथेदानीं गुणातीतः किमाचार इति प्रश्नस्य प्रतिवचनमाह उदासीनेति । उदासीनवद्यथोदासीनो न कस्यचित् पक्षं भजते न तथायं गुणातीतत्वोपायमार्गेऽवस्थित आसीन आत्मविद्गुणैर्यः संन्यासी न विचाल्यते विवेकदर्शनावस्थातस्तदेतत् स्फुटीकरोति । गुणाः कार्यकारणविषयाकारपरिणता अन्योऽन्यस्मिन् वर्तन्त इति योऽवतिष्ठति । छन्दोभङ्गभयान् परस्मैपदप्रयोगः । योऽनुतिष्ठतीति पाठान्तरम् । नेङ्गते न चलति स्वरूपावस्थ एव भवतीत्यर्थः ॥२३॥

आ० टी० । कैर्लिङ्गैरित्यादि परिहृत्य द्वितीयं प्रश्नं परिहरति **अथेति** । दृष्टान्तं व्याचष्टे **यथेति** । उपेक्षकस्य पक्षपातत्वायोगादित्यर्थः । आत्मविदात्मनः कौटस्थ्यज्ञानेनासीनो निवृत्तकर्तृत्वाभिमानोऽप्रयतमानो भवतीति दार्ष्टान्तिकमाह **तथेति** । गुणातीतत्वोपायमार्गो ज्ञानमेव । शब्दादिभिर्विषयैरस्य कूटस्थत्वज्ञानात् प्रच्यवनमाशङ्क्याह **गुणैरिति** । उपनतानां विषयाणां रागद्वेषद्वारा प्रवर्तकत्वमित्येतत् प्रपञ्चयति **तदेतदिति** । योऽवतिष्ठति स गुणातीत इत्युत्तरत्र संबन्धः । 'अवपूर्वस्य तिष्ठतेरात्मनेपदे प्रयोक्तव्ये कथं परस्मैपदमित्याशङ्क्याह **छन्दोभङ्गेति** । पाठान्तरे तु बाधितानुवृत्तिमात्रमनुष्ठानं कारणाकारपरिणतानां गुणानां विषयाकारपरिणतेषु तेषु प्रवृत्तिर्न ममेति पश्यन्नचलतया कूटस्थदृष्टिमात्मनो न जहातीत्याह **नेङ्गत इति** ॥ २३ ॥

प० टी० । तदेवं स्वसंवेद्यस्य लक्षणमुक्त्वा किमाचार इति द्वितीयप्रश्नोत्तरमाह **उदासीनवदिति त्रिभिः** । उदासीनवत्साक्षितया तटस्थवदासीनः स्थितो गुणैर्गुणकार्यैः सुखदुःखादिभिर्यो न चाल्यतेऽपितु गुणा एव स्वकार्येषु वर्तन्ते एतैर्मम संबन्धो नास्तीति विवेकेन यस्तूष्णीमवतिष्ठतीति । परस्मैपदमार्षम् । नेङ्गते न चलति ॥ २३ ॥

**समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ॥**
**तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥**

किं च समदुःखेति । समदुःखसुखः समे दुःखसुखे यस्य स समदुःखसुखः स्वस्थः स्वात्मनि स्थितः प्रसन्नोऽविक्रियः समलोष्टाश्मकाञ्चनो लोष्टं चाश्मा च काञ्चनं च समानि यस्य स समलोष्टाश्मकाञ्चनस्तुल्यप्रियाप्रियः प्रियं चाप्रियं च प्रियाप्रिये समे यस्य सोऽयं तुल्यप्रियाप्रियो धीरो धीमान् तुल्यनिन्दात्मसंस्तुतिः निन्दा चात्मसंस्तुतिश्च तुल्ये निन्दात्मसंस्तुती यस्य यतेः स तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥

**आ० टी०** । गुणातीतस्य लिङ्गान्तरमाह **किंचेति** । तयोः समत्वं रागद्वेषानुत्पादकतया स्वकीयत्वाभिमानानास्पदत्वं प्रसन्नत्वं स्वास्थ्यादप्रच्युतिरविक्रियत्वम् । विद्वद्दृष्ट्या प्रियाप्रिययोरसंभवेऽपि लोकदृष्टिमाश्रित्याह **प्रियं चेति** । प्रियाप्रियग्रहणेन गृहीतानां काञ्चनादीनां ब्राह्मणपरिव्राजकवत् पृथग्ग्रहणम् । निन्दा दोषोक्तिरात्मसंस्तुतिरात्मनो गुणकीर्तनम् ॥ २४ ॥

**प० टी०** । अपि च **समदुःखसुखेति** । समे दुःखसुखे यस्य । यतः स्वस्थः स्वरूप एव स्थितः । समानि लोष्टाश्मकाञ्चनानि यस्य शेषं स्पष्टम् ॥ २४ ॥

**मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ॥**
**सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ २५ ॥**

किं च मानापमानयोरिति । मानापमानयोस्तुल्यः समो निर्विकारस्तुल्यो मित्रारिपक्षयोः, यद्यप्युदासीना भवन्ति केचित्स्वाभिप्रायेण तथापि पराभिप्रायेण मित्रारिपक्षयोरिव भवन्तीति, अयं तु तुल्यो मित्रारिपक्षयोरित्याह सर्वारम्भपरित्यागी दृष्टार्थानि कर्माण्यारभन्ते इत्यारम्भाः सर्वानारम्भान् परित्यक्तुं शीलमस्येति सर्वारम्भपरित्यागी देहधारणमात्रनिमित्तव्यतिरेकेण सर्वकर्मपरित्यागीत्यर्थः । गुणातीतः स उच्यते । उदासीनवदित्यादि गुणातीतः स उच्यते इत्येतदन्तमुक्तं यावद्यत्नसाध्यं तावत्संन्यासिनानुष्ठेयं गुणातीतत्वसाधनं मुमुक्षोः स्थिरीभूतं तु स्वसंवेद्यं सद्गुणातीतस्य यतेर्लक्षणं भवतीति ॥ २५ ॥

**आ० टी०** । इतश्च गुणातीतः शक्यो ज्ञातुमित्याह **किंचेति** । मानः सत्कारस्तिरस्कारोऽपमानः, परदृष्ट्या यौ सखिशत्रू तयोः पक्षयोर्निर्विशेषो न कस्यचित् पक्षे तिष्ठतीत्याह **तुल्य इति** । विदुषो मित्रादिबुद्ध्यभावात्तुल्यो मित्रारिपक्षयोरित्ययुक्तमित्याशङ्क्याह **यद्यपीति** । सर्वकर्मत्यागे देहधारणमपि निमित्ताभावान्न स्यादित्याशङ्क्याह **देहेति** । उक्तविशेषणो गुणातीतो ज्ञातव्य इत्याह **गुणेति** । यदुक्तमुपेक्षकत्वादि तद्विद्योदयात् पूर्वं यत्र साध्यं विद्याधिकारिणा ज्ञानसाधनत्वेनानुष्ठेयमुत्पन्नायां तु विद्यायां जीवन्मुक्तस्योक्तधर्मजातं स्थिरीभूतं स्वानुभवसिद्धं लक्षणत्वेन तिष्ठतीत्युक्ते धर्मजाते विभागं दर्शयति **उदासीनवदित्यादिना** ॥ २५ ॥

प० टी० । अपि च मानापमानयोस्तुल्य इति । सर्वान् दृष्टानारम्भानुद्यमानपि त्यक्तुं शीलं यस्य । तथाविधो गुणातीत उच्यते ॥ २९ ॥

**मां च योऽव्यभिचारेण भक्तियोगेन सेवते ॥**
**स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६ ॥**

अधुना कथं च त्रीन् गुणानतिवर्तत इति प्रश्नस्य प्रतिवचनमाह मां चेति । मां चेश्वरं नारायणं सर्वभूतहृदयाश्रितं यो यतिः कर्मी वाव्यभिचारेण कदाचित् यो व्यभिचरति न, भक्तियोगः भजनं भक्तिः सैव योगस्तेन विवेकज्ञानात्मकेन भक्तियोगेन ज्ञानसमुद्भवेन सेवते स गुणान् समतीत्यैतान् यथोक्तान् ब्रह्मभूयाय भवनं भूयः ब्रह्मभूयाय ब्रह्मभवनाय मोक्षाय कल्पते समर्थो भवतीत्यर्थः ॥ २६ ॥

आ० टी० । प्रश्नद्वयमेवं परिहृत्य तृतीयं प्रश्नं परिहरति अधुनेति । मच्छब्दस्य संसारिविषयत्वं व्यावर्तयति ईश्वरमिति । तत्रैव नारायणशब्दान्मूर्त्यभेदो व्यावर्त्यते । तस्य ताटस्थ्यं व्यवच्छिनत्ति सर्वेति । मुख्यामुख्याधिकारिभेदेन विकल्पः । भक्तियोगस्य यादृच्छिकत्वं व्यवच्छेत्तुमव्यभिचारेणेत्युक्तम् तद्व्याचष्टे चेति । भजनं परमप्रेम स एव युज्यतेऽनेनेति योगः । तेन सेवते पराक्चित्ततां विना सदानुसंदधातीत्यर्थः । स भगवदनुकृतसम्यग्धीसंपन्नो विद्वान् जीवन्नेवेत्यर्थः ॥ २६ ॥

प० टी० । कथं चैतान् गुणानतिवर्तत इत्यस्य प्रश्नोत्तरमाह मामिति । मामीश्वरमव्यभिचारेणैकान्तभक्तियोगेन यः सेवते स एवैतान् गुणान् सम्यक् प्रकारेणातीत्य ब्रह्मभूयाय ब्रह्मभावाय कल्पते योग्यो भवति ॥ २६ ॥

**ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ॥**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥**

कुत एतदित्युच्यते । ब्रह्मणः परमात्मनो हि यस्मात् प्रतिष्ठाहं प्रतितिष्ठत्यस्मिन्निति प्रतिष्ठाहं प्रत्यगात्मा कीदृशस्य ब्रह्मणोऽमृतस्याविनाशिनोऽव्ययस्याविकारिणः शाश्वतस्य च नित्यस्य धर्मस्य ज्ञानयोगधर्मप्राप्यस्य सुखस्यानन्दरूपस्यैकान्तिकस्याव्यभिचारिणोऽमृतादिस्वभावस्य परमानन्दरूपस्य परमात्मनः प्रत्यगात्मा प्रतिष्ठा सम्यग् ज्ञानेन परमात्मतया निश्चीयत इति तदेतद्ब्रह्मभूयाय कल्पत इत्युक्तम् । यया चेश्वरशक्त्या भक्तानुग्रहादिप्रयोजनाय ब्रह्म प्रतिष्ठिते प्रवर्तते सा शक्तिर्ब्रह्मैवाहं शक्तिशक्तिमतोरनन्यत्वादित्यभिप्रायोऽथवा ब्रह्मशब्दवाच्यत्वात् सविकल्पकं ब्रह्म तस्य ब्रह्मणो निर्विकल्पकोऽहमेव नान्यः प्रतिष्ठाश्रयः किंविशिष्टस्यामरणधर्मकस्याव्ययस्य व्ययरहितस्य किं च शाश्वतस्य

च नित्यस्य धर्मस्य ज्ञाननिष्ठालक्षणस्य सुखस्य तज्जनितस्यैकान्तनियतस्य च प्रतिष्ठाहमिति वर्तते ॥ २७ ॥

## इति श्रीमत्पूज्यपादशंकरभगवतः कृतौ गीताभाष्ये चतुर्दशोऽध्यायः ॥ १४ ॥

**आ० टी०** । विद्वान् ब्रह्मैवेत्यत्र हेतुं पृच्छति **कुत इति** । तत्रोत्तरमाह **उच्यत इति** । ब्रह्मशब्दस्यासति बाधके मुख्यार्थग्रहणमभिप्रेत्याह **परमात्मन इति** । तं प्रति प्रत्यगात्मनो यत् प्रतिष्ठात्वं तदुपपादयति **प्रतितिष्ठतीति** । यद् ब्रह्म प्रत्यगात्मनि प्रतितिष्ठति तत् किं विशेषणमित्यपेक्षायामुक्तम**मृतस्येत्यादि** । तत्रामृतशब्देनाव्ययशब्दस्य पुनरुक्तिं परिहरति **अविकारिण इति** । नित्यत्वमपक्षयराहित्यं तेन पूर्वाभ्यामपौनरुक्त्यम् । प्रसिद्धार्थस्य धर्मशब्दस्य ब्रह्मण्यनुपपत्तिमाशङ्क्याह **ज्ञानेति** । अर्थेन्द्रियसंबन्धोत्थं सुखं व्यावर्तयितुमैकान्तिकस्येत्युक्तम् । अक्षरार्थमुक्त्वा वाक्यार्थमाह **अमृतादीति** । प्रतिष्ठा यस्मादिति पूर्वेण संबन्धः । तस्मात् प्रत्यगात्मा परमात्मतया निश्चीयते सम्यग्ज्ञानेनेति योजना । अस्य श्लोकस्य पूर्वश्लोकेनैकवाक्यतामाह **तदेतदिति** । विवक्षितं वाक्यार्थं प्रपञ्चयति **ययेति** । सा शक्तिर्ब्रह्मैवेति कथं सामानाधिकरण्यं तत्राह **शक्तीति** । व्याख्यानान्तरमाह **अथवेति** । विशेषणानि पूर्ववदपौनरुक्तानि नेतव्यानि । तदनेनाध्यायेन क्षेत्रक्षेत्रज्ञसंयोगस्य संसारकारणत्वं पञ्चप्रश्ननिरूपणद्वारेण च सम्यग्ज्ञानस्य सकलसंसारनिवर्तकत्वमित्येतदुपपादयता मुमुक्षोर्यत्नसाध्यं गुणैरचाल्यत्वादि मुक्तस्यायत्नसिद्धं लक्षणमिति निर्धारितः ॥ २७ ॥

इत्यानन्दगिरिकृतगीताटीकायां चतुर्दशोऽध्यायः ॥ १४ ॥

**प० टी०** । अथ मनुष्यवेषधारित्वेन मूढानां स्वेश्वरत्वे देहनिरासार्थमाह **ब्रह्मण इति** । चिदानन्दमात्ररूपस्य ब्रह्मणोऽहं प्रतिष्ठा प्रतिमा घनीभावः, यथा घनीभूतं तेज एव सूर्याकारं भवति यथा च घनीभूतः परिमल एव कर्पूराकारो भवति तद्वदित्यर्थः । किंभूतस्य ब्रह्मणः अव्ययस्य नित्यस्यामृतस्य मोक्षस्य नित्यमुक्तत्वात् तथा तत्साधनस्य शाश्वतस्यानश्वरफलदस्य धर्मस्य शुद्धसत्त्वात्मकत्वात् तथैकान्तिकस्याखण्डस्य सुखस्य च प्रतिष्ठाहं परमानन्दरूपत्वात् । अतो मत्सेविनो मद्भावस्यावश्यंभावित्वाद्युक्तमुक्तं ब्रह्मभूयाय कल्पत इति । तदुक्तमध्यात्ममीमांसायामारम्भे—'कृष्णाकारेण साक्षादिह हि विजयते सूत्रसंज्ञः परात्मा ज्योतिर्विश्वप्रकाशं व्रजति दिनकराकारतां यद्वदत्र । यत्स्वे गात्रेऽथ वक्त्रेऽर्जुनजननिकृतेऽदर्शयद्विश्वरूपं तं नत्वा स्वानुभूतिप्रदमुपनिषदां हार्दमर्थं ब्रवीमि' इति ॥ २७ ॥

अथाध्यायतात्पर्यम्—एकोपादानकत्वेऽप्यतनुविधमभूद्यैर्गुणैर्विश्वमेते बध्नन्त्यज्ञानजन्तून् न च मदनुचरांस्तोपलोभप्रमादैः । स्वीकुर्वन् शुद्धसत्त्वं जयति तदितरो यः समामेति सत्यं प्रोक्तः सम्यक् चतुर्भिः समधिकदशमेऽसौ गुणातीतयोगः ॥ १ ॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां परमार्थप्रपायां गुणातीतयोगो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

# पञ्चदशोऽध्यायः ।

## श्रीभगवानुवाच ।

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ॥
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥

यस्मान्मदधीनं कर्मिणां कर्मफलं ज्ञानिनां च ज्ञानफलमतो भक्तियोगेन मां ये सेवन्ते ते मत्प्रसादाज् ज्ञानप्राप्तिक्रमेण गुणातीता मोक्षं गच्छन्ति किमु वक्तव्यमात्मनस्तत्त्वं सम्यग् विजानन्त इत्यतो भगवानर्जुनेनापृष्टोऽप्यात्मनस्तत्त्वं विवक्षुरुवाच ऊर्ध्वमूलमित्यादि । तत्र तावद् वृक्षरूपककल्पनया वैराग्यहेतोः संसारस्वरूपं वर्णयति विरक्तस्य हि संसाराद्भगवत्तत्त्वज्ञानेऽधिकारो नान्यस्येति ऊर्ध्वमूलमिति । ऊर्ध्वमूलं कालतः सूक्ष्मत्वात् कारणत्वान्नित्यत्वान्महत्वाच्चोर्ध्वमुच्यते ब्रह्माव्यक्तमायाशक्तिमत्तन्मूलस्येति सोऽयं संसारवृक्ष ऊर्ध्वमूलः श्रुतेश्च 'ऊर्ध्वमूलोऽर्वाक्शाखः' इति। पुराणे च 'अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोत्थितः। बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः। महाभूतप्रशाखश्च विषयैः पत्रवांस्तथा । धर्माधर्मसुपुष्पश्च सुखदुःखफलोदयः । आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः। एतद् ब्रह्मवनं चैव ब्रह्मा चरति नित्यशः । एतच्छित्त्वा च भित्त्वा च ज्ञानेन परमासिना । ततश्चात्मरतिं प्राप्य तस्मान्नावर्तते पुनः' इत्यादि । तमूर्ध्वमूलं संसारं मायामयं वृक्षमधःशाखं महदहङ्कारतन्मात्रादयः शाखा इवास्याधो भवन्तीति सोऽयमधःशाखस्तमधःशाखं न श्वोऽपि स्थातेत्यश्वत्थस्तं क्षणप्रध्वंसिनमश्वत्थं प्राहुः कथयन्ति श्रुतिवादा अव्ययं संसारं मायामयमनादिकालप्रवृत्तत्वात् सोऽयं संसारवृक्षोऽव्ययोऽनाद्यनन्तदेहादिसन्तानाश्रयो हि सुप्रसिद्धस्तमव्ययं तस्यैव संसारवृक्षस्येदमन्यद्विशेषणान्तरं छन्दांसि यस्य पर्णानि छन्दांसि छादनादृग्यजुःसामलक्षणानि यस्य संसारवृक्षस्य पर्णानीव पर्णानि यथा वृक्षस्य रक्षणार्थानि पर्णानि तथा वेदाः संसारवृक्षपरिरक्षणार्था धर्माधर्मतद्धेतुफलप्रकाशनार्थत्वाद् यथाव्याख्यातं संसारवृक्षं समूलं यस्तं वेद स वेदविद्वेदार्थविदित्यर्थः । नहि संसारवृक्षादस्मात् समूलाज् ज्ञेयोऽन्योऽणुमात्रोऽप्यवशिष्टोऽस्त्यतः सर्वज्ञः स यो वेद वेदार्थविदिति समूलवृक्षज्ञानं स्तौति ॥ १ ॥

आ० टी० । ज्ञानेन गुणात्यये दर्शिते नाशित्वे तेषां विना ज्ञानेनानत्ययादनाशित्वे तेनापि त-

द्योग्यत्वान्न ज्ञानं गुणात्ययहेतुरित्याशङ्कां निरस्य साक्षादेव श्रवणादिहेतुं संन्यासं विधित्सुर्ब्रह्मत्वस्य परमपुरुषार्थतां च विवक्षुरध्यायान्तरमारभते **यस्मादिति** । कर्मिणो ज्ञानिनश्च ये शास्त्रेऽधिकृतास्तत्र कर्मिणां कर्मानुकूलं फलमीश्वरायत्तं 'फलमत उपपत्ते'रिति न्यायाज्ज्ञानिनामपि तत्फलमीश्वरायत्तमेव ततो ह्यस्य बन्धविपर्ययावित्युक्तत्वाद् यस्मादेवं तस्माद्ये भक्त्याख्येन योगेन मामेव सेवन्ते ते मत्प्रसादद्वारा ज्ञानं प्राप्य तेन गुणातीता मुक्ता भवन्तीति स्थितमित्यर्थः । ये त्वात्मनस्तत्त्वमेव संदेहाद्यपोहेन जानन्ति ते ज्ञानेन गुणातीताः सन्तो मुक्तिं गच्छन्तीति किमु वक्तव्यमित्यर्थः । सिद्धमर्थमाह **किमु वक्तव्यमिति** । आत्मतत्त्वाज्ञानं यतः संसारहेतुः, ज्ञानं मोक्षानुकूलमतोऽर्जुनेन किं तदित्यपृष्टमपि तत्त्वं भगवानुक्तवान् प्रश्नाभावेऽपि तस्य तद्व्युत्पादनाभिमानादित्याह **अत इति** । तत्त्वेति वक्ष्यते । किमिति संसारो वर्ण्यते तत्राह **तत्रेति** । अध्यायादिः सप्तम्यर्थः । वैराग्यमपि किमिति मृग्यते तत्राह **विरक्तस्येति** । इति वैराग्याय संसारवर्णनमिति शेषः । नाशभावनार्थं वृक्षरूपकं बन्धहेतोर्दर्शयति **ऊर्ध्वमूलमिति** । कथं कालतः सूक्ष्मत्वं तदाह **कारणत्वादिति** । तदेव कथं कार्यापेक्षया नियतपूर्वभावित्वादनादित्वादित्याह **नित्यत्वादिति** । सर्वव्यापित्वाच्चोत्कर्षं संभावयति **महत्त्वाच्चेति** । ऊर्ध्वमुच्छ्रितमुत्कृष्टमिति यावत् । तस्य कूटस्थस्य कथं मूलत्वमित्याशङ्क्याह **अव्यक्तेति** । स्मृतिमूलत्वेन श्रुतिमुदाहरति **श्रुतेश्चेति** । अवाञ्च्यो निकृष्टाः शाखा इव महदाद्या यस्य स तथा । प्रकृते संसारवृक्षे पुराणसंमतिमाह **पुराणे चेति** । अव्यक्तमव्याकृतं तदेव मूलं तस्मात् प्रभवनं प्रभवो यस्य स तथा तस्यैव मूलस्याव्यक्तस्यानुग्रहाददतिदृढत्वादुत्थितः संवर्धितः । तस्य लौकिकवृक्षसाधर्म्यमाह **बुद्धीत्यादिना** । वृक्षस्य हि शाखाः स्कन्धादुद्भवन्ति संसारस्य च बुद्धेः सकाशान्नानापरिणामा जायन्ते तेन बुद्धिरेव स्कन्धस्तन्मयस्तत्प्रचुरोऽयं संसारतरुरिन्द्रियाणामन्तराणि छिद्राणि कोटराणि यस्य स तथा महान्ति भूतानि पृथिव्यादीन्याकाशान्तानि विशाखस्तम्बो यस्य तथाऽऽजीव्यत्वमुपजीव्यत्वं ब्रह्मणाधिष्ठितो वृक्षो ब्रह्मवृक्षस्तथापि ज्ञानं विना छेत्तुमशक्यतया सनातनश्चिरन्तन एतच्च ब्रह्मणः परस्यात्मनो वनं वननीयं संभजनीयमत्र हि ब्रह्म प्रतिष्ठितं तस्य वृक्षस्य संसाराख्यस्य तदेव ब्रह्म सारभूतमथवास्य ब्रह्मवृक्षस्यानवच्छिन्नस्य संसारमण्डलस्य तदेतद् ब्रह्म वनमिव वनं वननीयं संभजनीयं न हि ब्रह्मातिरिक्तं संसारस्यास्पदमस्ति ब्रह्मैवाविद्यया संसरतीत्यभ्युपगमादित्यर्थः । अहं ब्रह्मेति दृढज्ञानेनोक्तं संसारवृक्षं छित्त्वा प्रतिबन्धकाभावादात्मनिष्ठो भूत्वा पुनरावृत्तिरहितं कैवल्यं प्राप्नोतीत्याह **एतदिति** । अधःशाखमित्येतद्व्याचष्टे **महदिति** । आदिशब्देनेन्द्रियादिसंग्रहः । संसारवृक्षस्यातिचञ्चलत्वे प्रमाणमाह **प्राहुरिति** । क्षणध्वंसिनोऽव्ययत्वं विरुद्धमित्याशङ्क्याह **संसारेति** । तदेवोपपादयति **अनादीति** । छादनं रक्षणं प्रावरणं वा कर्मकाण्डानि खल्वारोहावरोहफलानि नानाविधार्थवादयुक्तानि संसारवृक्षं रक्षन्ति तन्निष्ठं दोषं चावृण्वन्ति तेन तानि छन्दांसि पर्णानीव भवन्तीत्यर्थः । तदेव प्रपञ्चयति **यथेति** । उक्तेऽर्थे हेतुमाह **धर्मेति** । कर्मकाण्डानां वेदानामिति शेषः । कर्मब्रह्माख्यसर्ववेदार्थस्य तत्रान्तर्भावमुपेत्य व्याचष्टे **वेदार्थेति** । समूलसंसारवृक्षज्ञाने कुतूहलं हित्वा मूलमेव निष्कृष्य ज्ञातुं शक्यमिति तज्ज्ञानार्थं प्रयतितव्यमिति मत्वा तज्ज्ञानस्तुतिरत्र विवक्षितेत्याह **न हीति** ॥ १ ॥

**प० टी०** । पूर्वाध्यायान्ते मां च योऽव्यभिचारेणेत्यादिना मामीश्वरमेकान्तभक्त्या भजतस्तदनुग्रहलब्धज्ञानेन गुणत्रयविस्तारोपरमद्वारा ब्रह्मीभावो भवतीत्युक्तं तत्र न हि विषयिणां वैराग्यमन्तरेणैकान्तभक्तिरुदेत्यतो गुणत्रयविचित्रविस्तारात्मकस्थूलप्रपञ्चस्य वृक्षदृष्टान्तेन कुठारवद्वैराग्यनाश्यत्वं दर्शयन्नथर्वोपनिषदुक्तं संसारवृक्षं सार्धश्लोकद्वयेन रूपकालंकारेण वर्णयन् भगवानाह **ऊर्ध्वमूलमिति** । ऊर्ध्वः सर्वोत्कृष्टः क्षराक्षरातीतः पुरुषो मूलकारणं यस्य । अथार्वाचीनाः कार्योपाधयो हिरण्यगर्भप्रभृतयः शाखा यस्य तं । श्वः प्रबोधोत्तरकालं न तिष्ठतीत्यश्वत्थं प्राहुः । प्रबोधस्य

दुःसाध्यत्वादव्ययं प्रवाहरूपेण चिरकालावस्थायिनम् । अथ वृक्षसाधर्म्यमाह **छन्दांसीति** । यस्य प्रपञ्चवृक्षस्य छन्दांसि वेदाः पर्णानि प्रवृत्तिमार्गेण धर्माधर्मप्रतिपादकानि छायास्थानीयानि भवन्ति तदनुवर्तिनामापातरमणीयत्वेन विश्रमजनकत्वात्, एवं यः पुरुषस्तमश्वत्थं वेद स एव **वेदवित्** । अयमर्थः । वेदे तावदुपक्रमे मन्त्रात्मकविभागेन विषयैषिणां फलप्रलोभनेन प्रपञ्चवृक्षस्य प्रशंसनं कृतम् । उपसंहारे तूपनिषद्विभागेन मुमुक्षूणां वैराग्योपदेशैरतस्य दुःखरूपत्वेनोपरमः प्रशंसितोस्तीति, वेदविदित्यनेन वेदतात्पर्यज्ञ इति सूचितम् । यद्वा अनेन श्लोकेन स्थूलप्रपञ्चस्वरूपः शिरःपाण्यादिलक्षणः पुरुषविधः स्थूलशरीररूपो विराड्वृक्षत्वेन वर्ण्यते । स च लौकिकवृक्षवदधोमूलोर्ध्वशाखो नास्ति किं तूर्ध्वमूलमधःशाखं प्राहुः ऊर्ध्वं मूलमादिकारणं सूक्ष्मदेहरूपं हिरण्यगर्भाख्यं यस्य अथेन्द्रादिदेवोत्पत्तिहेतवो हस्तपादादिरूपाः शाखा यस्य यतो गुणप्रवृद्धा विषयप्रवाला इत्यग्रे प्रोक्तमतश्छन्दांसि वासना एव संसारतरोः पर्णान्याच्छादनस्थानीयानि । दुःखरूपेऽपि संसारतरुः फलवासनाभिः सुखरूप इवावभासत इत्यर्थः। श्रुतिरपि—"अर्वाग्बिलश्चमसऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपम्। तस्या सप्तऋषयः सप्ततीरे वागष्टमी ब्रह्मणा संविदाना" इति । भाष्यम्—तस्य विराजश्चमसः शिरोदेशे ऊर्ध्वबुध्नः ऊर्ध्वे बुध्नः महद्यश इति श्रुतेः । यशः परात्मस्वरूपं निहितं निगूढतया स्थापितमस्तीत्यत्र प्रमाणमाह **तस्येति** । तस्य तीरे समीपे सप्तर्षय आसते स्थितिं गच्छन्ति व्यापारं कुर्वन्ति ते सप्तर्षयो ज्ञानेन्द्रियाणि द्वे नेत्रे द्वे श्रुती द्वे नासे सप्तमी रसनेति तत्र वागष्टमी कर्मेन्द्रियमेषां प्रवर्तकः सूत्रात्मा तत्समीपे तत्प्रकाशेन प्रवर्तत इत्यर्थः । तदेवाह **ब्रह्मणेति** । किं भूता वाग् ब्रह्मणा कृत्वा संविदाना संवदन्ती । तथाथर्ववल्लीषु । "ऊर्ध्वमूलमर्वाक्शाख एकोऽश्वत्थः सनातनः। तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते । तस्मिन् लोकाः श्रिताः सर्वे तदुनात्येति कश्चन " इति । अत्र शुक्रं शबलं ब्रह्म तदुतत् कश्च नात्येत्यतिलङ्घ्य न गच्छति तदन्तत एव तिष्ठति शेषं प्राग्व्याख्यातम् ॥ १ ॥

**अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ॥**
**अधश्च मूलान्यनुसंततानि कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥**

तस्यैव संसारवृक्षस्यापरावयवव्यापारकल्पनोच्यते अधोमनुष्यादिभ्यो यावत् स्थावरमूर्ध्वं च यावद् ब्रह्मा विश्वसृजो धर्म इत्येतदन्तं यथाकर्म यथाश्रुतं ज्ञानकर्मफलानि तस्य वृक्षस्य शाखा इव शाखाः प्रसृताः प्रगता गुणप्रवृद्धा गुणैः सत्त्वरजस्तमोभिः प्रवृद्धाः स्थूलीकृता उपादानभूतैर्विषयप्रवाला विषयाः शब्दादयः प्रवाला इव देहादिकर्मफलेभ्यः शाखाभ्योऽङ्कुरीभवन्तीव तेन विषयप्रवालाः शाखाः संसारवृक्षस्य परममूलमुपादानं कारणं पूर्वमूर्ध्वमुक्तमथेदानीं कर्मफलजनितरागद्वेषादिवासनामूलानीव धर्माधर्मप्रवृत्तिकारणान्यवान्तरभावीनि तान्यधश्च देहाद्यपेक्षया मूलान्यनुसंततान्यनुप्रविष्टानि कर्मानुबन्धीनि कर्म धर्माधर्मलक्षणमनुबन्धः पश्चाद्भावी येषामुद्भूतिमनुभवन्तीति तानि कर्मानुबन्धीनि मनुष्यलोके विशेषतोऽत्र हि मनुष्याणां धर्माधिकारः प्रसिद्धः॥२॥

आ० टी० । अवयवसंबन्धिव्यापारा प्रागुक्तादतिरिक्ता कल्पनेति यावत् । आमनुष्यलो-

कादाविरिञ्चेरित्यधःशब्दार्थमाह **मनुष्यादिभ्य इति** । तस्मादेवारभ्यासत्यलोकादित्यूर्ध्वशब्दार्थमाह **यावदिति** । शाखाशब्दार्थं दर्शयति **ज्ञानेति** । तेषां हेत्वनुगुणत्वेन बहुविधत्वं सूचयति **यथेति** । प्रत्यक्षाणां शब्दादिविषयाणां प्रवालत्वं शाखासु पल्लवत्वमङ्कुरत्वं स्फोरयति **देहादीति** । ऊर्ध्वमूलमित्यत्र संसारवृक्षस्य मूलमुक्तं किमिदानीमधश्च मूलानीत्युँच्यते तत्राह **संसारेति** । अनुप्रविष्टत्वं सर्वेषु लिङ्गेष्वनुगततया संततत्वमविच्छिन्नत्वम् रागादीनां च कर्मफलजन्यत्वं प्रकटयति **कर्मेति** । कर्मणां रागादीनां मिथो हेतुहेतुमत्त्वं तेषां तथात्वेनानवच्छिन्नतया प्रवृत्तिर्विशेषतो मनुष्यलोके भवतीत्यत्र हेतुमाह **अत्र हीति** । कर्मव्युत्पत्त्या प्राणिनिकायो लोकः मनुष्यश्चासौ लोकश्चेत्यधिकृतो ब्राह्मण्यादिविशिष्टो देहो मनुष्यलोकः ॥ २ ॥

**प० टी०** । अथ तस्य शाखाविस्तारमाह **अधश्चोर्ध्वमिति** । अधो देवपितृमनुष्यलोकाद्या ऊर्ध्वं महर्जनस्तपोलोकमुख्याः शाखाः प्रसृताः विस्तृताः सन्ति । किं भूता गुणप्रवृद्धा यथायोग्यं सत्त्वरजस्तमोभिर्जलसेकादिभिरिव प्रवृद्धा वृद्धिं प्राप्तास्तथा विषया रूपरसादय एव प्रवालाः पल्लवाश्च प्रसृताः सन्ति । अधः पाताले मूलानि यक्षरक्षांस्यनु संततानि सम्यक् तानि विस्तृतानि मनुष्यलोके तु कर्मानुबन्धीनि कर्माधीनानि तेषामेव कर्माधिकारित्वान्मनुष्यलोके कर्मकृत्वेतरलोकेषु तत्फलं भुञ्जत इत्यर्थः ॥ २ ॥

**न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा ॥**
**अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्वा ॥ ३ ॥**

यस्त्वयं वर्णितः संसारवृक्षो न रूपेति । न रूपमस्येह यथा वर्णितं तथा नैवोपलभ्यते स्वप्नमरीच्युदकमायागन्धर्वनगरसमत्वाद् दृष्टनष्टस्वरूपो हि स इत्यत एवानन्तो न पर्यन्तो निष्ठा समाप्तिर्वा विद्यते तथा न चादिरित आरभ्यायं प्रवृत्त इति न केनचिद्गम्यते न च संप्रतिष्ठा स्थितिर्मध्यमस्य न केनचिदुपलभ्यतेऽश्वत्थमेनं यथोक्तं सुविरूढमूलं सुष्ठु विरूढानि विरोहं गतानि मूलानि यस्य तमेनं सुविरूढमूलमसङ्गशस्त्रेणासङ्गः पुत्रवित्तलोकैषणादिभ्यो व्युत्थानं तेनासङ्गशस्त्रेण दृढेन परमात्माभिमुखनिश्चयदृढीकृतेन पुनःपुनर्विवेकाभ्यासाश्मनिशितेन छित्त्वा संसारवृक्षं सबीजमुद्धृत्य ॥ ३ ॥

**आ० टी०** । पुनःपुना रागादिना प्रवृत्तत्वेनानादित्वान्न संसारवृक्षः स्वयमुच्छिद्यते न चोच्छेत्तुं शक्यते केनापीत्याशङ्क्याह **यस्त्विति** । यथापूर्वं वर्णितं यथा च लोके प्रसिद्धं तथास्य रूपमिह शास्त्रादनुमीयते तथा चास्य ज्ञानापनोद्यत्वं युक्तमित्याह **यथेति** । तस्याप्रमितत्वे हेतुमाह **स्वप्नेति** । तस्य स्वप्नादिसमत्वे दृष्टनष्टस्वरूपत्वं हेतुं करोति **दृष्टेति** । इत्यमेयतेति शेषः । तमेवामेयत्वं हेतुं कृत्वावसानमपि तस्य तथा न भातीत्याह **अतएवेति** । ज्ञानं विना भ्रान्तिवासनाकर्मणामन्योन्यनिमित्तत्वान्नावसानमस्तीत्यर्थः । इदं प्रथमत्वमपि नास्य परिच्छेत्तुं शक्यमित्याह **तथेति** । आद्यन्तवन्मध्यमपि नास्य प्रामाणिकमित्याह **मध्यमिति** । संसारवृक्षस्याश्वत्थशब्दितस्य क्षणभङ्गुरस्य स्वयमेवोच्छेदसंभवात्तदुच्छेदार्थं न प्रयतितव्यमित्याशङ्क्याह **अश्वत्थमिति** । व्युत्थानं वैराग्यपूर्वकं पारिव्राज्यम् । दृढीकृतत्वमेव विवेकपूर्वकत्वेन स्फुटयति **पुनःपुनरिति** ॥ ३ ॥

प० टी० । अथ तस्य दुर्ज्ञेयत्वमाह नरूपमस्येति द्वाभ्याम् । इह संसारेऽस्य स्थूलप्रपञ्चतरो रूपं स्वरूपं तथा लौकिकदृष्ट्या नोपलभ्यते यथा ज्ञानदृष्ट्येत्यर्थः । दिव्यं ददामि ते चक्षुरित्युक्तत्वात् च परमस्यान्तः पर्यवसानं तथा प्रतिष्ठा स्थितिरादिराविर्भावश्च नोपलभ्यते । अथास्योपरमप्रकारमाह अश्वत्थमिति । एनं निरूपितप्रकारं सुविरूढमूलं प्रकारान्तरेणानुच्छेद्यमश्वत्थं दृढेन तीक्ष्णेनासंगशस्त्रेण वैराग्यकुठारेण छित्वा ॥ ३ ॥

**ततः पदं तत् परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः॥**
**तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥**

तत इति । ततः पश्चाद् यतः पदं वैष्णवं तत् परिमार्गितव्यं परिमार्गणमन्वेषणं ज्ञातव्यमित्यर्थः । यस्मिन् पदे गताः प्रविष्टा न निवर्तन्ति नावर्तन्ते भूयः पुनः संसाराय । कथं परिमार्गितव्यमित्याह तमेव च यः पदशब्देनोक्त आद्यमादौ भवं पुरुषं प्रपद्येत्येवं परिमार्गितव्यं तच्छरणतयेत्यर्थः । कोऽसौ पुरुष इत्युच्यते यतो यस्मात् पुरुषात् संसारमायावृक्षप्रवृत्तिः प्रसृता निःसृतैन्द्रजालिकादिवन् माया पुराणी चिरंतनी ॥ ४ ॥

आ० टी० । उद्धृत्य किं कर्तव्यं तदाह तत इति । पश्चादश्वत्थादूर्ध्वं व्यवस्थितमित्यर्थः । किं तत् पदं यदन्विष्य ज्ञातव्यं तदाह यस्मिन्निति । येन सर्वं पूर्णं पुरीषु वा शयानं पुरुषं प्रपद्ये शरणं गतोऽस्मीत्यर्थः । विवर्तवादानुरोधिनं दृष्टान्तमाह ऐन्द्रेति ॥ ४ ॥

प० टी० । किं कर्तव्यमित्याह तत इति । ततस्तस्मात्संसारतरोः परमुत्कृष्टं मूलभूतं यत्पदं स्थानं प्रागुक्तं विष्णोः परमं पदं परब्रह्माख्यं तत्परितः सर्वत्र स्थितं मार्गितव्यम् । सुषुम्नाविवरोपलक्षितेन मार्गेण बोद्धव्यम् । तत्किं पदं यस्मिन् गताः प्रविष्टाः सन्तो भूयो न निवर्तन्ते परावृत्तिं न प्राप्नुवन्ति । अथ किमाकारेण प्रविष्टा इत्याह तमेवेति । तमेवाद्यं ज्यायांसं दृश्यजातस्य मूलभूमिरूपं प्रपद्ये शरणं व्रजामि । तं कं यतः पुराण्यनादिप्रवाहरूपा प्रपञ्चवृत्तिः प्रसृता विस्तृता तमधिकरणरूपमित्यर्थः । अथ क्रमेण श्रुतयश्च तत्र असंगशस्त्रेण दृढेन छित्वेत्यत्र आश्वलोपनिषदुक्ता श्रुतिः—"न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः । परेण नाकं निहितं गुहायां विभ्राजते तद्यतयो विशन्ति"इति । भाष्यम्—एके योगिनस्त्यागेन परेणोत्कृष्टेन वैराग्येणामृतत्वं मोक्षमानशुः प्रापुः । परं तु न कर्मणा फलाभिसन्धिकृतेन न प्रजया । "नापुत्रस्य लोकोऽस्ति" इति श्रुतेः । धनेन तुलापुरुषादिषु व्ययीकृतेन । अथ तत्किं नामामृतत्वं यद्यतयः संन्यासिनो विशन्ति कथं ज्ञात्वा विशन्ति । नाकं स्वर्गमलौकिकगुहायां हृदयाकाशे निहितं निधिवद्रोपितमपि विभ्राजतेऽर्थप्रकाशकत्वेन शोभते । ततः पदं तत्परिमार्गितव्यमित्यत्र शातपथी श्रुतिः—"तदप्येते श्लोकाः अणुपथावितरः पुराणोमाङ्स्पृष्टोनुवित्तो मयैव तेन धीरा अपि यन्ति ब्रह्मविद उत्क्रम्य स्वर्गं लोकमितो विमुक्ताः । तस्मिन् शुक्लमुतनीलमाहुः पिङ्गलं हरितं लोहितं च । एष पन्था ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित्तेजसः पुण्यकृच्च इति । भाष्यम्—तत्रार्थे श्लोका वेदोपजीव्या मन्त्रा अपि सन्तीति । याज्ञवल्क्यो वदति ते कथम् । अणुः सूक्ष्मः सुषुम्नोपलक्षितः पन्था मार्गोऽस्ति वितरो विशिष्टतरः पुराणोनादिसिद्धः मां स्पृष्टः मया प्राप्त अनन्तरं मयैवानुवित्तमनुष्ठितंतेन मार्गेण

कृत्वा धीरा अभ्यासयोगिनः ब्रह्मविद् उदूर्ध्वं क्रम्य स्वर्गं लोकं भ्रूमध्यं यान्ति गच्छन्ति किं भूता इतः प्रपञ्चाद्विमुक्ताः, तस्मिन्नाडीसंदर्भमाह शुक्लमित्यादि एष पन्था अयं मार्गो न केवलं मयैवानुष्ठितः किं तु ब्रह्मणाप्यनुष्ठितोऽनुष्ठितस्तेन ब्रह्मविद्वेदार्थवेत्ता पुण्यकृदनुष्ठाता तैजसः प्रकाशात्मा एति प्राप्नोति नान्यः ॥ ४ ॥

**निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः॥**
**द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत्॥५॥**

कथंभूतास्तत् पदं गच्छन्तीत्युच्यते निर्मानेति । निर्मानमोहा मानश्च मोहश्च मानमोहौ तौ निर्गतौ येभ्यस्ते निर्मानमोहा मानमोहवर्जिता जितसङ्गदोषाः सङ्ग एव दोषः सङ्गदोषो जितः सङ्गदोषो यैस्ते जितसङ्गदोषा अध्यात्मनित्याः परमात्मस्वरूपालोचने नित्यास्तत्परा विनिवृत्तकामाः विशेषतो निर्लेपेन निवृत्ताः कामा येषां ते विनिवृत्तकामा यतयः संन्यासिनो द्वन्द्वैः प्रियाप्रियादिभिर्विमुक्ताः सुखदुःखसंज्ञैः परित्यक्ता गच्छन्त्यमूढा मोहवर्जिताः पदमव्ययं तद्यथोक्तम् ॥ ५ ॥

आ० टी० । पारिमार्गणपूर्वकं वैष्णवं पदं गच्छतामङ्गान्तराण्याकाङ्क्षापूर्वकं कथयति कथमित्यादिना । मानोऽहङ्कारः मोहस्त्वविवेकः जितसङ्गदोषा शत्रुमित्रसन्निधावपि द्वेषप्रीतिवर्जिता इत्यर्थः । तत्परत्वं श्रवणादिनिष्ठत्वं, संन्यासिनो वैराग्यद्वारा त्यक्तसर्वकर्माण इत्यर्थः । आदिशब्देन तद्धेतुग्रहः, मोहवर्जितत्वमुक्तहेतुतः संजातसम्यग्धीत्वम् ॥ ५ ॥

प० टी० । अथ इतो विमुक्ता इति श्रुत्यर्थं प्रकटयन्नाह **निर्मानमोहा** इति । निर्गतौ मानमोहावहंकारमिथ्याभिनिवेशावेभ्यः जितः पुत्रादिसंगदोषो यैस्ते। अध्यात्मज्ञाने निष्ठाः परिनिष्ठिता विशेषेण निवृत्तः कामो येभ्यस्ते । सुखदुःखसंज्ञा शीतोष्णादीनि तैर्विमुक्ता एवं विधास्तदव्ययं पदं गच्छन्ति नान्ये ॥ ५ ॥

**न तद्भासयते सूर्यो न शशाङ्को न पावकः ॥**
**यद् गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥**

तदेव पदं पुनर्विशिष्यते नेति । तद्धामेति व्यवहितेन धाम्ना संवन्धः धाम तेजोरूपं पदं न भासयते सूर्य आदित्यः सर्वावभासनशक्तिमत्त्वेऽपि सति तथा न शशाङ्कश्चन्द्रो न च पावको नाग्निरपि यद्धाम वैष्णवं पदं गत्वा प्राप्य न निवर्तन्ते यच्च सूर्यादिभिर्न भासयते तद्धाम पदं परमं विष्णोर्मम पदम् ॥ ६ ॥

आ० टी० । तच्चेत् पदं वेद्यं कर्तुरन्यत् कर्मेति द्वैतापातोऽवेद्यं चेदपुमर्थत्वात् प्रेप्सितत्वासिद्धिरित्याशङ्क्याह तदेवेति ॥ ६ ॥

प० टी० । अथ पदं विशिनष्टि न तदिति । तत्पदं परं ब्रह्म सूर्यः शशाङ्कः पावकोऽग्निर्वा न भासयते न प्रकाशयति । "यद्भासा सर्वमिदं विभाति" इति श्रुतेः सूर्यादीनामपि तत्प्रकाशभास्यत्वात् । यच्च गत्वा प्राप्य योगिनो न निवर्तन्ते न परावर्तन्ते तन्मम परं धामेति ज्ञेयम् ॥६॥

**ममैवांशो जीवलोके जीवभूतः सनातनः ॥**
**मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥**

यद् गत्वा न निवर्तन्त इत्युक्तम् । ननु सर्वा हि गतिरागत्यन्ता संयोगा विप्रयोगान्ता इति प्रसिद्धं हि कथमुच्यते तद्धामगतानां नास्ति निवृत्तिरिति शृणु तत्र कारणं ममैवेति । ममैव परमात्मनो नारायणस्यांशो भागोऽवयव एकदेश इत्यनर्थान्तरं जीवलोके जीवानां लोके संसारे जीवभूतो भोक्ता कर्तेति प्रसिद्धः सनातनः पुरातनो यथा जलसूर्यकः सूर्यांशो जलनिमित्तापाये सूर्यमेव गत्वा न निवर्तते तथाऽयमप्यंशस्तेनैवात्मना संगच्छत्येवमेव यथा वा घटाद्युपाधिपरिच्छिन्नो घटाद्याकाश आकाशांशः सन् घटादिनिमित्तापाये आकाशं प्राप्य न निवर्तत इत्येवमत उपपन्नमुक्तं यद् गत्वा न निवर्तन्त इति । ननु निरवयवस्य परमात्मनः कुतोऽवयव एकदेशोंऽश इति सावयवत्वे च विनाशप्रसङ्गोवयवविभागान्नैष दोषोऽविद्याकृतोपाधिपरिच्छिन्न एकदेशोंऽश इव कल्पितो दर्शितश्चायमर्थः क्षेत्राध्याये विस्तरशः। स च जीवो मदंशकत्वेन कल्पितः कथं संसरत्युत्क्रामतीति चेदित्युच्यते मनःषष्ठानीन्द्रियाणि श्रोत्रादीनि प्रकृतिस्थानि स्वस्थाने कर्णशष्कुल्यादौ प्रकृतौ स्थितानि कर्षत्याकर्षति ॥ ७ ॥

आ० टी० । उक्तमनूद्याक्षिपति यद्गत्वेति । तत्र प्रसिद्धिं प्रमाणयति संयोगा इति । गमनस्यागमनान्तत्वप्रसिद्धेरप्युक्तं यद्गत्वेत्याद्युपसंहरति **कथमिति** । आक्षेपं परिहरति **शृण्विति** । भगवत्प्राप्तेर्निवृत्यं तत्त्वाभावः समन्यर्थः । जीवस्य परांशत्वेऽपि कथमुक्तदोषसमाधिरित्याशङ्क्य प्रतिबिम्बपक्षमादाय दृष्टान्तेन प्रत्याचष्टे **यथेति** । अवच्छेदपक्षमाश्रित्य दृष्टान्तान्तरेणोक्तदोषसमाधिं दर्शयति **यथा वेति** । आक्षेपसमाधिमुपसंहरति **अत इति** । परस्य निरवयवत्वात्तदंशत्वं जीवस्यायुक्तमिति शङ्कते **नन्विति** । तस्य निरवयवत्वं साधयति **सावयवत्वे चेति** । वस्तुतो निरंशस्यापि परस्य कल्पनया जीवोंऽशो भविष्यतीति परिहरति **नैष दोष इति** । वस्तुतस्तु जीवस्य नांशत्वं परमात्मतावन्मात्रतया दर्शितत्वादित्याह **दर्शितश्चेति** । यदि परस्यांशत्वेन कल्पितो जीवो वस्तुतस्तदात्मैव न तर्हि तस्य संसारत्वम् उत्क्रान्तिर्वेति शङ्कते **कथमिति** । जीवस्य संसरणमुत्क्रमणं चोपपादयितुमुपक्रमते **उच्यत इति** ॥ ७ ॥

प० प्र० । ननु सुषुप्तौ सर्वेषां ब्रह्मप्राप्तौ सत्यां कथं पुनः परावृत्तिरित्याशङ्क्याह । **ममैवेति पञ्चभिः** । ममैवांशो योयमविद्यया जीवभूतः सनातनः सर्वदा संसारित्वेन प्रसिद्धः स मन एव षष्ठं येषां तानि पञ्च ज्ञानेन्द्रियाणि सुषुप्तौ कर्षत्याकर्षयति श्रुतिरपि—"तानि यदा गृह्णात्यथ हैतत्स्वपिति

नामतद्गृहीत एव प्राणो भवति गृहीता वाग् गृहीत॰ चक्षुर्गृहीत॰ श्रोत्रम्" इत्यादिः । स्पष्टार्थम् । किमुतानीन्द्रियाणि प्रकृतिस्थानि प्रकृतौ तिष्ठन्ति तानि स्वोपाधिभूतानि । अयमर्थः—अविद्यावृतत्वेन सानुशयस्य जीवस्य सप्रकृतिके मयि लयोऽतः पुनरावृत्तिः । निरस्ताविद्यस्य जीवस्य शुद्धे मयि लयोऽतो मुक्तिः । 'अव्यक्ताद्व्यक्तयः सर्वाः' इत्यादि पूर्वमेवोक्तम् ॥ ७ ॥

**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ॥**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥**

कस्मिन् काले, शरीरमिति । यच्चापि यदा चाप्युत्क्रामतीश्वरो देहादिसंघातस्वामी जीवस्तदा कर्षतीति श्लोकस्य द्वितीयपादोऽर्थवशात् प्राथम्येन संबध्यते, यदा च पूर्वस्माच्छरीराच्छरीरान्तरमाप्नोति तदा गृहीत्वैतानि मनःषष्ठानीन्द्रियाणि संयाति सम्यग् याति गच्छति । किमिवेत्याह वायुः पवनो गन्धानिवाशयात् पुष्पादेः ॥ ८ ॥

आ० टी० । स्वस्थाने स्थितानामिन्द्रियाणां जीवेनाकर्षणस्य कालं पृच्छति **कस्मिन्निति** । जीवस्योत्क्रान्तिर्नेश्वरस्येत्याशङ्क्येश्वरशब्दार्थमाह **देहादीति** । उत्क्रान्त्यनन्तरभाविनी गतिरित्येतदर्थवशादित्युक्तम् । अवशिष्टानि श्लोकाक्षराण्याचष्टे **यदा चेति** ॥ ८ ॥

प० टी० । अथ जीवस्य शरीरान्तरप्राप्तिं दृष्टान्तेनाह **शरीरमिति** । यद्यदा पूर्वस्माच्छरीरादुत्क्रामति यदा च शरीरान्तरं प्राप्नोति तदेश्वर इन्द्रियचालकोऽन्तर्याम्येतानीन्द्रियाणि गृहीत्वैव सम्यक् प्रकारेण याति । क इव, आशयाद्वायुर्गन्धानिव आशयाद्गन्धाश्रयीभूतात्पुष्पादेः सकाशाद्गन्धान् गन्धवतः सूक्ष्मानंशान् गृहीत्वा वायुर्यथा याति तथा सत्यपि शरीरेऽर्थग्राहकाण्यध्यात्मरूपाणीन्द्रियाणि गृहीत्वा याति । आत्मा तु सर्वत्रानुस्यूतस्तस्य गमनागमनं न संभवति किं तु तदंशीभूतसूक्ष्मभूतेन्द्रियप्राणावस्थात्मकं लिङ्गशरीरमेव गच्छत्यागच्छतीत्यर्थः ॥ ८ ॥

**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ॥**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥**

कानि पुनस्तानीति श्रोत्रमिति । श्रोत्रं चक्षुः स्पर्शनं च त्वगिन्द्रियं रसनं[1] जिव्हा घ्राणमेव च मनश्च षष्ठं प्रत्येकमिन्द्रियेण सहाधिष्ठाय देहस्थो विषयान् शब्दादीनुपसेवते ॥ ९ ॥

आ० टी० । मनःषष्ठानीन्द्रियाण्येव प्रश्नद्वारा विशेषतो दर्शयति **कानीति** ॥ ९ ॥

प० टी० । अथ शरीरान्तर्वर्तमानदशायामात्मनो विषयोपभोगप्रकारमाह **श्रोत्रमिति** । अयमात्मा मन अधिष्ठाय स्वाश्रयमात्रेण प्रवर्त्य तत्तद्ग्राहकोपलक्षितान् शब्दादीन् विषयानुपसेवतेऽहं-

---

१ जिव्हेति नास्ति लि० पु० ।

काराध्यासेन सेवते । श्रुतिरपि-"अन्यत्रमना अभूवन्नादर्शमन्यत्रमना अभूवन्नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति" इत्यादिः । स्पष्टार्थम् ॥ ९ ॥

**उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ॥**
**विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥**

उत्क्रामन्तमिति । एवं देहगतं देहाद् उत्क्रामन्तं परित्यजन्तं देहं पूर्वोपात्ते स्थितं वा देहे तिष्ठन्तं भुञ्जानं वा शब्दादींश्चोपलभमानं गुणान्वितं सुखदुःखमोहाख्यैर्गुणैरन्वितमनुगतं संयुक्तमित्यर्थः । एवंभूतमप्येनमत्यन्तं दर्शनगोचरप्राप्तं विमूढा दृष्टादृष्टविषयभोगबलाकृष्टचेतस्तयानेकधा मूढा नानुपश्यन्त्यहो कष्टं वर्तत इत्यनुक्रोशति च भगवान् ये तु पुनः प्रमाणजनितज्ञानचक्षुषस्त एनं पश्यन्ति ज्ञानचक्षुषो विविक्तदृष्टय इत्यर्थः ॥ १० ॥

आ० टी० । शरीरमित्यादिश्लोके देहादात्मनोऽतिरेकमुक्त्वा श्रोत्रं चक्षुरित्यादौ स्वाभिलषिते विषये यथायथं करणानां प्रवर्तकत्वात् किमिति सर्वे न पश्यन्तीत्याशङ्क्याह **एवमिति** । संनिहिततमत्वेन दर्शनयोग्यमपि विषयपरवशादात्मानं सर्वे न पश्यन्तीति भगवतोऽनुक्रोशं दर्शयति **एवंभूतमिति** । तर्हि केषामात्मदर्शनं तदाह **ये तु पुनरिति** ॥ १० ॥

प० टी० । अथैतदेव प्रकटयन्नाह **उत्क्रामन्तमिति** । विमूढास्तु परमात्मानं प्रायो नष्टमिव मन्यन्ते, वेत्यथ वा, उत्क्रामन्तमितो देहाद्गच्छन्तं मन्यन्ते । तदुक्तम्-'हृदयाकाशमात्रस्य विनाशे' देहनाशतः। व्यर्थं भूतानि शोचन्ति नष्ट आत्मेति शङ्कया'इति । तथा देहाकारेण स्थितं भुञ्जानं गुणान्वितं वानुवेलं पश्यन्ति । अथ ज्ञानरूपं चक्षुर्येषां ते तत्त्वदर्शिनः स्वगृहादन्यगृहं प्रति नीयमानस्य घटस्य तदावृताकाशवल्लिङ्गदेहावृतमात्मानमुत्क्रामन्तमनुवेलं पश्यन्ति । तथा भ्रमत्कुलालचक्रकीलकवत्स्थितं पश्यन्ति तथा प्रतिमारूपदेवतादर्शितनैवेद्यवद्भुञ्जानं पश्यन्ति तथा काश्मीरोदरप्रतिफलितजपाकुसुमारुण्ययोगवत्सत्त्वादिगुणान्वितं पश्यन्ति । तथाचोत्क्रान्तावात्मनो व्यापकत्वाद्गमनागमनं न संभवति किं तु लिङ्गदेहाधिष्ठितं मन एव गच्छतीति पूर्वं व्याख्यातमेव । श्रुतिरपि-"यत्ते यमं वैवस्वतं मनो जगाम दूरकम् । तत आवर्तयामसीह क्षयाय जीवसे" इति । भाष्यम्-तत्र पूर्वं सनातिनाम्नो राज्ञश्चत्वारः सुबन्ध्वादयः सहोदराः पुरोहिता आसंस्तेषु सुबन्धुः कैश्चिद् द्वेषिभिर्विप्रैराभिचारकेण हतस्ते पुनर्जीवयितुं त्रयो बन्धव इमं मन्त्रं पठन्ति **यत्त इति** । भो सुबन्धो यत्ते मनो दूरकं दूरं यथा भवति तथा वैवस्वतं सूर्यस्य पुत्रं यमं प्रति जगाम तत्ते मन इह मृतशरीर आवर्तयामसि पुनरावर्तयिष्यामि कस्मै प्रयोजनाय क्षयाय पुनरिह वसतये तथा जीवसे चिरकालजीवनाय ॥ १० ॥

**यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ॥**
**यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥**

केचित्तु यतन्तः प्रयत्नं कुर्वन्तो योगिनश्च समाहितचित्ता एनं प्रकृतमा-

त्मानं पश्यन्त्ययमहमस्मीत्युपलभन्ते आत्मनि स्वस्यां बुद्धाववस्थितं यतन्तोऽपि शास्त्रादिप्रमाणैरकृतात्मानोऽसंस्कृतात्मानस्तपसेन्द्रियजयेन च दुश्चरितादनुपरता अशान्तदर्पात्मानः प्रयत्नं कुर्वन्तो नैनं पश्यन्त्यचेतसोऽविवेकिनः ॥ ११ ॥

**आ० टी०** । ज्ञानचक्षुःशब्देन न्यायानुगृहीतं शास्त्रं ज्ञानसाधनमुक्तं तत्किमिदानीं शास्त्रमात्रेण न्यायानुगृहीतेनात्मानं पश्यन्ति नेत्याह **केचित्त्विति** । प्रयत्नः श्रवणमननात्मकः शास्त्रादिप्रमाणैर्यतन्तोऽपीति संबन्धः । असंस्कृतात्मत्वं प्रकटयति **तपसेति** । दुश्चरितादविरतिफलं कथयति **अशान्तेति** । अशुद्धबुद्धीनामविवेकिनां सदपि श्रवणादि न फलवदिति मत्वाह **प्रयत्नमिति** ॥ ११ ॥

**प० टी०** । अथ ज्ञानचक्षुषोऽपि द्व्यानुभविनः शास्त्रविज्ञानवन्तश्चेति दर्शयति **यतन्त इति** । स्वरूपप्राप्त्यर्थं यतन्तः प्रयत्नं कुर्वन्तो योगिन एवमात्मानमात्मनि देहान्तर्हृदयाकाशेऽवस्थितं पश्यन्ति । तथाकृतात्मानोऽनधिगततत्त्वार्था अत एवाचेतसोऽल्पबुद्धयः शास्त्रपठनादिभिरुपायैर्यतन्तोऽप्येनं न पश्यन्ति ॥ ११ ॥

**यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ॥**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥**

यत् पदं सर्वस्यावभासकमप्यग्न्यादित्यादिकं ज्योतिर्नावभासयते यत्प्राप्ताश्च मुमुक्षवः पुनः संसाराभिमुखा न निवर्तन्ते यस्य च पदस्योपाधिभेदमनुविधीयमाना जीवा घटाकाशादय इवाकाशस्यांशास्तस्य पदस्य सर्वात्मत्वं सर्वव्यवहारास्पदत्वं च विवक्षुश्चतुर्भिः श्लोकैर्विभूतिसंक्षेपमाह भगवान् यदिति । यदादित्यगतमादित्याश्रयं किं तत् तेजो दीप्तिः प्रकाशो जगद्भासयते प्रकाशयत्यखिलं समस्तं यच्चन्द्रमसि यच्च शशभृति तत्तेजोऽवभासकं वर्तते यच्चाग्नौ हुतवहे तत्तेजो विद्धि विजानीहि मामकं मदीयं मम विष्णोस्तज्ज्योतिः । अथवा यदादित्यगतं तेजश्चैतन्यात्मकं ज्योतिश्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकं मदीयं मम विष्णोस्तज्ज्योतिः । ननु स्थावरेषु जङ्गमेषु च तत्समानं चैतन्यात्मकं ज्योतिस्तत्र कथमिदं विशेषणं यदादित्यगतमित्यादि, नैष दोषः सत्त्वाधिक्यादाधिक्योपपत्तेरादित्यादिषु हि सत्त्वमत्यन्तप्रकाशमत्यन्तभास्वरमतस्तत्रैवाविस्तरं ज्योतिरिति तद्विशिष्यते, न तु तत्रैव तदधिकमिति यथा हि लोके तुल्येऽपि मुखसंस्थाने न काष्ठकुड्यादौ मुखमाविर्भवत्यादर्शादौ तु स्वच्छे स्वच्छतरे तारतम्येनाविर्भवति तद्वत् ॥ १२ ॥

**आ० टी०** । अनन्तरश्लोकचतुष्टयस्य वृत्तानुवादद्वारा तात्पर्यार्थमाह **यत्पदमिति** । जीवा-

त्मत्वेन चिद्रूपत्वमुक्त्वा तदीयचैतन्येनादित्यादीनामवभासकत्वाच्च ब्रह्मणश्चिद्रूपत्वमित्याह **यदादित्येति**। चिद्रूपस्यैव ब्रह्मणः सर्वात्मकत्वप्रतिपादकत्वेन श्लोकं व्याचष्टे **यदित्यादिना** । आदित्यादौ तत्र तत्र स्थितं ब्रह्मचैतन्यज्योतिः सर्वावभासकमित्यर्थः । ब्रह्मणः सर्वज्ञत्वेन चिद्रूपत्वमत्र विवक्षितमिति व्याख्यान्तरमाह **अथवेति** । चैतन्यज्योतिषः सर्वत्राविशेषादादित्यादिगतविशेषणमयुक्तमिति शङ्कते **नन्विति** । सर्वत्र सत्त्वेऽपि क्वचिदेवाभिव्यक्तिविशेषाद्विशेषणमिति परिहरति **नैष दोष इति**। तदेव प्रपञ्चयति **आदित्यादिष्विति** । सर्वत्र चैतन्यज्योतिषस्तुल्यत्वेऽपि क्वचिदेवाभिव्यक्त्या विशेषणोपपत्तिं दृष्टान्तेन स्पष्टयति **यथा हीति** ॥ १२ ॥

**प० टी०** । अथ ' न तद्भासयते सूर्यः ' इत्यादीनां विभूतीनामपि प्रमाणान्तरागोचरस्यात्मनो दर्शकत्वमनभिमतं किं पुनः शास्त्राभ्यासप्रयत्नस्येति सूचयन् सूर्यादीनां स्वप्रकाश्यत्वं दत्तसामर्थ्यवत्त्वं च निरूपयन्नाह **यदिति**। दिवा त्रैलोक्यप्रकाशकमादित्यगतं यत्तेजस्तथा रात्रौ चन्द्रस्य ज्योत्स्नारूपमग्नेर्दीपरूपं यत्तेजस्तन्मामकं मदीयं विद्धि जानीहि। "योऽसावादित्यः पुरुषः सोऽसावहम् " इतिश्रुतेः । तैत्तिरीयकेऽपि-"यास्ते अग्ने सूर्ये रुच उद्यतो दिवमातन्वन्ति रश्मिभिः। ताभिः सर्वाभिर्रुचे जनाय नस्कृधि " । भाष्यम्-भो अग्ने सर्वेश्वर उद्यतः सदोदितस्य ते तव या रुचो दीप्तयः सूर्ये वर्तमानाः सत्यो रश्मिभिः किरणैर्दिवं स्वर्गमातन्वन्ति व्याप्नुवन्ति, ताभिः सर्वाभिः रुग्भिर्नोऽस्मभ्यं जनाय रुचे दीप्तये कुरु। तद्ब्राह्मणेऽपि " शूषो ह वै वार्ष्णेय आदित्येन समाजगाम " इति । शूषः शोषणशक्तिमांस्तेजोरूपया विभूत्या वार्ष्णेयः कृष्ण आदित्येन समाजगामेति स्पष्टम् ॥ १२ ॥

## गामाविश्य च भूतानि धारयाम्यहमोजसा ॥
## पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३॥

किं च गामिति । गां पृथिवीमाविश्य प्रविश्य धारयामि भूतानि जगदहमोजसा बलेन यद्बलं कामरागविवर्जितमैश्वरं जगद्विधारणाय पृथिव्यां प्रविष्टं येन गुर्वी पृथिवी नाधः पतति न विशीर्यते, तथा च मन्त्रवर्णः " येन द्यौरुग्रा पृथिवी च दृढेति सदाधार पृथिवीम् " इत्यादिश्चातो गामाविश्य भूतानि चराचराणि धारयामीति युक्तमुक्तम् । किंच पृथिव्यां जाता ओषधीः सर्वा व्रीहियवाद्याः पुष्णामि पुष्टिमती रसस्वादुमतीश्च करोमि सोमो भूत्वा रसात्मकः सोमः सर्वरसात्मको रसस्वभावः सर्वरसानामाकरः सोमः स हि सर्वा ओषधीः स्वात्मरसानुप्रवेशेन पुष्णाति ॥ १३ ॥

**आ० टी०** । इतश्च सर्वात्मत्वं प्रकृतपदस्य युक्तमित्याह **किं चेति**। ईश्वरो हि पृथिवी देवतारूपेण पृथिवीं प्रविश्य भूतशब्दितं जगदैश्वरेणैव बलेन बिभर्ति । ततो गुर्वपि पृथिवी विदीर्य नाधो-निपततीत्यत्र प्रमाणमाह **तथा चेति** । परस्यैव हिरण्यगर्भात्मनावस्थानान्न मन्त्रयोरन्यपरतेति भावः। देवतात्मना द्यावापृथिव्योरुग्रत्वमुद्धरणत्वसामर्थ्यं तथापीश्वरायत्तमेव स्वरूपधारणं तदपेक्षया दुर्बलत्वादिति द्रष्टव्यम् । ईश्वरस्य सर्वात्मत्वे हेत्वन्तरमाह **किं चेति** । रसात्मकसोमरूपतापत्तावपि कथमोषधीरीश्वरः सर्वाः पुष्णातीत्याशङ्क्याह **सर्वेति** ॥ १३ ॥

प० टी । अथ चन्द्राग्न्योरन्नान्नादस्वरूपेण स्वदत्तसामर्थ्यमनुवदन्त्याः सामवेदश्रुतेस्तात्पर्यमाह **गामाविश्येति** द्वाभ्याम् । अहं रसात्मको रसरूपया विभूत्या सोमो भूत्वा गां पृथिवीं वा विश्य सर्वा ओषधीर्धान्यफलवतीः पुष्णामि वर्धयामि तत ओजसान्नादिसामर्थ्येन भूतानि धारयामि पोषयामि "ओषधीभ्योऽन्नमन्नात्पुरुषः" इति श्रुतेः ॥ १३ ॥

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ॥**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥**

किं चाहमिति । अहमेव वैश्वानर उदरस्थोऽभ्यन्तर्भूत्वायमग्निर्वैश्वानरो "योऽयमन्तः पुरुषे येनेदमन्नं पच्यते" इत्यादिश्रुतेर्वैश्वानरः सन् प्राणिनां प्राणवतां देहमाश्रितः प्रविष्टः प्राणापानसमायुक्तः प्राणापानाभ्यां समायुक्तः संयुक्तः पचामि पक्तिं करोमि चतुर्विधं चतुःप्रकारमन्नमशनं भोज्यं च भक्ष्यं चोष्यं लेह्यं च भोक्ता वैश्वानरोऽग्निर्भोज्यमन्नं सोमस्तदेतदुभयमग्नीषोमौ सर्वमिति पश्यतोऽन्नदोषलेपो न भवति ॥ १४ ॥

आ० टी० । भगवतः सर्वात्मत्वे हेत्वन्तरमाह **किं चेति** । अहमेवेत्यहंशब्देन परो लक्ष्यते, भूत्वा पचामीति संबन्धः । परस्यैव जाठरात्मना स्थितौ श्रुतिं प्रमाणयति **अयमिति** । बाह्यं भौममग्निं व्यावर्तयति **योऽयमिति** । देहान्तरारम्भकं तृतीयं भूतं व्यवच्छिनत्ति **येनेति** । जाठरात्मना परः स्थितश्चेत्तस्य देहाश्रितत्वं सिद्धमिति न पृथग्वक्तव्यमित्याशङ्क्य "पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद" इति श्रुतिमाश्रित्याह **प्रविष्ट इति** । परस्य जाठरात्मनोऽन्नपाके सहकारिकारणमाह **प्राणेति** । संयुक्तत्वं संधुक्षितत्वम् । अन्नस्य चातुर्विध्यं प्रकटयति **भोज्यमिति** । भोक्तरि वैश्वानरदृष्टिर्भोज्ये सोमदृष्टिरेवं भोक्तृभोज्यरूपं सर्वं जमदग्निसोमात्मना भुक्तिकाले ध्यायतो भोक्तुरन्नकृतो दोषो नेति प्रासङ्गिकं सफलं ध्यानं दर्शयति **भोक्तेति** ॥ १४ ॥

प० टी० । अथाग्नौ दत्तं सामर्थ्यमाह **अहमिति** । प्राणिनां सर्वदेहिनां देहमाश्रितो जाठरो वैश्वानरोऽग्निर्भूत्वा प्राणापानाभ्यां भस्त्रावायुभ्यामिव समायुक्तो दीप्तीकृतः संश्चतुर्विधमन्नं लेह्यपेयचोष्यभक्ष्यादिकं पचामि पाकं नयामि । श्रुतिरपि सामवेदे—"हाउ ३ अहमन्नं ३ अहमन्नादः ३ अहंविधास्य३" इत्यादिः । भाष्यम्—तत्र हाउ स्तोमाक्षरम् । तदुक्तम्—औ हो इति च संबुद्धौ विकल्पे हाउ कीर्तितमिति । अत्र मनुष्यदेवात्मविभागेनान्नत्रयमन्नादत्रयमस्तीति त्रिरावृत्त्या विकल्पार्थो निरूपितः, विधास्यो धर्ता । अथैतदर्थज्ञापिका शातपथी श्रुतिरपि—"अथ यत्किं चेदमार्द्रं तद्रेतसोऽसृजत तदु सोम एतद्वा इदं सर्वमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः" इति । भाष्यम्—सृष्टिक्रमकथनानन्तरं यत्किंचेदं सर्वमार्द्रं शुक्रशोणितोद्भवं प्राणिजातं तद्रेतसः शुक्रादसृजत सृष्टवान् । अथ रेतसः स्वरूपमाह तदिति । तदु तदेतावत्सर्वं रेतः सोमे वर्तते एवं रेतसः कारणमन्नमन्नादश्च भवति तथा च सोम एवान्नमग्निरन्नादश्च । तैत्तिरीयकेऽपि-"यः कामयेतान्नवानन्नादः स्यामित्यग्निनैवान्नमवरुन्धे सोमेनान्नाद्यमन्नवानेवान्नादो भवति" इति । भाष्यम्-यः पुरुषोऽहमन्नवानन्नादश्च स्यामिति कामयेत सोऽग्निनाग्न्युपासनयान्नमवरुन्धे आक्रामति पाकं नयति सोमेन चान्नाद्यं प्राप्नोत्येवमन्नवानेवान्नादो भवतीत्यर्थः । तथा भृगुवल्ल्यामपि—"अथैतत्साम गायन्नास्ते" इत्येतत्सर्वं श्रुतिरहस्यं भगवतैव प्रकटीकृतम् ॥ १४ ॥

**सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ॥**
**वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥**

किंच सर्वेति । सर्वस्य प्राणिजातस्याहमात्मा सन् हृदि बुद्धौ संनिविष्टोऽतो मत्त आत्मनः सर्वप्राणिनां स्मृतिर्ज्ञानं च तदपोहनं च येषां पुण्यकर्मिणां च पुण्यकर्मानुरोधेन ज्ञानस्मृती भवतस्तथा पापकर्मिणां पापकर्मानुरूपेण स्मृतिज्ञानयोरपोहं चापायनमपगमनं च, वेदैश्च सर्वैरहमेव च परमात्मा वेद्यो वेदितव्यो वेदान्तकृद् वेदान्तार्थसंप्रदायकृदित्यर्थः । वेदविद्वेदार्थविदेव चाहम् १५ ॥

आ० टी० । इतश्च सर्वात्मत्वेन सर्वव्यवहारास्पदत्वमीश्वरस्येत्याह **किं चेति** । प्राणिजातं ब्रह्मादिपुत्तिकान्तमात्मतया बुद्धौ संनिविष्टत्वं तद्गुणदोषाणामशेषेण द्रष्टृत्वमतो बुद्धिमध्यस्थगुणदोषद्रष्टृत्वादिति यावत् । मत्तः सर्वकर्माध्यक्षाज्जगद्यन्त्रसूत्रधारादित्यर्थः । प्राणिनां स्मृतिज्ञानयोस्तदुपायस्य च भगवदधीनत्वे भगवतो वैषम्यं स्यादित्याशङ्क्याह **येषामिति** । स्मृतिर्जन्मान्तरादावनुभूतस्य परामर्शो देशकालस्वभावविप्रकृष्टस्यापि ज्ञानमनुभवो, धर्माधर्माभ्यां विचित्रं कार्यं कुर्वतो नेश्वरस्य वैषम्यमिति भावः । वेदवेद्यं परं ब्रह्म भगवतोऽन्यदिति शङ्कां वारयति **वेदैरिति** । वेदात्मनां पौरुषेयत्वं परिहरति **वेदेति** । तदर्थसंप्रदायप्रवर्तकत्वार्थं तदर्थयाथातथ्यज्ञानवत्त्वमाह **वेदार्थेति** ॥ १५ ॥

प० टी० । अथ न केवलमन्नान्नादिविभूतिरूपेण देहमात्रे तिष्ठामि किं तु साक्षित्वादपीत्याह **सर्वस्येति** । अहं सर्वस्य प्राणिजातस्य हृद्याकाशे संनिविष्टोऽन्तर्यामित्वेन प्रविष्टः । कुतो ज्ञातमित्याह **मत्त इति** । यतो मत्तः, सकाशात्पूर्वानुभूतार्थविषया स्मृतिर्भवति ततो ज्ञानं विषयेन्द्रियसंयोगजं वर्तमानमपोहनं च तयोः प्रमोषः, अथोपसमीपे ऊह्यते तर्क्यते यत्पूर्वं दृष्टमासीत्तदेवेदमित्याकारेण । अथैतदनुभवरूपज्ञानाभावेऽन्यमुपायमाह **वेदैरिति** । सर्वैर्वेदैः संहिताब्राह्मणारण्यकरूपैरहमेवातद्व्यावृत्त्या वेद्यो ज्ञातव्योऽस्म्येवकारेण क्षुद्रदेवताव्युदासः । परं तु न साक्षात्कर्तव्य इत्याह **वेदान्तकृदिति** । वेदान्तानुपनिषदः करोतीति वेदान्तकृद् उप समीपेऽर्वागेव निषीदन्ति पर्यवस्यन्तीत्युपनिषदस्तदेव कथयति नेति नेति । न ह्यस्मात्परमस्तीत्यादिवाक्यैस्तथा च वेदान्तष्वहमेव निमित्तीभूत इत्यर्थः । अथैतद्वेदवाक्योक्तपरमरहस्योपदेष्टा परमगुरुरहमेवास्मीत्याह **वेदविदिति** । यद्वाहमेव वेदविन्न तु वेदो मां वेत्ति । "येनेदं सर्वं विजानाति तं केन विजानीयाद्" इतिश्रुतेः ॥ १५ ॥

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ॥**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥**

भगवत ईश्वरस्य नारायणाख्यस्य विभूतिसंक्षेप उक्तो विशिष्टोपाधिकृतो यदादित्यगतं तेज इत्यादिना, अथाधुना तस्यैव क्षराक्षरोपाधिप्रविभक्ततया निरुपाधिकस्य केवलस्य स्वरूपनिर्दिधारयिषयोत्तरश्लोका आरभ्यन्ते तत्र

सर्वमेवातीतानागतानन्तराध्यायार्थजातं त्रिधा राशीकृत्याह द्वाविमाविति । द्वाविमौ पृथग्राशीकृतौ पुरुषावित्युच्येते लोके संसारे क्षरश्च क्षरतीति क्षरो विनाश्येको राशिरपरः पुरुषोऽक्षरस्तद्विपरीतो भगवतो मायाशक्तिः क्षराख्यस्य पुरुषस्योत्पत्तिबीजमनेकसंसारिजन्तुकामकर्मादिसंस्काराश्रयोऽक्षरः पुरुष उच्यते । कौ तौ पुरुषावित्याह स्वयमेव भगवान् क्षरः सर्वाणि भूतानि समस्तं विकारजातमित्यर्थः, कूटस्थः कूटो राशिरिव स्थितः, अथवा कूटो मायावञ्चना जिह्मं कुटिलता वेति पर्यायाः, अनेकमायादिप्रकारेण स्थितः कूटस्थः संसारबीजानन्त्यान्न क्षरतीत्यक्षर उच्यते ॥ १६ ॥

आ०.टी० । उत्तरश्लोकानां तात्पर्यं वक्तुं वृत्तं कीर्तयति **भगवत इति** । विशिष्टोपाधिरादित्यादिः । संप्रत्यध्यायसमाप्तेरुत्तरसंदर्भस्य तात्पर्यमाह **अथेति** । न केवलं निरुपाधिकात्मस्वरूपनिर्धारणायोत्तरग्रन्थः किं तु सर्वस्यैव गीताशास्त्रस्यार्थनिर्णयार्थमित्याह **तत्रेति** । क्षराक्षरोपाधिभ्यां परमात्मना च राशित्रयमुक्तेन सर्वात्मत्वेनाशुद्ध्यादिदोषप्रसक्तावुक्तं **द्वाविमाविति** । पुरुषोपाधित्वात् पुरुषत्वं न साक्षादिति विवक्षितत्वादाह **पुरुषाविति** । परं पुरुषं व्यावर्तयति **भगवत इति** । तत्र कार्यलिङ्गकमनुमानं सूचयति **क्षराख्यस्येति** । मायाशक्तिं विना भोक्तृणां कर्मादिसंस्कारादेवोक्तकार्योत्पत्तिरित्याशङ्क्य तस्य निमित्तत्वेऽपि मायाशक्तिरुपादानमिति मत्वाह **अनेकेति** । कामकर्मादीत्यादिशब्देन ज्ञानं गृह्यते प्रकृतिं पुरुषं चैवेति प्रकृतयोरिह ग्रहणमिति शङ्कामाकाङ्क्षाद्वारा निवारयति **कौ ताविति** । कूटशब्दार्थमुक्त्वा तेन स्थितस्य कूटस्थतेति संपिण्डितमर्थमाह **अनेकेति** । तस्य कथमक्षरत्वं विना ब्रह्मज्ञानमनाशादित्याह **संसारेति** ॥ १६ ॥

प० टी० । अथ वेदेन क्षराक्षरातीतत्वेन वेद्यं स्वकीयं सूत्रात्मरूपमाह **द्वाविति** । इमावनुभूयमानौ द्वौ पुरुषौ लोके प्रसिद्धौ । तावाह **क्षरश्चाक्षरेति** । तत्र सर्वाणि भूतानि शरीराणि नश्वरत्वात्क्षर इत्युच्यन्ते । कूटे स्थूलप्रपञ्चे तिष्ठति कूटस्थश्चेतनारूपः सोऽक्षर इत्युच्यते ॥ १६ ॥

**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥**

उत्तम इति । आभ्यां क्षराक्षराभ्यां विलक्षणः क्षराक्षरोपाधिद्वयदोषेणास्पृष्टो नित्यशुद्धबुद्धमुक्तस्वभाव उत्तम उत्कृष्टतमः पुरुषस्त्वन्योऽत्यन्तविलक्षण आभ्यां परमात्मेति । परमश्चासौ देहाद्यविद्याकृतात्मभ्योऽन्नमयादिभ्यः पञ्चकोशेभ्य आत्मा च सर्वभूतानां प्रत्यक्चेतनः परमात्मेत्युदाहृत उक्तो वेदान्तेषु स एव विशिष्यते यो लोकत्रयं भूर्भुवःस्वराख्यं स्वकीयया चैतन्यबलशक्त्याविश्य प्रविश्य बिभर्ति स्वरूपसद्भावमात्रेण बिभर्ति धारयत्यव्ययो नास्य व्ययो विद्यत इत्यव्यय ईश्वरः सर्वज्ञो नारायणाख्य ईशनशीलः ॥ १७ ॥

**आ० टी०** । कार्यकारणाख्यौ राशी दर्शयित्वा राश्यन्तरं दर्शयति. **आभ्यामिति** । वैलक्षण्यफलमाह **क्षरेति** । उपाधिद्वयकृतगुणदोषास्पर्शे फलितमाह **नित्येति** । आभ्यां क्षराक्षराभ्यामिति यावत्, उत्तमोऽन्य इति पदद्वयं वस्तुतः सर्वथैव क्षराक्षरात्मत्वाभावदृष्टयर्थम् । जडवर्गस्यान्यत्वकृतं स्वातन्त्र्यं निरस्यति **स एवेति** । लोकत्रयमित्युपलक्षणं सर्वं जगदपि विवक्षितं चैतन्यमेव बलं तत्र शक्तिर्माया तयेति यावत् । जगद्धारणे परस्य व्यापारान्तरं वारयति **स्वरूपेति** । न चास्यान्यो धारयिता स्वतोऽचलत्वादित्याह **अव्यय इति** । "संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः" इति श्रुत्यर्थं गृहीत्वाह **ईश्वर इति** ॥ १७ ॥

**प० टी०** । अथ ताभ्यामतीतं पुरुषोत्तममाह **उत्तम इति** । अन्यस्तद्विलक्षण उत्तमः पुरुषो भवति स एव परमात्मेत्युदाहृतः प्रोक्तः । य आसमन्तादाविश्य लोकत्रयं बिभर्ति "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः । अव्ययो निर्विकारः सन्नीश्वरो नियन्ता सूत्रात्मा ॥ १७ ॥

**यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥**

तस्य नामनिर्वचनप्रसिद्धार्थवत्त्वं नाम्नो दर्शयन्निरतिशयोऽहमीश्वर इत्यात्मानं दर्शयति भगवान् यस्मादिति । यस्मात् क्षरमतीतोऽहं संसारमायावृक्षमश्वत्थाख्यमतिक्रान्तोऽहमक्षरादपि संसारवृक्षबीजभूतादपि चोत्तम उत्कृष्टतम ऊर्ध्वतमो वातः क्षराक्षराभ्यामुत्तमत्वादस्मि भवामि लोके वेदे च प्रथितः प्रख्यातः पुरुषोत्तम इत्येवं मां भक्तजना विदुः कवयः काव्यादिषु च पुरुषोत्तम इत्यनेनाभिज्ञानेनाभिगृणन्ति ॥ १८ ॥

**आ० टी०** । किं च लोकवेदयोर्भगवतो नामप्रसिद्ध्या सिद्धमप्रपञ्चत्वमित्याह **यथेति** । अश्वकर्णादिवदस्य नाम्नो रूढत्वादर्थविशेषाभावाद्भगवतोऽपि लौकिकेश्वरवदीश्वरत्वं सातिशयमिति नेत्याह **तस्येति** । यस्मादित्यस्यापेक्षितं निक्षिपति **अत इति** । उत्तमः पुरुष इति वाक्यशेषः ॥१८॥

**प० टी०** । इदृशं पुरुषोत्तमत्वमात्मनो नामनिर्वचनेन दर्शयति **यस्मादिति** । यस्मात्क्षरं जडमतिक्रान्तोऽहं नित्ययुक्तत्वात् । अक्षराच्चेतनवर्गादप्युत्तमश्च नियन्तृत्वाद् अतो लोके वेदे च पुरुषोत्तमो देहाभिमानिनो जीवस्य पुरुष इति संज्ञा तस्मादुत्तमः पुरुषोऽहमिति लोके , प्रसिद्धः । अथ न हि निर्मूला प्रसिद्धिरिति न्यायेन "एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः" इति वेदे- च प्रथितः प्रख्यातः । तदुक्तमथर्ववेदेपि—"इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् । सत्त्वादपि महानात्मा महतो ऽव्यक्तमुत्तमम् । अव्यक्तात्परः पुरुषो व्यापकोऽलिङ्ग एव च । यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति" इति स्पष्टार्थम् ॥ १८ ॥

**यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ॥**
**स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥**

अथेदानीं यथानिरुक्तमात्मानं यो वेद तस्येदं फलमुच्यते यो मामिति । यो मामीश्वरं यथोक्तविशेषणमेवं यथोक्तेन प्रकारेणासंमूढः संमोहवर्जितःसन् जानात्ययमहमस्मीति पुरुषोत्तमं स सर्ववित् सर्वात्मना सर्वं वेत्तीति सर्वज्ञः सर्वभूतस्थं भजति मां सर्वभावेन सर्वात्मचिन्तया हे भारत॥१९॥

आ० टी० । आत्मनोऽप्रपञ्चत्वं ज्ञानफलोक्त्या स्तौति अथेति । यथोक्तविशेषणं सर्वात्मत्वादिविशेषणोपेतमिति यावत् । क्षराक्षरातीतत्वं यथोक्तप्रकारः संमोहवर्जितः संमोहेन देहादिष्वात्मात्मीयत्वबुद्ध्या रहित इत्यर्थः । भगवन्तं जानतः सर्ववित्त्वं तस्यैव सर्वात्मना मेयत्वादित्याह **स सर्वविदिति** । सर्वात्मनि मय्येवासक्तचित्तत्वेनेत्यर्थः ॥ १९ ॥

प० टी० । तज्ज्ञानस्य फलमाह **य इति** । एवं निरुक्तप्रकारेणासंमूढो निश्चितमतिः सन् यो मां पुरुषोत्तमं जानाति स सर्वभावेन सर्वप्रकारेण मामेव भजति ततः सर्ववित् सर्वज्ञो भवति ॥ १९ ॥

**इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ॥**
**एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ २० ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

अस्मिन्नध्याये भगवत्तत्त्वज्ञानं मोक्षफलमुक्त्वाथेदानीं तत् स्तौति गुह्यतममिति । इत्येद् गुह्यतमं गोप्यतममत्यन्तं रहस्यमित्येतत् किं तच्छास्त्रं यद्यपि गीताख्यं समस्तं शास्त्रमुच्यते तथाप्ययमेवाध्याय इह शास्त्रमित्युच्यते स्तुत्यर्थं प्रकरणात् सर्वो हि गीताशास्त्रार्थोऽस्मिन्नध्याये समासेनोक्तो न केवलं, सर्वश्च वेदार्थ इह परिसमाप्तो 'यस्तं वेद स वेदवित्' 'वेदैश्च सर्वैरहमेव वेद्य' इति चोक्तमिदमुक्तं कथितं मया हेऽनघ। एतच्छास्त्रं यथादर्शितार्थं बुद्ध्वा बुद्धिमान् स्याद्भवेद् नान्यथा कृतकृत्यश्च भारत कृतं कृत्यं कर्तव्यं येन स कृतकृत्यो विशिष्टजन्मप्रसूतेन ब्राह्मणेन यत् कर्तव्यं तत् सर्वं भगवत्तत्त्वे विदिते कृतं भवेदित्यर्थः। न चान्यथा कर्तव्यं परिसमाप्यते कस्यचिदित्यभिप्रायः।'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति चोक्तम् ' एतद्धि जन्मसामग्र्यं ब्राह्मणस्य विशेषतः। 'प्राप्यैतत् कृतकृत्यो हि द्विजो भवति नान्यथा' इति च मानवं वचनं यत एतत् परमार्थतत्त्वमतः श्रुतवानसि ततः कृतार्थस्त्वं भारतेति॥ २०॥

इति श्रीपूज्यपादशंकरभगवतः कृतौ गीताभाष्ये पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

आ० टी० । अध्यायार्थमनूद्योपसंहारश्लोकमवतारयति **अस्मिन्निति** । सर्वस्यां गीतायां शास्त्रशब्दे वक्तव्ये कथमस्मिन्नध्याये तत्प्रयोगः स्यादित्याशङ्क्याह **यद्यपीति** । संनिहितमध्यायं स्तोतुमपि कुतस्तत्र शास्त्रशब्दस्तदर्थाभावात्तत्राह **सर्वो हीति** । गीताशास्त्रार्थस्य सर्वस्यात्र संक्षिप्तत्वादेव केवलं शास्त्रशब्दो न भवति किं तु वेदार्थस्यापि सर्वस्थानसमाप्तेर्युक्तं शास्त्रपदमित्याह **नेति** । तत्र गमकमाह **यस्तामिति** । भगवत्तत्त्वज्ञाने कृतकृत्यतेत्येतदुपपादयति **विशिष्टेति** । नान्यथेत्युक्तं प्रपञ्चयति **न चेति** । सत्यपि तत्त्वज्ञाने कर्मणां कर्तव्यत्वान्न कर्तव्यसमाप्तिरित्याशङ्क्याह **सर्वमिति** । तत्त्वज्ञाने कृतार्थतेति तत्र मनोरपि संमतिमाह **एतद्धीति** । भारतेति संबोधनतात्पर्यमाह **यत इति** । तदनेनात्मनो देहाद्यतिरिक्तत्वं चिद्रूपत्वं सर्वात्मत्वं कार्यकारणविनिर्मुक्तत्वेनाप्रपञ्चत्वं तस्याखण्डैकरसब्रह्मात्मत्वज्ञानादशेषपुरुषार्थपरिसमाप्तिरित्युक्तम् ॥२०॥

इत्यानन्दगिरिकृतगीताभाष्यटीकायां पञ्चदशाध्यायः ॥ १५ ॥

प० टी० । अथाध्यायार्थमुपसंहरति **इतीति** । इत्यनेन संक्षेपप्रकारेण गुह्यतममतिरहस्यं संपूर्णं शास्त्रमेव मयोक्तं न पुनरध्यायमात्रं भोऽनघ शुद्धान्तःकरण एतद् बुध्वा सम्यग्ज्ञात्वा यः कोऽपि बुद्धिमांस्तत्त्वज्ञानवान् कृतकृत्यश्च स्यात् किं पुनर्भवानित्यर्थः ॥ २० ॥

अथाध्यायतात्पर्यम्—ब्रह्माख्यं मूलमूर्ध्वं शिरसि विजयतेऽर्वाक्कराङ्घ्र्यादिशाखास्त्रैगुण्यैः पल्लवाः स्युर्विषयपरिणतिर्वासनाः पणजालम् । वृक्षेस्थूले प्रपञ्चे पुरुषवरमुपाश्रित्य मूलं विदित्वाऽसंगेनच्छिन्धि शेषं हरिरिति दशमे पञ्चयुक्ते जगाद ॥ १ ॥ इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां परमार्थप्रपायां पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

इति पञ्चदशाध्यायः ॥ १५ ॥

---

## षोडशोऽध्यायः ।

### श्रीभगवानुवाच ॥

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ॥**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥**

दैव्यासुरी राक्षसी चेति प्राणिनां प्रकृतयो नवमेऽध्याये सूचितास्तासां विस्तारप्रदर्शनायाभयं सत्त्वसंशुद्धिरित्यादिरध्याय आरभ्यते, तत्र संसारमोक्षाय दैवीप्रकृतिर्निबन्धनायासुरी राक्षसी चेति दैव्यादानाय प्रदर्शनं क्रियते इतरयोः परिवर्जनाय श्रीभगवानुवाच अभयमिति । अभयमभीरुता सत्त्वसंशुद्धिः सत्त्वस्यान्तःकरणस्य संव्यवहारेषु परवञ्चनमायानृतादिपरिवर्जनं शुद्धभावेन व्यवहार इत्यर्थः, ज्ञानयोगव्यवस्थितिः ज्ञानं शास्त्रत आचार्यतश्चात्मादिपदार्थानामवगमोऽवगतानामिन्द्रियाद्युपसंहारेणैकाग्रतया स्वात्मसंवेद्यतापादनं योगस्तयोर्ज्ञानयोगयोर्व्यवस्थितिर्व्यवस्थानं तन्निष्ठतैषा प्रधाना दैवी सात्त्विकी संपद् यत्र च

येषामधिकृतानां या प्रकृतिः संभवति सात्त्विकी सोच्यते, दानं यथाशक्ति संविभागोऽन्नादीनां, दमश्च बाह्यकरणानां, उपशमोऽन्तःकरणस्योपशमं शान्तिं वक्ष्यति, यज्ञश्च श्रौतोऽग्निहोत्रादिः, स्मार्तश्च देवयज्ञादिः, स्वाध्याय ऋग्वेदाद्यध्ययनमदृष्टार्थं, तपो वक्ष्यमाणं शारीरादि, आर्जवमृजुत्वं सर्वदा ॥ १ ॥

आ० टी० । व्यवहितेन संबन्धं वदन्नध्यायान्तरमवतारयति **दैवीति** । दैवी सूचिता राक्षसीमासुरीं चैव प्रकृतिं मोहिनीमित्यादाविति शेषः । प्रकृतीनां विस्तरेण दर्शनं कुत्रोपयोगीत्याशङ्क्य विभज्योपयोगमाह **संसारेति** । अतीते चाध्याये कर्मानुबन्धीन्यधश्च मूलान्यनुसंततानीत्यत्र कर्मव्यङ्ग्या वासनाः संसारस्यावान्तरमूलत्वेनोक्तास्ता मनुष्यदेहे प्राग्भवीयकर्मानुसारेण व्यज्यमानाः सात्त्विकादिभेदेन दैव्यादिप्रकृतित्रयत्वेन विभक्ता आविस्तितीर्षुर्भगवानुक्तवानित्याह **भगवानिति** । अभीरुता शास्त्रोपदिष्टेऽर्थे संदेहं हित्वानुष्ठाननिष्ठत्वं, परवञ्चना परस्य व्याजेन वशीकरणम्, माया हृदयेऽन्यथा कृत्वा बहिरन्यथा व्यवहरणम्, अनृतमयथादृष्टं कथनमादिपदेन विप्रलम्भविभ्रमादिग्रहः । उक्तमर्थं संक्षिप्याह **अशुद्धेति** । एषेत्यभयाद्या ज्ञानादिस्थित्यन्ता त्रिधोक्तेति यावत् । तामेव सात्त्विकीं प्रकृतिं प्रकटयति **यत्रेति** । ज्ञाने कर्मणि वाधिकृतानामभीरुताद्या या प्रकृतिः सा तेषां तत्र सात्त्विकी संपदित्यर्थः । महाभाग्यानामत्युत्तमा दैवी संपदुक्ता संप्रति सर्वेषां यथासंभवं संपदं व्यपदिशति **दानमिति** । बाह्यकरणविशेषणे कारणमाह **अन्तःकरणस्येति** । देवयज्ञादिरित्यादिशब्देन पितृयज्ञो भूतयज्ञो मनुष्ययज्ञश्चेति त्रयमुक्तम् । ब्रह्मयज्ञस्य स्वाध्यायेन पृथक्करणात् ॥ १ ॥

प० टी० । पूर्वाध्यायान्ते 'एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च' इत्युक्तं तर्हि क एतद् बुद्ध्वा कृतकृत्यो भवत्यबुद्ध्वा च कः संसारी भवतीति विवेक्तुं देवासुरसंपत्तिकथनाय षोडशाध्यायप्रवृत्तिस्तत्र प्रथमं तत्त्वज्ञानाधिकारिणं निरूपयितुं भगवान् दैवीं संपत्तिमाह **अभयमिति त्रिभिः** । अभयं भयराहित्यं, सत्त्वस्य चित्तशुद्धिः प्रसन्नता, ज्ञानयोग आत्मज्ञाने व्यवस्थितिः परिनिष्ठा, दानं स्वभोज्यस्यान्नादेर्यथोचितं संविभागः, दमो बाह्येन्द्रियसंयमः यज्ञो यथाधिकारं दर्शपौर्णमासादिः, स्वाध्यायो ब्रह्मयज्ञादिभिर्जपयज्ञः, तपः शारीरादि त्रिविधं वक्ष्यमाणम्, आर्जवमवक्रता ॥ १ ॥

## अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ॥
## दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ २ ॥

किं च अहिंसेति । अहिंसाहिंसनं प्राणिनां पीडावर्जनं, सत्यमप्रियानृतवर्जनं यथाभूतार्थवचनम्, अक्रोधः परैराकुष्टस्याभिहतस्य वा प्राप्तस्य क्रोधस्योपशमनं, त्यागः संन्यासः पूर्वं दानस्योक्तत्वात्, शान्तिरन्तःकरणस्योपशमः, अपैशुनमपिशुनता परस्मै पररन्ध्रप्रकटीकरणं पैशुनं तदभावोऽपैशुनं, दया भूतेषु दुःखितेषु, अलोलुप्त्वमिन्द्रियाणां विषयसन्निधावविक्रिया, मार्दवं मृदुताक्रौर्यं, ह्रीर्लज्जा, अचापलमसति प्रयोजने वाक्पाणिपादादीनामव्यापारयितृत्वम् ॥ २ ॥

आ० टी० । दैवीं संपदमाभिजातस्य विशेषणान्तराणि दर्शयति **किं चेति** । त्यागशब्देन यागदानं कस्मान्नोच्यते तत्राह **पूर्वमिति** । लज्जाकार्यनिवृत्तिहेतुगर्हानिमित्ता मनोवृत्तिः ॥ २ ॥

प० टी० । **अहिंसेति** । अहिंसा परपीडानिवृत्तिः, सत्यं यथार्थभाषणम्, अक्रोधस्ताडितस्यापि चित्ताक्षोभः । तदुक्तम्—'क्रुद्धे स्मेरमुखावधारणमथाविष्टे प्रसादक्रमो व्याक्रोशे विनयोक्तिरात्मदुरितोच्छेदोत्सवस्ताडने ' इति । त्याग औदार्यम्, शान्तिश्चित्तोपरतिः, अपैशूनं परापवादवर्जनम्, दीनेषु भूतेषु दया, अलोलुप्त्वम् अत्र वर्णलोपश्छान्दसः अलोलुपत्वं, मार्दवं मृदुत्वमक्रूरता, ह्रीरकार्यप्रवृत्तौ लोकलज्जा, अचापलं व्यर्थक्रियाराहित्यमेकत्रावस्थितिर्वा ॥ २ ॥

**तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ॥**
**भवन्ति संपदं दैवीमभिजातस्य भारत ॥ ३ ॥**

किं च तेज इति । तेजः प्रागल्भ्यं न त्वग्गता दीप्तिः, क्षमाकृष्टस्य ताडितस्य वान्तर्विक्रियानुत्पत्तिरुत्पन्नायां विक्रियायां प्रशमनमक्रोध इत्यवोचाम, इत्थं क्षमाया अक्रोधस्य च विशेषः, धृतिर्देहेन्द्रियेष्ववसादं प्राप्तेषु तस्य प्रतिषेधकोऽन्तःकरणवृत्तिविशेषो येनोत्तम्भितानि करणानि देहश्च नावसीदन्ति, शौचं द्विविधं मृज्जलाभ्यां कृतं बाह्यमाभ्यन्तरं च मनोबुद्ध्योर्नैर्मल्यं मायारागादिकालुष्याभाव एवं द्विविधं शौचम्, अद्रोहः परजिघांसाभावोऽहिंसनं, नातिमानितात्यर्थं मानोऽतिमानः स यस्य विद्यते सोऽतिमानी तद्भावोऽतिमानितात्मनः पूज्यतातिशयभावनाभाव इत्यर्थः । भवन्त्यभयादीन्येतदन्तानि संपदमभिजातस्य किं विशिष्टां संपदं दैवीं देवानां संपदं तामभिलक्ष्य जातस्य दैवीविभूत्यर्हस्य भाविकल्याणस्येत्यर्थो हे भारत ॥ ३ ॥

आ० टी० । दैवीं संपदं प्राप्तस्य विशेषणान्तराण्यपि सन्तीत्याह **किं चेति** । व्यावर्त्यं कीर्तयति **नेति** । अध्यात्माधिकारादिति शेषः । क्षमाक्रोधयोरेकार्थत्वेन पौनरुक्त्यमाशङ्क्य परिहरति **उत्पन्नायामिति** । तयोरेवं विशेषान्न पौनरुक्त्यं फलतीत्याह **इत्थमिति** । वृत्तिविशेषमेव विशदयति **येनेति** । शौचस्य द्वैविध्यमेव प्रकटयति **मृज्जलेत्यादिना** । नैर्मल्यमेव स्फोरयति **मायेति** । उक्तमुपसंहरति **एवमिति** । अतिमानित्वाभावमेव व्यनक्ति **आत्मन इति** । कस्यैतानि विशेषणानीत्यपेक्षायामाह **भवन्तीति** । साधकस्य मनुष्यदेहस्थस्यैव कथं दैवीं संपदमभिलक्ष्य जातत्वमित्याशङ्क्याह **दैवीति** ॥ ३ ॥

प० टी । **तेज इति** । तेजः प्रागल्भ्यम्, क्षमा परिभवादिषु क्रोधप्रतिबन्धः, धृतिश्चित्तस्थिरीकरणम्, शौचं बाह्यान्तरशुद्धिः, अद्रोहो द्वेषराहित्यम्, नातिमानिता स्वस्मिन् पूज्यताभिमानराहित्यम् । एतान्यभयादीनि षड्विंशतिलक्षणानि दैवीं संपदमभिलक्ष्य जातस्य निष्पन्नस्य भवन्ति ॥ ३ ॥

**दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ॥**
**अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४ ॥**

अथेदानीमासुरी संपदुच्यते, दम्भो धर्मध्वजित्वम्, दर्पो धनस्वजनादिनिमित्तः, उत्सेकोऽतिमानः, पूर्वोक्तः क्रोधश्च, पारुष्यमेव परुषवचनं यथा काणं चक्षुष्मान्, विरूपं रूपवान्, हीनाभिजनमुत्तमाभिजन इत्याद्यज्ञानं चाविवेकज्ञानं मिथ्याज्ञानं कर्तव्याकर्तव्यादिमिथ्याप्रत्ययविषयमभिजातस्य पार्थ किमभिजातस्येत्याह असुराणां संपदासुरी तामभिजातस्येत्यर्थः ॥ ४ ॥

आ० टी० । आदेयत्वेन दैवीं संपदमुक्त्वा हेयत्वेनासुरीं संपदमाह अथेति । उत्सेको मदो महदवधीरणे हेतुः, आत्मन्युत्कृष्टत्वाध्यारोपोऽतिमानः, क्रोधस्तु कोपापरपर्यायः स्वपरापकारप्रकृतिहेतुर्नेत्रादिविकारलिङ्गोऽन्तःकरणवृत्तिविशेषः । परुषो निष्ठुरः प्रत्यक्षरुक्षवाक् तस्य भाव. पारुष्यं, तदुदाहरति यथेति । तामभिजातस्य दम्भादीन्यज्ञानान्तानि भवन्तीत्यनुषज्यते ॥ ४ ॥

प० टी० । अथासुरीं संपदमाह दम्भइत्यादितः । दम्भो धर्मध्वजित्वम्, दर्पो धनविद्यानिमित्तश्रितोत्सेकः, अभिमानोऽहंभावः, क्रोधः कोपातिशयः, पारुष्यं निष्ठुरत्वम्, अज्ञानमविवेकः आसुरीमित्युपलक्षणम् । असुराणां राक्षसानां संपत्तिस्तामभिलक्ष्य जातस्यैतानि दम्भादिनि भवन्ति ॥ ४ ॥

**दैवी संपद् विमोक्षाय निबन्धायासुरी मता ॥**
**मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥**

अनयोः संपदोः कार्यमुच्यते दैवीति । दैवी संपद् या सा विमोक्षाय संसारबन्धनात्, निबन्धाय नियतो बन्धो निबन्धस्तदर्थमासुरी संपन्मताभिप्रेता तथा राक्षसी, तत्रैवमुक्ते सत्यर्जुनस्यान्तर्गतं भावं किमहमासुरीसंपद्युक्तः किंवा दैवीसंपद्युक्त इत्येवमालोचनारूपमालक्ष्याह भगवान् मा शुचः शोकं मा कार्षीः संपदं दैवीमभिजातोऽसि हे पाण्डव अभिलक्ष्य जातोऽसि भाविकल्याणस्त्वमसीत्यर्थः ॥ ५ ॥

आ० टी० । अनयोरिति । कार्यं फलविभागः । आसुरीत्युपलक्षणं राक्षसी चेति द्रष्टव्यमित्याह तथेति । फलविभागे संपदोरेवमुक्ते प्रतीत्यार्जुनस्याभिप्रायं भगवतो वचनमित्याह तत्रेति । तत्राभिजात्यं हेतुं करोति पाण्डवेति ॥ ५ ॥

प० टी० । अथ तयोः संपदोः कार्यं दर्शयति दैवी संपदिति । दैवी या संपत्तया युक्तो मयोपदिष्टे तत्त्वज्ञानेऽधिकारी स्यात् । आसुर्या संपदा युक्तो नित्यसंसारी एतच्छ्रुत्वा किमहमत्राधिकारी न वेति संदिहानमर्जुनमाश्वासयन्नाह हे पाण्डव त्वं मा शुचः शोकं माकार्षीः यतस्त्वं दैवीं संपदमभिजातोऽसि ॥ ५ ॥

**द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ॥**
**दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥**

---

१ प्रत्ययइति पा० लि०.

द्वौ भूतेति । द्वौ द्विसंख्याकौ भूतसर्गौ भूतानां मनुष्याणां सर्गौ सृष्टिभूतसर्गौ सृज्येते इति सर्गौ भूतान्येव सृज्यमानानि दैवासुरसंपद्युक्तानि द्वौ भूतसर्गावित्युच्येते, "द्वया ह प्राजापत्या देवाश्चासुराश्च" इति श्रुतेः। लोकेऽस्मिन् संसार इत्यर्थः । सर्वेषां द्वैविध्योपपत्तेः कौ तौ भूतसर्गावित्युच्यते प्रकृतावेव दैव आसुर एव च। उक्तयोरेव पुनरनुवादे प्रयोजनमाह दैवो भूतसर्गोऽभयं सत्त्वसंशुद्धिरित्यादिना विस्तरशो विस्तरप्रकारैः प्रोक्तः कथितो न त्वासुरो विस्तरशोऽतस्तत्परिवर्जनार्थमासुरं पार्थ मे मम वचनादुच्यमानं विस्तरशः शृण्ववधारय ॥ ६ ॥

आ० टी० । निर्दयानां रक्षसां संपत्तृतीयास्ति सा कस्मान्नोक्तेत्याशङ्क्यासुर्यामन्तर्भावादित्याह द्वाविति । भूतानां द्वैविध्ये मानत्वेनोद्गीथब्राह्मणमुदाहरति द्वया हेति । संपद्द्वययुतेभ्योऽतिरिक्तानामपि प्राणिभेदानां संभवात् कुतो भूतानां द्वित्वनियतिरित्याशङ्क्याह सर्वेषामिति ॥ ६ ॥

प० टी० । अथेयमासुरी संपत्सर्वथैव त्याज्येत्येतदर्थमासुरीं संपदं प्रपञ्चयितुमाह द्वाविति । द्वौ द्विप्रकारौ भूतानां सर्गौ मे मत्तः शृणु असुरराक्षसप्रकृत्योरेकत्वाद्द्वावित्युक्तम्, अतो 'राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः' इति नवमाध्यायोक्तप्रकृतित्रैविध्येनाविरोधः । स्पष्टमन्यत् ॥ ६ ॥

**प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ॥**
**न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥**

अध्यायपरिसमाप्तेरासुरी संपत् प्राणिविशेषणत्वेन प्रदर्श्यते प्रत्यक्षीकरणेन च शक्यतेऽस्याः परिवर्जनं कर्तुमिति, प्रवृत्तिमिति प्रवृत्तिं च प्रवर्तनं यस्मिन् पुरुषार्थसाधने कर्तव्ये प्रवृत्तिस्तां निवृत्तिं च तद्विपरीतां यस्मादनर्थहेतोर्निवर्तितव्यं सा निवृत्तिस्तां च जना आसुरा न विदुर्न जानन्ति न केवलं प्रवृत्तिनिवृत्ती एव न विदुर्न शौचं नापि चाचारो न सत्यं तेषु विद्यते अशौचा अनाचारा मायाविनोऽनृतवादिनो ह्यासुराः ॥ ७ ॥

आ० टी० । नन्वध्यायशेषेणासुरसंपद्दर्शनमयुक्तं तस्यास्त्याज्यत्वेन पङ्कप्रक्षालनन्यायावतारादित्याशङ्क्याह प्रत्यक्षीकरणेनेति । वर्जनीयामासुरीं संपदं विवृणोति प्रवृत्तिं चेति । तां विहितां प्रवृत्तिं न जानन्तीत्यर्थः । तां च निषिद्धां क्रियां न जानन्तीति संबन्धः । न शौचमित्यादेस्तात्पर्यमाह अनाचारेति । शौचसत्ययोराचारान्तर्भावेऽपि ब्राह्मणपरिव्राजकन्यायेन पृथगुपादानम् ॥ ७ ॥

प० टी० । अथासुरीं विस्तरशो निरूपयति प्रवृत्तिमित्यादितो द्वादशभिः । असुरस्वभावा जना धर्मे प्रवृत्तिमधर्मे निवृत्तिमिति न जानन्ति । अतः शौचमाचारः सत्यं च तेषु नास्ति ॥ ७ ॥

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ॥**
**अपरस्परसंभूतं किमन्यत् कामहैतुकम् ॥ ८ ॥**

किं च असत्येति । असत्यं यथा वयमनृतप्रायास्तथेदं जगत् सर्वमसत्यमप्रतिष्ठं च नास्य धर्माधर्मौ प्रतिष्ठातोऽप्रतिष्ठं चेति त आसुरा जना जगदाहुरनीश्वरं न च धर्माधर्मसव्यपेक्षकोऽस्य शासितेश्वरो विद्यत इत्यतोऽनीश्वरं जगदाहुः । किं चापरस्परसंभूतं कामप्रयुक्तयोः स्त्रीपुरुषयोरन्योन्यसंयोगाज्जगत् सर्वं संभूतं किमन्यत् कामहैतुकं कामहेतुकमेव कामहैतुकमन्यज्जगतः कारणं न किं चिददृष्टं धर्माधर्मादि कारणान्तरं विद्यते जगतः काम एव प्राणिनां कारणमिति लोकायतिकदृष्टिरियम् ॥ ८ ॥

प० टी० । ननु वेदोक्तयोर्धर्माधर्मयोः प्रवृत्तिनिवृत्ती कथं न विदुः कथं वा धर्माधर्मयोरनङ्गीकारे जगतः सुखदुःखादिव्यवस्था स्यात् कथं वा शौचाचारविषयामीश्वराज्ञामतिवर्तेरन्नीश्वरानङ्गीकारे च कुतो जगदुत्पत्तिः स्यादित्याशङ्क्याह **असत्यमिति** । तेऽसुरा जगदसत्यमप्रतिष्ठमनीश्वरं चाहुः । न विद्यते सत्यं ब्रह्म वेदादिशब्दब्रह्म वेदादि यस्मिन् कुत्रापि प्रामाण्यं न मन्यन्त इत्यर्थः । अत एव नास्ति धर्माधर्मरूपा प्रतिष्ठा व्यवस्थितिर्यस्मिन् । स्वाभाविकं जगद्वैचित्र्यमाहुः । अत एव नास्तीश्वरः कर्ता व्यवस्थापकश्च यस्य तादृशं जगदाहुः । तर्हि कुतोऽस्य जगत उत्पत्तिं वदन्तीत्याह **अपरस्परसंभूतम्** । अपरःशब्दः सकारान्तः । अपरश्च परश्च अपरस्परं स्त्रीपुरूपं मिथुनं तस्मात्संभवतीति । किंभूतं कामहैतुकम् । कामः कन्दर्पो हेतुर्यस्य न तु सुप्रजार्थम् । अतो मिथुनादन्यत् किमस्य कारणं न किं चिदित्यर्थः । एतां लोकायतिकानां दृष्टिं दर्शनमवष्टभ्याश्रित्य नष्टो नाशकवानात्मा येषां मतेऽत एवाल्पबुद्धयो दृष्टान्तमात्रमतय उग्रं संसारभयावहं कर्म येषां ते तथा जगतः क्षयायाधःपाताय प्रभवन्त्युद्भवन्त्यत एवाहिताः, यद्वा 'प्रवृत्तिं च निवृत्तिं च' इत्यादिना ये स्वमार्गबहिर्भूतास्त एवासुरशब्देनोक्ता न तु लोकायतिकाः । यतो 'दम्भो दर्पोऽभिमानश्च' इत्यादिना आसुरलक्षणस्योक्तत्वाद् एवं त आत्मवत्सर्वं जगदपि मन्यन्त इत्याह । **असत्यमिति** । असत्यं सत्यवादरहितं द्यूतवञ्चकाद्युपेतम् । अप्रतिष्ठं महत्त्वरहितं निर्लज्जत्वलोकापवादभयवर्जितम् । अनीश्वरमितीश्वरानिग्रहभयवर्जितम् । नापि कर्तृत्वसापेक्षं किं त्वपरस्परसंभूतमिति पूर्ववत् । कामहैतुकं चेति पित्रादिभक्तिरहितम् ॥ ८ ॥

आ० टी० । असुराणां जनानां विशेषणान्तराण्यपि सन्तीत्याह **किं चेति** । विद्यत इत्याहुरिति पूर्वेण संबन्धः । शास्त्रैकगम्यमदृष्टं निमित्तीकृत्य प्रकृत्यधिष्ठात्रात्मकेन ब्रह्मणा रहितं जगदिष्यते चेत् कथं तदुत्पत्तिरित्याशङ्क्याह **किं चेति** । किमन्यदित्यादेराक्षेपस्य तात्पर्यमाह **न किं चिदिति** ॥ ८ ॥

**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ॥**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥**

एतामिति । एतां दृष्टिमवष्टभ्याश्रित्य नष्टात्मानो नष्टस्वभावा विभ्रष्टपरलोकसाधना अल्पबुद्धयो विषयविषयाल्पैव बुद्धिर्येषां तेऽल्पबुद्धयः प्रभवन्त्युद्भवन्त्युग्रकर्माणः क्रूरकर्माणो हिंसात्मकाः क्षयाय जगतः प्रभवन्तीति संबन्धः । जगतोऽहिताः शत्रव इत्यर्थः ॥ ९ ॥

आ० टी० । यथोक्ता दृष्टिर्ब्रह्मदृष्टिवदिष्टैवेत्याशङ्क्याह एतामिति । प्रागुपदिष्टामेतां लोकायतिकदृष्टिमवलम्ब्येति यावत् । नष्टस्वभावत्वमेव स्पष्टयति विभ्रष्टेति । विषयबुद्धेरल्पत्वं दृष्टमात्रोद्देशेन प्रवृत्तत्वं, जगतः प्राणिजातस्येति यावत् ॥ ९ ॥

प० टी० । एतां दृष्टिं दृष्टमात्रप्रतीतिमवष्टभ्याङ्गीकृत्य नष्टात्मानो विधिनिषेधवर्जिता अत एवाल्पबुद्धय उग्रकर्माणो जीवहिंसाद्यासुरतपोनिष्ठाः । तदुक्तम्—'स्रष्टारं सुखसंपदामपि वपुर्द्रष्टारमन्तर्गतं स्वात्मानं परिहाय मूढधिषणो देहात्मवादो जनः । पिण्डं पोषयति प्रतिक्षणपरद्रोहानृतैरेव तद्द्राग्द्रान्तैरपराद्धमस्ति किमहो बौद्धादिकानामिह ' इति ॥ ९ ॥

कामामाश्रित्य दुष्पूरं दम्भमानमदान्विताः ॥
मोहाद् गृहीत्वा सद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥ १० ॥

ते च काममिति । काममिच्छाविशेषमाश्रित्यावष्टभ्य दुष्पूरमशक्यपूरणं दम्भमानमदान्विता दम्भश्च मानश्च मदश्च दम्भमानमदास्तैरन्विता मोहादविवेकतो गृहीत्वोपादायासद्ग्राहानशुभनिश्चयान् प्रवर्तन्ते लोकेऽशुचिव्रता अशुचीनि व्रतानि येषां तेऽशुचिव्रताः ॥ १० ॥

आ० टी० । तानेव दुराचारानसुरान् प्रकारान्तरेण विशिनष्टि ते चेति ॥ १० ॥

प० टी० । अथान्यानप्याह काममिति । दुःखेन पूरयितुमशक्यं काममभिलाषमाश्रित्याङ्गीकृत्य दम्भमानमदादिभिरुपायैरान्विताः सन्तः क्षुद्रदेवताराधनादौ प्रवर्तन्ते । किं कृत्वा असद्ग्राहान् गृहीत्वा सत्परं ब्रह्म गृह्णन्ति ते सद्ग्राहास्तदितरं स्वर्गादिसुखं गृह्णन्ति तेऽसद्ग्राहा ये मन्त्रास्तान् गृहीत्वामुकमन्त्रेणैतां देवतामाराधयामीति संकल्पास्तथान्येऽशुचिव्रता मद्यमांसाद्याहार एव व्रतं नियमो येषां ते ॥ १० ॥

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ॥
कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥

किं च चिन्तेति । चिन्तामपरिमेयां च न परिमातुं शक्यतेऽस्याश्चिन्ताया इयत्ता सापरिमेया तामपरिमेयां प्रलयान्तां मरणान्तामुपाश्रिताः सदा चिन्तापरा इत्यर्थः । कामोपभोगपरमाः, काम्यन्त इति कामाः शब्दादयस्तदुपभोगपरमाः, अयमेव परमः पुरुषार्थो यः कामोपभोग इत्येवं निश्चितात्मान एतावदिति निश्चिताः ॥ ११ ॥

**आ० टी०** । तानेव विधान्तरेण विशिनष्टि **किं चेति** । चिन्तामात्मीययोगक्षेमोपायालोचनात्मिकामपरिमेयाविषयत्वात् परिमातुमशक्यामाश्रिता इति संबन्धः । एष कामोपभोगः परमयनं सुखस्येत्येतावत् पारत्रिकं तु नास्ति सुखमिति निश्चयवन्त इत्याह **एतावदितीति** ॥ ११ ॥

**प० टी०** । किं च **चिन्तामिति** । प्रलयो मरणमेवान्तः पर्यवसानं यस्यास्तां परिमातुमशक्यां चिन्तां मनोरथसंततिमुपाश्रिताः कामा विषयास्तेषामुपभोग एव परमात्यन्तिकं प्राप्यं येषां ते एतावान्पुरुषार्थ इति कृतनिश्चयाः । श्रुतिरपि—"स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्योकृत्स्नता" इति । भाष्यम्—तस्य पुरुषस्य, उइति निर्धारणे, अकृत्स्नता सकलप्राप्तिराहित्यम् । तस्य कस्य य एषां पूर्वोक्तानां विषयाणां मध्ये यावदेकैकं विषयं न प्राप्नोति तावदहमकृत्स्न एवेति मन्यतेऽहमप्राप्तसकलार्थ एवेति मन्यते ॥ ११ ॥

**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ॥**
**ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥ १२ ॥**

आशापाशेति । आशापाशशतैराशा एव पाशास्तच्छतैराशापाशशतैर्बद्धा नियन्त्रिताः सन्तः सर्वत आकृष्यमाणाः कामक्रोधपरायणाः कामक्रोधौ परमयनं पर आश्रयो येषां ते कामक्रोधपरायणाः, ईहन्ते चेष्टन्ते कामभोगार्थं कामभोगप्रयोजनाय न धर्मार्थमन्यायेनार्थसंचयानर्थप्रचयानन्यायेन परस्वापहरणादिनेत्यर्थः ॥ १२ ॥

**आ० टी०** । आसुरानेव पुनर्विशिनष्टि **आशेति** । अशक्योपायार्थविषयानवगतोपायार्थविषया वा प्रार्थना आशास्ताः पाशा इव पाशास्तेषां शतैर्बद्धा इव श्रेयसः प्रच्याव्येत ततो नीयमाना इत्याह **आशा एवेति** ॥ १२ ॥

**प० टी०** । किं च **आशापाशशतैरिति** । आशा एव पाशा बन्धनरज्जवस्तेषां शतानि तैर्बद्धाः । तदुक्तम्—'आशानाम मनुष्यस्य का चिदाश्चर्यशृङ्खला । यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पङ्गुवद्' इति । तथा कामक्रोधौ परमयनं गतिर्येषां ते कामभोगार्थं विषयभोगार्थमन्यायेन द्यूतचौर्यादिनार्थसंचयान् द्रव्यसंग्रहानीहन्तेऽपेक्षन्ते ॥ १२ ॥

**इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ॥**
**इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥**

ईदृशश्च तेषामभिप्रायः, इदमिति । इदं द्रव्यमद्येदानीं मया लब्धमिदं चान्यत् प्राप्स्ये मनोरथं मनस्तुष्टिकरमिदं चास्तीदमपि मे भविष्यत्यागामिनि संवत्सरे पुनर्धनं तेनाहं धनी विख्यातो भविष्यामि ॥ १३ ॥

**आ० टी०** । तेषामभिप्रायोऽपि विवेकाविरोधीत्याह **ईदृशश्चेति** । द्रव्यं गोहिरण्यादि । इदमन्यद्बुद्धौ प्रार्थ्यमानत्वेन विपरिवर्तमानमित्येतत् ॥ १३ ॥

प० टी० । अथान्यायेनाप्यर्थलाभे केवलं मनोराज्यमेव कुर्वन्तीत्याह **इदमिति चतुर्भिः** । मनोरथं मनसः प्रियशेषं प्राप्स्ये प्राप्स्यामि । शेषं स्पष्टम् । एषां त्रयाणां श्लोकानामित्यज्ञानविमोहिताः पतन्ति नरकेऽशुचाविति चतुर्थेनान्वयः ॥ १३ ॥

**असौ मया हतः शत्रुर्हनिष्ये चापरानपि ॥**
**ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥ १४ ॥**

असौ मयेति । असौ देवदत्तनामा मया हतो दुर्जयः शत्रुः, हनिष्ये चान्यान्वराकान् परानपि किमेते करिष्यन्ति तपस्विनः सर्वथापि नास्ति मत्तुल्य ईश्वरोऽहमहं भोगी सर्वप्रकारेण च सिद्धोऽहं संपन्नः पुत्रैः पौत्रैर्नप्तृभिर्न केवलं मानुषोऽहं बलवान् सुखी चाहमेवान्ये तु भूमिभारायावतीर्णाः॥ १४॥

आ० टी० । यथोक्ते मदभिप्राये प्रतिबन्धकः शत्रुरपि न संभवतीत्याह **असाविति** । स्वत्तो विहीनानां त्वया परिभवेऽपि त्वत्तुल्यानां शत्रूणां परिभवो निश्चितो न भवतीत्याशङ्क्याह **सर्वथेति** । ऐश्वर्यातिरेकेऽपि कुतस्तेषां भोगसामर्थ्यमित्याशङ्क्याह **अहमिति** । सिद्धत्वमेव स्फुटयति **संपन्न इति** । बलवानोजस्वी, सुखी रोगरहितः ॥ १४ ॥

प० टी० । किं च **असाविति** । असौ वर्तमानः शत्रुर्मया हतोऽपरान् भविष्यतोऽपि शत्रून् हनिष्ये । सिद्धार्थः कृतार्थः । तदुक्तम्–'मृषा मनोरथश्रेणीमाधुर्योन्मोहितो दिवा । रात्रौ स्वाप्नं सुखं भुञ्जन्नरो जयति जीवितम्' इति ॥ १४ ॥

**आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥**
**यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥**

आढ्य इति । आढ्यो धनेनाभिजनेनाभिजनवान् सप्तपुरुषं श्रोत्रियत्वादिसंपन्नस्तेनापि न मम तुल्योऽस्ति कश्चित् कोऽन्योऽस्ति सदृशस्तुल्यो मया, किं च यक्ष्ये यागेनाप्यन्यानभिभविष्यामि दास्यामि नटादिभ्यो मोदिष्ये हर्षातिशयं प्राप्स्यामीत्येवमज्ञानेन विमोहिता अज्ञानविमोहिता विविधमविवेकभावमापन्नाः ॥ १५ ॥

आ० टी० । विद्यावृत्तधनाभिजनैर्मत्तुल्यो नास्तीत्याह **आढ्य इति** । तथापि यागदानाभ्यां तत्फलेन वा कश्चिदधिको भविष्यतीत्याशङ्क्याह[1] **किं चेति** । न च तेषामेषोऽभिप्रायः साधीयानित्याह **इत्येवमिति** ॥ १५ ॥

प० टी० । किं च **आढ्य इति** । आढ्यो धनसमृद्धः, अभिजनवान् कुलीनः, मया **सदृशः** कोऽस्ति कोऽपि नास्तीत्यर्थः । अथासामर्थ्येऽपि व्यर्थमनोरथानाह **यक्ष्ये इति** । यक्ष्ये यागं करिष्ये, दास्यामि तुलाभारादिदानं करिष्ये, एवं लोकोत्तरकरणेन मोदिष्ये हर्षं प्राप्स्यामीत्यज्ञानेन विमोहिता मिथ्याभिनिवेशं प्रापिताः ॥ १५ ॥

---
१ नेत्याहेति लि. पा. ।

**अनेकचित्तविभ्रान्ता मोहजालसमावृताः ॥**
**प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥**

अनेकेति । अनेकचित्तविभ्रान्ता उक्तप्रकारैरनेकैश्चित्तैर्विविधं भ्रान्ता अनेकचित्तविभ्रान्ता मोहजालसमावृता मोहोऽविवेकोऽज्ञानं तदव जालमिवावरणात्मकत्वात्तेन समावृताः प्रसक्ताः कामभोगेषु तत्रैव निषण्णाः सन्तस्तेनोपचितकल्मषाः पतन्ति नरकेऽशुचौ वैतरण्यादौ ॥ १६ ॥

**आ० टी०** । उक्तप्रकारविपर्ययेण कृत्याकृत्यविवेकविकलानां किं स्यादित्यपेक्षायामाह **अनेकेति** । कामा विषयास्तेषां भोगेषु तत्प्रयुक्तेषूपभोगेष्विति यावत् ॥ १६ ॥

**प० टी०** । किं च **अनेकेति** । अनेकेषु व्यर्थमनोरथेषु प्रवृत्तं चित्तमनेकचित्तं तेन विशेषतो भ्रान्तास्तेषामुद्धारः कदापि नास्तीत्याह **मोहजालसमावृता इति** । यथा सूत्रमयजालान्तःप्रविष्टानां मत्स्यानामनिर्गमस्तथा मोहजालसमावृतानां कामभोगेषु प्रकर्षेण सक्ता अशुचौ कल्मषरूपे नरके पतन्ति । अत्रैतदुक्तं भवति—"तुल्या व्यवहृतिः सर्वा स्वप्नजागृदवस्थयोः । एकस्यावसरेऽन्यस्य यन्मिथ्यात्वं प्रतीयते" इति वैतथ्योपनिषदुक्तम् । श्रुतिभिः स्वाप्नव्यवहारदृष्टान्तेन जागृद्व्यवहारस्यापि मिथ्यात्वं दर्शितमासीदिदानीं तस्य स्वरूपेणैव मिथ्यात्वं मनोरथरूपत्वेन भगवता विस्तरेण प्रकटीकृतम् । तत्र मनोरथो द्वेधा संभावितोऽसंभावितश्च, तत्र दैनंदिनान्नपानादिविषयभोगमनोरथः संभावितः सोऽपि दैवाधीनत्वात्साक्षिकः । असंभावितस्तु राज्यप्राप्त्यादिसकलभोगैर्मनोरञ्जनम् । एवमस्य मिथ्याभूतत्वं जानन्तोऽपि मनोरथपरंपरामातन्वन्ति तेषामुद्धारः कदापि नास्तीत्यर्थः । तदुक्तं टिप्पणिकासु—'स्वाप्नं सुखं दुःखमसत्यमेव तथापि तस्यानुभवस्तदानीम् । तथैव शुक्तौ रजतस्य मिथ्या मनोरथोत्थं तु विना न भूतिम् ॥ १ ॥ सर्वतस्तनुभृतामखिलोऽपि स्यान्मनोरथमयो व्यवहारः। युक्तितस्त्वनुभवादनुवेलं तन्मृषात्वमुदितं मुनिवर्यैः ॥ २ ॥' इति । तदुक्तं विष्णुपुराणे सौभर्याख्याने—'मनोरथानां न समाप्तिरस्ति वर्षायुतैरप्यथवापि लक्षैः । पूर्णेषु पूर्णेषु पुनर्नवानामुत्पत्तयः सन्ति मनोरथानाम् ॥ १ ॥ पद्भ्याङ्गता यौवनतश्च जाता दारैश्च संयोगमिताः प्रसूताः । दृष्टाः सुतास्तत्तनयप्रसूतिं द्रष्टुं पुनर्वाञ्छति मेऽन्तरात्मा ॥२॥ यज्जीवतो नैव मनोरथानामन्तोऽस्ति विज्ञातमिदं मयाद्य । 'मनोरथासक्तिपरस्य चित्तं न जायते वै परमार्थसंगति ॥ ३ ॥ इति' ॥१६॥

**आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ॥**
**यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥**

आत्मेति । आत्मसंभाविताः सर्वगुणविशिष्टतयात्मनैवात्मनि संभाविता आत्मसंभाविता न साधुभिः, स्तब्धा अप्रणतात्मानो धनमानमदान्विता धननिमित्तो मानो मदश्च ताभ्यां धनमानमदाभ्यामन्विता यजन्ते नामयज्ञैर्नाममात्रैर्यज्ञैस्तैर्दम्भेन धर्मध्वजितयाविधिपूर्वकं विहिताङ्गेतिकर्तव्यतारहितैः॥१७॥

**आ० टी०** । ननु तेषामपि केषांचिद्वैदिके कर्मणि यागदानादौ प्रवृत्तिप्रतिपत्तेरयुक्तं वैतर-

ण्यादौ पतनमिति चेत्तत्राह आत्मेति । आसुरीसंपदमभिजातैरधर्मजातमेव संचीयते प्रवृत्तेरपि वैदिके कर्माणि नैव पुण्यमित्युक्तम् ॥ १७ ॥

प० टी० । आत्मेति । आत्मना स्वेनैव संभाविताः पूज्यतां नीता नान्यैः कैश्चित् । तावतैव स्तब्धा अनम्रा धनमानाभ्यां मदो गर्वस्तेनान्विताः सन्तो दम्भेन यज्ञैर्यजन्ते न परमार्थबुद्ध्या । तथापि यज्ञफलं प्राप्स्यन्त्येवेति चेत्तत्राह अविधिपूर्वकमिति । द्रव्यपात्राद्यशुद्धिरविधिस्तत्पूर्वकं कर्म फलाय न भवतीत्यर्थः ॥ १७ ॥

**अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ॥**
**मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥**

अहमिति । अहंकारमहंकरणमहंकारो विद्यमानैरविद्यमानैश्च गुणैरात्मन्यध्यारोपितैर्विशिष्टमात्मानमहमिति मन्यते सोऽहंकारोऽविद्याख्यः कष्टतमः सर्वदोषाणां मूलं तं परिगृह्य तथा बलं पराभिभवनिमित्तं कामरागान्वितं दर्पं दर्पो नाम यस्योद्भवे धर्ममतिक्रामतीति सोऽयमन्तःकरणाश्रयो दोषविशेषः कामं स्त्र्यादिविषयं क्रोधमनिष्टविषयमेतानन्यांश्च महतो दोषान् संश्रिताः । किं च ते मामीश्वरमात्मपरदेहेषु स्वदेहे च तद्बुद्धिकर्मसाक्षिभूतं मां प्रद्विषन्तो मच्छासनातिवर्तित्वं प्रद्वेषस्तं कुर्वन्तोऽभ्यसूयकाः सन्मार्गस्थानां गुणेष्वसहमानाः ॥ १८ ॥

आ० टी० । ब्रह्मज्ञानात् पुनरसुरा दूरादेवोद्विजन्त इत्याह अहंकारमिति । अहंकारमेव स्फोरयति विद्यमानैरिति । अध्यारोपितवैशिष्ट्यविषयत्वादहङ्कारस्याविद्यामूलत्वेनाविद्यात्मत्वमाह अविद्याख्य इति । विवेकिभिस्तस्यातियत्नादेव हेयत्वं सूचयति कष्टतम इति । तदेव स्पष्टयति सर्वेति । तत्संश्रिता इति संबन्धः । कार्यकारणसामर्थ्यमुक्तविशेषणं बलमहङ्कार एव महदवधीरणापर्यन्तत्वेन परिणतो दर्पस्तं व्याकरोति दर्पो नामेत्यादिना । अन्यांश्च दोषान्मात्सर्यादीन्न केवलमुक्तमेव तेषां विशेषणं किं तु कष्टतममस्ति विशेषणान्तरमित्याह किं चेति । यद्यपीश्वरं प्रति द्वेषस्तेषां संभाव्यते तथापि कथं स्वदेहे परदेहेषु च तं प्रति द्वेषः न हि तत्र भोक्तारमन्तरेणेश्वरस्यावस्थानमित्याशङ्क्याह तद्बुद्धीति । तेषामीश्वरं प्रति द्वेषमेव प्रकटयति मच्छासनेति । ईश्वरस्य शासनं श्रुतिस्मृतिरूपं तदन्तवर्तित्वं तदुक्तार्थज्ञानानुष्ठानपराङ्मुखत्वम् ॥ १८ ॥

प० टी० । तदेव प्रपञ्चयति अहंकारमिति । अहङ्कारादीन् संश्रिता आत्मपरदेहेषु चिदंशत्वेनावस्थितं मां द्विषन्तोऽविधिपूर्वकं यजन्तो मृषैव स्वदेहं क्लेशयन्ति । पश्वादिहिंसायां च परदेहमतएवोभयत्र मामेव द्विषन्तोऽभ्यसूयकाः सन्मार्गवर्तिनां गुणदोषारोपकाः ॥ १८ ॥

**तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ॥**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥**

---

१ वर्त्मनि लि० पा० । २ क्षोदीयस्यापि वित्तादौ प्राप्ते ह्यधर्मो हृष्यति हृष्टो दृप्यति दृप्तो हि धर्ममतिक्रामतीति श्रुतेरिति क्व त्वाक्लि० पा० ।

तानहमिति । तानहं सर्वान् सन्मार्गप्रतिपक्षभूतान् साधुद्वेषिणो द्विषतश्च मां क्रूरान् संसारेष्वेव नरकसंसरणमार्गेषु नराधमान् अधर्मदोषवत्त्वात् क्षिपामि प्रक्षिपाम्यजस्रं संततमशुभानशुभकारिण आसुरीष्वेव क्रूरकर्मप्रायासु व्याघ्रसिंहादियोनिषु क्षिपामीत्यनेन संबन्धः ॥ १९ ॥

आ० टी० । तेषामुक्तविशेषणवतामासुराणां किं स्यादिति तदाह **तानिति** । भगवतो नैर्घृण्यप्रसङ्गं प्रत्यादिशति **अधर्मेति** ॥ १९ ॥

प० टी० । तेषां कदाचिदप्यासुरयोनिप्रच्युतिर्न भवतीत्याह **तानिति द्वाभ्याम्** । तान् मां द्विषतः क्रूरान् नराधमान् मनुष्ययोनिष्वप्यधमान् संसारेषु जन्ममृत्युमार्गेषु तत्राप्यासुरीषु योनिषु व्याघ्रसर्पवृश्चिकादिहिंस्रयोनिष्वजस्रं निरन्तरं क्षिपामि ॥ १९ ॥

**आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥**
**मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥**

आसुरीमिति । आसुरीं योनिमापन्नाः प्रतिपन्ना मूढा जन्मनि जन्मन्यविवेकिनः प्रतिजन्म तमोबहुलास्वेव योनिषु जायमाना अधो गच्छन्ति ते मूढा मामीश्वरमप्राप्यानासाद्यैव हे कौन्तेय ततस्तस्मादपि यान्त्यधमां निकृष्टतमां गतिं मामप्राप्यैवेति न मत्प्राप्तौ काचिदप्याशङ्कास्त्यतो मच्छिष्टसाधुमार्गप्राप्तिमप्राप्येत्यर्थः ॥ २० ॥

आ० टी० । ननु तेषामपि क्रमेण बहूनां जन्मनामन्ते श्रेयो भविष्यति नेत्याह **आसुरीमिति** । तेषामीश्वराप्राप्तिशङ्काभावे कथं तन्निषेधः स्यादित्याशङ्क्याह **मामित्यादिना** । यस्मादासुरी संपदनर्थपरंपरया सर्वपुरुषार्थपरिपन्थिनी तस्माद् यावत् पुरुषः स्वतन्त्रो न कांचित् पारवश्यकरीं योनिमापन्नस्तावदेव तेनासौ परिहरणीयेति समुदायार्थः ॥ २० ॥

प० टी० । अथासुरयोनिसंस्कारवशान्नीचनीचतरयोनिषूत्पद्यन्ते इत्याह **आसुरीमिति** । आसुरीं योनिमापन्नाः प्राप्ता जन्मजन्मनि मूढा ज्ञानलवशून्या भवन्ति । अतो मामप्राप्याधमां गतिं यान्ति । श्रुतिरपीशावास्योपनिषत्सु—"आसुर्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः" इति । भाष्यम्—ये लोका आसुर्या नाम असुराणामंशभूता आसुर्यास्ते अन्धेन तमसा निबिडतराज्ञानेन वृता आच्छन्नाः सन्ति । अथ ते के ये आत्महन आत्मघातकाः पश्वादिहिंसारतास्ते प्रेत्य देहं त्यक्त्वा तान् पूर्वोक्तान् लोकानभिगच्छन्ति यतः पुनर्निस्तारो नास्तीत्यर्थः ॥ २० ॥

**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ॥**
**कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥**

सर्वस्या आसुर्याः संपदः संक्षेपोऽयमुच्यते, यस्मिंस्त्रिविधे सर्व आसु-

रीसंपद्भेदोऽनन्तोऽप्यन्तर्भवति यत्परिहारेण परिहृतश्च भवति यन्मूलं सर्वस्यानर्थस्य तदेतदुच्यते त्रिविधमिति । त्रिविधं नरकद्वारं त्रिप्रकारं नरकस्य प्राप्तिद्वारं नाशनमात्मनो यद्द्वारं प्रविशन्नेव नश्यत्यात्मा कस्मै चित् पुरुषार्थाय योग्यो न भवतीत्येतदुच्यते द्वारं नाशनमात्मन इति किं तत् कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेद् यत एतद् द्वारं नाशनमात्मनस्तस्मात् कामादित्रयमेतत् त्यजेत् त्यागस्तुतिरियम्[1] ॥ २१ ॥

आ० टी० । कथमासुरी संपदनन्तभेदवती पुरुषायुषेणापि परिहर्तुं शक्येतेत्याशङ्क्याह **सर्वस्येति** । संक्षेपोक्तिफलमाह **यस्मिन्निति** । कामादौ त्रिविधे सर्वस्यासुरसंपद्भेदस्यान्तर्भावेऽपि कथमसौ परिह्रियते तत्राह **यत् परिहारेणेति** । कामादिपरिहारेणासुरीसंपद्भेदपरिहारेऽपि कथं सर्वानर्थपरिवर्जनमित्याशङ्क्याह **यन्मूलमिति** । कथमात्मनो नित्यस्य नाशशङ्केति तत्राह **कस्मै चिदिति** । त्रिविधमपि सामान्यतो दर्शितमाकाङ्क्षाद्वारा विशेषतो दर्शयति **किं तदिति** । तस्मादिति व्याचष्टे **यदिति** । कामादित्यागे सत्यनर्थाचरणश्रेयःप्रतिबन्धनिवृत्ती स्यातामिति भावः ॥ २१ ॥

प० टी० । अथोक्तानामसुरदोषाणां मध्ये सकलदोषमूलभूतं दोषत्रयं सर्वथा वर्जनीयमित्याह **त्रिविधमिति** । इदं प्रोच्यमानं नरकस्य निरयप्राप्तेर्द्वारं त्रिविधमस्ति । तत्किम् । कामः क्रोधस्तथा लोभः । तत्र कामनया विषयीक्रियतेऽसौ कामोभिलाषःतस्य प्रयत्नादप्राप्तौ क्रोध प्राप्तौ च प्राणादप्यधिकयत्नेन संरक्षणं लोभः, एतत्त्रयम् । किंभूतमात्मनो नाशनमधमयोनिप्रापकं तस्मात्सर्वप्रयत्नेनैतत्त्रयं त्यजेत् ॥ २१ ॥

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ॥
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥

एतैरिति । एतैर्विमुक्तः कौन्तेय तमोद्वारैस्तमसो नरकस्य दुःखमोहात्मकस्य द्वाराणि कामादयस्तैरेतैस्त्रिभिर्विमुक्तो नर आचरत्यनुतिष्ठति किमात्मनः श्रेयो यत्प्रतिबद्धः पूर्वं नाचरति तदपगमादाचरति ततस्तदाचरणतया[2] याति परां गतिं मोक्षं प्रतीति ॥ २२ ॥

आ० टी० । न केवलं श्रेयः समाचरन्नासुरीं च संपदं वर्जयन्मोक्षमेव सम्यग्धीद्वारा लभते किंतु लौकिकमपि सुखमित्यपेरर्थः ॥ २२ ॥

प० टी० । त्यागे च विशिष्टफलमाह **एतैरिति** । तमसो नरकस्य द्वारभूतैरेतैस्त्रिभिः कामादिभिर्मुक्तो नर आत्मनः श्रेयःसाधनं तपोयोगाद्याचरति । ततः परां शान्तिं याति ॥ २२ ॥

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ॥
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥

---

1 त्यागस्तुतिरियमित्यधिकं लि० पु० । 2 तदाचरणादिति पा० लि० ।

सर्वस्यैतस्यासुरीसंपत्परिवर्जनस्य श्रेयआचरणस्य शास्त्रं कारणं शास्त्रप्रमाणादुभयं शक्यं कर्तुं नान्यथातो यः शास्त्रेति । यः शास्त्रविधिं शास्त्रं वेदस्तस्य विधिं कर्तव्याकर्तव्यज्ञानकारणं विधिप्रतिषेधाख्यमुत्सृज्य त्यक्त्वा वर्तते कामकारतः कामप्रयुक्तः सन् न स सिद्धिं पुरुषार्थयोग्यतामाप्नोति । नाप्यस्मिँल्लोके सुखं नापि परां प्रकृष्टां गतिं स्वर्गं मोक्षं वा ॥ २३ ॥

आ० टी० । आसुर्याः संपदो वर्जने श्रेयसश्च करणे किं कारणं तदाह **सर्वस्येति** । तस्य कारणत्वं साधयति **शास्त्रेति** । उक्तमुपजीव्यानन्तरश्लोकं प्रवर्तयति **अत इति** । शिष्यतेऽनुशिष्यते बोध्यतेऽनेनापूर्वोऽर्थ इति शास्त्रं तच्च विधिनिषेधात्मकमित्युपेत्य व्याचष्टे **कर्तव्येति** । कामस्य करणं कामकारस्तस्माद्धेतोरित्युपेत्य कामाधीना शास्त्रविमुखस्य प्रवृत्तिरित्याह **कामेति**। कामाधीनप्रवृत्तेः सदा पुमार्थयोगस्य सर्वपुरुषार्थासिद्धिरित्याह **नापीति** ॥ २३ ॥

प० टी० । कामादित्यागश्च स्वधर्माचरणं विना न भवतीत्याह **य इति** । शास्त्रविधिं वेदधर्ममुत्सृज्य यः कामकारतः स्वेच्छाचरणेन वर्तते स सिद्धिं तत्त्वज्ञानं न प्राप्नोति । न सुखं तत्त्वज्ञानस्य फलरूपमात्मसुखं तत्फलरूपां परां गतिं मोक्षं न प्राप्नोति ॥ २३ ॥

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ॥**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥ १६ ॥

तस्मादिति । तस्माच्छास्त्रं प्रमाणं ज्ञानसाधनं ते तव कार्याकार्यव्यवस्थितौ कर्तव्याकर्तव्यव्यवस्थायामतो ज्ञात्वा बुद्ध्वा शास्त्रविधानोक्तं विधिर्विधानं शास्त्रमेव विधानं शास्त्रविधानं कुर्यान्न कुर्यादित्येवंलक्षणं तेनोक्तं स्वकर्म यत्तत् कर्तुमिहार्हसीहेति कर्माधिकारभूमिप्रदर्शनार्थमिति ॥ २४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य शंकरभगवतःपूज्यपादकृतौ गीताभाष्ये संपद्विभागो नाम षोडशोऽध्यायः ॥ १६ ॥

आ० टी० । शास्त्रादृते कर्मणो निष्फलत्वे फलितमाह **तस्मादिति** । कर्तव्याकर्तव्यौ धर्माधर्मौ तत्र शास्त्रस्य प्रमाणत्वेऽपि मम किं कर्तव्यमित्याशङ्क्याह **अत इति** । स्वकर्म क्षत्रियस्य युद्धादि, इतिशब्दोऽध्यायसमाप्त्यर्थः । तदनेनाध्यायेन प्राग्भवीयकर्मवासनानुसारेणाभिव्यज्यमानसात्त्विकादिप्रकृतित्रयविभागेन दैव्यासुरीति संपद्द्वयमादानहानाभ्यामुपदिश्य कामक्रोधलोभानपहाय पुरुषार्थिना शास्त्रश्रवणेन तदुक्तकारिणा भवितव्यमिति निर्धारितम् ॥ २४ ॥

इत्यानन्दगिरिकृतगीताभाष्यटीकायां षोडशाध्यायः ॥ १६ ॥

प० टी० । फलितमर्थमाह तस्मादिति । इदं कार्यमित्यस्यां व्यवस्थायां ते तव श्रुतिस्मृतिरूपं शासनाच्छास्त्रं प्रमाणं नान्यत् । अतः शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि तन्मूलकत्वात्सत्त्वशुद्धिपूर्वकं तत्त्वज्ञानं ते भविष्यतीत्यर्थः ॥ २४ ॥

अथाध्यायतात्पर्यम्—दैवी संपद्विमुक्त्यै शमदमसमताक्षान्तिवैराग्यरूपा कामक्रोधाभिमानानृतकपटमयी चासुरी बन्धहेतुः । उत्पत्तिर्दैवसंपद्यनुजनुरुदिता मामकानां जनानां त्वं मा भैषीः किरीटिन्निति मधुरिपुणा षोडशे प्रोक्तमासीत् ॥ १ ॥ इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायांपरमार्थप्रपायां दैवासुरसंपत्तिविवेको नाम षोडशोऽध्यायः ॥ १६ ॥

इति षोडशाध्यायः ॥ १६ ॥

---

# सप्तदशाध्यायः ।

## अर्जुन उवाच ।

**ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः ॥**
**तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥**

तस्माच्छास्त्रं प्रमाणं त इति भगवद्वाक्याल्लब्धप्रश्नबीजोऽर्जुन उवाच ये शास्त्रेति । ये केचिद् अविशेषिताः शास्त्रविधिं शास्त्रविधानं श्रुतिस्मृतिशास्त्रचोदनामुत्सृज्य परित्यज्य यजन्ते देवादीन् पूजयन्ति श्रद्धयान्विताः श्रद्धयास्तिक्यबुद्ध्यान्विताः संयुक्ताः सन्तः श्रुतिलक्षणं स्मृतिलक्षणं वा कंचिच्छास्त्रविधिमपश्यन्तो वृद्धव्यवहारदर्शनादेव ये श्रद्दधानतया देवादीन् पूजयन्ति त इह शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विता इत्येवं गृह्यन्ते । ये पुनः कंचिच्छास्त्रविधिमुपलभमाना एव तमुत्सृज्य यथाविधि देवादीन् पूजयन्ति त इह 'ये शास्त्रविधिमुत्सृज्य यजन्ते' इति न परिगृह्यन्ते कस्माच्छ्रद्धयान्वितत्वविशेषणाद्देवादिपूजाविधिपरं किंचिच्छास्त्रं पश्यन्त एव तदुत्सृज्याश्रद्दधानतया तद्विहितायां देवादिपूजायां श्रद्धयान्विताः प्रवर्तन्त इति न शक्यं परिकल्पयितुं यस्मात्तस्मात् पूर्वोक्ता एव 'ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः' इत्यत्र गृह्यन्ते येषामेवंभूतानां निष्ठा त्ववस्थानं का कृष्ण सत्त्वमाहो रजस्तमः किं सत्त्वनिष्ठावस्थानमाहो स्विद् रजोऽथ वा तम इति ॥ १ ॥

आ०टी० । आस्तिकानां नास्तिकानां च शास्त्रैकचक्षुषां गतिरुक्ता संप्रत्यास्तिकानामेव शास्त्रानभिज्ञानां गतिजिज्ञासया पृच्छतीत्याह तस्मादिति । यजन्त इति यागग्रहणं दानादेरुपलक्षणम् । यदि वेदोक्तं विधिमपश्यन्तस्तमुत्सृजन्ति कथं तर्हि श्रद्दधाना यागादि कुर्वन्ति न हि मानं विना श्रद्धया

यागादि कर्तुं शक्यमित्याशङ्क्याह श्रुतीति । ननु शास्त्रीयं विधिं पश्यन्तोऽपि केचित्तमुपेक्ष्य स्वो-त्प्रेक्षया यागादि कुर्वन्तो दृश्यन्त तेषामिह 'ये शास्त्रविधिमुत्सृज्य' इति ग्रहो भविष्यति नेत्याह **ये पुनरिति** । तेषामत्रापरिग्रहे प्रश्नपूर्वकं हेतुमाह **कस्मादिति** । शास्त्रज्ञानं तदुपेक्षावतां ग्रहेऽपि विशेषणमविरुद्धमित्याशङ्क्य व्याघातान्मैवमित्याह **देवादीति** । अश्रद्दधानतया तदुत्सृज्येति संबन्धः । शास्त्रोक्तं विधिमधिगच्छतामपि तमवधीर्य स्वेच्छया देवपूजादौ प्रवृत्तानामासुरेष्वेवान्तर्भावो यस्मादनन्तराध्याये सिद्धस्तस्मादास्तिकाधिकारे तेषां प्रसङ्गो नास्तीत्युपसंहरति **यस्मादिति** । पूर्वोक्ताः शास्त्रानभिज्ञा वृद्धव्यवहारानुसारिण इति यावत् । तैः श्रद्धया क्रियमाणं कर्म कुत्र पर्यवस्यतीति पृच्छति **तेषामिति** । का निष्ठेत्यतद्विवृणोति **सत्त्वमिति** ॥ १ ॥

प० टी० । पूर्वाध्यायान्ते 'यः शास्त्रविधिमुत्सृज्य' इत्यादिना शास्त्रविधिमुल्लङ्घ्य प्रवृत्तस्य सिद्धिर्नास्तीत्युक्तं तदेव पृच्छन्नर्जुन आह **ये शास्त्रविधिमिति** । ये शास्त्रविधिं विधिनिषेधात्मकमुल्लङ्घ्य दुःखबुद्ध्यालस्याद्वानादृत्य केवलं लौकिकाचारपरंपरया श्रद्धां विना यजन्ते तेषां का निष्ठा क आश्रयः सत्त्वमाहो स्विद्रजस्तमो वा । 'यजन्ते सात्त्विका देवान्' इत्यादिवत् फलोपधानं नैव वेति प्रश्नार्थः ॥ १ ॥

## श्रीभगवानुवाच ।

## त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ॥
## सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥

एतदुक्तं भवति या तेषां देवादिविषया पूजा सा किं सात्त्विक्याहो स्विद्राजस्युत तामसीति सामान्यविषयोऽयं प्रश्नो नाप्रविभज्य प्रतिवचनमर्हतीति त्रिविधेति श्रीभगवानुवाच । त्रिविधा त्रिप्रकारा भवति श्रद्धा यस्यां निष्ठायां त्वं पृच्छसि देहिनां सा स्वभावजा जन्मान्तरकृतो धर्मादिसंस्कारो मरणकालेऽभिव्यक्तः स्वभाव उच्यते ततो जाता स्वभावजा सात्त्विकी सत्त्वनिर्वृत्ता देवपूजादिविषया, राजसी रजोनिर्वृत्ता यक्षरक्षःपूजादिविषया, तामसी तमोनिर्वृत्ता प्रेतपिशाचादिपूजाविषयैवं त्रिविधा तामुच्यमानां श्रद्धां शृणु ॥ २ ॥

आ० टी० । कार्याणां कारणैर्व्यपदेशमाश्रित्य तात्पर्यमाह **एतदिति** । विशेषनिष्ठमुत्तरं सामान्येन वक्तुं न शक्यमित्याशयेन परिहरति **सामान्येति** । किमिति श्रद्धात्रैविध्यं प्रश्नानुपयुक्तमुच्यते तत्राह **यस्यामिति** । श्रद्धापूर्विकायां क्रियायामिति यावत् । श्रद्धात्रैविध्ये हेतुमाह **सा स्वभावजेति** । स्वभावशब्दार्थे प्रकृतोपयोगितया कथयति **जन्मान्तरेति** । कथं त्रिविधेत्यपेक्षायामाह **सात्त्विकीत्यादिना** । कथमुक्ता श्रद्धा स्वभावजेति तत्राह **तामिति** ॥ २ ॥

प० टी० । ननु शास्त्रविधेरुल्लङ्घनं शास्त्रार्थमबुद्ध्वा बुद्ध्वा वा, नाद्यो यजनासंभवान्नापरः श्रद्धानुत्पत्तेरास्तिक्यबुद्धिर्हि श्रद्धा न चासौ शास्त्रज्ञानवतां शास्त्रविरुद्धे संभवतीति पर्यालोच्य भगवानाह **त्रिविधेति** । देहिनां मनुष्याणां स्वभावजा श्रद्धा त्रिविधा भवति । प्राचीनसंस्कारः स्वभावस्तस्माज्जाता स्वभावजा । स्वभावमन्यथाकर्तुं समर्थं शास्त्रार्थज्ञानं तत्तु तेषां नास्त्यतः केवलं सत्त्वरजस्तमःप्रधानप्राचीनसंस्कारेण श्रद्धा त्रिविधा तां शृणु ॥ २ ॥

**सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ॥**
**श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥**

सैवं त्रिविधा भवति सत्त्वेति। सत्त्वानुरूपा विशिष्टसंस्कारोपेतान्तःकरणानुरूपा सर्वस्य प्राणिजातस्य श्रद्धा भवति भारत। यद्येवं ततः किं स्यादित्युच्यते श्रद्धामयः श्रद्धाप्रायस्त्वयं पुरुषः संसारी जीवः कथं यो यच्छ्रद्धो या श्रद्धा यस्य जीवस्य स यच्छ्रद्धः स एव तच्छ्रद्धानुरूप एव स जीवः ॥३॥

आ० टी० । प्राचीनकर्मोद्बोधिता त्रिविधा वासना स्वभावशब्दिता त्रिविधायाः श्रद्धाया निमित्तमित्युक्तमिदानीमुपादानं तस्या दर्शयति सत्त्वमिति। विशिष्टचित्तोपादाना श्रद्धा। तत्रैविध्यं त्रिविधेति पूर्वार्धस्यार्थः । कथं निष्ठायां सात्त्विकादिप्रश्नद्वारा श्रद्धायास्त्रैविध्यनिरूपणमुपयुक्तमिति मन्वानः शङ्कते यद्येवमिति । श्रद्धेयं विषयमभिध्यायंस्तया तत्रैव वर्तत इति मन्वानः परिहरति उच्यत इति। श्रद्धामयत्वं प्रश्नपूर्वकं कथयति कथमिति। श्रद्धा खल्वधिकृते पुरुषे प्राचुर्येण प्रकृतेऽपि तस्य श्रद्धामयत्वसिद्धिरित्यर्थः ॥ ३ ॥

प० टी० । तामेवाह सत्त्वानुरूपेति। सर्वस्य प्राणिनः श्रद्धा सत्त्वानुरूपा विशिष्टसंस्कारोपस्कृतान्तःकरणानुरूपा वक्तव्या यत आस्तिक्यबुद्धिः सत्त्वमन्तरेण नोत्पद्यते। तथा सति गुणप्राधान्यवशात्त्रिविधा भवति। एवमयं पुरुषः संसारी श्रद्धामयस्त्रिविधया श्रद्धया विविक्त इति। तदाह यो यच्छ्रद्धः यादृशी श्रद्धा यस्यासौ यच्छ्रद्धस्तादृश्या श्रद्धया युक्तः स एव सः ॥ ३ ॥

**यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ॥**
**प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥**

ततश्च कार्येण लिङ्गेन देवादिपूजया सत्त्वादिनिष्ठानुमेयेत्याह यजन्त इति। यजन्ते पूजयन्ति सात्त्विकाः सत्त्वनिष्ठा देवान्, यक्षरक्षांसि राजसाः, प्रेतान् भूतगणांश्च सप्तमातृकादींश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥

आ० टी० । तथापि कथं सत्त्वादिनिष्ठा यथोक्तस्य पुरुषस्य ज्ञातुं शक्येत्याशङ्क्याह ततश्चेति । अधिकृतस्य पुरुषस्य श्रद्धाप्रधानत्वादिति यावत्, देवा वस्वादयो, यक्षाः कुबेरादयो, रक्षांसि नैर्ऋतादयः, स्वधर्मात् प्रच्युता विप्रादयो देहपातादूर्ध्वं वायुदेहमापन्नाः प्रेता एभ्यश्च यथायथमाराध्यदेवादयः सात्त्विकराजसतामसान् प्रकामान् प्रयच्छन्तीति सामर्थ्यादवगन्तव्यम् ॥ ४ ॥

प० टी० । यजन्ते सात्त्विका देवानिति स्पष्टम् ॥ ४ ॥

**अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ॥**
**दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥**

एवं कार्यतो निर्णीताः सत्त्वादिनिष्ठाः शास्त्रविध्युत्सर्गे तत्र कश्चिदेव सहस्रेषु पूजादितत्परः सत्त्वनिष्ठो भवति बाहुल्येन तु रजोनिष्ठास्तमोनिष्ठाश्चैव प्राणिनो भवन्ति, कथमशास्त्रेति । अशास्त्रविहितं न शास्त्रविहितमशास्त्रविहितं घोरं पीडाकरं प्राणिनामात्मनश्च तपस्तप्यन्ते निर्वर्तयन्ति ये तपो जनास्ते च दम्भाहङ्कारसंयुक्ता दम्भश्चाहङ्कारश्च दम्भाहङ्कारौ ताभ्यां संयुक्ता दम्भाहङ्कारसंयुक्ताः कामश्च रागश्च कामरागौ तत्कृतं बलं कामरागबलं तेनान्विताः कामरागबलैर्वान्विताः ॥ ५ ॥

आ० टी० । ननु सत्त्वादिनिष्ठाः शास्त्रेण ज्ञातुं शक्यन्ते कुतः कार्यलिङ्गकानुमानेनेति तत्राह **एवमिति** । सत्त्वादिनिष्ठानां जन्तूनामवान्तरविशेषं प्रचुरत्वाप्रचुरत्वरूपं दर्शयति **तत्रेत्यादिना** । राजसानां च तामसानां च प्राचुर्यं प्रश्नद्वारा विवृणोति कथमित्यादिना । कामश्च काम्यमानविषयो, रागश्च तद्विषयभोगाभिलाषस्तत्कृतं तन्निमित्तमिति यावत् ॥ ५ ॥

प० टी० । अथाविहितं कर्म दर्शयति **अशास्त्रविहितमिति द्वाभ्याम्** । शास्त्रेणाविहितमननुज्ञातं घोरं भयावहं श्मशाने नग्नत्वेनानुष्ठीयमानं घोरसाधनादि ये जनास्तपस्तप्यन्तेऽनुतिष्ठन्ति । दम्भो धर्मध्वजित्वम्, अहंकारो गर्वस्ताभ्यां संयुक्ताः कामोऽभिलाषो राग आसक्तिर्बलमाग्रहस्तैरन्वितास्तानासुरनिश्चयान्विद्धीत्युत्तरेणान्वयः ॥ ५ ॥

**कर्षयन्तः शरीरस्थं भूतग्राममचेतसः ॥**
**मां चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान् ॥ ६ ॥**

कर्षयन्त इति । कर्षयन्तः कृशीकुर्वन्तः शरीरस्थं भूतग्रामं करणसमुदायमचेतसोऽविवेकिनो मां चैव तत्कर्मबुद्धिसाक्षिभूतमन्तःशरीरस्थं कर्षयन्तो मदनुशासनाकरणमेव मत्कर्षनं तान्विद्ध्यासुरनिश्चयान् आसुरो निश्चयो येषां त आसुरनिश्चयास्तान् परिहरणार्थं विद्धीत्युपदेशः ॥ ६ ॥

आ० टी० । रजोनिष्ठान् प्राधान्येन प्रदर्श्य तमोनिष्ठान् प्राधान्येन दर्शयति **कर्षयन्त इति** । कथं शरीरादिसाक्षिणमीश्वरं प्रति कृशीकरणं प्राणिनां प्रकल्प्यते तत्राह **मदनुशासनेति** । तेषां विपर्यासनिश्चयवतां परिज्ञानं कुत्रोपयुज्यते तत्राह **परिहरणार्थमिति** ॥ ६ ॥

प० टी० । तदुदाहरति **कर्षयन्त इति** । । शरीरस्थं शरीरान्तर्गतं भूम्यादिभूतग्रामं प्राणाचारोपवासादिभिः कर्षयन्तः कृशं कुर्वन्तः । चपरं मामन्तर्यामित्वेन स्थितं दुःखसाक्षिणं कुर्वन्तोऽत एवाचेतसो दैवप्राप्यमित्यजानन्तस्तानासुरनिश्चयानासुरोऽतिक्रूरो निश्चयो येषां ते तथाविधान् विद्धि ॥ ६ ॥

**आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ॥**
**यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥**

आहाराणां च रस्यस्निग्धादिवर्गत्रयरूपेण भिन्नानां यथाक्रमं सात्त्विकराजसतामसपुरुषप्रियत्वदर्शनमिह क्रियते यतो रस्यस्निग्धादिष्वाहारविशेषेष्वात्मनः प्रीत्यतिरेकेण लिङ्गेन सात्त्विकत्वं राजसत्वं तामसत्वं च बुद्ध्वा रजस्तमोलिङ्गानामाहाराणां परिवर्जनार्थं सत्त्वलिङ्गानां चोपादानार्थं तथा यज्ञादीनामपि सत्त्वादिगुणभेदेन त्रिविधत्वप्रतिपादनमिह राजसतामसान् बुद्ध्वा कथं नु नाम परित्यजेत् सात्त्विकानेवानुतिष्ठेदित्येवमर्थमाह आहारस्त्विति । आहारस्त्वपि सर्वस्य भोक्तुस्त्रिविधो भवति प्रिय इष्टस्तथा यज्ञस्तपस्तथा दानं तेषामाहारादीनां भेदमिमं वक्ष्यमाणं शृणु ॥ ७ ॥

आ० टी० । उत्तरश्लोकपूर्वार्धतात्पर्यमाह आहाराणामिति । रस्यादिवर्गस्य सात्त्विकपुरुषप्रियत्वं कट्वादिवर्गस्य राजसप्रियत्वं यातयामादिवर्गस्य तामसप्रियत्वमिति दर्शनं कुत्रोपयुज्यते तत्राह रस्येति । श्लोकोत्तरार्धतात्पर्यमाह तथेति । आहारत्रैविध्यवदिति यावत् । कथमेतेषां प्रत्येकं त्रैविध्यं तत्राह तेषामिति ॥ ७ ॥

प० टी० । अथ सात्त्विकादीनामाहारादिभेदमाह आहार इत्यादित्रयोदशभिः । सर्वस्यापि जनस्य य आहारोऽन्नादिः स तु यथायथं त्रिविधः प्रियो भवति । तथा यज्ञतपोदानानि च त्रिविधानि भवन्ति । तेषां वक्ष्यमाणमिमं भेदं त्रिविधं शृणु ॥ ७ ॥

**आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ॥**
**रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः॥८॥**

आयुरिति । आयुश्च सत्त्वं च बलं चारोग्यं च सुखं च प्रीतिश्च तासां विवर्धना आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनास्ते च रस्या रसोपेताः स्निग्धाः स्नेहवन्तः स्थिराश्चिरकालस्थायिनो देहे, हृद्या हृदयप्रिया आहाराः सात्त्विकस्येष्टाः ॥ ८ ॥

आ० टी० । सात्त्विकप्रीतिविषयमाहारविशेषमुदाहरति आयुरिति । आयुर्जीवनं, सत्त्वं चित्तस्थैर्यं, वीर्यं वा बलं कार्यकारणसामर्थ्यम्, आरोग्यं नीरोगता, सुखमन्तराह्लादः, प्रीतिः परेषामपि संपन्नानां दर्शनात् परमो हर्षस्तासां विवर्धनाः विवर्धयन्तीति व्युत्पत्तेरसोपेता रसयितव्याः सरसा देहे चिरकालस्थायित्वं चिरशरीरोपकारहेतुत्वम् ॥ ८ ॥

प० टी० । तच्च राजसतामसाहारपरित्यागेन सात्त्विकाहारयज्ञादिसेवया सत्त्ववृत्तौ यत्नः कर्तव्य इत्येतदर्थं निरूप्यते । तत्राहारत्रैविध्यमाह आयुरिति त्रिभिः । आयुर्जीवितम्, सत्त्वमुत्साहः, बलं शक्तिः आरोग्यं रोगराहित्यम्, सुखं चित्तप्रसादः, प्रीतिरभिरुचिः आयुरादीनां विवर्धना वृद्धिकरास्ते च रस्याः सुरसाः स्निग्धाः स्नेहयुक्ता न रूक्षा इत्यर्थः । देहे रसांशेन चिरकालावस्थायिनो हृद्या दृष्टमात्रा एव हृदयंगमा एवंभूता आहारा भक्ष्यभोज्यादयः सात्त्विकस्य प्रियाः ॥ ८ ॥

**कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ॥**
**आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥**

कट्विति । कटुरम्लो लवणोऽत्युष्णोऽतिशब्दः कट्वादिषु सर्वत्र योज्योऽतिकटुरतितीक्ष्ण इत्येवं कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिन एवंविधा आहारा राजसस्येष्टा दुःखशोकामयप्रदा दुःखं च शोकं चामयं च प्रयच्छन्तीति दुःखशोकामयप्रदाः ॥ ९ ॥

आ० टी० । राजसप्रीतिविषयमाहारविशेषं दर्शयति **कट्विति** । कटुस्तिक्तः कटुकस्य तीक्ष्णशब्देनोक्तत्वाद्, रूक्षो विस्नेहो, विदाही सन्तापकः। अतिशब्दस्य सर्वत्र योजनमेवाभिनयति **अतिकटुरिति** । दुःखं तात्कालिकी पीडा, इष्टवियोगजं दुःखं, शोकः, आमयो रोगः ॥ ९ ॥

प० टी० । **कट्वम्लेति** । तत्रातिशब्दः कट्वादिषु सप्तसु संबध्यते । अतिकटुर्निम्बादिः, अत्यम्लोऽम्लवेतसादिः, अतिलवणोऽत्युष्णश्च, प्रसिद्धः । अतितीक्ष्णो मरीचादिः, अतिरूक्षः कङ्गुकाद्रवादिः, अतिविदाही सर्षपादिरेवमेत आहारा राजसप्रियाः ॥ ९ ॥

**यातयामं गतरसं पूति पर्युषितं च यत् ॥**
**उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥**

यातयाममिति । यातयामं मन्दपक्कं निर्वीर्यस्य गतरसेनोक्तत्वाद् गतरसं रसवियुक्तं पूति दुर्गन्धि पर्युषितं च पक्कं सद् राञ्यन्तरितं च यद् उच्छिष्टमपि च भुक्तशिष्टमप्यमेध्यमयज्ञार्हं भोजनमीदृशं तामसप्रियम् ॥ १० ॥

आ० टी० । तामसप्रियमाहारमुदाहरति **यातयाममिति** । ननु निर्वीर्यं यातयाममुच्यते न पुनः सामिपक्कमिति नेत्याह **निर्वीर्यस्येति** ॥ १० ॥

प० टी० । **यातयाममिति** । यातो यामो प्रहरो यस्य पक्कौदनादि शैत्यावस्थां प्राप्तम्, गतरसं निष्पीडितरसं, पूति दुर्गन्धि, पर्युषितं पूर्वेद्युः पक्कम्, उच्छिष्टमन्यभुक्तावशेषम्, अमेध्यमभक्ष्यं कलञ्जादि । एवंभूतं भोजनं तामसस्य प्रियम् ॥ १० ॥

**अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ॥**
**यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥**

अथेदानीं यज्ञस्त्रिविध उच्यते अफलेति । अफलाकाङ्क्षिभिरफलार्थिभिर्यज्ञो विधिदृष्टः शास्त्रचोदनादृष्टो यो यज्ञ इज्यते निर्वर्त्यते यष्टव्यमेवेति यज्ञस्वरूपनिर्वर्तनमेव कार्यमिति मनः समाधाय नानेन पुरुषार्थो मम कर्तव्य इत्येवं निश्चित्य स सात्त्विको यज्ञ उच्यते ॥ ११ ॥

आ० टी० । हानादानार्थमाहारत्रैविध्यमेवं विभज्य क्रमप्राप्तं यज्ञत्रैविध्यं कथयति अथेति। तत्र सात्त्विकं यज्ञं ज्ञापयति अफलेति । फलाभिसन्धिं विना यज्ञस्वरूपमेव भाव्यमिति बुद्ध्वा शास्त्रतोऽनुष्ठीयमानो यज्ञः सात्त्विक इत्यर्थः ॥११॥

प० टी० । अथ यज्ञोऽपि त्रिविधस्तत्र सोपाधिकं यज्ञमाह अफलाकाङ्क्षिभिरिति त्रिभिः। 'कुर्वन्नेवेह कर्माणि' इत्यादिविधिना यष्टव्यमेवेति इष्टो यज्ञः फलाकाङ्क्षारहितैः पुरुषैर्मनः समाधाय शुद्धं कृत्वा य इज्यतेऽनुष्ठीयते स सात्त्विकः ॥ ११ ॥

**अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ॥**
**इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥**

अभिसंधायेति । अभिसंधायोद्दिश्य फलं दम्भार्थमपि चैव यदिज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसं रजोगुणनिर्वर्त्यं राजसं जानीहि ॥१२॥

आ० टी० । राजसं यज्ञं हानार्थं दर्शयतिअभिसन्धायेति । स्वर्गाद्युद्दिश्य धार्मिकत्वख्यापनार्थं च यद्यजनं क्रियते तं यज्ञं रजसा निर्वृत्तं त्याज्यमवगच्छेत्यर्थः ॥ १२ ॥

प० टी० राजसं यज्ञमाह अभिसंधायेति । फलमभिसंधायोद्दिश्य दम्भार्थं महत्त्वख्यापनार्थं य इज्यते तं राजसं यज्ञं विद्धि ॥ १२ ॥

**विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ॥**
**श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥**

विधिहीनमिति । विधिहीनं यथाचोदितविधिविपरीतम्, असृष्टान्नं ब्राह्मणेभ्यो न सृष्टं न दत्तमन्नं यस्मिन् यज्ञे सोऽसृष्टान्नस्तमसृष्टान्नं, मन्त्रहीनं मन्त्रतः स्वरतो वर्णतश्च वियुक्तं मन्त्रहीनम्, अदक्षिणमुक्तदक्षिणारहितं, श्रद्धाविरहितं यज्ञं तामसं परिचक्षते तमोनिर्वृत्तं कथयन्ति ॥ १३ ॥

आ० टी० । तामसं यज्ञं हानार्थमेवोदाहरति विधीति ॥ १३ ॥

प० टी० । तामसमाह विधिहीनमिति । विधिहीनं शास्त्रोक्तविधिशून्यम्, न सृष्टं निष्पादितं ब्राह्मणेभ्योऽन्नं यस्मिन् मन्त्रैः स्वशाखोक्तैर्हीनम् । यथावद्दक्षिणारहितं श्रद्धया चैवंविधं तामसं परिचक्षते ॥ १३ ॥

**देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ॥**
**ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥**

अथेदानीं तपस्त्रिविधमुच्यते देवेति । देवाश्च द्विजाश्च गुरवश्च प्राज्ञाश्च देवद्विजगुरुप्राज्ञास्तेषां पूजनं शौचमार्जवमृजुत्वं ब्रह्मचर्यमहिंसा च शरीर-

निर्वर्त्यं शारीरं शरीरप्रधानैः सर्वैरेव कार्यकरणैः कर्त्रादिभिः साध्यं शारीरं तप उच्यते पञ्चैते तस्य हेतव इति हि वक्ष्यति ॥ १४ ॥

आ० टी० । सात्त्विकादिभावं निरूपयितुं सर्वस्य तपसः स्वरूपं त्रिविधं निरूपयति अथेति । तत्र शारीरं तपो निर्दिशति देवेति । देवा ब्रह्मविष्णुशिवादयः, द्विजाः, पूज्यत्वाद् द्विजोत्तमा गुरवः पित्रादयः, प्राज्ञाः पण्डिता विदितवेदितव्यास्तेषां पूजनं प्रणामशुश्रूषादि, शौचं मृज्जलाभ्यां शरीरशोधनम्, आर्जवमृजुत्वं विहितप्रतिषिद्धयोरेकरूपप्रवृत्तिनिवृत्तिमत्त्वं, ब्रह्मचर्यं मैथुनासमाचरणम्, अहिंसा प्राणिनामपीडनम् । शरीरमात्रनिर्वर्त्यत्वमस्य तपसो संभवतीति मत्वा विशिनष्टि शरीरेति । कथं कर्त्रादिसाध्यत्वे तपसः शारीरत्वं शारीरत्वे वा कथं कर्त्रादिसाध्यत्वमित्याशङ्क्याह पञ्चेति ॥ १४ ॥

प० टी० । अथ कायवाङ्मनोविभागेन तपस्त्रैविध्यमाह देवद्विजेति । प्राज्ञो गुरुव्यतिरिक्तः अन्येऽपि तत्त्वविदो देवब्राह्मणादिपूजनशौचादिकं च शारीरं शरीरनिर्वर्त्यं तप उच्यते ॥१४॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ॥
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥

अनुद्वेगेति । अनुद्वेगकरं प्राणिनामदुःखकरं वाक्यं सत्यं प्रियं हितं च यत् प्रियहिते दृष्टादृष्टार्थे अनुद्वेगकरत्वादिभिर्धर्मैर्वाक्यं विशिष्यते । विशेषणधर्मसमुच्चयार्थश्चशब्दः । परप्रत्यायनार्थं प्रयुक्तस्य वाक्यस्य सत्यप्रियहितानुद्वेगकरत्वादीनामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनता स्याद्यदि न तस्य वाङ्मयं तपस्त्वं तथा सत्यवाक्यस्येतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनतायां न वाङ्मयतपस्त्वं तथा प्रियवाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्हीनस्य न वाङ्मयतपस्त्वं तथाहि न वाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा वियुक्तस्य न वाङ्मयतपस्त्वं किं पुनस्तत्तपो यत् सत्यं वाक्यमनुद्वेगकरं प्रियं हितं च यत् तत् परमं तपो वाङ्मयं यथा शान्तो भव वत्स स्वाध्यायं योगं वानुतिष्ठ तथा ते श्रेयो भविष्यति स्वाध्यायाभ्यसनं चैव यथाविधि वाङ्मयं तप उच्यते ॥ १५ ॥

आ० टी० । संप्रति वाङ्मयं तपो व्यपदिशति अनुद्वेगकरमिति । सत्यं यथादृष्टार्थवचनं, प्रियं श्रुतिसुखं, हितं परिणामपथ्यम् । प्रियहितयोर्विधान्तरेण विभागमाह प्रियेति । कथमत्र विशेषणविशेष्यत्वं तदाह अनुद्वेगेति । विशेषणानां धर्माणामनुद्वेगकरत्वादीनां विशेषणवाक्येन समुदितानां परस्परमपि समुच्चयद्योती चकार इत्याह विशेषणेति । किमिति वाक्यमेतैर्विशेष्यते किमिति वा तेषां मिथः समुच्चयस्तत्राह परेति । यद्यपि विधायकवाक्यमात्रस्याविशेषितस्य वाङ्मयतपस्त्वानुपपत्तिस्तथापि सत्यवाक्यस्य वाक्यविशेषणान्तराभावेऽपि वाङ्मयत्वमित्याशङ्क्याह तथेति । तथापि परिणामपथ्यं वाक्यमात्रं तथा भविष्यति नेत्याह तथा हितेति । कीदृक् तर्हि तयोर्वाङ्मय-

१ इतरेषामिति—हि० नास्ति ।

त्वमिति प्रश्नपूर्वकं विशदयति **किं पुनरिति** । विशिष्टे वाङ्मये तपसि दृष्टान्तमाह **यथेति** । प्राङ्मुखत्वं पवित्रपाणित्वमित्यादिविधानमनतिक्रम्य स्वाध्यायस्यावर्तनमपि वाङ्मये तपस्यन्तर्भवतीत्याह **स्वाध्यायेति** । वाक्प्राचुर्येण प्रस्तुतास्मिन्निति वाङ्मयं वाक्प्रधानमित्यर्थः ॥ १५ ॥

प० टी० । अथ वाङ्मयं तप आह **अनुद्वेगकरमिति** । परस्योद्वेगजनकं न भवति तथाविधं वाक्यं सत्यं यथार्थभाषणम् । तदपि दुःखपर्यवसायि न भवतीत्याह **प्रियमिति** । **प्रियं च** तद्धितं च । प्रियं सुश्राव्यं परिणामे हितं च । तथा च मनुः—'सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्' इति । स्वाध्यायाभ्यसनं स्वशाखाध्ययनाभ्यासः । एतद्वाङ्मयं तप उच्यते ॥१५॥

**मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ॥**
**भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥**

मन इति । मनःप्रसादो मनसः प्रशान्तिः स्वच्छतापादनं मनसः प्रसादः सौम्यत्वं यत् सौमनस्यमाहुर्मुखादिप्रसादकार्यान्तःकरणस्य वृत्तिः, मौनं वाक्संयमोऽपि मनः संयमपूर्वको भवतीति कार्येण कारणमुच्यते मनःसंयमो मौनमित्यात्मविनिग्रहो मनोनिरोधः सर्वतः सामान्यरूप आत्मविनिग्रहो वाग्विषयस्यैव मनसः संयमो मौनमिति विशेषः भावसंशुद्धिः परैर्व्यवहारकालेऽमायावित्वं भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥

आ० टी० ! मानसं तपः संक्षिपति **मन इति** । प्रशान्तिफलमेव व्यनक्ति **स्वच्छतेति** । मनसः स्वाच्छ्यमनाकुलता नैश्चिन्त्यमित्यर्थः । सौमनस्यं सर्वेभ्यो हितैषित्वमहिताचिन्तनं च । तत् कथं गम्यते तत्राह **मुखादीति** । तस्य स्वरूपमाह **अन्तःकरणस्येति** । ननु मौनं वाङ्नियमनं वाङ्मये तपस्यन्तर्भवति तत् कथं मानसे तपसि व्यपदिश्यते तत्र वाचः संयमस्य कार्यत्वान्मनःसंयमस्य कारणत्वात् कार्येण कारणग्रहणान्मानसे तपसि मौनमुक्तमित्याह **वागिति** । यद्वा मौनं मुनिभावो मननम् आत्मनो मनसो विनिग्रहो निरोधः । नन्वेवं मौनस्य मनोनिग्रहस्य च मनःसंयमत्वेनैकत्वात् पौनरुक्त्यं नेत्याह **सर्वत इति** । भावस्य हृदयस्य संशुद्धीरागादिमलविकलतेति व्याचष्टे **परैरिति** । मानसं मनसा प्रधानेन निर्वर्त्यमित्यर्थः ॥ १६ ॥

प० टी० अथ मानसं तप आह **मन इति** । मनःप्रसादो, मनसः स्वास्थ्यम् सौम्यत्वमक्रूरता । मौनं मुनेर्भावो मननमित्यर्थः । आत्मविनिग्रहो विषयेभ्यः प्रत्याहारः । भावसंशुद्धिर्व्यवहारे मायाराहित्यमेतन्मानसं तपः । श्रुतिरपि "तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन" इति । भाष्यम्—तमेतमात्मानं वेदानुवचनेनोपनिषद्विभागेन विविदिषन्ति वेदितुं ज्ञातुमिच्छन्ति । तथा ब्रह्मचर्येण शारीरेण तपसा श्रद्धयास्तिक्यबुद्ध्या । यज्ञेन सात्त्विकेन अत एवानाशकेन नश्वरफलाभिसंधिरहितेन ॥ १६ ॥

**श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ॥**
**अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥**

यथोक्तं कायिकं वाचिकं मानसं च तपस्तप्तं नरैः सत्त्वादिभेदेन कथं त्रिविधं भवतीत्युच्यते श्रद्धयास्तिक्यबुद्ध्या परया प्रकृष्टया तप्तमनुष्ठितं तपस्तत् प्रकृतं त्रिविधं त्रिप्रकारम् अधिष्ठानं नरैरनुष्ठातृभिरफलाकाङ्क्षिभिः फलाकाङ्क्षारहितैर्युक्तैः समाहितैर्यदीदृशं तपस्तत् सात्त्विकं सत्त्वनिर्वृत्तं परिचक्षते कथयन्ति शिष्टाः ॥ १७ ॥

आ० टी० । त्रिविधस्य तपसो यथासंभवं सात्त्विकादिभावेन त्रैविध्यमाकाङ्क्षाद्वारा निक्षिपति **यथोक्तमिति** । अधिष्ठानं देहवाङ्मनोनिर्वर्त्यमित्यर्थः । समाहितैः सिद्ध्यसिद्ध्योर्निर्विकारैरिति यावत् ॥ १७ ॥

प० टी० । अथ सात्त्विकादिभेदेन पुनस्त्रैविध्यमाह **श्रद्धयेति** । तत्त्रिविधं शरीरवाङ्मनोविभागेन कथितं तपोऽफलाकाङ्क्षिभिस्तथा युक्तैरेकाग्रान्तःकरणैर्नरैस्तप्तमनुष्ठितं तत्सात्त्विकं परिचक्षते ॥ १७ ॥

**सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ॥**
**क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥**

सत्कारेति । सत्कारः साधुकारः साधुरयं तपस्वी ब्राह्मण इत्येवमर्थं मानो माननं प्रत्युत्थानाभिवादनादिस्तदर्थं पूजा पादप्रक्षालनार्चनातिशयितृत्वादिस्तदर्थं च तपः सत्कारमानपूजार्थं दम्भेनैव च क्रियते तपस्तदिह प्रोक्तं कथितं राजसं चलं कादाचित्कफलत्वेनाध्रुवम् ॥ १८ ॥

आ० टी० । राजसं तपो निर्दिशति **सत्कारेति** । साधुकारमेवास्फोरयति **साधुरिति** । दम्भेन चैव नास्तिक्येन केवलधर्मध्वजित्वेनेत्यर्थः । तदिह प्रोक्तमस्मिन्नेव लोके फलप्रदमित्यर्थः । कादाचित्कफलत्वं क्षणिकफलत्वमध्रुवमनियतमनैकान्तिकफलमिति यावत् ॥ १८ ॥

प० टी० । **सत्कार इति** । सत्कारः साधुरयं तापस इति, मानः प्रत्युत्थानाभिवन्दनादिस्तदर्थम् । दम्भेन प्रसिद्धेन यत्कृतम् । चलमनित्यफलम् अध्रुवं क्षणिकं तद्राजसं तपः ॥ १८ ॥

**मूढग्राहेणात्मनो यत् पीडया क्रियते तपः ॥**
**परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥**

मूढेति । मूढग्राहेणाविवेकनिश्चयेनात्मनः पीडया क्रियते तत्तपः परस्योत्सादनार्थं विनाशार्थं वा तत्तामसं तप उदाहृतम् ॥ १९ ॥

आ० टी० । तामसं तपः संगृह्णाति **मूढेति** । मूढोऽत्यन्ताविवेकी तस्य ग्राहो नामाग्रहोऽभिनिवेशस्तेनेत्याह **अविवेकेति** । आत्मनः स्वस्य देहादेरित्यर्थः ॥ १९ ॥

प० टी० । **मूढग्राहेणेति** । मूढत्वे सति ग्राह आग्रहस्तेन, आत्मनः शरीरस्योपवासादिपीडया, परस्योत्सादनं जारणमारणोच्चाटनाद्याभिचारिकं तत्तामसम् ॥ १९ ॥

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ॥
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

इदानीं दानभेद उच्यते दातव्यमिति । दातव्यमित्येवं मनः कृत्वा यद्दानं दीयतेऽनुपकारिणे प्रत्युपकारासमर्थाय समर्थायापि निरपेक्षं दीयते देशे पुण्ये कुरुक्षेत्रादौ काले संक्रान्त्यादौ पात्रे च षडङ्गविद्वेदपारग इत्यादौ तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

आ० टी० । क्रमप्राप्तं दानस्य गुणनिमित्तभेदमाह इदानीमिति । दातव्यमित्येवं मनः कृत्वा दानमेव मया भाव्यं न फलमित्यभिसंधायेत्यर्थः ॥ २० ॥

प० टी० । अथ त्रिविधं दानमाह दातव्यमिति त्रिभिः । अवश्यं दातव्यमेवेति नियमेन यद्दीयतेऽनुपकारिणे प्रत्युपकारासमर्थाय काले ग्रहणादौ, देशे कुरुक्षेत्रादौ, पात्रे षडङ्गवेदपारगे, अत्र सप्तम्या चतुर्थी ज्ञेया । तपःश्रुतादिसंपन्नाय ब्राह्मणायेत्यर्थः । यदेवंभूतं दानं तत्सात्त्विकम् ॥ २० ॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ॥
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१ ॥

यत्त्विति । यत्तु दानं प्रत्युपकारार्थं काले त्वयं मां प्रत्युपकरिष्यतीत्येवमर्थं फलं वास्य दानस्य मे भविष्यत्यदृष्टमिति तदुद्दिश्य पुनर्दीयते च परिक्लिष्टं खेदसंयुक्तं तद्राजसं स्मृतम् ॥ २१ ॥

प० टी० । राजसमाह यत्त्विति । कालान्तरेणायमपि मां प्रत्युपकरिष्यतीति स्वर्गादिलोकमुद्दिश्य वा । परिक्लिष्टं क्लेशयुक्तं वा यद्दीयते तद्राजसं दानम् ॥ २१ ॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ॥
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥

अदेशेति । अदेशकालेऽपुण्ये देशे म्लेच्छाशुच्यादिसंकीर्णेऽकाले पुण्यहेतुत्वेनाप्रख्याते संक्रान्त्यादिविशेषरहितेऽपात्रेभ्यश्च मूर्खतस्करादिभ्यो देशादिसंपत्तौ वासत्कृतं प्रियवचनपादप्रक्षालनपूजादिरहितमवज्ञातं पात्रपरिभवयुक्तं च तद्दानं तामसमुदाहृतम् ॥ २२ ॥

आ० टी० । राजसतामसदानविभजनं स्पष्टार्थम् ॥ २१ ॥ ॥ २२ ॥

प० टी० । तामसमाह अदेशकालेति । अदेशेऽशुचिस्थलेऽकाले सूतकादावपात्रेभ्यो विटनटादिभ्यो यद्दीयते । असत्कृतं सत्काररहितम् । अवज्ञातं पादप्रक्षालनादिरहितं तत्तामसम् ॥२२॥

ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ॥
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३

यज्ञदानतपःप्रभृतीनां साद्गुण्यकरणायायमुपदेश उच्यते ॐतदिति । ॐतत्सदित्येष निर्देशो निर्दिश्यतेऽनेनेति निर्देशस्त्रिविधो नामनिर्देशो ब्रह्मणः स्मृतश्चिन्तितो वेदान्तेषु ब्रह्मविद्भिर्ब्राह्मणास्तेन निर्देशेन त्रिविधेन वेदाश्च यज्ञाश्च विहिता निर्मिताः पुरा पूर्वमिति निर्देशस्तुत्यर्थमुच्यते ॥ २३ ॥

आ० टी० । विहितानां कर्मणां प्रमादयुक्ते वैगुण्ये कथं परिहारः स्यादित्याशङ्क्याह **यज्ञेति** । 'ॐमिति ब्रह्म' इत्यादिश्रुतेः ओमिति तावद् ब्रह्मणो नामनिर्देशः, 'तत्त्वमसि' इति श्रुतेः तदित्यपि ब्रह्मणो नामनिर्देशः, 'सदेव सौम्येदम्' इति श्रुतेः सदित्यपि तस्य नामेति मत्वाह **ओमिति**। कथं निर्देशेन तेषां विधानमित्याशङ्क्याह **निर्दिश्यत इति**। यज्ञादीनां वैगुण्यप्रतीतिकाले यथोक्तनाम्नामन्यतमोच्चारणादवैगुण्यं सिध्यतीति भावः । कर्मसाद्गुण्यकारणं त्रिविधनाम स्तौति **ब्राह्मणा इति**। पूर्वं सर्गादौ निर्माणं च प्रजापतिकर्तृकम् ॥ २३ ॥

प० टी० । ननु चैवं विचार्यमाणे सर्वमपि यज्ञतपोदानादि राजसं तामसं वा विगुणत्वात्कृतमपि व्यर्थत्वमापद्येतेत्याशङ्क्य तस्य विगुणस्यापि सगुणत्वोपपादनप्रकारं दर्शयितुमाह **ॐमिति** । ब्रह्मणः परमात्मनो निर्देशो नामव्यपदेशस्त्रिविधः स्मृतः । स कः **ॐतत्सदिति** । एवं तेन त्रिविधेन ब्रह्मणा यज्ञकर्मकर्तारस्तथा वेदा विधिमार्गप्रवर्तकास्तथा यज्ञाः कर्मरूपाः पुरा पूर्वसृष्ट्यादौ विहिता निर्मिताः । तत्र **ॐमिति** ब्रह्मणो नाम । तदुक्तं छान्दोग्योपनिषत्सु "अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथस्तथा । ॐमित्येकाक्षरमुपासीतोम्" इति । तदुक्तं 'नोद्गीथेन समं किं चिच्छोधकं जगति स्मृतम् । यं विनाम्नायवर्गोऽपि स्वकार्ये न प्रवर्तते' इति । तथा सर्वानुक्रमकारः शाकलोऽपि 'प्रजापतिरोङ्कारः सर्वदैवत्यः पारमेष्ठ्यो ब्राह्मो दैव आध्यात्मिकः' इति । भाष्यम्—प्रजापतिर्देवता ॐमितिशब्दः सर्वदेवतास्वभिधायकत्वेन सर्वदैवत्यः परमोत्कृष्टस्थाने तिष्ठतीति पारमेष्ठ्यो ब्राह्मो ब्रह्मदैवत्य आध्यात्मिकः शरीरवर्तिप्रत्यगात्मनोऽभिधायको वेति । तथा ब्राह्मणेऽप्याम्नातम् "तानि शुक्राण्यभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति तानेकधा समभरन् तदेतदोम्" इति । भाष्यम्—'तदेव शुक्रं तद्ब्रह्म' इत्यादिश्रुतेः । शुक्राणि शबलब्रह्माणि हिरण्यगर्भादीन्यभितोऽतपन् तपश्चक्रुः । तेभ्योभितस्तप्तेभ्यस्तपः कुर्वाणेभ्यः सकाशाद् ये वर्णा अजायन्तेति स्पष्टम् । तथा च ॐमिति नामनिर्देशेन वेदा विहिताः, तदित्यनेन ब्राह्मणाः, सदित्यनेन यज्ञाः ॥ २३ ॥

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ॥
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥

तस्मादोमित्युदाहृत्योच्चार्य यज्ञदानतपःक्रियाः यज्ञादिस्वरूपाः क्रियाः प्रवर्तन्ते विधानोक्ताः शास्त्रचोदिताः सततं सर्वदा ब्रह्मवादिनां ब्रह्मवदनशीलानाम् ॥ २४ ॥

आ० टी० । यस्माद् ब्राह्मणादीनां कारणं यस्माच्च ब्रह्मणो निर्देशस्तस्मादित्युपसंहरात तस्मादिति । ब्रह्मवादिनामित्यत्र ब्रह्म वेदः ॥ २४ ॥

प० टी० । यज्ञोपक्रान्तमर्थमाह तस्मादिति । यस्मादेवं ब्रह्मणो निर्देशस्तस्मात्कारणा-दोमित्युदाहृत्योच्चार्य वेदविधानोक्तब्रह्मवादिनां मोक्षार्थिनां यज्ञदानतपसां क्रियाः सततं निरन्तरं प्रवर्तन्ते ॥ २४ ॥

**तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः ॥**
**दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥**

तदिति । तदित्यनभिसंधाय तदिति ब्रह्माभिधानमुच्चार्यानभिसंधाय च कर्मणः फलं यज्ञतपःक्रियाः यज्ञक्रियास्तपःक्रियाश्च यज्ञतपःक्रिया दानक्रियाश्च त्रिविधाः क्षेत्रहिरण्यप्रदानादिलक्षणाः क्रियन्ते निर्वर्त्यन्ते मोक्षकाङ्क्षिभिः मोक्षार्थिभिर्मुमुक्षुभिः ॥ २५ ॥

आ० टी० । ओंशब्दस्य विनियोगमुक्त्वा तच्छब्दस्य विनियोगमाह तदित्यादिना ॥ २५ ॥

प० टी० । अथ द्वितीयनामनिर्देशं स्तौति तदित्युदाहृत्येति पूर्वस्यानुषङ्गः तदिति । नामनिर्देशमुच्चार्य चित्तशुध्यर्थं प्रवृत्तैर्मोक्षकाङ्क्षिभिः फलमनभिसंधाय यज्ञतपःक्रियास्तथा दानक्रियाश्च क्रियन्ते ॥ २५ ॥

**सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते ॥**
**प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६ ॥**

ओंतच्छब्दयोर्विनियोग उक्तोऽथेदानीं सच्छब्दस्य विनियोगः कथ्यते सद्भाव इति । सतः सद्भावे यथा विद्यमानस्य पुत्रस्य जन्मनि, तथा साधुभावेऽसद्वृत्तस्यासाधोः सद्वृत्तता साधुभावस्तस्मिन् साधुभावे च सदित्येतदभिधानं ब्रह्मणः प्रयुज्यते तत्रोच्यतेऽभिधीयते प्रशस्ते कर्मणि विवाहादौ च तथा सच्छब्दः पार्थ युज्यते प्रयुज्यत इत्येतत् ॥ २६ ॥

आ० टी० । वृत्तमनूद्यानन्तरश्लोकतात्पर्यमाह ओंतच्छब्दयोरिति ॥ २६ ॥

प० टी० । अथ सच्छब्दस्य प्राशस्त्यमाह सद्भाव इति । सद्भावेऽस्तित्वे देवदत्तस्य पुत्रादिकमस्तीत्येतस्मिन्नर्थे साधुभावे च साधुत्वे देवदत्तस्य पुत्रादि श्रेष्ठमित्येतस्मिन्नर्थे सदित्येतत्पदं प्रयुज्यते । तथा प्रशस्ते विवाहादिमाङ्गलिके कृत्ये सच्छब्दो युज्यते ॥ २६ ॥

**यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ॥**
**कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥**

यज्ञे यज्ञकर्मणि या स्थितिस्तपसि च या स्थितिर्दाने च या स्थितिः सा च सदित्युच्यते विद्वद्भिः, कर्म चैव तदर्थीयं यज्ञदानतपोऽर्थीयमथ वा यस्याभिधानत्रयं प्रकृतं तदर्थीयमीश्वरार्थीयमित्येतत् सदित्येवाभिधीयते तदेतद् यज्ञदानतपआदिकर्म सात्त्विकं विगुणमपि श्रद्धापूर्वकं ब्रह्मणोऽभिधानत्रयप्रयोगेण सगुणं सात्त्विकं संपादितं भवति ॥ २७ ॥

आ० टी० । प्रकारान्तरेण सच्छब्दस्य विनियोगमाह **यज्ञ इति** । नामत्रयोच्चारणेन साद्गुण्यं सिध्यतीति प्रकरणार्थमुपसंहरति **तदेतदिति** ॥ २७ ॥

प० टी० । किं च **यज्ञ इति** । यज्ञे तपसि दाने च स्थितिस्तात्पर्येणावस्थानं तदपि सदित्युच्यते । यस्य चेदं नामत्रयं स एव परमात्मेत्यर्थः । तथा तदर्थीयं यज्ञदानतपोनिमित्तं पूजोपहारगृहाङ्गणपरिमार्जनोपलेपनध्वजपताकादि तथोद्यानक्षेत्रधनार्जनादि यत्कर्म क्रियते तदपि सदित्येवाभिधीयते । तस्मादेवमिति प्रशस्तं नामत्रयं तस्मादेतत्सर्वकर्मसाद्गुण्यार्थं कीर्तयेदिति तात्पर्यार्थः । नायमर्थवादः, किं तु ब्रह्मणो नामनिर्देशस्यातिप्राशस्त्याद्विधिरेव कल्प्यते ॥ २७ ॥

**अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ॥**
**असदित्युच्यते पार्थ न च तत् प्रेत्य नो इह ॥ २८ ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥ १७ ॥

अश्रद्धयेति । तत्र च सर्वत्र श्रद्धाप्रधानतया सर्वं संपाद्यते यस्मात्तस्माद् अश्रद्धया हुतं हवनं कृतं दत्तं च ब्राह्मणेभ्योऽश्रद्धया, तपस्तप्तमनुष्ठितमश्रद्धया, तथाश्रद्धयैव कृतं यत् स्तुतिनमस्कारादि तत् सर्वमसदित्युच्यते मत्प्राप्तिसाधनमार्गबाह्यत्वात् पार्थ न च तद् बह्वायासमपि प्रेत्य फलाय नापीहार्थं साधुभिर्निन्दितत्वादिति ॥ २८ ॥

इति श्रीमच्छङ्करभगवतः कृतौ गीताभाष्ये श्रद्धात्रयविभागो नाम सप्तदशोऽध्यायः ॥ १७ ॥

आ० टी० । अश्रद्धान्वितस्यापि कर्मणो नामत्रयोच्चारणाद्वैगुण्ये श्रद्धाप्राधान्यं न स्यादित्याशङ्क्याह **तत्र चेति** । सप्तमीभ्यां प्रकृतं यज्ञादि गृह्यते सर्वयज्ञादि सगुणमिति शेषः । तस्यासत्त्वं साधयति **मत्प्राप्तीति** । ऐहिकामुष्मिकं वा फलमश्रद्धितेनापि कर्मणा संपत्स्यते कुतोऽस्यासत्त्वमित्याशङ्क्याह **न चेति** । तस्योभयविधफलाहेतुत्वे हेतुमाह **साधुभिरिति** । निन्दन्ति हि साधवः श्रद्धारहितं कर्मातो नैतदुभयफलोपयिकमित्यर्थः, तदनेन शास्त्रानभिज्ञानामपि श्रद्धावतां श्रद्धया सात्त्विकत्वादित्रैविध्यभाजां राजसतामसाहारादित्यागेन सात्त्विकाहारादिसेवया सत्त्वै-

कशरणानां प्राप्तमपि यज्ञादिवैगुण्यं ब्रह्मनामनिर्देशेन परिहरतां परिशुद्धबुद्धीनां श्रवणादिसामग्रीसंजाततत्त्वसाक्षात्कारवतां मोक्षोपपत्तिरिति स्थितम् ॥ २८ ॥

**इत्यानन्दगिरिकृतगीताभाष्यटीकायां सप्तदशोऽध्यायः ॥ १७ ॥**

**प० टी०** । अथाश्रद्धाकृतं सर्वं निन्दति **अश्रद्धयेति** । असद्भावे श्रद्धया हुतं होमः दत्तं दानं तप्तं निर्वर्तितं तपः यच्चान्यदपि पूर्वोक्तवत्कृतं तत्सर्वमसदित्युच्यते । यतः प्रेत्य लोकान्तरे न फलमिति विगुणत्वात् । नेह चास्मिन् लोके फलति अयशस्करत्वात् । तस्माद्रजस्तमःप्रधानां श्रद्धां त्यक्त्वा सत्त्वमयीं श्रद्धां श्रयेदित्यध्यायतात्पर्यम् ॥ २८ ॥

अथाध्यायतात्पर्यम्—प्राक्संस्कारानुरूपं विधिविधुरधियः श्रद्धया संयजन्ते दानाहारक्रियाद्यैस्त्रिविधगुणवशात्तत्फलं ते लभन्ते । तद्वैगुण्यं निहन्तुं प्रभवति तदोंतत्सदेषा त्रिवर्णी तेन ब्रह्मार्पणं स्यादिदमिति दशमे सप्तयुक्ते निरुक्तम् ॥ १ ॥ ॐ तत्सत् ॥

इति श्रीवद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां परमार्थप्रपायां श्रद्धाविवेको नाम सप्तदशोऽध्यायः ॥ १७ ॥

इति सप्तदशोऽध्यायः ॥ १७ ॥

---

# अथ

# अष्टादशोऽध्यायः ।

## अर्जुन उवाच ।

**संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ॥**
**त्यागस्य च हृषीकेश पृथक् केशिनिषूदन ॥ १ ॥**

सर्वस्यैव गीताशास्त्रस्यार्थोऽस्मिन्नध्याय उपसंहृत्य सर्वश्च वेदार्थो वक्तव्य इत्येवमर्थोऽयमध्याय आरभ्यते सर्वेषु ह्यतीतेष्वध्यायेषु पूर्वोक्तोऽर्थोऽस्मिन्नध्यायेऽवगम्यतेऽर्जुनस्तु संन्यासत्यागशब्दार्थयोरेव विशेषं बुभुत्सुरुवाच संन्यासस्येति । संन्यासस्य संन्यासशब्दार्थस्येत्येतद्धे महाबाहो तस्य भावस्तत्त्वं याथात्म्यमित्येतद् इच्छामि वेदितुं ज्ञातुं त्यागस्य च त्यागशब्दार्थस्येत्येतद् हृषीकेश पृथग् इतरेतरविभागं केशिनिषूदन केशिनामा कश्चिदसुरस्तं निषूदितवान् भगवान् वासुदेवस्तेन तन्नाम्ना संबोध्यतेऽर्जुनेन ॥ १ ॥

**आ० टी०** । पूर्वैरध्यायैर्विस्तरेण यतस्ततो विक्षिप्ततयोक्तमर्थं सुखप्रतिपत्त्यर्थं संक्षेपेणोपसंहृत्याभिधातुमध्यायान्तरमवतारयति **सर्वस्यैवेति** । उपसंहृत्य वक्तव्य इति संबन्धः । किं चोपनिषत्सु यतस्ततो विस्तृतस्यार्थस्य बुद्धिसौकर्यार्थमस्मिन्नध्याये संक्षिप्ताभिधानं कर्तव्यमुपनिषदां गीतानां चैकार्थत्वादित्याह **सर्वश्चेति** । कथं सर्वोऽपि शास्त्रार्थोऽस्मिन्नध्याये संक्षिप्योपसंह्रियते तत्राह **सर्वेषु हीति** । ननु वेदार्थश्चेदशेषतोऽत्रोपसञ्जिहीर्षितस्तर्हि किमिति त्यागेनैके संन्यासयोगादिति च

वेदार्थैकदेशविषयं प्रश्नप्रतिवचनेन त्राह अर्जुनस्त्विति । पृथगनयोस्तत्त्वं वेदितुमिच्छामीति विशेषणा-दपृथगर्थस्तयोरस्तीति गम्यते बुभुत्सितस्य प्रष्टव्यत्वादेकदेशे तदभावादुक्तप्रश्नोपपत्तिरिति भावः ॥१॥

प० टी० । अन्तर्यामिस्वरूपेण गुरुणा येन दर्शितम् । निजस्वरूपं तं वन्दे गोविन्दमजमद्वयम् ॥१॥ पूर्वं पश्चिमाध्याये सर्वकर्माणि मनसा संन्यस्येति तथा 'संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि' इत्यादिवाक्यैः कर्मसंन्यासः प्रशंसितोऽनन्तरं सर्वकर्मफलत्यागं ततः कुर्वित्यादिना फलमात्रत्यागेन कर्मानुष्ठानमुपदिष्टं तत्परस्परविरुद्धमिति संदेहे तयोस्तत्त्वं जिज्ञासुरर्जुनः पुनः पृच्छति स्म संन्यासस्येति। भो हृषीकेश सर्वेन्द्रियेश स्वामिन् संन्यासस्य फलत्यागस्य च तत्त्वं रहस्यं पृथग्वेदितुं पृथक्प्रकारेण ज्ञातुमिच्छामि । केशिनाम्नो हयाकृतेर्दैत्यस्य युद्धे वर्तमानवामबाहुप्रसारप्रवेशनेन तं निषूदितवान् नाशितवानत एव महाबाहो इति संबुद्धिः । केश्यादिमहादैत्यदारणसमर्थस्य तवास्मत्संदेहापाकरणे कियानायास इत्यर्थः ॥ १ ॥

## श्रीभगवानुवाच ।

# काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ॥
# सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥

तत्र तत्र निर्दिष्टौ संन्यासत्यागशब्दौ न निर्लुण्ठितार्थौ पूर्वेष्वध्यायेष्वतोऽर्जुनाय पृष्टवते तन्निर्णयाय भगवानुवाच काम्येति । काम्यानामश्वमेधादीनां कर्मणां न्यासं परित्यागं संन्यासं संन्यासशब्दार्थमनुष्ठेयत्वेन प्राप्तस्याननुष्ठानं कवयः पण्डिताः केचिद्विदुर्विजानन्ति नित्यनैमित्तिकानामनुष्ठीयमानानां सर्वकर्मणामात्मसंबन्धितया प्राप्तस्य फलस्य त्यागः सर्वकर्मफलत्यागस्तमाहुः कथयन्ति त्यागं त्यागशब्दार्थं विचक्षणाः पण्डिताः ॥ २ ॥

आ० टी० । ननु पूर्वेष्वध्यायेषु तत्र तत्र संन्यासत्यागयोरुक्तत्वात् किमिति पुनस्तौ पृच्छ्येते ज्ञाते तदयोगात् तत्राह तत्र तत्रेति । न निर्लुण्ठितार्थौ न निकृष्टार्थौ न विविक्तार्थावित्यर्थः। बुभुत्सया प्रश्नस्य प्रवृत्तत्वात् प्रष्टुरभिप्रायं प्रश्नेन प्रतिपद्य भगवानुत्तरमुक्तवानित्याह अत इति । पक्षद्वयोपन्यासेन संन्यासत्यागशब्दयोरर्थभेदं कथयति काम्यानामिति ॥ २ ॥

प० टी० । एतत्प्रश्नोत्तरं भगवानाह काम्यानामिति । काम्यानीष्टसाधनानि ज्योतिष्टोमादीनि तेषां सम्यक् फलैः सह न्यासः परित्यागस्तं कवयः पण्डिताः संन्यासं विदुर्जानन्ति तथा काम्यातिरिक्तानां सर्वेषां कर्मणां नित्यनैमित्तिकानामवान्तरफलत्यागं विचक्षणाः कुशलास्त्यागं प्राहुः । अत्रैतदुक्तं भवति । नित्यान्यकरणे प्रत्यवायसाधनानि संध्यावन्दनादीनि । नैमित्तिकानि पुत्रजन्माद्यनुबन्धीनि जातेष्ट्यादीनि । प्रायश्चित्तानि पापक्षयसाधनानि चान्द्रायणादीनि । उपासनानि सगुणब्रह्मविषयमानसव्यापाररूपाणि शाण्डिल्यविद्यादीनि । एतेषां नित्यादीनां बुद्धिशुद्धिः परमप्रयोजनम् । उपासनानां तु तदैकाग्र्यं विविदिषन्ति यज्ञेनेत्यादिश्रुतेः तपसा कल्मषं हन्तीत्यादिस्मृतेश्च । नित्यनैमित्तिकयोरुपासनानां चावान्तरफलं पितृलोकसत्यलोकप्राप्तिः कर्मणा पितृलोको विद्यया देवलोको वै लोकानां श्रेष्ठ इति श्रुतेः । सर्वकर्मफलत्यागं प्राहुः ॥ २ ॥

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ॥**
**यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३ ॥**

यदि काम्यकर्मपरित्यागः फलपरित्यागो वार्थो वक्तव्यः सर्वथा परित्यागमात्रं संन्यासत्यागशब्दयोरेकोऽर्थो घटपटशब्दाविव जात्यन्तरभूतार्थौ। ननु नित्यनैमित्तिकानां कर्मणां फलमेव नास्तीत्याहुः कथमुच्यते तेषां फलत्यागो यथा वन्ध्यायाः पुत्रत्यागो, नैष दोषः,नित्यानामपि कर्मणां भगवता फलवत्त्वस्येष्टत्वात् वक्ष्यति भगवान् अनिष्टमिष्टमिति न तु संन्यासिनामिति च संन्यासिनामेव हि केवलं कर्मफलासंबन्धं दर्शयन्नसंन्यासिनां नित्यकर्मफलप्राप्तिर्भवत्यत्यागिनां प्रेत्येति दर्शयति, त्याज्यं दोषेति । त्याज्यं त्यक्तव्यं दोषवद् दोषोऽस्यास्तीति दोषवत् किं तत् कर्म बन्धहेतुत्वात् सर्वमेवाथवा दोषो यथा रागादिस्त्यज्यते तथा त्याज्यमित्येके कर्म प्राहुर्मनीषिणः पण्डिताः सांख्यादिदृष्टिमाश्रिता अधिकृतानां तु कर्मिणामपीति, तत्रैव यज्ञदानतपःकर्म न त्याज्यमिति चापरे कर्मिण एवाधिकृतास्तानपेक्ष्यैते विकल्पा न तु ज्ञाननिष्ठान् व्युत्थायिनः संन्यासिनोऽपेक्ष्य ज्ञानयोगेन सांख्यानां निष्ठा मया पुरा प्रोक्तेति कर्माधिकारादपावृत्ता येन तान् प्रति विहिता चिन्ता । ननु कर्मयोगेन योगिनामित्यधिकृताः पूर्वं विभक्तनिष्ठा अपीह सर्वशास्त्रोपसंहारप्रकरणे यथा विचार्यन्ते तथा सांख्या अपि ज्ञाननिष्ठा विचार्यन्तामिति न तेषां मोहक्लेशदुःखनिमित्तत्यागानुपपत्तेर्न कायक्लेशनिमित्तानि दुःखानि सांख्या आत्मनि पश्यन्तीच्छादीनां क्षेत्रधर्मत्वेनैव दर्शितत्वाद् अतस्ते न कायक्लेशदुःखभयात् कर्म परित्यजन्ति नापि ते कर्माण्यात्मनि पश्यन्ति येन नियतं कर्म मोहात् परित्यजेयुर्गुणानां कर्म नैव किंचित्करोमीति हि ते संन्यस्यन्ति सर्वकर्माणि मनसा संन्यस्येत्यादिभिर्हि तत्त्वविदः संन्यासप्रकार उक्तस्तस्माद्येऽन्येऽधिकृताः कर्मण्यनात्मविदो येषां च मोहात् त्यागः संभवति कायक्लेशभयाच्च त एव तामसास्त्यागिनो राजसाश्चेति निन्द्यते कर्मिणामनात्मज्ञानां कर्मफलत्यागस्तुत्यर्थः सर्वारम्भपरित्यागी मौनी संतुष्टो येन केनचिदनिकेतः स्थिरमतिरिति गुणातीतलक्षणे च परमार्थसंन्यासिनो विशेषितत्वाद्, वक्ष्यति च ज्ञानस्य या परा निष्ठेति तस्माज्ज्ञाननिष्ठाः संन्यासिनो नेह विवक्षिताः कर्मफलत्याग एव सात्त्विकत्वेन गुणेन तामसत्वाद्यपेक्षया संन्यास उच्यते न मख्यः सर्वकर्मसंन्यासः सर्वकर्मसंन्यासासंभ-

वे च नहि देहभृतेति हेतुवचनान्मुख्य एवेति चेन्न, हेतुवचनस्य स्तुत्यर्थत्वाद् यथा त्यागाच्छान्तिरनन्तरमिति कर्मफलत्यागस्तुतिरेव यथोक्तानेकपक्षानुष्ठानाशक्तिमन्तमर्जुनं प्रति विधानात् तथेदमपि न हि देहभृता शक्यमिति कर्मफलत्यागस्तुत्यर्थं न सर्वाणि कर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नास्त इत्यस्य पक्षस्यापवादः केनचिद्दर्शयितुं शक्यस्तस्मात् कर्मण्यधिकृतान् प्रत्येवैष संन्यासत्यागविकल्पः। ये तु परमार्थदर्शिनः सांख्यास्तेषां ज्ञाननिष्ठायामेव सर्वकर्मसंन्यासलक्षणायामधिकारो नान्यत्रेति न ते विकल्पार्हास्तथोपपादितमस्माभिर्वेदाविनाशिनमित्यस्मिन् प्रदेशे तृतीयादौ च ॥ ३ ॥

**आ० टी०**। तत् किमिदानीं संन्यासत्यागशब्दयोरात्यन्तिकं भिन्नार्थत्वं तथा च प्रसिद्धिविरोधः स्यादित्याशङ्क्यावान्तरभेदेऽपि नात्यन्तिकभेदोऽस्तीत्याह **यदीति**। पुत्राभावाद्वन्ध्यायास्तत्त्यागायोगवन्नित्यनैमित्तककर्मणामफलानां फलत्यागानुपपत्तेरुक्तस्त्यागशब्दार्थो न सिध्यतीति शङ्कते **नन्विति**। नित्यनैमित्तिककर्मफलस्य वन्ध्यापुत्रसादृश्याभावात्तत्त्यागसंभवादुक्तस्त्यागशब्दार्थः संभवतीति समाधत्ते **नैष दोष इति**। भगवता तेषां फलवत्त्वमिष्टमित्यत्र वाक्यशेषमनुकूलयति **वक्ष्यतीति**। तर्हि संन्यासिनामसंन्यासिनां च नित्याद्यनुष्ठायिनामविशेषेण तत् फलं स्यादिति चेन्नैवेत्याह **न त्विति**। वक्ष्यतीत्यनुकर्षणं चकारार्थः। प्रसक्तस्य वचसोऽर्थं प्रकृतोपयोगित्वेन संगृह्य स्मारयति **संन्यासिनामिति**। काम्यानि वर्जयित्वा नित्यनैमित्तिकानि फलाभिलाषादृते कर्तव्यानीत्युक्तं पक्षं प्रतिपक्षनिरासेन दृढयितुं विप्रतिपत्तिमाह **त्याज्यमिति**। कर्मणः सर्वस्य दोषवत्त्वे हेतुमाह **बन्धेति**। दोषवदित्येतद्दृष्टान्तत्वेन व्याचष्टे **अथवेति**। कर्मण्यनधिकृतानामकर्मिणामेव कर्म त्याज्यं कर्मिणां तत्त्यागे प्रत्यवायादित्याशङ्क्याह **अधिकृतानामिति**। न हि तेषामपि कर्म त्यजतां प्रत्यवायो हिंसादियुक्तस्य कर्मणोऽनुष्ठाने परं प्रत्यवायादिति भावः। सांख्यादिपक्षसमाप्तावितिशब्दः। मीमांसकपक्षमाह **तत्रैवेति**। कर्माधिकृतेष्वेवेति यावत्, कर्म नित्यं नैमित्तिकं च। काम्यानां कर्मणामित्यारभ्य श्लोकाभ्यां कर्मिणोऽकर्मिणोऽधिकृताननधिकृतांश्चापेक्ष्य दर्शितविकल्पानां प्रवृत्तिरित्याशङ्क्याह **कर्मिण इति**। एवकारव्यवच्छेद्यमाह **नत्विति**। तदेव स्फुटयति **ज्ञानेति**। कर्माधिकृतानां ज्ञाननिष्ठातो विभक्तनिष्ठावत्त्वेन पूर्वोक्तानामपि शास्त्रार्थोपसंहारे पुनर्विचार्यत्ववज्ज्ञातनिष्ठानामपि विचार्यत्वमत्राविरुद्धमिति शङ्कते **नन्विति**। सांख्यानां परमार्थज्ञाननिष्ठानां नात्र विचार्यतेत्युत्तरमाह **न तेषामिति**। ननु तेषामपि स्वात्मनि क्लेशदुःखादि पश्यतां तदनुरोधेन राजसकर्मत्यागसिद्धेर्विचार्यत्वं नेत्याह **न कायेति**। तत्र क्षेत्राध्यायोक्तं हेतूकरोति **इच्छादीनामिति**। स्वात्मनि सांख्यादीनां क्लेशाद्यप्रतिपत्तौ फलितमाह **अत इति**। ननु तेषां क्लेशाद्यदर्शनेऽपि स्वात्मनि कर्माणि पश्यतां तत्त्यागो युक्तस्तेषां कायक्लेशादिकरत्वान्नेत्याह **नापीति**। अज्ञानां मोहमाहात्म्यान् नियतमपि कर्म त्यक्तुं शक्यं न तत्त्वविदां स्वात्मनि कर्मादर्शनेन तत्त्यागे हेत्वभावादिति मत्वाह **मोहादिति**। कथं तर्हि तेषामात्मनि कर्माण्यपश्यतां प्राप्त्यभावे तत्त्यागः संन्यासस्तत्राह **गुणानामिति**। अविवेकप्राप्तानां कर्मणां त्यागस्तत्त्वविदामित्युक्तं स्मारयन्नप्राप्तप्रतिषेधं प्रत्यादिशति **सर्वेति**। तत्त्वविदामत्राविचार्यत्वे फलितमाह **तस्मादिति**। येऽनात्मविदस्त एवेत्युत्तरत्र संबन्धः। कर्मण्यधिकृतानामनात्मविदां कर्मत्यागसंभावनां दर्शयति **येषां चेति**। तन्निन्दा कुत्रोपयुक्तेत्याशङ्क्याह **कर्मिणामिति**। किं च परमार्थसंन्या-

सिनां प्रशस्यत्वोपलम्भान्न निन्दाविषयत्वमित्याह **सर्वेति** । किं चात्रापि सिद्धिं प्राप्तो यथेत्यादिना ज्ञाननिष्ठाया वक्ष्यमाणत्वात्तद्गता नेह विचार्यतेत्याह **वक्ष्यतीति** । कर्माधिकृतानामेवात्र विवक्षितत्वं न ज्ञाननिष्ठानामित्युपसंहरति **तस्मादिति** । ननु संन्यासशब्देन सर्वकर्मसंन्यासस्य ग्राह्यत्वात्तथाविध-संन्यासिनामिह विवक्षितत्वं प्रतिभाति तत्राह **कर्मेति** । संन्यासशब्देन मुख्यस्यैव संन्यासस्य ग्रहणं गौणमुख्ययोर्मुख्ये संप्रत्ययादन्यथा तदसंभवे हेतूक्तिवैयर्थ्यादप्राप्तप्रतिषेधादिति शङ्कते **सर्वेति** । नेदं हेतुवचनं सर्वकर्मसंन्याससंभवसाधकं कर्मफलत्यागस्तुतिपरत्वादिति परिहरति **नेत्यादिना** । एतदेव दृष्टान्तेन स्पष्टयति **यथेति** । दृष्टान्तेऽपि यथाश्रुतार्थकत्वं किं न स्यादित्याशङ्क्याह **यथोक्तेति** । न हि फलत्यागादेव ज्ञानं विना मुक्तिर्युक्ता मुक्तेर्ज्ञानैकाधीनत्वसाधकश्रुतिस्मृतिविरोधाद् अद्वेष्टे-त्यादिना चानन्तरमेव ज्ञानसाधनविधानानर्थक्यात्त्यागस्तुतिरेवात्र ग्राह्येत्यर्थः । दृष्टान्तगतमर्थं दार्ष्टा-न्तिके योजयति **तथेति** । प्रागुक्तपक्षापवादविवक्षया हेतूक्तेर्मुख्यार्थत्वमेव किं न स्यादित्याशङ्क्य तदपवादे हेत्वभावान्मैवमित्याह **न सर्वेति** । न चेयमेव हेतूक्तिरतदपवादिकान्यथासिद्धेरुक्तत्वादिति भावः । मुख्यसंन्यासापवादासंभवे संन्यासत्यागविकल्पस्य कथं सावकाशतेत्याशङ्क्याह **तस्मादिति** । ज्ञाननिष्ठान् प्रत्युक्तविकल्पानुपपत्तौ कुत्र तेषामधिकारस्तत्राह **ये त्विति** । संन्यासिनां विकल्पानर्हत्वे-न ज्ञाननिष्ठायामेवाधिकारस्य भूयःसु प्रदेशेषु साधितत्वान्न साधनीयत्वापेक्षेत्याह **तथेति** ॥ ३ ॥

प० टी० । अथास्मिन्नर्थे मतान्तरमुपन्यस्यति **त्याज्यमिति** । यज्ञे हिंसादिदोषवत्कर्म ब-न्धकं भवतीति त्याज्यमित्येके मनीषिणः सांख्या वदन्ति तथापरे मीमांसका "अग्नीषोमीयं पशुमा-लभेत" इत्यादिश्रुतिबलाद्यज्ञदानतपःकर्म न त्याज्यमिति वदन्ति ॥ ३ ॥

## निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ॥
## त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥ ४ ॥

तत्रैतेषु विकल्पभेदेषु निश्चयं शृण्ववधारय मे मम वचनात् तत्र त्यागे त्यागसंन्यासविकल्पे यथा दर्शिते भरतसत्तम भरतानां साधुतम त्यागो हि त्यागसंन्यासशब्दवाच्यो हि योऽर्थः स एक एवेत्यभिप्रेत्याह त्यागो हीति । पुरुषव्याघ्र त्रिविधस्त्रिप्रकारस्तामसादिप्रकारैः संप्रकीर्तितः शास्त्रेषु सम्यक् क-थितो यस्मात्तामसादिभेदेन त्यागसंन्यासशब्दवाच्योऽर्थोऽधिकृतस्य कर्मिणो-ऽनात्मज्ञस्य त्रिविधः संभवति न परमार्थदर्शिन इत्ययमर्थो दुर्ज्ञानो हि य-स्माद् अत्र तत्त्वं नान्यो वक्तुं समर्थस्तस्मान्निश्चयं परमार्थशास्त्रार्थविषयमध्यवसा-यमैश्वरं शृणु ॥ ४ ॥

आ० टी० । कर्माधिकृतान् प्रत्येवोक्तविकल्पप्रवृत्तावपि कुतो निर्धारणसिद्धिस्तत्राह **तत्रेति** । तमेव निश्चयं दर्शयितुमादौ त्यागगतमवान्तरविभागमाह **त्यागो हीति** । ननु त्यागसंन्यासयोरु-भयोरपि प्रकृतत्वाविशेषे त्यागस्यैवावान्तरविभागाभिधाने संन्यासस्योपेक्षिकत्वमापद्येत नेत्याह **त्यागो हीति** । सात्त्विको राजसस्तामसश्चेत्युक्तेऽर्थे त्रैविध्येऽपि स्वयमेव निश्चयसंभवात्किमत्र भाग-वतेन निश्चयेनेत्याशङ्क्याह **यस्मादिति** । भगवतोऽन्येनोक्तविभागे तत्त्वानिश्चयाद्भागवतनिश्चयस्य श्रोतव्यतेति निगमयति **तस्मादिति** ॥ ४ ॥

प० टी० । एवं मतभेदमुपन्यस्य स्वमतं कथयितुमाह निश्चयमिति । तत्रैवं विप्रतिपन्ने त्यागे मे वचनान्निश्चयं शृणु । हि यस्मात्कारणाद्धो पुरुषव्याघ्र पुरुषार्थसाधनशील हीति निश्चयेन त्यागस्त्रिविधः संप्रकीर्तितस्तामसादिभेदेन सम्यक्प्रकारेणाग्रे निरूपितोऽस्ति ॥ ४ ॥

**यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत् ॥**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥**

कः पुनरसौ निश्चय इत्याह यज्ञ इति । यज्ञो दानं तप इत्येतत्त्रिविधं कर्म न त्याज्यं न त्यक्तव्यं कार्यं करणीयमेव तत् कस्माद् यज्ञो दानं तपश्चैव पावनानि विशुद्धिकारणानि मनीषिणां फलानभिसंधीनामित्येतत् ॥ ५ ॥

आ० टी० । तमेव भगवतो निश्चयं विशेषतो निर्धारयितुं प्रश्नपूर्वकमनन्तरश्लोकप्रवृत्तिं दर्शयति **कः पुनरिति** । यज्ञादीनां कर्तव्यत्वे हेतुमाह **यज्ञ इति** । न केवलं न त्याज्यं किं तु कर्तव्यमेवेत्याह **कार्यमिति** । प्रतिज्ञातमेवं विभज्य हेतुं विभजते **कस्मादिति** ॥ ५ ॥

प० टी० । तत्रादौ त्यागस्य स्वरूपं दर्शयति **यज्ञदानतप इति** द्वाभ्याम् । यज्ञदानतपोरूपं कर्म न त्याज्यं किं तु तत्कार्यमेव कुतो यज्ञो दानं तपश्च मनीषिणां ज्ञानवतां कर्तुं पावनानि चित्तशोधकानि ॥ ५ ॥

**एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ॥**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥**

एतान्यपीति । एतान्यपि तु कर्माणि यज्ञदानतपांसि पावनान्युक्तानि सङ्गमासक्तिं तेषु त्यक्त्वा, फलानि च तेषां परित्यज्य कर्तव्यानीत्यनुष्ठेयानीति मे मम निश्चितं मतमुत्तमं निश्चयं शृणु मे तत्रेति प्रतिज्ञाय पावनत्वं च सहेतुकमुक्त्वैतान्यपि कर्माणि कर्तव्यानीत्येतन्निश्चितं मतमुत्तममिति प्रतिज्ञातार्थोपसंहार एव नापूर्वार्थं वचनमेतान्यपीति प्रकृतसंनिकृष्टार्थतोपपत्तेः सासङ्गस्य फलार्थिनो बन्धहेतव एतान्यपि कर्माणि मुमुक्षोः कर्तव्यानीत्यपिशब्दस्यार्थो न त्वन्यानि कर्माण्यपेक्ष्यैतान्यपीत्युच्यते । अन्ये वर्णयन्ति नित्यानां कर्मणां फलाभावात् सङ्गं त्यक्त्वा फलानि चेति नोपपद्यते । एतान्यपीति यानि काम्यानि कर्माणि नित्येभ्योऽन्यान्येतान्यपि कर्तव्यानि किमुत यज्ञदानतपांसि नित्यानीति, तदसत्, नित्यानामपि कर्मणां फलवत्त्वस्योपपादितत्वाद् यज्ञो दानं तपश्चैव पावनानीत्यादिवचनेन नित्यान्यपि कर्माणि बन्धहेतुत्वाशङ्कया जिहासोर्मुमुक्षोः कुतः काम्येषु प्रसङ्गः 'दूरेण ह्यवरं कर्म' इति च निन्दितत्वाद् 'यज्ञार्थात् कर्मणोऽन्यत्र' इति च काम्यकर्मणां बन्धहेतुत्वस्य निश्चित-

नामित्यध्यायपरिसमाप्त्युक्तसाधनाः, क्षेत्राध्यायाद्यध्यायत्रयोक्तज्ञानसाधनानां चाधिष्ठानादिपञ्चहेतुकसर्वकर्मसंन्यासिनामात्मैकत्वाकर्तृत्वज्ञानवतां परस्यां ज्ञाननिष्ठायां वर्तमानानां भगवत्तत्त्वविदामनिष्टादिकर्मफल एवं परमहंसपरिव्राजकानामेव लब्धभगवत्स्वरूपात्मैकत्वशरणानां न भवति भवत्येवमन्येषामज्ञानां कर्मिणामसंन्यासिनामित्येष गीताशास्त्रोक्तस्य कर्तव्याकर्तव्यार्थस्य विभागः । अविद्यापूर्वकत्वं सर्वस्य कर्मणोऽसिद्धमिति चेन्न ब्रह्महत्यादिलक्षणवद् यद्यपि शास्त्रावगतं नित्यं कर्म तथाप्यविद्यावत एव भवतीति यथा प्रतिषेधशास्त्रावगतमपि ब्रह्महत्यादिलक्षणं कर्मानर्थकारणमविद्याकामादिदोषतो भवत्यन्यथा प्रवृत्त्यनुपपत्तेस्तथा नित्यनैमित्तिककाम्यान्यपीति । व्यतिरिक्तात्मन्यज्ञाने प्रवृत्तिर्नित्यादिकर्मस्वनुपपन्नेति चेन्न, चलनात्मकस्य कर्मणोऽनात्मकर्तृकस्याहंकरोमीति प्रवृत्तिदर्शनात् । देहादिसंघातेऽहंप्रत्ययो गौणो न मिथ्येति चेन्न, तत्कार्येष्वपि गौणत्वोपपत्तेरात्मीये देहादिसंघातेऽहंप्रत्ययो गौणो यथात्मीयपुत्रे आत्मा वै पुत्रनामासीति, लोके चापि मम प्राण एवायं गौरिति तद्वत्,

ज्ञत्वं विज्ञातमित्यर्थः । ये त्वक्षरमनिर्देश्यमित्यादिवाक्यावष्टम्भेन विद्वद्विषयत्वं संन्यासपूर्वकज्ञाननिष्ठायां निर्धारयति **अनिर्देश्येति** । उक्तसाधनास्त संन्यासपूर्वकज्ञाननिष्ठायामधिक्रियेरन्निति शेषः । किं च त्रयोदशे यान्यमानित्वादीनि चतुर्दशे च प्रकाशं च प्रवृत्तिं चेत्यादीनि पञ्चदशे च यान्यसङ्गत्वादीन्युक्तानि तैः सर्वैः साधनैः सहिता भवन्त्यनिर्देश्याक्षरोपासकास्ततोऽपि ते ज्ञाननिष्ठायामेवाधिक्रियेरन्नित्याह **क्षेत्रेति** । निष्ठाद्वयमधिकारिभेदेन प्रतिष्ठाप्य ज्ञाननिष्ठानामनिष्टमिष्टं मिश्रितमिति त्रिविधं कर्मफलं न भवति किं तु मुक्तिरेव कर्मनिष्ठानां तु त्रिविधं कर्मफलं न मुक्तिरिति शास्त्रार्थविभागमभिप्रेतमुपसंहरति **अधिष्ठानादीति** । यदुक्तमविद्याकामबीजं सर्वं कर्मेति तत्र शास्त्रावगतस्य कर्मणोऽविद्यापूर्वकत्वानुपपत्तेरित्याक्षिपति **अविद्येति** । दृष्टान्तेन समाधत्ते **नेति** । तत्राभिमतप्रतिज्ञां विभजते **ब्रह्महत्येति**[1] । उक्तं दृष्टान्तं व्याचष्टे **यथेति** । अविद्यादिमतो ब्रह्महत्यादि कर्मेत्यत्र हेतुमाह **अन्यथेति** । दार्ष्टान्तिकं गृह्णाति **तथेति** । तान्यप्यविद्यादिमतो भवन्तीत्यविद्यादिपूर्वकत्वं तेषामेषितव्यमित्यर्थः । पारलौकिकमसद्देहाद्यतिरिक्तात्मज्ञानं विना प्रवृत्त्ययोगान्न तेषामविद्यापूर्वकतेति शङ्कते **व्यतिरिक्त इति** । सत्यपि व्यतिरिक्तात्मज्ञाने पारमार्थिकात्मज्ञानाभावान्मिथ्याज्ञानादेव नित्यादिकर्मसु प्रवृत्तेरविद्यापूर्वकत्वं तेषामप्रतिहतमिति परिहरति **नेत्यादिना** । कर्मणश्चलनात्मकत्वान्नाकर्तृकत्वं तस्य निष्क्रियत्वाद् देहादिसंघातस्य तु सक्रियत्वात्तत्कर्तृकं कर्म युक्तं तथापि संघातेऽहं ममाभिमानद्वाराहं करोमीत्यात्मनो मिथ्याधीपूर्विका कर्मणि प्रवृत्तिर्दृष्टा तेनाविद्यापूर्वकत्वं तस्य युक्तमित्यर्थः । यदुक्तं देहादिसंघातेऽहमभिमानस्य मिथ्याज्ञानत्वं तदाक्षिपति **देहादीति** । अहंधियो गौणत्वे तत्पूर्वककर्मस्वपि गौणत्वापत्तेरात्मनोऽनर्थाभावात्तन्निवृत्त्यर्थं हेत्वन्वेषणं न स्यादिति दूषयति **नेति** । एतदेव प्रपञ्चयन्नादौ चोद्यं प्रपञ्चयति **आत्मीयेति** । तत्र श्रुत्यवष्टम्भेन दृष्टान्तमाह **यथेति** । दर्शितश्रुतेरात्मीये पुत्रेऽहंप्रत्ययो गौणस्तथा संघातेऽप्यात्मीयेऽहंप्रत्ययस्तथा युक्त इत्यर्थः । भेदधीपूर्वकत्वं गौणधियो लोके प्रसिद्धमित्याह **लोके चेति** । लोकवेदानुरो-

[1] तत्राभिमतां प्रतिज्ञां विभजते यद्यपीति ।—क्वचित्पाठः ।

नैवं मिथ्याप्रत्ययो मिथ्याप्रत्ययस्तु स्थाणुपुरुषयोरगृह्यमाणविशेषयोर्न गौणप्रत्ययस्य मुख्यकार्यार्थत्वमधिकरणस्तुत्यर्थत्वात्, लुप्तोपमाशब्देन यथा सिंहो देवदत्तोऽग्निर्माणवक इति सिंह इवाग्निरिव क्रौर्यपैङ्गल्यादिसामान्यवत्त्वाद्देवदत्तमाणवकाधिकरणकस्तुत्यर्थमेव न तु सिंहकार्यमग्निकार्यं वा गौणशब्दप्रत्ययनिमित्तं किंचित् साध्यते मिथ्याप्रत्ययकार्यत्वं त्वनर्थमनुभवति गौणप्रत्ययस्य विषयं च जानाति नैवं सिंहो देवदत्तः स्यान्नायमग्निर्माणवक इति, तथा गौणेन देहादिसंघातेनात्मना कृतं कर्म न मुख्येनाहंप्रत्ययविषयेणात्मना कृतं स्यान्न हि गौणसिंहाग्निभ्यां कृतं कर्म मुख्यसिंहाग्निभ्यां कृतं स्यान्न च क्रौर्येण पैङ्गल्येन वा मुख्यसिंहाग्न्योः कार्यं किंचित् क्रियते स्तुत्यर्थेनोपक्षीणत्वात् स्तूयमानौ च जानीतो नाहं सिंहो नाहमग्निरिति न सिंहस्य कर्म ममाग्नेश्चेति तथा न संघातजं कर्म मम मुख्यस्यात्मन इति प्रत्ययो युक्ततरः स्यान्न पुनरहं कर्ता मम कर्मेति । यच्चाहुरात्मीयैः स्मृतीच्छाप्रयत्नैः कर्महेतुभिरात्मा करोतीति न,

---

धेनात्मीये संघातेऽहंधीरपि गौणी स्यादिति दार्ष्टान्तिकमाह **तद्वदिति** । मिथ्याधियोऽपि भेदधीपूर्वकत्वसंभवादात्मीयसंघातेऽहंधियो मिथ्यात्वमेव किं न स्यादित्याशङ्क्याह **नैवमिति**। भेदधीपूर्वकत्वाभावे कथं मिथ्याधीरुदेतीत्याशङ्क्याह **मिथ्येति** अधिष्ठानारोप्ययोर्विवेकाग्रहात्तदुत्पत्तिरित्यर्थः। देहादावहंधियो गौणतेति चोद्ये विवृते तत्कार्येष्वपात्यादिपरिहारं विवृणोति **नेत्यादि** । हेतुभागं विभजते **यथेति** । सिंहो देवदत्त इति वाक्यं देवदत्तः सिंह इवेत्युपमया देवदत्तं क्रौर्याद्यधिकरणं स्तोतुं प्रवृत्तमग्निर्माणवक इत्यपि वाक्यं माणवकोऽग्निरिवेत्युपमया माणवकस्य पैङ्गल्याधिकरणस्य[1] स्तुत्यर्थमेव न तथा मनुष्योऽहमिति वाक्यस्य अधिकरणस्तुत्यर्थता भातीत्यर्थः । देवदत्तमाणवकयोरधिकरणत्वं कथमित्याशङ्क्याह **क्रौर्येति** । किं च गौणशब्दं तत्प्रत्ययं च निमित्तं कृत्वा सिंहकार्यं न किंचिद्देवदत्ते साध्यते नापि माणवके किंचिदग्निकार्यं मिथ्याधीकार्यं त्वनर्थमात्मानुभवत्यतो न देहादावहंधीर्गौणीत्याह **न त्विति** । इतोऽपि देहादौ नाहंधीर्गौणीत्याह **गौणेति** । यो देवदत्तो माणवको वा गौण्या धियो विषयस्तत्परो नैष सिंहो नायमग्निरिति जानाति नैवमविद्वानात्मनः संघातस्य च सत्यपि भेदे सङ्घातस्यानात्मत्वं प्रत्येत्यतो न सङ्घातेऽहंशब्दप्रत्ययौ गौणावित्यर्थः । सङ्घाते तयोर्गौणत्वे दोषान्तरं समुच्चिनोति **तथेति** । तथा सत्यात्मनि कर्तृत्वादिप्रतिभासासिद्धिरिति शेषः। गौणेन कृतं न मुख्येन कृतमित्युदाहरणेन स्फुटयति **न हीति** । यद्यपि देवदत्तमाणवकाभ्यां कृतं कार्यं मुख्याभ्यां सिंहाग्निभ्यां न क्रियते तथापि देवदत्तगतक्रौर्येण मुख्यसिंहस्य माणवकनिष्ठपैङ्गल्येन मुख्याग्नेरिव च सङ्घातगतेनापि जडत्वेनात्मनो मुख्यस्य किंचित् कार्यं कृतं भविष्यतीत्याशङ्क्याह **न चेति** । देहादावहंधियो गौणत्वायोगे हेत्वन्तरमाह **स्तूयमानाविति** । देवदत्तमाणवकयोः सिंहाग्निभ्यां भेदधीपूर्वकं तद्व्यापारवत्त्वाभावधीवदात्मनोऽपि मुख्यस्य सङ्घाताद्भेदधीद्वारा तदीयव्यापारराहित्यमात्मनि दृष्टं स्यादित्यर्थः । व्यावर्त्यं दर्शयति **न पुनरिति** । सङ्घातेऽहंधियो मिथ्याधीत्वमपि न तत्कृतमात्मनि कर्तृत्वं किं चात्मीयैर्ज्ञानेच्छाप्रयत्नैरस्य कर्तृत्वं वास्तवमिति मतमनुवदति **यच्चेति** । ज्ञानादिकृतमपि कर्तृत्वं मिथ्याधी-

---

1 पैङ्गल्याश्रयस्येत्यर्थः ।

तेषां मिथ्याप्रत्ययपूर्वकत्वात् मिथ्याप्रत्ययनिमित्तेष्टानिष्टानुभूतक्रियाफलजनितसंस्कारपूर्वका हि स्मृतीच्छाप्रयत्नादयो यथास्मिन् जन्मनि देहादिसंघाताभिमानरागद्वेषादिकृतौ धर्माधर्मौ तत्फलानुभवश्च ततोऽतीतेऽतीततरेऽपि जन्मनीत्यनादिरविद्याकृतः संसारोऽतीतो नागतश्चानुमेयः, ततश्च सर्वकर्मसंन्यासाज् ज्ञाननिष्ठायामात्यन्तिकः संसारोपरम इति सिद्धम् । अविद्यात्मकत्वाच्च देहाभिमानस्य तन्निवृत्तौ देहाद्यनुपपत्तेः संसारानुपपत्तिः देहादिसंघाते आत्माभिमानोऽविद्यात्मकः न हि लोके गवादिभ्योऽन्योऽहं मत्तश्चान्ये गवादय इति जानन् तेष्वहमिति प्रत्ययं मन्यते कश्चिदजानंस्तु मन्यते स्थाणौ पुरुषविज्ञानवद् अविवेकतो देहादिसंघाते कुर्यादहमिति प्रत्ययं नहि विवेकतो जानन् । यत्त्वात्मा वै पुत्रनामासीति पुत्रेऽहंप्रत्ययः स तु जन्यजनकसंबन्धनिमित्तो गौणो गौणेन चात्मना भोजनादिवत् परमार्थकार्यं न शक्यते कर्तुं गौणसिंहाग्निभ्यां मुख्यसिंहाग्निकार्यवत् । अदृष्टविषयचोदनाप्रामाण्यादात्मकर्तव्यं गौणैर्देहेन्द्रियात्मभिः क्रियत इति चेन्न, अविद्याकृतात्मकत्वात् तेषां गौणा आ-

---

कृतमेव ज्ञानं मिथ्याधीकार्यत्वादिति दूषयति **न तेषामिति** । तदेव प्रपञ्चयति **मिथ्येति** । मिथ्याज्ञानं निमित्तं कृत्वा किंचिदिष्टं किंचिदनिष्टमित्यारोप्य तद्द्वारानुभूते तस्मिन् प्रेप्साजिहासाभ्यां क्रियां निर्वर्त्य चेष्टमनिष्टं च फलं भुक्त्वा तेन संस्कारेण तत्पूर्विकाः स्मृत्यादयः स्वात्मनि क्रियां कुर्वन्तीति युक्तं कर्तृत्वस्य च मिथ्यात्वमित्यर्थः । अतीतानागतजन्मनोरिव वर्तमानेऽपि जन्मनि कर्तृत्वादिसंसारस्य वस्तुत्वमाशङ्क्याह **यथेति** । विमतौ कालावविद्याकृतसंसारवन्तौ कालत्वाद्वर्तमानकालवदित्यर्थः । संसारस्याविद्याकृतत्वे फलितमाह **ततश्चेति** । तस्याविद्यकत्वेन विद्यापोह्यत्वे हेत्वन्तरमाह **अविद्येति** । कुतोऽस्याविद्याकृतत्वं धर्माधर्मकृतत्वसंभवादित्याशङ्क्याह **देहादीति** । आत्मनो धर्मादिकर्तृत्वस्याविद्यकत्वान्नाविद्यां विना कर्मिणां देहाभिमानः संभवत्यतश्चात्मनः संघातेऽहमभिमानस्याविद्यया विद्यमानत्वमित्यर्थः । आत्मनो देहाद्यभिमानस्याविद्यकत्वमन्वयव्यतिरेकाभ्यां साधयन् व्यतिरेकं दर्शयति **न हीति** । अन्वयं दर्शयन् व्यतिरेकमनुवदति **अजानन्निति** । पुत्रे पितुरहंधीवदात्मीये देहादावहंधीर्गौणीत्युक्तमनुवदति **यस्त्विति** । तत्र दृष्टान्तश्रुतगौणात्मविषयत्वमुक्तमङ्गीकरोति **सत्त्विति**। तर्हि देहादावपि तथैव स्वकीये स्यादहंधीर्गौणीत्याशङ्क्याह **गौणेनेति**। न हि स्वकीयेन पुत्रादिना गौणात्मना पितुर्भोजनादिकार्यं क्रियते तथा देहादेरपि गौणात्मत्वे तेन कर्तृत्वादिकार्यमात्मनो न वास्तवं सिद्धमित्यर्थः । गौणात्मना मुख्यात्मनो नास्ति वास्तवं कार्यमित्यत्र दृष्टान्तमाह **गौणेति** । न हि गौणेन सिंहेन देवदत्तेन मुख्यसिंहकार्यं क्रियते नापि गौणाग्निना माणवकेन मुख्याग्निकार्यं दाहपाकादि तथा देहादिना गौणात्मना मुख्यात्मनो न वास्तवं कार्यं कर्तृत्वादि कर्तुं शक्यमित्यर्थः । स्वर्गकामादिवाक्यप्रामाण्याद आत्मनो देहाद्यतिरेकज्ञानस्य च केवलस्याकर्तृत्वात्तत्कर्तव्यं कर्म गौणैरेव देहाद्यात्मभिः संपाद्य तेन हि सत्येव श्रौतातिरेकज्ञाने देहादावात्मत्वमात्मनो मुख्यं युक्तमिति चोदयति **अदृष्टेति** । न देहादीनामात्मत्वं गौणं तदीयात्मत्वस्याविद्यकत्वेन सिद्धत्वादतो न गौणात्मभिरात्मकर्तव्यं कर्म क्रियते किंतु मिथ्यात्मभिरिति परिहरति **नाविद्येति** । तदेव विवृण्वन्नर्थं स्फुटयति **गौणा इति** । कथं तर्हि देहादिविषयात्मत्वप्रथेत्याशङ्क्याविद्याकृतत्वा-

त्मानो देहेन्द्रियादयः, किं तर्हि मिथ्याप्रत्ययेनैवासङ्गस्यात्मनः सङ्गात्मत्वमापाद्यते तद्भावे भावात्तदभावे चाभावादविवेकिनां ह्यज्ञानकाले बालानां दृश्यते दीर्घोऽहं गौरोऽहमिति । देहादिसंघातेऽहंप्रत्ययो भवति न तु विवेकिनामन्योऽहं देहादिसंघातादिति ज्ञानवतां तत्काले देहादिसंघातेऽहं प्रत्ययो भवति तस्मान्मिथ्याप्रत्ययाभावेऽभावात् तत्कृत एव न गौणः, पृथग् गृह्यमाणविशेषसामान्ययोर्हि सिंहदेवदत्तयोरग्निमाणवकयोर्वा गौणः प्रत्ययः शब्दप्रयोगो वा स्यान्नागृह्यमाणसामान्यविशेषयोः यथा शुक्तिरजतयोः यत्तूक्तं श्रुतिप्रामाण्यादिति न, तत्प्रामाण्यदृष्टविषयत्वात् । प्रत्यक्षादिप्रमाणानुपलब्धे हि विषयेऽग्निहोत्रादिसाध्यसाधनसंबन्धे श्रुतेः प्रामाण्यं न प्रत्यक्षादिविषयेऽदृष्टदर्शनार्थविषयात्वात् प्रामाण्यस्य । तस्मान्न दृष्टमिथ्याज्ञाननिमित्तस्याहंप्रत्ययस्य देहादिसंघाते गौणत्वं कल्पयितुं शक्यं न हि श्रुतिशतमपि शीतोऽग्निरप्रकाशो वेति ब्रुवत् प्रामाण्यमुपैति यदि ब्रूयात् शीतोऽग्निरप्रकाशो वेति तथाप्यर्थान्तरं श्रुतेर्विवक्षितं कल्प्यं प्रामाण्यान्यथानुपपत्तेर्न तु प्रमाणान्तरविरुद्धं स्ववचनविरुद्धं कर्मणो मिथ्याप्रत्ययवत्कर्तृकत्वात्[१] कर्तुरभावे श्रुतेरप्रामाण्यमिति चेन्न ब्र-

---

दिहेतुं विभजते **किं तर्हीति** देहादीनामनात्मनामेव सतामात्मत्वं मिथ्याप्रत्ययकृतमित्यत्रान्वयव्यतिरेकावुदाहरति **तद्भाव इति** । उक्ते न्याये शास्त्रीयसंस्कारशून्यानामनुभवं प्रमाणयति **अविवेकिनामिति** । व्यतिरेकेऽपि दर्शिते शास्त्राभिज्ञानामनुभवमनुकूलयति नन्विति । अन्वयव्यतिरेकाभ्यामनुभवानुसारिभ्यां सिद्धमर्थमुपसंहरति **तस्मादिति** । तत्कृत एव देहादावहंप्रत्यय इति शेषः । किं च व्यवहारभूमौ भेदगृहस्य गौणत्वव्यापकत्वात्तस्य प्रकृतेऽभावान्न देहादावंशब्दप्रत्ययौ गौणावित्याह **पृथगिति** । अदृष्टविषयत्वादेनाप्रामाण्यात् कर्तुरात्मनो व्यतिरेकावधारणात्तस्येदेहादावहंममाभिमानस्य गौणतेत्युक्तमनुवदति **यत्त्विति** । श्रुतिप्रामाण्यस्याज्ञातार्थविषयत्वान्मानान्तरसिद्धे व्यतिरिक्तात्मनि चोदनाप्रामाण्याभावान्न तदवष्टम्भेन देहादावात्माभिमानस्य गौणतेत्युत्तरमाह **न तदिति** । श्रुतिप्रामाण्यस्यादृष्टविषयत्वं स्पष्टयति **प्रत्यक्षादीति** । अज्ञातार्थज्ञापकं प्रमाणमिति स्थिते न ज्ञाते श्रुतिप्रामाण्यमित्याह **अदृष्टेति** । अज्ञातसाध्यसाधनसंबन्धबोधिनः शास्त्रस्यातिरिक्तात्मन्यौदासीन्ये फलितमाह **तस्मादिति** । अन्वयव्यतिरेकाभ्यां दृष्टो मिथ्याज्ञाननिमित्तो देहादिसङ्घातोऽहंप्रत्ययस्तस्येति यावत् । अन्यविषयत्वाच्चोदनाया अतिरिक्तात्मविषयतेत्युक्तमिदानीं तद्विषयत्वाङ्गीकारेऽपि न तन्निवारितुं शक्यं प्रत्यक्षविरोधादित्याह **न हीति** । अपौरुषेयायाः श्रुतेरसंभावितदोषाया मानान्तरविरोधेऽपि प्रामाण्यमप्रत्याख्येयमित्यभिप्रेत्याह **यदीति** । स्वार्थं बोधयन्त्याः श्रुतेरविरोधापेक्षत्वाद्विरुद्धार्थवादित्वे तत्परिहाराय विवक्षितमर्थान्तरमविरुद्धं तस्याः स्वीकर्तव्यं विरोधे तत्प्रामाण्यानुपपत्तेरित्याह **तथापीति** । अविरोधमवधार्य श्रुत्यर्थकल्पना न युक्तेति व्यावर्त्यमाह **न त्विति** । अविद्यावत्कर्तृत्वं कर्मेति त्वयापगमादुत्पन्नायां विद्यायामविद्याभावे तदधीनकर्तुरभावादन्तरेण कर्तारमनुष्ठानासिद्धौ कर्मकाण्डाप्रामाण्यमित्यध्ययनविधिविरोधः[२] स्यादिति शङ्कते **कर्मण इति** । कर्मकाण्डश्रुतेर्विद्योदयात् पूर्वं व्यावहारिकप्रामाण्यस्य तात्त्विकप्रामाण्या-

---

१ मिथ्याप्रयत्नवत्कर्तृकत्वात्—पा० क्वचित् । २ स्वाध्यायोऽध्येतव्य इत्याकारकः ।

ह्मविद्यायामर्थवत्त्वोपपत्तेः। कर्मविधिश्रुतिवद् ब्रह्मविद्याविधिश्रुतेरप्रामाण्यप्रसंग इति चेन्न, बाधकप्रत्ययानुपपत्तेर्यथा ब्रह्मविद्याविधिश्रुत्यात्मन्यवगते देहादिसंघातेऽहंप्रत्ययो बाध्यते तथात्मन्येवात्मावगतिर्न कदाचित् केनचित् कथंचिदपि बाधितुं शक्या फलाव्यतिरेकावगतेः यथाग्निरुष्णः प्रकाशश्चेति। न च कर्मविधिश्रुतेरप्रामाण्यं, पूर्वपूर्वप्रवृत्तिनिरोधेनोत्तरोत्तरापूर्वापूर्वप्रवृत्तिजननस्य प्रत्यगात्माभिमुख्यप्रवृत्त्युत्पादनार्थत्वान्मिथ्यात्वेऽप्युपायस्योपेयसत्यतया सत्यत्वमेव स्याद्यथानुवादानां विधिशेषाणां लोकेऽपि बालोन्मत्तादीनां पयआदि पाययितव्ये चूडावर्धनादिवचनं प्रकारान्तरस्थानां च साक्षादेव प्रामाण्यसिद्धिः प्रागात्मज्ञानाद् देहाभिमानप्रत्यक्षादिप्रामाण्यवत्। यत्तु मन्यते स्वयमव्याप्रियमाणोऽप्यात्मा संनिधिमात्रेण करोति तदेव च मुख्यं कर्तृत्वमात्मनो यथा राजा युध्यमानेषु योधेषु युध्यत इति प्रसिद्धं स्वयमयुध्यमानोऽपि संनिधानादेव जितः पराजितश्चेति तथा सेनापतिर्वा नैव करोति क्रियाफलसंबन्धश्च राजसेनापत्तेश्च दृष्टः, यथा च ऋत्विक्कर्म यजमानस्य, तथा देहादीनां कर्मात्मकृतं स्यात् तत्फल-

भावेऽपि संभवाद्ब्रह्मकाण्डश्रुतेश्च तात्त्विकप्रामाण्यस्य ब्रह्मविद्याजनकत्वेनोपपन्नाध्ययनविधिविरोध इति परिहरति **न ब्रह्मेति**। कर्मकाण्डश्रुतेस्तात्त्विकाप्रामाण्याभावे ब्रह्मकाण्डश्रुतेरपि तदसिद्धिरविशेषादिति शङ्कते **कर्मेति**। उत्पन्नाया ब्रह्मविद्याया बाधकाभावेन प्रमाणत्वात्तद्धेतुश्रुतेस्तात्त्विकं प्रामाण्यमिति दूषयति **न बाधकेति**। ब्रह्मविद्याया बाधकानुपपत्तिं दृष्टान्तेन साधयति **यथेति**। देहादिसंघातवदित्यपेरर्थः। लौकिकावगतेरिवात्मावगतेरपि फलाव्यतिरेकमुदाहरणेन स्फोरयति **यथेति**। फलमज्ञाननिवृत्तिः कर्मविधिश्रुतिवदित्युक्तं दृष्टान्तं विघटयति **न चेति**। अनादिकालप्रवृत्तस्वाभाविकप्रवृत्तव्यक्तीनां प्रतिबन्धेन योगाद्यलौकिकप्रवृत्तिव्यक्तीर्जनयति, कर्मकाण्डश्रुतिस्तज्जननं च चित्तशुद्धिद्वारा प्रत्यगात्माभिमुख्यप्रवृत्तिमुत्पादयति, तथा च कर्मविधिश्रुतीनां पारंपर्येण प्रत्यगात्मज्ञानार्थत्वात् तात्त्विकप्रामाण्यसिद्धिरित्यर्थः। नन्वेवमपि श्रुतेर्मिथ्यात्वादाभासवदप्रामाण्यमिति चेन्नेत्याह **मिथ्यात्वेऽपीति**। स्वरूपेणासत्यत्वेऽपि सत्योपेयद्वारा प्रामाण्यमित्यत्र दृष्टान्तमाह **यथेति**। मन्त्रार्थवादेतिहासपुराणानां श्रुतेऽर्थे प्रामाण्याभावेऽपि शेषिविध्यनुरोधेन प्रामाण्यवत् प्रकृतेऽपि श्रुतेः स्वरूपेणासत्याया विषयसत्यतया सत्यत्वं गतायाः प्रामाण्यमविरुद्धमित्यर्थः। वाक्यस्य शेषिविध्यनुरोधेन प्रामाण्यं नालौकिकमित्याह **लोकेऽपीति**। कर्मकाण्डश्रुतीनामुक्तरीत्या परंपरया प्रामाण्येऽपि साक्षात्प्रामाण्यमुपेक्षितमित्याशङ्क्याह **प्रकारान्तरेति**। आत्मज्ञानोदयात् प्रागवस्था प्रकारान्तरं, तत्र स्थितानां कर्मकाण्डश्रुतीनामज्ञातसंबन्धबोधकत्वेन साक्षादेव प्रामाण्यमिष्टमित्यर्थः। ज्ञानात् पूर्वं कर्मश्रुतीनां व्यावहारिकप्रामाण्ये दृष्टान्तमाह **प्रागिति**। प्रतीचि कर्तृत्वस्याविद्यकत्वेऽपि श्रुतिप्रामाण्यमप्रत्यूहमित्युक्तं संप्रति कर्तृत्वस्य प्रकारान्तरेण पारमार्थिकत्वमुत्थापयति **यत्त्विति**। स्वव्यापाराभावे संनिधिमात्रेण कुतो मुख्यकर्तृत्वमित्याशङ्क्य दृष्टान्तमाह **यथेति**। स्वयमयुध्यमानत्वे कथं तत्फलवत्त्वमित्याशङ्क्य प्रसिद्धिवशादित्याह **जित इति**। कायिकव्यापाराभावेऽपि कर्तृत्वस्य मुख्यत्वे दृष्टान्तमाह **सेनापतिरिति**। तस्यापि फलवत्त्वं राजवदविशिष्टमित्याह **क्रियेति**। अन्यकर्मणाऽन्यस्य संनिहितस्य मुख्ये कर्तृत्वे वैदिकमुदाहरणमाह **यथा चेति**। कथमृत्विजां कर्म

स्यात्मगामित्वात्, यथा वा भ्रामकस्य लोहभ्रामयितृत्वादव्यापृतस्यैव मुख्यमेव कर्तृत्वं तथा चात्मन इति तदसत्, अकुर्वतः कारकत्वप्रसङ्गात् । कारकमनेकप्रकारमिति चेन्न, राजप्रभृतीनां मुख्यस्यापि कर्तृत्वस्य दर्शनात् राजा तावत् स्वव्यापारेणापि युध्यते योधानां योधयितृत्वेन धनदानेन च मुख्यमेव कर्तृत्वं तथा जयपराजयफलोपभोगेन, तथा यजमानस्यापि धनत्यागेन दक्षिणादानेन च मुख्यमेव कर्तृत्वं तस्मादव्यापृतस्य कर्तृत्वोपचारो यः स गौण इत्यवगम्यते । यदि मुख्यमन्यत् कर्तृत्वं स्वव्यापारलक्षणं नोपलभ्यते राजयजमानप्रभृतीनां तदा संनिधिमात्रेणापि कर्तृत्वं मुख्यं परिकल्प्येत यथा भ्रामणेन न तथा राजयजमानादीनां स्वव्यापारो नोपलभ्यते तस्मात् संनिधिमात्रेणापि कर्तृत्वं गौणमेव । तथा च सति तत्फलसंबन्धोऽपि गौण एव स्यान्न गौणेन मुख्यं कार्यं निर्वर्त्यते तस्मादसदेवैतद्गीयते देहादीनां व्यापारेणाव्यापृत आत्मा कर्ता भोक्ता च स्यादिति भ्रान्तिनिमित्तं तु सर्वमुपपद्यते यथा स्वप्ने मायायां चैवं न च देहाद्यात्मप्रत्ययभ्रान्तिसन्तानविच्छेदेषु सुषुप्तिसमाध्यादिषु कर्तृत्वभोक्तृत्वाद्यनर्थ उपलभ्यते । तस्माद् भ्रान्तिप्रत्ययनिमित्त एवायं संसारभ्रमो न तु परमार्थ इति सम्यग्दर्शनादत्यन्तमेवोपरम इति सिद्धम् ।

यजमानस्येत्याशङ्क्याह **तत्फलस्येति** । स्वव्यापारादृते संनिधेरेवान्यव्यापारहेतोर्मुख्यकर्तृत्वे दृष्टान्तमाह **यथा वेति** । क्रियां कुर्वत् कारणं कारकमित्यङ्गीकारविरोधान्नैतदिति दूषयति **तदसदिति** । कारकविशेषविषयत्वेनाङ्गीकारोपपत्तिरिति शङ्कते **कारकमिति** । स्वव्यापारमन्तरेण न किंचिदपि कारकमिति परिहरति **न राजेति** । दर्शनमेव विशदयति **राजेति** । यथा राज्ञो युद्धे योधयितृत्वेन धनदानेन च मुख्यं कर्तृत्वं तथा फलभोगेऽपि मुख्यमेव तस्य कर्तृत्वमित्याह **तथेति** । यदुक्तमृत्विक्कर्म यजमानस्येति तत्राह **यजमानस्यापीति** । स्वव्यापारादेव मुख्यं कर्तृत्वमिति स्थिते फलितमाह **यस्मादिति** । तदेव प्रपञ्चयति **यदीति** । तर्हि संनिधानादेव मुख्यं कर्तृत्वं राजादीनामुपगतमिति नेत्याह **न तथेति** । राजादीनां स्वव्यापारवत्त्वे पूर्वोक्तं सिद्धमित्याह **तस्मादिति** । राजप्रभृतीनां संनिधेरेव कर्तृत्वस्य गौणत्वे जयादिफलवत्त्वस्यापि सिद्धं गौणत्वमित्याह **तथा चेति** । तत्र पूर्वोक्तिं हेतुत्वेन स्मारयति **नेति** । अन्यव्यापारेणान्यस्य मुख्यकर्तृत्वाभावे फलितमुपसंहरति **तस्मादिति** । कथं तर्हि त्वयात्मनि कर्तृत्वादि स्वीकृतं न हि वृद्धैस्तदिष्टं कर्ता शास्त्रार्थवत्त्वादिति न्यायात्तत्राह **भ्रान्तीति** । कर्तृत्वाद्यात्मनि भ्रान्तमित्येतदुदाहरणेन स्फोरयति **यथेति** । मिथ्याज्ञानकृतमात्मनि कर्तृत्वादीत्यत्र व्यतिरेकं दर्शयति **न चेति** । उक्तव्यतिरेके फलं कथयति **तस्मादिति** । संसारभ्रमस्याविद्याकृतत्वे सिद्धे परमप्रकृतमुपसंहरति **इति सम्यगिति** ।

**इदं ते नातपस्काय नाभक्ताय कदाचन ॥**
**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥**

सर्वं गीताशास्त्रार्थमुपसंहृत्यास्मिन्नध्याये विशेषतश्चान्ते इह शास्त्रार्थदार्ढ्याय संक्षेपत उपसंहारं कृत्वाथेदानीं शास्त्रसंप्रदायविधिमाह इदमिति । इदं शास्त्रं ते तव हिताय मयोक्तं संसारविच्छित्तयेऽतपस्काय तपोरहिताय न वाच्यमिति व्यवहितेन संबध्यते तपस्विनेऽप्यभक्ताय गुरुदेवभक्तिरहिताय कदाचन कस्यांचिदप्यवस्थायां न वाच्यं भक्तस्तपस्व्यपि स त्वशुश्रूषुर्यो भवति तस्मा अपि न वाच्यं न च यो मां वासुदेवं प्राकृतं मनुष्यं मत्वाभ्यसूयत्यात्मप्रशंसादिदोषाध्यारोपणेन ममेश्वरत्वमजानन्न सहतेऽसावप्ययोग्यस्तस्मा अपि न वाच्यं भगवत्यनसूयायुक्ताय तपस्विने भक्ताय शुश्रूषवेऽनसूयवे च वाच्यं शास्त्रमिति सामर्थ्याद्गम्यते तत्र मेधाविने तपस्विने वेत्यनयोर्विकल्पदर्शनाच्छुश्रूषाभक्तियुक्ताय तपस्विने भक्ताय मेधाविने वा वाच्यं शुश्रूषाभक्तिवियुक्ताय न तपस्विने नापि मेधाविने वाच्यं भगवत्यसूयायुक्ताय समस्तगुणवतेऽपि न वाच्यं गुरुशुश्रूषाभक्तिमते च वाच्यमित्येष शास्त्रसंप्रदायविधिः ॥६७॥

शास्त्रतात्पर्यार्थविचारद्वारा निर्धार्यानन्तरश्लोकमवतारयति **सर्वमिति** । प्रकृते त्वष्टादशाध्याये गीताशास्त्रार्थं सर्वं प्रतिपत्तिसौकर्यार्थमुपसंहृत्यान्ते च सर्वधर्मान् परित्यज्येत्यादौ विषयस्य संक्षेपेणोपसंहारं कृत्वा संप्रदायविधिवचनस्यावसरे सतीदानीमिति योजना । किमिति विस्तरेणोपसंहृतः शास्त्रार्थः संक्षिप्योपसंह्रियते तत्राह **शास्त्रार्थेति** । संक्षेपविस्ताराभ्यामुक्तेऽर्थे सर्वेषां दृढतया बुद्धिमधिरोहतीत्यर्थः । हितायेत्येतदेव व्याचष्टे **संसारेति** । कदाचनेति सर्वैः संबध्यते । प्रतिषेधसामर्थ्यसिद्धमर्थं कथयति **भगवतीति** । अर्थसिद्धेऽर्थे स्मृत्यन्तरमनुसृत्य मेधावित्वमन्तर्भावयति **तत्रेति** । विकल्पदर्शनात्तेषु मेधावित्वमपि प्रविशतीत्यर्थः । विकल्पपक्षे कथमधिकारिप्रतिपत्तिरिति तत्राह **शुश्रूषेति** । ताभ्यां युक्ताय भगवत्यसूयाराहिताय तपस्विने वाच्यमिति संबन्धः । तद्युक्ताय शुश्रूषाभक्तियुक्ताय भगवत्यनसूयारहितायेत्यर्थः । तपस्वित्वं मेधावित्वं वा निरपेक्षमधिकारिविशेषणमिति शङ्कां शातयति **शुश्रूषेति** । भगवद्विषयासूयाराहित्ये तात्पर्यं सूचयति **भगवतीति** । कस्मै तर्हि वाच्यमेतदित्याशङ्क्य पूर्वोक्तसर्वगुणसंपन्नायेत्याह **गुरुशुश्रूषेति** । अनुक्तेतरविशेषणोपलक्षणार्थमुभयग्रहणं मेधाविनस्तपस्वित्वं नातीवापेक्षते सर्वमन्यद्बाधकाभावादपेक्षितमेवेति भावः ॥ ६७ ॥

पु० टी० । एवं गीतार्थतत्त्वमुपदिश्य तत्संप्रदायप्रवर्तने नियममाह **इदमिति** । इदं गीतातत्त्वं ते त्वयातपस्काय स्वधर्मानुष्ठानहीनाय न वाच्यं न वाभक्ताय परमेश्वरभक्तिशून्याय न चाशुश्रूषवे परिचर्यामकुर्वते तथा यो मां परमेश्वरमभ्यसूयति मनुष्यदृष्ट्या दोषारोपेण निन्दति तस्मै न वाच्यम् । श्रुतिरपि नैरुक्ती—"विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि । असूयकायानृजवेऽयताय न मा ब्रूया अवीर्यवती स्याम्" इति । भाष्यम्—विद्या औपनिषदध्यात्मविद्या एतद्धक्तुं ब्राह्मणं ब्रह्मनिष्ठं प्रतीत्याभिमुख्येन समक्षं जगाम प्राप्ता । तत्किं मा इति मां त्वं गोपाय । वक्ष्यमाणाय पुरुषायेति चतुर्थ्यां द्वितीयोक्ता । तं पुरुषं प्रति गुप्तं कुरु न कथयेत्यर्थः । यतोऽहं ते शेवधिर्निरवधिरस्मि । चतुर्विधपुरुषार्थसाधनत्वात् । यथानिधिर्गुप्तः क्रियत इत्यर्थः । किंलक्षणायेत्याह । असूयकाय निन्दकाय । अनृजवे सदावक्राय । अयताय नियमशून्याय । मामात्मविद्यां न ब्रूया न कथय । एवं सति यदि ब्रूषे तर्ह्यवीर्यवती स्यां । त्वय्यपि सामर्थ्यं न स्थास्यतीत्यर्थः ॥ ६७ ॥

**य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ॥**
**भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८ ॥**

संप्रदायस्य कर्तुः फलमिदानीमाह य इति । य इमं यथोक्तं परमं निःश्रेयसार्थं केशवार्जुनयोः संवादरूपं ग्रन्थं गुह्यं गुप्तं गोप्यतमं मद्भक्तेषु मयि भक्तिमत्स्वभिधास्यति वक्ष्यति ग्रन्थतोऽर्थतश्च स्थापयिष्यतीत्यर्थः । यथा त्वयि मया । भक्ते पुनर्ग्रहणात्तद्भक्तिमात्रेण केवलेन शास्त्रसंप्रदाने पात्रं भवतीति गम्यते । कथमभिधास्यतीत्युच्यते भक्तिं मयि परां कृत्वा भगवतः परमगुरोरच्युतस्य शुश्रूषा मया क्रियत इत्येवं कृत्वेत्यर्थः । तस्येदं फलं मामेवैष्यति मुच्यत एवात्र संशयो न कर्तव्यः ॥ ६८ ॥

आ० टी० । शास्त्रसंप्रदायप्रवृत्त्यर्थमुत्तरश्लोकप्रवृत्तिं दर्शयति **संप्रदायेति** । य इत्यध्यापको निर्दिश्यते । परमत्वं ग्रन्थस्य निरतिशयपुरुषार्थसाधनत्वमित्याह **परममिति** । गोप्यत्वमस्य रहस्यार्थविषयत्वाद्यथोक्तसंवादस्य ग्रन्थतोऽर्थतश्च भक्तेषु स्थापने दृष्टान्तमाह **यथेति** । मयि वासुदेवे भगवति, अनन्यभक्त त्वयि यथा मया ग्रन्थोऽर्थतः स्थापितस्तथा मद्भक्तेष्वन्येष्वपि यो ग्रन्थमिमं स्थापयिष्यति तस्येदं फलमित्युत्तरत्र संबन्धः । नाभक्तायेति भक्तेरधिकारिविशेषणत्वोक्तेर्मद्भक्तेष्विति पुनर्भक्तिग्रहणमनर्थकमित्याशङ्क्याह **भक्तेरिति** । शुश्रूषादिसहकारिराहित्यं केवलशब्दार्था, यद्यपि मात्रशब्देन सूचितमेतत्तस्यापीतरेण स्फुटीकृतमिति न विरोधः । प्रश्नपूर्वकमभिधानप्रकारमभिनयति **कथमित्यादिना** । भगवति भक्तिकरणप्रकारं प्रकटयति **भगवत इति** । यच्छब्दापेक्षितं पूरयति **तस्येति** । मामेवैष्यत्येवेत्यन्वयं गृहीत्वा व्याचष्टे **मुच्यत एवेति** ॥ ६८ ॥

प० टी० । एतैर्दोषैर्विरहितेभ्यो भक्तेभ्यो गीताशास्त्रोपदेष्टुः फलमाह **य इति** । य आचार्य इदं परमं गुह्यं गोप्यं गीतार्थतत्त्वं मद्भक्तेषु जिज्ञासया प्राप्तेषु सत्स्वभिधास्यति वक्ष्यति साभिप्रायं निरूपयिष्यति । स मयि जगदीश्वरे परामव्यभिचारिणीं भक्तिं कृत्वासंशयः सन् मामेव प्राप्नोति । आत्माख्यदक्षिणादातुः किमन्यत् फलं वाच्यमित्यर्थः । श्रुतिरपि ऋग्वेदे—"आविरभून्महि माघोनमेषां विश्वं जीवन्तमसो निरमोचि । महि ज्योतिः पितृभिर्दत्तमागादुरुः पन्था दक्षिणाया अदर्शि" इति । अत्र रावणभाष्यम् । एषामाचार्याणां माघोनं महि आविरभूत् । इन्दति जानातीति व्युत्पत्त्या मघोन इन्द्रस्य परमात्मन इदं माघोनं महि महत्त्वमाविरभूत् । कुत इत्याह **महीति**। महित्वं ज्योतिर्ज्ञानं च पितृभिरस्माभिर्दत्तं सदागात् प्राप्तं तेष्वाचार्येषु परिणतं येन ज्योतिषा विश्वं जीवं सर्वं जगत् तमसोऽज्ञानान्निरमोचि निर्मोचितम् । अथ कथमस्माभिस्तेभ्य एवार्पितमित्याह **तैः** उरुर्निरवधिकफलो दक्षिणायाः पन्था मार्गोऽदर्शी दृष्टः । मोक्षार्थिभ्य आत्माख्यदक्षिणाया मार्गस्य फलं निरवधिकमिति ज्ञातमित्यर्थः । अत एव सावधिकफला दक्षिणामग्रिमश्रुत्याह **उच्चादिवीति** ॥ ६८ ॥

**न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ॥**
**भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥**

किंच न च तस्माच्छास्त्रसंप्रदायकृतो मनुष्येषु मनुष्याणां मध्ये कश्चिन्मे मम प्रियकृत्तमोऽतिशयेन प्रियकृत्तमोऽन्यः प्रियकृत्तमो नास्त्येवेत्यर्थो वर्तमानेषु, न च भविता भविष्यत्यपि काले, तस्माद् द्वितीयोऽन्यः प्रियकृत्तरो भुवि लोकेऽस्मिन् भविता ॥ ६९ ॥

**आ० टी०** । ननु सर्वेषां मुक्तिसाधनानां ध्यानस्य श्रेष्ठत्वात्तन्निष्ठस्य मुमुक्षोर्नास्ति विद्यासंप्रदाने प्रवृत्तिरिति तत्राह **किंचेति** । इतश्च विद्यासंप्रदानं मुमुक्षुणा यथोक्तविशेषणवता कर्तव्यमित्यर्थः । वर्तमानेषु मध्ये त्वत्तोऽन्यो नास्त्येव प्रियकृत्तमो नाप्यतीतेषु तादृक् कश्चिदासीदिति शेषः । तस्माद्विद्यासंप्रदायकर्तुः सकाशादित्यर्थः । ध्याननिष्ठस्य श्रेष्ठत्वेऽपि स्वसंप्रदायप्रवक्तुः श्रेष्ठतमत्वादुचिता विद्यासंप्रदाने प्रवृत्तिरितिभावः ॥ ६९ ॥

**प० टी०** । अथैतमेवाभिप्रायमाह **न च तस्मादिति** । तस्मान्मदुक्तं गुह्यमात्मतत्त्वं मद्भक्तेभ्यो दातुः पुरुषात्सकाशादन्यः कश्चिदपि मे प्रियकृत्तमो नचास्ति न वर्तते । कालान्तरेऽप्येतादृक्प्रियकरो भुवि न भविता । अनेन बहुजननकृतसुकृतसामग्रीसंनाहव्यतिरेकेणैतादृग्वक्ता न भविष्यतीति तस्य दुर्लभत्वमुक्तम् । तथा सर्वभजनापेक्षयेदं भजनं मम परमप्रीतये भवतीत्यर्थः॥६९॥

## अध्येष्यते च य इमं धर्म्यं संवादमावयोः ॥
## ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥

योऽप्यध्येष्यते च पठिष्यति य इमं धर्म्यं धर्मादनपेतं संवादरूपं ग्रन्थमावयोस्तेनेदं कृतं स्याज्, ज्ञानयज्ञेन विधिजपोपांशुमानसानां यज्ञानां ज्ञानयज्ञो मानसयज्ञाद्विशिष्टतम इत्यतस्तेन ज्ञानयज्ञेन गीताशास्त्रस्याध्ययनं स्तूयते फलविधिरेव वा देवतादिविषयज्ञानयज्ञफलतुल्यमस्य फलं भवतीति तेनाध्ययनेनाहमिष्टः पूजितः स्यां भवेयमिति मे मम मतिर्निश्चयः ॥ ७० ॥

**आ० टी०** । संप्रदायप्रवक्तुः सर्वाधिकं फलं स वक्ता विष्णुरित्युक्तो न स विश्वाधिदैवतमिति न्यायेनोक्त्वा संप्रत्यध्येतुर्विवक्षितं फलमाह **योऽपीति** । यथोक्तस्य शास्त्रस्य योऽप्यध्येता तेनेदं कृतं स्यादिति संबन्धः । तदेवाह **अध्येष्यत इति** । तेनेदं कृतमित्यत्रेदंशब्दार्थं विशदयति **ज्ञानेति** । तेनाहमिष्टः स्यामिति संबन्धः । चतुर्विधानां यज्ञानां मध्ये ज्ञानयज्ञस्य 'श्रेयान् द्रव्यमयाद् यज्ञाज् ज्ञानयज्ञः' इति विशिष्टत्वाभिधानात्तेनाहमिष्टः स्यामित्यध्ययनस्य स्तुतिरभिमतेत्याह **विधीति** । पक्षान्तरमाह **फलेति** । फलविधिमेवं प्रकटयति **देवतादीति** । यद्विज्ञानयज्ञस्य फलं कैवल्यं तेन न तुल्यमस्याध्येतुः संपद्यते तच्च देवताद्यात्मत्वमित्यर्थः । कथमध्ययनादेव सर्वात्मकं फलं लभ्यते तस्मात्सर्वमभवदिति श्रुतिस्तत्राह **तेनेति** । तेनाध्येत्रा ज्ञानयज्ञतुल्येनाध्ययनेन भगवानिष्टस्तथा च तज्ज्ञानादुक्तं फलमविरुद्धमित्यर्थः ॥ ७० ॥

**प० टी०** । अथ गीताशास्त्रस्य पठनफलमाह **अध्येष्यते चेति** । आवयोः कृष्णार्जुनयोरिमं धर्म्यं धर्मादनपेतं संवादं योऽध्येष्यते जपरूपेण पठिष्यति । तस्य जपयज्ञफलेन भवित-

व्यम् । परं तु तेन पुंसा सर्वयज्ञेभ्यः श्रेष्ठेन ज्ञानयज्ञेनाहमिष्टः स्यां ज्ञानयज्ञेन संतर्पितो भवेयमिति मे मतिर्मम संमतम् । यद्यप्यसौ गीतार्थमबुध्वाऽपि तथापि मत्प्रसादकर एव । यतो गीतारूपछन्दर्षिदेवतायुतो मालामन्त्रः । तत्र छन्दास्यनुष्टुबादीनि, ऋषिर्वेदव्यासः, देवता श्रीकृष्णस्तत्र मन्त्रशब्दार्थस्तु—मन्तारं त्रायतेऽसौ मन्त्र इति व्युत्पत्त्या जपमात्रेणैव सिद्धिदो भवति नहि तत्र मन्त्रार्थो मृग्यते । तथा च यद्देवताको मन्त्रस्तेन मन्त्रेण सा देवता प्रीयते । प्रकृते तु चित्तशुद्धिद्वाराहं प्रीतः सन् स्वरूपं दर्शयामीत्यर्थः ॥ ७० ॥

**श्रद्धावाननसूयश्च शृणुयादपि यो नरः ॥**
**सोऽपि मुक्तः शुभाँल्लोकान् प्राप्नुयात्पुण्यकर्मणाम् ॥७१॥**

अथ श्रोतुरिदं फलं श्रद्धावान् श्रद्दधानोऽनसूयश्चासूयावर्जितः सन्निमं ग्रन्थं शृणुयादपि यो नरोऽपिशब्दात् किमतोऽर्थज्ञानवान् सोऽपि पापान्मुक्तः शुभाँल्लोकान् प्राप्नुयात् पुण्यकर्मणामग्निहोत्रादिकर्मवताम् ॥ ७१ ॥

आ० टी० । प्रवक्तुरध्येतुश्च फलमुक्त्वा श्रोतुरिदानीं फलं कथयति **अथेति** ॥ ७१ ॥

प० टी० । अथ श्रवणफलमाह । **श्रद्धावानिति** । यो नरः श्रद्धायुक्तः सन् केवलं शृणुयादपि कश्चित्किमर्थमयमुच्चैर्जपत्यबद्धं वेति दोषदृष्ट्या शृणोति तन्निवृत्त्यर्थमाह **अनसूयश्चेति** । असूयारहितः शृणुयात्सोऽपि सर्वैः पापैर्मुक्तः सन्नश्वमेधादिपुण्यकृतां लोकान् प्राप्नुयात् ॥ ७१ ॥'

**कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ॥**
**कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय ॥ ७२ ॥**

शिष्यस्य शास्त्रार्थग्रहणविवेकबुभुत्सया पृच्छति तद्ग्रहणे ज्ञाते पुनर्ग्राहयिष्याम्युपायान्तरेणापीति प्रष्टुरभिप्रायो यत्नान्तरमास्थाय शिष्यः कृतार्थः कर्तव्य इत्याचार्यधर्मः प्रदर्शितो भवति । कच्चित् किमेतन्मयोक्तं श्रुतं श्रवणेनावधारितं पार्थ किं त्वयैकाग्रेण चेतसैकचित्तेन किं वा प्रमादितं कच्चिदज्ञानसंमाहोऽज्ञाननिमित्तः संमोहो वैचित्तभावोऽविवेकता स्वाभाविकः किं प्रनष्टो यदर्थोऽयं शास्त्रश्रवणायाससंभवस्तव मम चोपदेष्टृत्वायासः प्रवृत्तस्ते तुभ्यं धनंजय ॥ ७२ ॥

आ० टी० । आचार्येण शिष्याय यावदज्ञानसंशयविपर्यासस्तावदनेकधोपदेष्टव्यमिति दर्शयितुं भगवानर्जुनं प्रति पृष्टवानित्याह **शिष्यस्येति** । प्रष्टुराभिप्रायं प्रकटयति **तद्ग्रहण इति** । शिष्यश्चेदुक्तं गृहीतुं नेष्टे तर्हि तं प्रत्यौदासीन्यमाचार्यस्योचितं तस्य मन्दबुद्धित्वादित्याशङ्क्याह **यत्नान्तरमिति** । कच्चिदिति कोमलप्रश्ने । तमेव व्याचष्टे **किमेतदिति**। द्वितीयं किंपदं पूर्वस्य व्याख्यानतया संबध्यते **कच्चिदिति** । द्वितीयं प्रश्नं विभजते **किं प्रनष्ट इति** । मोहप्रणाशस्य प्रसंगं दर्शयति **यदर्थ इति** ॥ ७२ ॥

प० टी०। सम्यग्बोधानुत्पत्तौ पुनरुपदेक्ष्यामीत्याशयेनाह कच्चिदिति।अज्ञानसंमोहस्ते प्रनष्टः कच्चिदिति प्रश्नार्थविपर्ययः, स्पष्टमन्यत् ॥ ७२ ॥

अर्जुन उवाच ।
नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ॥
स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ ७३ ॥

अर्जुन उवाच नष्टो मोहोऽज्ञानजं तमः समस्तसंसारानर्थहेतुः सागर इव दुस्तरः, स्मृतिश्चात्मतत्त्वविषया लब्धा यस्या लाभात् सर्वग्रन्थीनां विप्रमोक्षः, त्वत्प्रसादात्तव प्रसादान्मया त्वत्प्रसादमाश्रितेनाच्युत, अनेन मोहनाशप्रश्नप्रतिवचनेन सर्वशास्त्रार्थज्ञानफलमेतावदेवेति निश्चितं दर्शितं भवतीति । यदुताज्ञानसंमोहनाश आत्मस्मृतिलाभश्चेति तथा च श्रुतावनात्मविच्छोचामीत्युपन्यस्यात्मज्ञाने सर्वग्रन्थिविप्रमोक्षो भिद्यते हृदयग्रन्थिस्तत्र को मोहः कः शोक एकत्वमनुपश्यत इति च मन्त्रवर्णः । अथेदानीं त्वच्छासने स्थितोऽस्मि गतसंदेहो मुक्तसंशयः करिष्ये वचनं तवाहं त्वत्प्रसादात् कृतार्थो न मे कर्तव्यमस्तीत्यभिप्रायः ॥ ७३ ॥

आ० टी० । प्रेमोपदिष्टात्मज्ञानस्य अज्ञानसंदेहविपर्यासरहितस्येष्टस्य भगवदनुग्रहप्राप्ति कथनेन भगवन्तं परितोषयिष्यन्नर्जुनो विज्ञापितवानित्याह अर्जुन इति। अज्ञानोत्थस्याविवेकस्य नष्टत्वमेव स्पष्टयति समस्त इति । स्वयं ज्योतिषि प्रतीचि ब्रह्मण्यविद्याभ्रमं विघातयति। नाविदितं प्रकाशयतीति मत्वाह स्मृतिश्चेति। स्मृतिलाभे किं स्यादिति चेत्तदाह यस्या इति । मोहनाशस्मृतिप्रतिलम्भे वासाधारणकारणमाह त्वत्प्रसादादिति । प्रकृतेन प्रश्नप्रतिवचनेन लब्धमर्थं कथयति अनेनेति । यदुक्तं स्मृतिप्रतिलम्भादशेषतो हृदयग्रन्थीनां विप्रमोक्षः स्यादिति तत्र प्रमाणमाह तथा चेति । ज्ञानादज्ञानतत्कार्यनिवृत्तौ श्रुत्यन्तरमपि संवादयति भिद्यत इति । भगवदनुग्रहादज्ञानकृतमोहहानं तदनन्तरमात्मज्ञाने प्रतिलब्धं त्वदाज्ञाप्रतिज्ञोऽहमित्युत्तरार्धं व्याकरोति अथेति । तव वचनं करिष्येऽहमित्यत्र तात्पर्यमाह अहमिति ॥ ७३ ॥

प० टी० । कृतार्थः सन्नर्जुन उवाच नष्ट इति । आत्मविषयो मोहो नष्टः । यतः अयमहमस्मीति स्वरूपानुसंधानरूपा स्मृतिस्त्वत्प्रसादान्मया लब्धा अतः स्थितोऽस्मि युद्धायोत्थितोऽस्मि गतः स्वधर्मविषये संदेहो यस्य सोऽहं तवाज्ञां करोमि ॥ ७३ ॥

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ॥
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥

परिसमाप्तः सकलाम्नायशास्त्रार्थोऽथेदानीं कथासंबन्धप्रदर्शनार्थं संजय

उवाच इत्येवमहं वासुदेवस्य पार्थस्य च महात्मनः संवादमिमं यथोक्तमश्रौषं श्रुतवानस्मि अद्भुतमत्यन्तविस्मयकरं रोमहर्षणं रोमाञ्चकरम् ॥ ७४ ॥

आ० टी० । शास्त्रार्थे समाप्ते सत्यस्यामवस्थायां संजयवचनं कुत्रोपयुक्तमिति तदाह **परिसमाप्त इति** । वासुदेवस्य सर्वज्ञस्य सर्वेश्वरस्य कृतार्थस्य पार्थस्य पृथासुतस्यार्जुनस्य महात्मनोऽक्षुद्रबुद्धेः सर्वाधिकारिगुणसंपन्नस्य सम्यग्वादं संवादं गुरुशिष्यभावेन प्रश्नप्रतिवचनाभिधानमिममनुक्रान्तमद्भुतं विस्मयकरं रोमाणि हर्षन्ति पुलका भवन्त्यनेनेति रोमहर्षणमाह्लादकं यथोक्तं श्रुतवानस्मीत्याह **इत्येवमिति** ॥ ७४ ॥

प० टी० । तदेवं धृतराष्ट्रं प्रति श्रीकृष्णार्जुनसंवादं कथयित्वा प्रस्तुतां कथामनुसंदधानः संजयः प्राह **इत्यहमिति** । अद्भुतमपूर्वाश्चर्यकरमत एव रोमहर्षणं रोमाञ्चकरं संवादमश्रौषं । श्रुतवानहम् । स्पष्टमन्यत् ॥ ७४ ॥

**व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ॥**
**योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५ ॥**

तं चेमं व्यासप्रसादात् ततो दिव्यचक्षुर्लाभात् श्रुतवान् ज्ञातवानेतं संवादं गुह्यमहं परं योगं योगार्थत्वाद् ग्रन्थोऽपि योगस्तं संवादमिमं योगेश्वरात् कृष्णात् साक्षात् कथयतः स्वयं न परंपरातः ॥ ७५ ॥

आ० टी० । प्रकृष्टं संवादं कथमश्रौषीरिति चेत्तत्राह **तं चेति** । एतत्पदं संवादपरत्वात्तल्लिङ्गत्वेन नेतव्यमित्याह **एतमिति** । परमपुरुषार्थोपयिकत्वात् परत्वं परं गुह्यमतिशयेन गुह्यं रहस्यमिति वा योगो ज्ञानं कर्म च तदर्थत्वादयं संवादो योग उक्तः, अथवा चित्तवृत्तिनिरोधस्य योगस्याङ्गत्वादयं संवादो योग इत्याह **संवादमिति** । योगानामीश्वरो योगेश्वरस्तदनुग्रहहेतुत्वाद्योगतत्फलयोस्ततः साक्षादव्यवधानेन श्रुतवान् न परंपरयेत्याह **योगेश्वरादिति** । स्वयं स्वेन परमेश्वरेणातिरस्कृतज्ञानैश्वर्यरूपेण कथयतो व्याचक्षाणादित्यर्थः ॥ ७५ ॥

प० टी० अथात्मन ईदृशश्रवणासंभावनामाह **व्यासेति** । मत्सेवया प्रसन्नेन भगवता व्यासेन मह्यमलौकिकं मच्चक्षुःश्रवणादिकं दत्तं तेनाहं श्रुतवानस्मि । किं तदित्याह । परं योगं । परत्वमेवाह । योगेश्वराच्छ्रीकृष्णात्स्वरूपं स्वयमेव वा साक्षात्स्वमुखेनार्जुनं प्रति कथयतः श्रुतवान् । तदुक्तं महाभारते भीष्मपर्वणि संजयेन धृतराष्ट्रं प्रति—'नमस्तस्मै भवत्पित्रे पाराशर्याय धीमते । यस्य प्रसादाद्दिव्यं मे प्रज्ञाविज्ञानमुत्तमम् । दृष्टिश्चातीन्द्रिया राजन् दूराच्छ्रवणमेव हि । परचित्तस्य विज्ञानमतीतानागतस्य च । च्युतोपपत्तिविज्ञानमाकाशे च गतिः सदा । शस्त्रैरसंगो युद्धे च वरदानान्महात्मनः । प्रत्यक्षं यन्मया दृष्टं दृष्टं योगबलेन च । शृणु तत्पृथिवीपाल मा च शोके मनः कृथाः' ॥ ७५ ॥

**राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ॥**
**केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥**

हे राजन् धृतराष्ट्र संस्मृत्य संस्मृत्य संवादमिममद्भुतं केशवार्जुनयोः पुण्यं श्रवणादपि पापहरं श्रुत्वा हृष्यामि च मुहुर्मुहुः प्रतिक्षणम् ॥ ७६ ॥

आ० टी० । यथोक्तं संवादं भगवतः श्रुत्वा किमुपेक्षसे नेत्याह **राजन्निति** । पुण्यत्वं साधयति **श्रवणादपीति** ॥ ७६ ॥

प० टी० । अथ व्यासप्रसादसामर्थ्यमेवानुवदति **राजन्निति** । राजन् धृतराष्ट्र इममद्भुतं केशवार्जुनयोः संवादं संस्मृत्य सकृच्छ्रुतमपि स्मरणारूढं कृत्वा पुनर्यथावत्संस्मृत्य । मयि निष्पन्नोऽयं गीतार्थसंग्रह इति हृष्यामि रोमाञ्चितो भवाम्येतावतैव कृतकृत्योऽस्मीति हर्षं प्राप्नोमि ॥ ७६ ॥

**तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ॥**
**विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः॥७७॥**

तच्च संस्मृत्य रूपमत्यद्भुतं हरेर्विश्वरूपं विस्मयो मे महान् हे राजन् हृष्यामि च पुनः पुनः ॥ ७७ ॥

आ० टी० । यत्तु विश्वरूपाख्यं रूपं सगुणमर्जुनाय भगवान् दर्शितवान् ध्यानार्थं तदिदानीं स्तौति **तच्चेति** ॥ ७७ ॥

प० टी० । किं च **तच्चेति** । तच्चाद्भुतं हेरेरूपं विश्वरूपमुभयवाक्यैः श्रुतं न च दृष्टं तथाविधमपि प्रथममक्षरतः संस्मृत्य पुनरर्थं च संस्मृत्य मे महान् विस्मयो भवति । अहो कथमर्जुनस्य भाग्यं यद्देवैरपिद्रष्टुमशक्यं परमात्मनः समष्टिरूपं साक्षात्कृतवांस्तथा सकलागमागोचरोऽपि परमात्मा कृपया पारमार्थिकं स्वरूपं दर्शितवानिति सविस्मयत्वेनाद्भुतरसस्याविर्भावेन रोमहर्षाद्यष्टसात्त्विकोद्रेकशाली पुनः पुनर्भवामीत्यर्थः । तदेवं विश्वरूपदर्शने 'द्रोणं च भीष्मं च जयद्रथं च कर्णं तथान्यानपि योधवीरान्, । मया हतांस्त्वं जहि मा व्यथिष्ठा' इत्यादिभगवद्वाक्यानि, तथा 'अमी च त्वां धृतराष्ट्रस्य पुत्राः संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः' इत्यर्जुनवाक्यानि च त्वया मन्मुखाच्छ्रुतान्येव ॥ ७७ ॥

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां**
**वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे**
**श्रीकृष्णार्जुनसंवादे मोक्षयोगो**
**नामाष्टादशोऽध्यायः ॥ १८ ॥**

किं बहुना यत्र यस्मिन् पक्षे योगेश्वरः सर्वयोगानामीश्वरस्तत्प्रभवत्वात् सर्वयोगबीजश्च कृष्णो यत्र पार्थो यस्मिन् पक्षे धनुर्धरो गाण्डीवधन्वा तत्र श्रीस्तस्मिन् पाण्डवानां पक्षे विजयस्तत्रैव भूतिः श्रियो विशेषविस्तारो भूतिर्ध्रुवाव्यभिचारिणी नीतिर्नय इत्येवं मतिर्ममेति ॥ ७८ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्यस्य पूज्यपादश्रीमच्छङ्करभगवतः कृतौ गीताभाष्ये मोक्षसंन्यासयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥

**आ० टी०** । द्वयोरपि कृष्णार्जुनयोर्नरनारायणयोः संवादस्य प्रामाण्यार्थं परमुत्कर्षं दर्शयति **किं बहुनेति** । कथं सर्वेषां योगानामीश्वरो भगवानिति तत्राह **तत्प्रभवत्वादिति** । सर्वयोगो ज्ञानं कर्म च तस्य बीजं शास्त्रीयं ज्ञानवैराग्यादि तद्धि भगवदधीनं तदनुग्रहविहीनस्य तदयोगादतो योगतत्फलयोर्भगवदनुग्रहायत्तत्वाद्भगवतो योगेश्वरत्वमित्यर्थः । श्रीर्लक्ष्मीर्विजयः परम उत्कर्षः, राज्ञो धृतराष्ट्रस्य स्वपुत्रेषु विजयाशां शिथिलीकृत्य पाण्डवेषु जयप्राप्तिमैकान्तिकीमुपसंहरति **इत्येवमिति** । उपायोपेयभावेन निष्ठाद्वयस्य प्रतिष्ठापितत्वात् कर्मनिष्ठा परंपरया ज्ञाननिष्ठाहेतुः, ज्ञाननिष्ठा तु साक्षादेव मोक्षहेतुरिति शास्त्रार्थमुपसंहर्तुमितीत्युक्तम् ॥७८॥

काण्डत्रयात्मकं शास्त्रं पदवाक्यार्थगोचरम् ।
आदिमध्यान्तषट्केषु व्याख्यया गोचरीकृतम् ॥ १ ॥
संक्षेपविस्तराभ्यां यो लक्षणैरुपपादितः ।
सोऽर्थोऽन्तिमेन संक्षिप्य लक्षणेन विवक्षितः ॥ २ ॥
गीताशास्त्रमहार्णवोत्थममृतं वैकुण्ठकण्ठोद्भवं
श्रीकण्ठापरनामवन्मुनिकृतं निष्ठाद्वयद्योतितम् ।
निष्ठा यत्र मतिप्रसादजननी साक्षात्कृतं कुर्वती
मोक्षे पर्यवसायिनी प्रतिदिनं सेवध्वमेतद् बुधाः ॥ ३ ॥
प्राचामाचार्यपादानां पदवीमनुगच्छता ।
गीताभाष्ये कृता टीका टीकतां पुरुषोत्तमम् ॥ ४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यशुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरिविरचिते श्रीगीताभाष्यविवेचनेऽष्टादशोऽध्यायः ॥ १८ ॥

ॐ तत्सद् ब्रह्मार्पणमस्तु ॥

**प० टी०** । अतः परं तव पुत्राणां जीवनसंदेहः किं पुनाराज्यप्राप्तिरिति मनसा विचार्य पाण्डवेभ्यः सर्वस्वं दत्वा श्रीकृष्णं शरणं गत्वा प्राणसंरक्षणं कार्यमित्याशयेनाह **यत्रेति** । यत्र येषां पक्षे योगमायेश्वरः कृष्णो वर्तते । टिप्पणिकासु—कर्षणेन मनोभूमेर्निवृत्तिः फलमाप्यते । कृष्णनाम्ना

समाम्नातस्तस्मात्त्वं देव ईदृश इति । यत्र च तत्पक्षपातसाधितसकलपुरुषार्थः पार्थो धनुर्धरो गाण्डीवधन्वा परमेश्वरस्य विभूतिर्वर्तते तत्रैव श्रीराज्यलक्ष्मीस्तत्रैव विजयस्तत्रैव भूतिरुत्तरोत्तरैश्वर्यं तत्रैव ध्रुवाचला नीतिर्निर्नयमार्गः । न त्वन्यायिनां तव पुत्राणां लाक्षागृहे गरदानभ्रातृजायावस्त्राहरणादिकूटकारिणामिति मे मतिर्निश्चयः । तदुक्तं भारते आदिपर्वणि धृतराष्ट्रं प्रति संजयेन 'तव पुत्रा दुरात्मानः प्रतप्ताश्चैव मन्युना । लुब्धा दुर्वृत्तभूयिष्ठा न तान् शोचितुमर्हसि' इति । तथारण्यकेऽपि 'द्रौपदीहरणे भग्नो युधि राजा जयद्रथः । शिवं प्रसाद्य तपसा ययौ च जयमर्जुनात् ।' इति राजा ब्रवीद्देवं नेति देवस्तमब्रवीत् । ऋतेऽर्जुनं महाबाहुर्देवैरपि दुरुत्सहम् । यमाहुरजितं देवं शङ्खचक्रगदाधरम् । प्रधानं शास्त्रविदुषं तेन कृष्णेन रक्षितम्' इति ॥ ७८ ॥

अथ संजयस्य धृतराष्ट्रस्य च हार्दं व्यावर्ण्यते ।

यो लाक्षावेश्मदाहादतिविषमविषाद्विप्रशापाद्वनान्ते
दुष्टद्यूतात्सभायां युवतिपरिभवात्संजुगोप स्वभक्तान् ॥
दूतः सूतश्च भूत्वा स युधि निजजने किं करिष्यत्युपेक्षां
सत्येवं तावकानां त्रिगुणहतधियां जीवितेच्छाधुनापि ॥ १ ॥
उपनिषदुपदेशतीक्ष्णबाणैर्हृदि वसतोऽपि जघान यः सपत्नान् ॥
स्वचरणशरणस्य पाण्डुसूनोः स च किमु न प्रभवेन्निहन्तुमेतान् ॥ २ ॥
कृष्णोऽखिलप्रलयहेतुरचिन्त्यशक्तिः शत्रुपु तेन तनयेषु कियान् पुमर्थः ॥
पार्थस्य वा निहतमारणके तु पुण्यं पुण्यैर्यशो भवति संजय नार्जवेन ॥ ३ ॥
रणे मरणमस्ति चेच्छरणमागतैः किं भवेत्ततोऽपि यदि जीवनं किमु तदच्युतोक्तिर्मृषा ॥
अथापि यदि जीव्यते वरमतो मृतिर्भूभुजामिदं मनसि ।चिन्तयन् कुरुपिताथ तूष्णीमभूत् ॥ ४ ॥

## अथाध्यायतात्पर्यम्—

अध्यायैर्यश्च सप्ताधिकदशभिरभिप्राय उक्तः क्रमेण
संन्यासत्यागपूर्वस्त्रिविधमतिधृतिज्ञानकर्तृक्रियादिः ॥
ब्रह्मप्राप्तेरुपायः पुनरपि गदितोऽष्टादशे संग्रहार्थं
पार्थस्तेनोदतिष्ठन्ननु समरकृते त्यक्तसंदेहजातः ॥ १ ॥
जगति समवतीर्णामत्रसाक्षादपर्णां सदसि द्रुपदकन्यां कुर्वतां वस्त्रशून्याम् ॥
रणभुवि निहतानामप्यभूदुद्धतानां यदुपतिविमुखानां रौरवः कौरवाणाम् ॥ १ ॥
रणशिरसि शरौघैर्धार्तराष्ट्रानमोघैस्तदनुगजनभीष्मद्रोणकर्णांश्च हत्वा ॥
कलितविजयलक्ष्मीर्यादवेशोपदेशादधिगतपरमार्थः पार्थ आसीत्कृतार्थः ॥ २ ॥
छन्दःसंदर्भगर्भप्रभुगहनगिराम्ग्यजुःसामभीमा—
मीमांसामांसलान्तःकरणपरिणमत्संगतीनां गतिः क्व ॥
क्वास्माकं धीरधीरा तदपि रचयितुं भाष्यमुद्योगभाजां
प्रागल्भ्यं डिम्भवाचामिव कुतुकरताः क्षन्तुमर्हन्तु सन्तः ॥ ३ ॥
अभिप्रायः प्रायः सकलनिगमानामधिगतः सुधीभिर्यैर्ये स्युर्भगवदनुकम्पाश्रयवशात् ॥
चिरं सान्द्रानन्दानुभवरसिकास्तत्र सुजनाः सुविश्रान्तिं यान्ति प्रसभमपरे नेह विवृतौ ॥ ४ ॥
गभीराभिप्रायान् सुगमवचनैरुद्धृतवतां कवीनां स्वग्रन्थे भवति बहुविस्तारणभयम् ॥

कृते सूत्रप्राये दुरधिगमता दूषणमतः सविस्तारः श्लाघ्यः शमयति हि यः संशयभरम् ॥ ५ ॥
विदित्वा वेदार्थं दशवदनवाणीपरिणतं शतश्लोकव्याख्यां परमरमणीयामकरवम् ॥
ततो गीताभाष्यं निखिलनिगमार्थैकनिलयं विधिज्ञार्यैः सूर्यो नृहरिकरुणापाङ्गशरणः ॥ ६ ॥
गोदोदक्कटपूर्णतीर्थनिकटे पार्थाभिधानं पुरं तत्र ज्योतिषिकान्वये समभवच्छ्रीज्ञानराजाभिधः ॥
तत्सूनुर्निगमागमार्थनिपुणः सूर्याभिधानः कविः कृष्णप्रेरणया तदर्पणाधिया गीतार्थभाष्यं व्यधात् ॥७॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां परमार्थप्रपायां सकलगीतार्थसंग्रहे ब्रह्मार्पणसंन्यासयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥ ॐ तत्सद् ब्रह्मार्पणमस्तु ॥

